# काशीविद्यासुधानिधिः



# THE PANDIT.

A MONTHLY PUBLICATION

OF THE

BENARES COLLEGE,

DEVOTED TO

SANSKRIT LITERATURE.



NEW SERIES.



VOL. XI.



BENARES:

PRINTED AND PUBLISHED BY THE PROPRIETORS,

E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS.

1889.

# INDEX TO VOLUME XI. NEW SERIES.

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी।

(*Continued from page* 639. Vol. X.)

सर्वादीनि सर्वनामानि ॥ द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गत्वेन नपुंसकत्वायोगाद् बहुवचनासंभवाच्च सर्वादीनीति बहुव्रीहिरित्याह । 'सर्वशब्द इत्यादि'। 'आदिर्येषामिति'। यद्येवं बहुव्रीहेरन्यपदार्थप्रधानत्वात्सर्वशब्दोपलक्षितानां विश्वादीनामेव संज्ञा स्याद् नोपलक्षणस्य सर्वशब्दस्य, यथा चित्रगुरानीयतामित्युक्ते यस्य ता गावः स एवानीयते न चित्रा गाव इत्याशङ्क्याह। 'तानीमानीति'। अत्र तानीत्येव सिद्धइमानीति प्रत्यक्षविषयेणेदंशब्देन गणपठितेषु सर्वशब्दस्यान्तर्भावं सूचयन् तद्गुणसंविज्ञानं बहुव्रीहिं दर्शयति। तस्यान्यपदार्थस्य गुणो वर्तिपदार्थः सोपि कार्यी संविज्ञायते यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानो, मत्वर्थे हि बहुव्रीहिः भूमादिषु च मतुब् विधीयते, तत्रात्र स्वस्वामिभावादिसम्बन्धः प्रवृत्तिनिमित्तं न तत्रोपसर्जनस्य कार्ययोगः, यथा गोमन्तमानयेति, संभवति ह्यरण्यावस्थिताभिरपि गोभिः स्वस्वामिभावो, यत्र तु संयोगसमवाययोरन्यतरत् प्रवृत्तिनिमित्तं तत्र स्वभावादेवोपसर्जनस्यापि कार्ययोगः। यथा दण्डिनमानय विदःशिनमानयेति, नो खलु गृहावस्थितेन दण्डेन दण्डसंयुक्तः पुरुषो भवति. एवं बहुव्रीहावपि चित्रगुः शुक्लवासा इति, इहाप्यादिशब्दोऽवयववचन उद्भूतावयवभेदः समुदायः समासार्थस्तत्र समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानां संज्ञा भवन्ती विश्वादीनामिव सर्वशब्दस्यापि भविष्यति, अत्र च लिङ्ग'मद्रः सर्वेषामि'ति निर्देशः,'आमि सर्वनाम्नः सुट्'। 'सर्वे इति'। 'जसः शी' पूर्वयोस्तूपन्यासो जसन्ततामस्यादर्शयितुम्। 'सर्वस्मादित्यादि'। 'सर्वनाम्नः स्मै' 'ङसिङ्योः स्मात्स्मिनौ'। उभशब्दो द्विवचनविषयएव प्रयुज्यते ऽसति द्विवचने नैव प्रयुज्यते, नहि भवत्युभौ पुत्रावस्य उभपुत्र इति, उभयशब्दोत्र तत्स्थाने भवति उभयपुत्र.

इत्यादि, न च द्विवचने किं चित्सर्वनामकार्यमस्ति, स्मैप्रभृतीनामेकवचनबहुवचनविषयत्वात् काकचोश्च नास्ति विशेष इति तस्येह पाठे प्रयोजनमाह । 'उभशब्दस्येत्यादि' । उभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरिति तृतीयाषष्ठ्यौ भवतः । 'उभयस्मिन् उभयेषामिति' । उभावयवावस्येति व्युत्पाद्यमान उभयशब्दो यदा तिरोहितावयवभेदं समुदायमाचष्टे तदैकवचनं भवति उभयो मणिरिति, यदा तु बहुद्वयारब्धे समुदायिनि वर्त्तमानो वर्गभेदानुगतं समुदायमाचष्टे तदा बहुवचनम् । उभये देवमनुष्या इति । 'डतरडतमेति' । संज्ञाविधौ प्रत्ययग्रहणेपि तदन्तयोर्ग्रहणं केवलयोः प्रयोजनाभावात् ।। 'वक्ष्यमाणेनेति' । प्रथमचरमेत्यादिना । 'सर्वशब्दपर्यायस्येति' । अस्ति च सर्वशब्दपर्यायः समशब्दो 'नभन्तामन्यके समे' 'मानो वृकाय वृक्ये समस्मै' 'उरुष्याणोऽघायतः समस्मात्' । 'उतो समस्मिन्नाशिशीहि नो वसः' 'मानः समस्य दूढ्य' इति यथा, एतच्च सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञाकरणाल्लभ्यते, स एव हि समशब्दः सर्वेषां नाम भवति यः सर्वशब्दपर्यायः । यद्यन्वर्थसंज्ञा पूर्वपदात् संज्ञायामिति णत्वं[1] कस्माच्च भवति, अस्मादेव निपातनात् । यदि 'सर्वादीनि सर्वनामानि' तर्हीहापि प्राप्नोति, सर्वो नाम कश्चित् तस्मै सर्वाय देहीति । इह चातिक्रान्तः सर्वस्मै अतिसर्वाय देहीति, तस्मात्संज्ञानामुपसर्जनानां च सर्वादीनां संज्ञाप्रतिषेधो वक्तव्यः, न केवलं संज्ञायाः, पाठोऽपि तेषां गणे नास्तीति वक्तव्यं, [2]संज्ञामात्रप्रतिषेधे हि सर्वनामप्रयुक्तमेव कार्यं तेषां न स्यात् पाठाश्रयं तु स्यादेव त्यदादीनामः' तन्नामकः कश्चित् तन, तदौ, तदः । अतिक्रान्तस्तमतितत्, अतितदौ, अतितदः । 'अड्डतरादिभ्यः पञ्चभ्यः,' कतरमतिक्रान्तं ब्राह्मणकुलमतिकतरमिति संज्ञाप्रतिषेधस्तावच्च वक्तव्यः ॥

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥

---

१ प्राप्नोति, अस्मादेव निपातनान्न भविष्यतीति पा० २ ।
२ यतः संज्ञाप्रतिषेधे इति पा० २ ।

न्त्र यथा बाहुर्नामकश्चित्तस्यापत्यं बाहवः, 'बाह्वादिभ्यश्चे'-तीञ् न भवति । संज्ञा, श्वशुरस्यापत्यं 'राजश्वशुराद्य' च भवति । धान्यमातुः स्वसा, 'मातृपितृभ्यां स्वसे' ति षत्वं न भवति, एवमिहापि संज्ञाभूता नां सर्वादीनां संज्ञा तन्निबन्धनं च कार्यमन्तर्गणकार्यं च न भविष्यति, यद्वा व्यवस्थायामित्यत्रासंज्ञायामिति विभज्यते, तेन च गणपाठो विशेष्यते, यान्येतान्यनुक्रान्तानि सर्वादीनि तान्यसंज्ञायां द्रष्टव्यानीति । उपसर्जनप्रतिषेधोऽपि न कर्त्तव्यः, सर्वादीनां संज्ञा विधीयते, तत्र कः प्रसङ्गो यत् सर्वाद्यन्तस्य स्यात्, सर्वशब्दस्य तु सत्यामपि संज्ञायामङ्गस्यासर्वनामत्वात् स्मायाद्यप्रसङ्गः । यद्येवं परमसर्वस्मादित्यादावपि न स्याद् यतो यदङ्गं न तत्सर्वनाम यच्च सर्वनाम न तदङ्गमिति, मा भूदङ्गं सर्वनाम, अवयवस्यैव तु सर्वनामत्वे 'ऽङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति' समुदायस्य च कार्यं भविष्यति, यथा ऽस्थ्यादीनामनङ् परमास्थ्नेति । न चैवमत्यस्मैत्यादिवदतिसर्वायेत्यादावुपसर्जनेपि प्रसङ्गो ऽर्थद्वारकस्य सम्बन्धस्याश्रयणात् सर्वनामार्थगतमेकत्वादिकं या विभक्तिराहेति,[1]यथा 'ऽष्टाभ्य औश्' 'षड्भ्यो लुग्' इति परमाष्टौ परमपञ्चेत्यादौ भवति, प्रियाष्टानः प्रियपञ्चान इत्यादौ न भवति तद्वदत्रापि,' त्यदादीनाम' इत्याद्यन्तर्गणकार्यमप्येवमेव द्रष्टव्यम् । यत्तु रूपाश्रयं कार्यं 'युष्मदस्मदोरनादेश' इति न पाठाश्रयं नापि संज्ञाश्रयं तदस्थ्याद्यनङ्वदुपसर्जनेपि भवति,[2]यत्तूपसर्जन[3]दशायाः प्रागेव प्राप्तं तदपि भवति अतिक्रान्तो भवन्तमतिभवकानिति, तस्मान्नार्थस्तदन्तस्य संज्ञया, उच्यते । अव्ययसर्वनाम्नामित्यकच्परमभवकानिति तदन्ताच्च स्यात् । 'पञ्चम्यास्तसिल्' परमसर्वतः 'सप्तम्यास्त्रल्' परमसर्वत्र । 'आ सर्वनाम्नः' 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ[4] वप्रत्यये' परमतद्र्यङ् परमयद्र्यङित्यादौ न स्यादिति तदन्तस्य संज्ञेपितव्या, कथं पुनरि-

१ तदित्यधिकम् २ पुस्तके ।

२ यत्त्वेति पा० २ ।

३ ताया इत्येवपाठः २ पुस्तके ।

४ तावप्रत्यये इति पा० २ ।

ख्यमाणापि लभ्यते, ज्ञापकादिति वक्ष्यामः, तत्तदन्तस्य च भवन्ति परमसर्वादिवद् अतिसर्वादेरपि स्यादिति उपसर्ज्जनप्रतिषेधोपि वक्तव्यो, न वक्तव्यः, अन्वर्थसंज्ञाविज्ञानादेव सिद्धं, वृत्तौ हि प्रधानार्थसंसर्गादुपसर्ज्जनानि न सर्वार्थानि यथा सम्भवं च सार्वार्थ्यमिति प्रत्यक्षपरोक्षतादिविशेषवाचित्वेपि तदिदमादीनां भवत्येव, अन्वर्थत्वादेव च संज्ञाभूतानामपि संज्ञाऽभावः, एवं तावत्संज्ञानिबन्धनं स्मायाद्युपसर्ज्जनानां निवारितं त्यदाद्यन्तर्गणकार्ये तु स्यादेव पाठस्य स्थितत्वात् । एवं तर्हि तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात् द्वितीयोपि सर्वनामशब्द उपात्तस्तेन पाठो विशेष्यते, यानि सर्वेषां नामानि तानि सर्वादीनीति, तेन सर्वादिपाठोपजीवनेन प्रवर्त्तमानमन्तर्गणकार्यमपि व्यवस्थास्यते, यद्वा संज्ञाया अन्वर्थत्वात्तत्संबन्धयोग्यानां सर्वार्थानां तावत्पाठो ऽवश्याभ्युपगन्तव्यस्ततश्च प्रकारान्तरजुषां पाठे प्रमाणाभावादेव सिद्धः पाठात्पर्युदासः ॥

विभाषा दिक्समासे बहुव्रीहौ ॥ अत्र समासावयवानां सर्वादीनां संज्ञा विकल्प्यतइति वृत्तौ लक्ष्यते,[३] यथाह । 'दिगुपदिष्टइत्यादि' । दिशामुपदिष्टउक्ते 'दिङ्नामान्यन्तराल' इत्यस्मिन्समासे ऽवयवत्वेन वर्तमानानीत्यर्थो, न चावयवानां संज्ञाविकल्पे किं चित्प्रयोजनमस्ति स्मायादिकं तावदङ्गाश्रयं काकचोश्च नास्ति विशेषो दिग्वाचिनामकारान्तत्वात् । सर्वनाम्नो वृत्तिमात्रइति पूर्वपदस्य पुंवद्भावोपि न प्रयोजनं, तत्र हि मात्रग्रहणं क्व चित्सर्वनामत्वेन दृष्टानां संप्रत्यसर्वनामत्वेपि यथा स्यादिति, तथा च दक्षिणपूर्वाया इति संज्ञाभावपक्षेपि भवति । स्यादेतत् । अवयवानामेव संज्ञा, कार्यं 'त्वङ्गाधिकारे तस्य च तदुत्तरपदस्य चे' ति । एवमपि दक्षिणपूर्वतः दक्षिणपूर्वत्रेत्यत्र तसिलादयो न स्युस्तस्मात्सर्वाद्यन्ते बहुव्रीहौ संज्ञा विकल्प्यते, सर्वादीनीत्ययं तु वृत्तिग्रन्थः सर्वाद्यन्ते प्रवर्तमाना संज्ञा सर्वादीन्यपि गोचरयतीत्येवं परो व्याख्येयः । यद्वा ऽवयवानां संज्ञाविधानेन तद-

---

१ सर्वनामानीत्यधिकम् ३ पुस्तके तदसंबद्धम् ।

२ आश्रयणाय इति पा· २ ।

३ यदेति पा· २ ।

न्तस्यापि सिध्यति तदन्तविधेरभ्युपगमादिति । 'समासग्रहणं किमिति' । न बहुव्रीहिः समासत्वं व्यभिचरतीति प्रश्नः । 'दक्षिणादक्षिणस्या इति' । 'एकं बहुव्रीहिव'दित्यनुवृत्ता 'वा बाधे चे' ति दक्षिणशब्दस्य द्विर्वचनं 'न बहुव्रीहा' वित्ययमपि निषेधो न भवति, तत्रापि समासाधिकारात् । 'दक्षिणोत्तरपूर्वाणामिति' । असति बहुव्रीहिग्रहणे यथा 'न बहुव्रीहावि' ति प्रतिषेधं बाधतएवं 'द्वन्द्वे चे' त्येतमपि बाधेत । अथ क्रियमाणेपि बहुव्रीहिग्रहणे या पूर्वा सोत्तरा यस्योन्मुग्धस्य तस्मै पूर्वोत्तराय देहीत्यत्र कस्मान्न भवति । प्रतिपदोक्तो यो दिक्समासो 'दिङ्नामान्यन्तराल' इति तस्य ग्रहणं, यद्येवं तत एव हेतोर्द्वन्द्वे न भविष्यति, सत्यम् । उत्तरार्थमवश्यं कर्त्तव्यं बहुव्रीहिग्रहणमिहापि विस्पष्टार्थं भविष्यतीति मन्यते ॥

न बहुव्रीहौ ॥ अत्र वृत्तौ द्विधा सूत्रार्थो लक्ष्यते, बहुव्रीहाविति निषेधाधिकरणं [1]बहुव्रीहौ संज्ञा न भवति, बहुव्रीह्याधारा संज्ञा न भवतीति । बहुव्रीहेः संज्ञा न भवतीति, सर्वाद्यधिकरणं वा, बहुव्रीहौ यानि सर्वादीनि तानि सर्वनामसंज्ञानि न भवन्तीति, तत्र सर्वनामसंज्ञायामित्यादिना ऽऽद्यं पक्षं दर्शयति । कथं पुनर्ज्ञायते ऽभ्युपगतस्तदन्तविधिरिति । अत एव निषेधाद् । द्वितीयं सूत्रार्थं दर्शयति । 'बहुव्रीहावित्यादि' । प्रथमस्योदाहरणमाह । 'प्रियविश्वायेति' । 'सर्वनामसंख्ययोरुपसंख्यानमिति' सर्वनाम्नः पूर्वनिपाते प्राप्ते 'वा प्रियस्येति' [2]प्रियशब्दस्य पूर्वनिपातः । 'द्व्यन्यायेति' । सर्वनामसङ्ख्ययोरिति द्व्यन्ययोः पूर्वनिपाते प्राप्ते परत्वात् सङ्ख्यायाः पूर्वनिपातः । द्वितीयस्योदाहरणमाह । 'इह चेति' । अत्र च प्रतिषेधो ऽयमारभ्यतइत्यनुषङ्गः, ऽत्रासति निषेधे ऽकचि सति त्वकत्पितृको मकत्पितृक इति प्राप्नोति सति तु 'प्रागिवात्क' इति के सति 'प्रत्ययोत्तरपदयोश्चेति' त्वमादेशयोस्त्वत्कपितृको मत्कपितृक इति सिद्ध्यति 'न ऋतश्चे' ति [3]समासान्ते कपि । ननु च बहुव्रीहावयं निषेधः, इह च प्रागेव

१ बहुव्रीहौ संज्ञा न भवतीति नास्ति २ पुस्तके
२ प्रियशब्दस्येति नास्ति ३ पुस्तके ।
३ कबि'त पा॰ २ ।

ततस्त्वकं पिता ऽस्य अहकं पिता ऽस्येति वाक्यावस्थायामेवाकच् प्राप्नोति, एवं तर्हि प्रतिषेधसामर्थ्यात् यद्वाक्योपमर्द्देन बहुव्रीहिर्भवति तस्यामेवावस्थायां निषेधो भविष्यति, अत्र च प्रथमः सूत्रार्थस्तदन्तविधिज्ञापनायैवोपन्यस्तो न तु प्रियविश्वायेत्यादौ समुदायस्य संज्ञाप्रसङ्गो ऽसर्वार्थत्वात् यथा ऽतिसर्वायेत्यादौ । बहुव्रीहाविति वर्तमाने पुनर्बहुव्रीहिग्रहणं किमर्थमित्याह । 'बहुव्रीहावित्यादि''। वस्त्रान्तरवसनान्तरा इति' । वसनमन्तरं येषामिति बहुव्रीहौ द्वन्द्वः । अत्रासति बहुव्रीहिग्रहणे वर्तमानद्वन्द्वाश्रयो निषेधः स्यात् ततश्च जसि विभाषा स्यात् पुनर्बहुव्रीहिग्रहणात्तु यदन्तो द्वन्द्वः सो ऽन्तरशब्दो बहुव्रीहेः पूर्वमत्रासीद् इति बहुव्रीह्याश्रयो नित्य एव निषेधो भवति, इदं तु तदन्तस्य संज्ञानिषेध इति प्रथमपक्षानुरोधेन प्रत्युदाहरणं न त्वत्र प्रसङ्गो ऽसर्वार्थत्वात् । वसन्त्यस्मिन्निति वसनं गृहं, तेन 'विरूपाणामपि समानार्थाना' मित्येकशेषाभावः ॥

तृतीया समासे ॥ 'समासइति वर्त्तमानइत्यादि' । मुख्यस्यैव ग्रहणे प्राप्ते गौणस्यापि ग्रहणार्थं पुनः समासग्रहण[1]मित्यर्थः । न च तृतीयासमासमात्रार्थं वाक्ये प्रसङ्ग इत्याह । 'पूर्वसदृशेत्यादि' । एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । 'त्वयका मयकेति' । युष्मदस्मदोस्तृतीयैकवचने 'त्वमावेकवचने''योचि' सुबन्तयोः प्राक् टेरकच् ॥

द्वन्द्वे च ॥ अयं समुदायस्यैव निषेधो नावयवानां, कुत,स्त्यदादीनां तावत् 'त्यदादीनि सर्वैर्नित्य'मिति एकशेषेण भाव्यम्, प्राक् च त्यदादिभ्यो ऽकारान्तास्तत्र न कीकचोर्विशेषः, 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' इत्यत एव दक्षिणोत्तरपूर्वाणामिति, सोयं प्रतिषेधो ज्ञापयति ,अस्ति सर्वनामसंज्ञायां तदन्तविधिरिति ॥

विभाषा जसि ॥ 'जसः कार्यं प्रति विभाषेति' । तत् कथं, व्यवस्थितविभाषेयं, यद्वा जसीति कार्यापेक्षयाधिकरणसप्तमी, जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्यइति, अन्ये त्वाहुः । जस ई जसी शब्दरूपापेक्षया नपुं·

---

१ इति भाव इति पा· २ ।

सकहृस्वत्वं सप्तम्या लुका निर्देशो जस ईकारे कर्तव्यइति, किं पुनः कारणमेवं व्याख्यायते तत्राह । 'अकजर्थमिति' । हिशब्दो यस्मादर्थे. यद्य- विशेषेण विकल्पः स्यात् कतरकतमअस् इति स्थिते कुत्साद्यर्थविवक्षायां, यस्यामवस्थायामकच्विधिं प्रति संज्ञा स्यात् ततश्च तन्मध्यपतितत्वात्त- द्ग्रहणे शीभावस्स्यात्, के तु-सति न भवति ॥

प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ 'उभयशब्दस्येत्यादि' । उभाववयवावस्य 'उभादुदात्तो नित्य' मिति तयपो ऽयजादेशः । स्थानिव- द्भावाद्भवत्ययं तयबन्तस्तथापि गणे पाठात् नित्यैव संज्ञा भवति । ननु गणे पाठस्योभयस्मिन्नुभयेषामित्यादिरवकाशः, इह तयब्ग्रहणस्य द्वितये द्वितया इति, उभयशब्दाज्जस्युभयप्रसङ्गे परत्वादियमेव विभाषा प्राप्नोति, नैष दोषः । अन्तरङ्गा नित्या संज्ञा विभक्त्यनपेक्षत्वादिति सैव प्रवर्त्तते । 'काकचोर्यथायोगं वृत्तिरिति' । नेमशब्दे ऽकचो वृत्तिः, अन्येषु कस्येत्येष यथा- योगार्थः, कः पुनर्दोषो नेमशब्दे यदि जसः कार्यं प्रति न स्यात् पक्षे को ऽपि स्यात् । अस्तु, नेमके नेमकाः नित्येप्यकचि तस्य तद्ग्रहणेन ग्रह- णादस्मिन्विकल्पे सति एतद्रूपद्वयं भवत्येव, सत्यं, प्रथमादिषु पक्षे ऽकज्न भवतीत्येवं परो ग्रन्थः ॥

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ 'असंज्ञा- यामिति' । संज्ञायामसत्यां, पूर्वादयश्चेत्संज्ञारूपा न भवन्तीत्यर्थः । व्यव- स्था नियमः, स चात्रार्थादवध्यपेक्ष इत्याह । 'स्वाभिधेयापेक्षइत्यादि' । पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोर्थस्तमपेक्षते तेन वापे- क्ष्यते यः स स्वाभिधेयापेक्षो ऽवधिर्मर्यादा पूर्वदेशस्य यत्पूर्वत्वं तत्परदेश- मपेक्ष्य भवति परस्यापि यत्परत्वं तत्पूर्वदेश,मेवं दिक्कालयोरपि द्रष्टव्यं, तस्मात्पूर्वादिशब्दवाच्यो ऽर्थो ऽवश्यमवधिं कं चिदपेक्ष्य भवति तत्र योय- मपेक्षाया नियमः सा व्यवस्थेति तावद्विवक्षितं, तस्यां गम्यमानायां पूर्वा- दिशब्दानां स्वाभिधेय एव वर्त्तमानानामियं संज्ञा भवति न तु वाच्यान्- याम् । 'प्रवीणा इत्यर्थ इति' । अनेन व्यवस्थाभावमाह । नहि प्रवीण-

शब्दः सावेक्षमर्थमाचष्टे । सत्यामेव व्यवस्थायामित्यनेनान्वर्थतां दर्शयति, सुमेरुमवधिमपेत्य कुरूत्तरशब्दो वर्तते, ऽत्र जसः कार्यं प्रतीति नोक्तं विशेषाभावात् ॥

स्वमज्ञातिधनाख्यायाम् ॥ अज्ञातिधनाख्यायामित्यस्यार्थमाह । 'न चेदित्यादि' । यत्र शब्दान्तरनिरपेक्षः स्वशब्दो ज्ञातिधने स्वरूपेणाचष्टे तत्रासौ संज्ञारूपेण प्रवर्तते । 'आत्मीया इत्यर्थ इति' । पुत्राणां गवां सत्यपि ज्ञातिधनत्वे न तेनाकारेण तत्र वर्तते किं त्वात्मीयाकारेणेत्यर्थः । आख्याग्रहणे त्वसति ज्ञातिधनयोः पर्यवसानाद् अत्रापि प्राप्नोति । 'धूमायन्तइत्यादि' । यथोल्मुकान्यश्लिष्टानि असंहतानि धूमायन्ते संहतानि तु प्रज्वलन्ति तद्वत् ज्ञातयोपीत्यर्थः । 'स्वा ज्ञातय इति' । स्वशब्दस्यानेकार्थस्य व्यक्तीकरणाय पर्यायस्यापि ज्ञातिशब्दस्य प्रयोगः, स एव तु न प्रयुक्तः, निरङ्कुशाः कवयश्च इति ॥

अन्तरं बहिर्योगोपसंव्यानयोः ॥ बहिरित्यनावृतो देश उच्यते, बहिरित्यनेन योगो बहिर्योग इतीतिशब्दाध्याहारेण विगृह्य समासः, स चानावृतस्य बाह्यस्य वस्तुनो भवति उपसंवीयते विधीयते वासो ऽन्तरेणेत्युपसंव्यानं कर्मणि ल्युट्, 'नगरबाह्या इति' । बहिर्योगं दर्शयति, परिधानीयमन्तर्वासः प्रावरणीयं बहिर्वासः 'अन्तरे तापसइति' । अत्र संज्ञाभावात् ङिस्मिन्न भवति । जसीति वर्तमाने कथं सप्तम्यन्तं प्रत्युदाहरणे दीयतइत्यत आह । 'गणसूत्रस्य चेत्यादि' । गणसूत्रमप्येवमेव पठ्यते, कस्मात्पुनरप्रस्तुतस्य गणसूत्रस्य प्रत्युदाहरणं दीयते न सूत्रस्य, 'अपुरीति वक्तव्य' मिति वक्ष्यति तद्गणसूत्रविषयं यथा स्यादिति । तस्यायं प्रस्तावः । सूत्रस्याप्यनया दिशा प्रत्युदाहरणं गम्यतइति न पृथग्दर्शितम् । 'अन्तरायामिति' । प्राकाराद्बहिर्वर्तिन्यामित्यर्थः । यद्यपि गणसूत्रे ऽन्तरशब्दः पठ्यते तथापि तस्यैव सर्वनामत्वात् टापा सहैकादेशोपि तद्ग्रहणेन गृह्यतइति स्यात् प्रसङ्गः, लिङ्गविशिष्टपरिभाषया वा टाबन्तस्यैव सञ्ज्ञाप्रसङ्गे वचनम् । 'विभाषाप्रकरणइत्यादि' । यथायमर्थः सिद्ध्यति, तथा 'विभाषा द्वितीयातृतीयाभ्या' मित्यत्र वक्ष्यामः ॥

स्वरादिनिपातमव्ययम् ॥ 'तसिलादिरिति' । 'पञ्चम्यास्तसिलि' त्यारभ्य 'एधाच्चे' त्येतदन्तः, शस्तसी 'बह्वल्पार्थाच्छस्' 'प्रतियोगे पञ्चम्यास्तसिः' । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' । 'आस्थालाविति' । 'इण आसिः' । अयाः, प्रपूर्वत्वं प्रयाः । च्व्यर्थाः । संपद्यकर्तरि च्विः 'विभाषा साति कार्त्स्न्ये' 'देये त्रा च' 'अमु च च्छन्दसि' किमेत्तिङव्ययघादामु । 'निपातावद्यन्तइति' । अथ किमर्थं स्वरादीनां पृथग्ग्रहणं क्रियते न चादिष्वेव पठेरन्. न । चादीनामसत्त्ववचनानां निपातसंज्ञा, स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां चाव्ययसंज्ञा, स्वस्ति वाचयति स्वः पश्यति, क्रियासम्बन्धे ऽनेकशक्तिदर्शनात् सत्त्ववाचित्वम् । अथ 'प्राग्रीश्वरान्निपाताः' स्वरादीनि चादयोसत्त्व इत्येवं सूत्रन्यासः क्रियेत कः पुनरत्र विशेषस्तत्र वा स्वरादिग्रहणं क्रियेत अत्र वा, किं च । 'निपात एकाजनाङिति' प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां प्रसज्येत 'किमेत्' 'दक्षिणादाच्' 'एकाच्च तद्धितः,' केचित्प्रभृतयस्तु कृत एकाचस्सन्ति । अथ चादिरेकाजनाङिति क्रियते तदा चादीनामसत्त्ववचनत्वं विशेषणं न लभ्यते । नैष दोषः । 'चादयोसत्त्व' इत्यत्रासत्त्वग्रहणं चादीनां पाठविशेषणं यथा तिङ्ङ गोत्रादीनीत्यत्र कुत्सनाभीक्ष्णग्रहणं गोत्रादीनां, तेन यत्र यत्र चादिग्रहणं तत्र सर्वत्र विशिष्टानामेव ग्रहणं, तत्रायमप्यर्थः उभे संज्ञे न कर्त्तव्ये भवतो ऽव्ययं निपात इति । कथं, प्राग्रीश्वरान्निपाता इति वा ऽव्ययानीति वा सूत्रं [1]कर्त्तव्यं ततः स्वरादीनि 'तद्धितश्चासर्वविभक्ति'र्यावदव्ययीभावश्चेति, ततश्चादयो ऽसत्त्वइत्यारभ्य याव 'दधिरीश्वरे' 'विभाषा कृञी'ति तत्र यस्मिन् प्रदेशे निपातग्रहणं तत्र चादिग्रहणमसत्त्वव्ययप्रदेशेष्वव्ययग्रहणं निपातग्रहणं वेति तत्तु तथा न कृतमित्येव । 'अव्ययमित्यन्वर्थसंज्ञेति' । 'सदृशम् इत्यादि' । श्रुतिश्चेयमाथर्वणी प्रणवविद्यायां त्रिषु लिङ्गेषु स्त्रीपुन्नपुंसकेषु सदृशं, लिङ्गविशेषप्रतिपादने [2]ऽसामर्थ्यात् । 'विभक्तिष्विति' ।

---

१ कर्तव्यमिति । २ । ३ । पुस्तकयोर्नास्ति ।
२ सामर्थ्याभावादिति पा· २ ।

कारकेषु, 'वचनेष्विति' । एकत्वादिसंख्यासु, अव्ययीभावस्य शक्तिर्लिङ्ग-विशेषयोगेपि वचनादव्ययत्वं, यस्माच्च व्येति नाना न गच्छति सत्त्वध-र्म्मांश्च गृह्णातीत्यर्थस्तत्तस्मादव्ययमिति, यच्छब्दरूपं न व्येति तदव्ययमिति वा, किं पुनः प्रयोजनमन्वर्थसंज्ञाकरणे उपसर्ज्जनप्रतिषेधो ऽत्युच्चैसौ अत्यु-च्चैस इति, अतिक्रान्तप्रधानस्यात्र सत्त्वधर्मपरिग्रहात् उच्चैःशब्दः पठ्यते कः प्रसङ्गस्तदन्तस्यै,तत्र ज्ञापयत्याचार्यो ऽस्त्यव्ययसंज्ञायां तदन्तविधिरिति, तेन परमस्वः परमोच्चैरिति स्वरादिप्राधान्ये तदन्तस्यापि भवति कुशब्दः स्वरादिषु पठितव्यो ऽव्ययसंज्ञार्थः ॥ (शेषमग्रे)

---

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम्

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम्

तत्र प्रथमाध्यायस्यावशेषः ।

( *Continued from page* 672. VOL. X. )

**सू० यस्मिन् शब्द एव प्रमाणं न भवति तदशब्दमानुमानिकं प्रधानमित्यर्थः, न तज्जगत्कारणवादिवाक्यप्रतिपाद्यम् ।**

टी० अस्य सिद्धान्तसूत्रत्वज्ञापनार्थमतरव्याख्यानार्थं चेदानीं तदुपा-दानमिति वैषम्यं, शब्दवेद्यतयाऽभिमतस्य कथमशब्दत्वमिति शङ्कायामा-ह? । "यस्मिन्नि"ति, । अबभक्षो वायुभक्ष इतिवदवधारणगर्भितमतिभा-वः शब्दैकप्रमाणकत्वं न चेत्तत्र किमन्यत्प्रमाणं ? मित्यत्राह "आनुमानिक"-मिति । तर्हि प्रमाणान्तरप्राप्तं शास्त्रं न प्रतिपादयतीति चेत्र सामान्यतोदृ-ष्टानुमानेन कारणमात्रे प्रतिपन्नेऽपि तद्विशेषणानामप्रतिपन्नतया तद्विशिष्ट-रूपेण शास्त्रप्रतिपाद्यत्वात्, अप्राप्ते शास्त्रमर्थवदिति मीमांसकानां मतं न तु सांख्यानामिति पूर्वपक्षिणोऽभिप्रायः, तस्यानुपपन्नतां च ज्ञापयितुमशब्द-श-ब्दप्रयोगः, आनुमानिकत्वमिन्द्रियाणां परमाणूनामप्यविशिष्टमिति तद्व्युदा-

सार्थं सौत्रमेकवचनमित्यभिप्रायेणाह "प्रधानमि"ति, प्रधानं ह्येकं सर्वेषां कारणं, परमाणवस्त्वनेके सन्त एकैकस्य कार्यस्य कारणम्, इन्द्रियाणि तु बहूनि ज्ञानकारणानि न त्वर्थकारणानीति तद्व्यवच्छेदसिद्धिः, नेति पदस्य प्रधानस्वरूपप्रतिक्षेपार्थत्वशङ्कां व्युदस्यन् वाक्यार्थं योजयति, "न तदिति", धर्मिनिषेधपरत्वेऽपि शास्त्रस्य वाक्यनिरूपणपरत्वाद्धेतुपदेन धातुस्वरूपोपादानाच्च प्रतिपाद्यतावेषेण निषेध्यत्वं विवक्षितमिति भावः। वाक्यप्रतिपाद्यत्वाभावः प्रमाणान्तरप्रतिपन्नत्वबाधितत्वाभ्यां वाक्यस्यान्यपरत्वाद्वा स्यात् योग्यानुपलब्ध्याद्यभावादप्रतिपन्नाकारवैशिष्ट्यसद्भावाच्च बाधितप्रतिपन्नत्वासम्भवः, अन्यपरत्वं तु पूर्वपक्षयुक्तिभिरेव निरस्तम्, अतो हेतुर्न सम्भवतीत्यभिप्रायेण हेत्वाकाङ्क्षां दर्शयति–

सू० कुत? ईक्षतेः सच्छब्दवाच्यसम्बन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणात् ॥

टी० "कुत"इति, हेतोरसिद्धिमन्यथासिद्धिञ्च व्युदसितं व्याचष्टे–"सच्छब्दवाच्ये"ति, सच्छब्दवाच्यसम्बन्धीति व्यधिकरणासिद्धिव्युदासः, प्रकृतं सदेव हि तदैक्षतेति तच्छब्देन परामृश्यते इति भावः। व्यापारविशेष–शब्देनाभिधायि–शब्देन चान्यथासिद्धिव्युदासः, न हि चेतनाचेतनसाधारणं कार्योन्मुख्यमात्रमीक्षतिधात्वभिधेयम्, अपि तु चेतनरूपकर्त्रसाधारणो व्यापारविशेषः, न च मुख्ये सम्भवति उपचारो युक्त इति भावः। "इक्श्तिपौ धातुनिर्देशे वक्तव्या"विति प्रक्रियया ईक्षति–शब्देन धातूपादानं नार्थोपादानन्तथा सतीक्षतेरिति हि वक्तव्यम्, स्यात् अनेन च शब्दस्य विवक्षितार्थे स्वारस्यं सूचितमित्यभिप्रायेणाह "धातो"रिति, श्रवणादित्यज्ञातासिद्धिपरिहारः श्रयमाणादीक्षतेरिति सूत्रविवक्षितं, तत्फलितं तु षष्ठ्या निष्कृष्य व्याख्यानम्, ईक्षति–शब्देनेक्षणं लक्षितमिति। वेदान्तदीपे व्याख्यानम् अर्थस्वारस्याय, अत्र तु–शब्दस्वारस्येन व्याख्यातं। ननु तत्तेज ऐक्षत ता आप ऐक्षन्तेति वाक्यद्वयगतमीक्षणमचित्सम्बन्धितया प्रतीयते, सेयं देवतैक्षतेत्यत्रापि ईक्षणमचिद्गतमेवोचितं देवता–शब्दस्य हन्ताहमिमास्तिस्रो

देवता इत्यासन्नवाक्यस्थदेवताशब्दविरूपार्थात्वायोगात्, प्रथमेक्षणं च सेय-मिति तच्छब्दपरामृष्टसत्सम्बन्धित्वादचिन्तमेवेत्याकाङ्क्षायामाह—

सू० "तदैक्षत बहु स्यां प्रजायेये"ति, ईक्षणक्रियायोगश्चाचेतने प्रधाने न सम्भवति, अत ईक्षणेक्षणक्षमश्चेतनविशेष एव सर्वज्ञः सर्वशक्तिः पुरुषोत्तमः सच्छब्दाभिधेयः, तथा च सर्वत्रापि सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते ।

टी० "तदैक्षते"ति, चरमवाक्यानुरोधेनोपक्रमस्वारस्यभङ्गो न युक्त इतीदन्तावदीक्षणं मुख्यमिति भावः । धात्वर्थानां क्रियात्वादचेतनस्य च क्रियायोगसम्भवात्रानुपपत्तिरित्यत्राह "ईक्षणक्रिये"ति, अयं क्रियाविशेषो न सम्भवतीत्यर्थः । ततः किं? मित्यत्राह "अत" इति, अतः—अचेतनस्या-सम्भावितत्वेनेक्षणस्य त्वत्पक्षे विरुद्धत्वादित्यर्थः । "ईक्षणेक्षणक्षम" इति अनेनाचिद्व्यावृत्तिरुक्ता, ईदृश—शब्देन चेतनविशेष—शब्देन चेतनस्वभावफ-लिताच्चेतनमात्रादपि व्यावृत्तिरुक्ता, यच्चेतनमात्रेऽपि न सम्भवति तत्क-थमचेतने सम्भवतीति भावः । तदैक्षतेति सिद्धं गुणमाह "सर्वज्ञ" इति, बहु स्यामिति फलितमर्थमाह "सर्वशक्ति"रिति, चिदचिद्व्यावर्त्तकलिङ्गब-लसिद्धं सदेवेति सामान्यश्रुतेः पर्यवसानस्थलं दर्शयति "पुरुषोत्तम" इति सेयं देवतेति देवता—शब्दोऽपीक्षणविशेषसामर्थ्याच्छागपशुन्यायेन चानुगृहीतः प्रकरणान्तरोक्तदेवताविशेषविषय इति भावः । सद्विद्यावाक्यस्योक्तार्थपर-त्वमनेकश्रुत्यन्तरस्वारस्येनोपपादयति "तथा चे"ति नात्र विषयवाक्यतया श्रुत्यन्तरोपादानं सर्वत्रैव सर्वेष्वपि इति अनेन प्राचुर्यमभिप्रेतम्, ईक्ष-णस्य गौणत्वाश्रयणेऽनेकश्रुतिस्वारस्यभङ्ग प्रसङ्गः इति भावः ।

सू० "स ऐक्षत लोकानुसृजा" इति, "स इमान् लोकान-सृत" "स ईक्षाञ्चक्रे" "स प्राणमसृजते"त्यादिषु । ननु च कार्यानुगुणेनैव कारणेन भवितव्यम् सत्यं, सर्वकार्य्यानु-गुण एव सर्वज्ञः सर्वशक्तिः सत्यसङ्कल्पः पुरुषोत्तमः

सूक्ष्मचिदचिद्वस्तुशरीरकः, यथाह "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयन्तपः" "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मेत्यादि ।

टी० प्रतीयते–इति प्रतीतिस्तावदविगीतेति भावः । एवं स्वपक्षसाधकमुक्त्वा पूर्वपक्षयुक्तिं परिहर्तुं चोद्यमुपक्षिपति "ननु चे"ति, कार्यकारणयोः सालक्षण्यन्तावदङ्गीकार्यं मृत्तत्कार्यादिषु दर्शनात्, तच्च सालक्षण्यं ब्रह्मणस्त्रिगुणात्मकत्वादियोगेन वा जगतस्तद्विधुरत्वेन वा निर्वाह्यम् ? आद्ये शब्दान्तरेण प्रधानाङ्गीकारः, द्वितीये सुखदुःखमोहान्वयाद्युपलम्भविरोध इति भावः । परिहरति "सत्य"मिति, अर्द्धाङ्गीकारे सत्य–शब्दः कार्यानुगुण्यमङ्गीकृतं न तु प्रधानमिति सर्वेति प्रधानस्यैव हि सर्वकार्याननुगुणत्वं कार्यानुप्रविष्टचिदपेक्षया तस्य कारणत्वौपयिकाकारविरहादिति भावः । कार्यानुगुणनिमित्तोपादानभावसिद्ध्यर्थं "सर्वज्ञः सर्वशक्ति"रिति पदद्वयं, तदुभयफलितमाह "सत्यसङ्कल्प" इति, सर्वशक्तित्वासङ्कोचाच्च तस्य सङ्कल्पप्रतिबन्धसम्भावनेति भावः । विकारादीनां सद्वारकत्वसिद्ध्यर्थं सूक्ष्मेत्यादिपदम्, उक्ताकारविरहे कारणत्वायोगात् तद्धत्वे श्रुतिवाक्यानि दर्शयति "पराऽस्ये"ति, चिदचितोः शरीरत्वं कथं शरीरत्वे च तद्गतः कर्मवश्यत्वादिदोषः स्या ? दित्यत्राह–

सू० तदे "तस्य विलक्षणत्वा"दित्यादिषु प्रतिपादयिष्यते, अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते, वस्तुविरोधस्तत्रैव परिहरिष्यते, यत्तूक्तं प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यमिति तदसत्, हेत्वनुपादानात्, येनाश्रुतं श्रुतमित्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते

टी० "तदेतदि"ति, न विलक्षणत्वादित्यादिसूत्रैरेषां सूत्राणां पौनरुक्त्यमाशङ्क्याह "अत्र सृष्टी"ति, वस्तुविरोधः—अर्थसामर्थ्यविरोधः, अत्र वाक्यतर्केणार्थनिष्कर्षस्तत्र त्वाभिमानिकव्याप्त्याभासनिबन्धनबाह्यतर्कविमर्शतन्निरासमुखेनार्थनिष्कर्ष इति भिदेत्यर्थः। एवं सत्त्वादिमयस्येदं—शब्दवाच्यस्य कारणत्वन्तु तम्भक्रमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च परिहृतं भवति। अथ परोक्तं हेत्वन्तरमनुवदति "यत्तु"क्तमिति। तस्यानुपपन्नत्वमाह "तदसदि"ति, कथमित्यत्राह "हेत्वनुपादाना"दिति वक्तुरनुमानविवक्षाऽस्ति चेत् तत्र प्रधानावयवो हेतुरवश्योपादेयः तदभावान्न तद्विवक्षेति भावः। प्रतिज्ञादृष्टान्ताभ्यां हेत्वाक्षेपोऽप्ययुक्त इत्याह "येनाश्रुत"मिति, अनन्यथासिद्धं ह्याक्षेपकं सर्वप्रमाणसाधारणत्वात्प्रतिज्ञाऽन्यथासिद्धेति सिद्धं कृत्वा दृष्टान्तस्य हेत्वाक्षेपकत्वायोग उच्यते न केवलं व्याप्तिप्रदर्शनायैव दृष्टान्तोपन्यासः, अपि त्वसम्भवव्यावृत्तिप्रदर्शनार्थमपि सम्भवतीत्यन्यथासिद्धत्वात् स नाक्षेपक इत्यर्थः।

मू० सर्वात्मना तदसम्भवं मन्वानस्य तत्सम्भवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम्, ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोऽवगतः। अथ स्यान्न चेतनगतं मुख्यमीक्षणमिहोच्यते, अपि तु प्रधानगतं गौणमीक्षणम "तत्तेज ऐक्षत" "ता आप ऐक्षन्त"ति गौणेक्षणसाहचर्य्यात।

टी० "सर्वात्मना तदसम्भव"मिति, एकविज्ञानेन सर्वविज्ञानं धर्म्मैक्यादेकाकारान्वयाद्वा वस्त्वन्तरव्यतिरेकाद्वा सम्भवति घटपटादिषु त्रिष्वऽपि तत्र सम्भवति घटपटादिषु धर्म्मैक्यस्यान्वयेनान्यस्माद् व्यतिरेकेण वा समानाकारयोगस्य चाभावादितिभावः। अस्तु दृष्टान्तस्यानुमानाङ्गत्व सम्भवप्रदर्शनार्थत्वे च साधारण्यं तथा सत्यस्मन्मतेऽपि सम्भवः पाक्षिकः स्यादित्यत्राह "ईक्षत्यादौ"ति। आदि—शब्देन वक्ष्यमाणहेतवो विवक्षिताः प्रतिज्ञादृष्टान्तयोः साधारण्येनानुमानत्वं शङ्कितम्, ईक्षणाद्यसाधारणहेतुसद्भावाच्छङ्काऽपि निरस्तेत्यभिप्रायेणोक्तमनुमानगन्धाभाव इति। उत्तरसूत्र-

मवतारयितुमीक्षणस्य गौणत्वं शङ्कते "अथ स्यादि"ति । चेतनगतं-चेतनत्वानुगुणम्, इहेति प्रकरणमालोचनीयमिति भावः । प्रधानगतम्-अचेतनत्वानुगुणमित्यर्थः प्रथमेक्षणस्य तेजःप्रभृतिकार्याचिद्गतत्वायोगात् प्रधानशब्दोहेतुमाह "तत्तेज"इति, प्रायदर्शनाय वाक्यद्वयमुपात्तम्, अन्यप्रायन्यायो ऽपि बाधकाभावे, जीवतीति भावः । सेयं देवतैक्षतेति देवता-शब्दोऽप्यनेनैव न्यायेन इमास्तिस्रो देवता इतिवदचिद्विषयत्वौचित्याच्च गौणत्वबाधक इति भावः । गौणप्रयोगं दर्शयति-

सू० भवति चाचेतनेष्वपि चेतनधर्मोपचारः, यथा दृष्टिप्रतीक्षा-शालयः, वर्षेण बीजं प्रतिसञ्जहर्षेति, अतो गौणमीक्षण-मितीमामाशङ्कामनुभाष्य परिहरति

सू० गौणश्चेन्नात्म-शब्दात् ॥ ६ ॥

यदुक्तं गौणेक्षणसाहचर्यात्सतोऽपीक्षणव्यपदेशः सर्ग-नियतपूर्वावस्थाभिप्रायो गौण इति, तन्न "ऐतदात्म्यमिदं सर्वं" "तत्सत्यं स आत्मे"ति ।

टी० "भवति चे"ति, ईक्षणतुल्ययोगक्षेमहर्षादिधर्मान्तरसंग्रहाय चेतनधर्म-शब्दः, लोके शास्त्रे च प्रयोगद्वयं दर्शितं, गौणत्व निगमयन्नुक्तशङ्कापरिहाराय सूत्रस्यावतीर्णत्वमाह "अत"इति, शङ्काया उत्सूत्रत्वाभावादनुभाष्येत्युक्तं, सू० गौणश्चेदात्म-शब्दात्, केन गुणयोगेन गौणत्व?-मिति शङ्कां परिहरन्सूत्रं योजयति "यदुक्तमि"ति, पुंलिङ्गगौणशब्दविशेष्यः प्रकृते ईक्षतिरित्यभिप्रायेणोक्तमीक्षणव्यपदेश इति, गौण ईक्षतिर्नेत्युक्ते विशेष्यप्रतिक्षेपशङ्काव्युदासाय यत्तच्छब्दाभ्यां विशेषणनिषेधपरत्वेन व्याख्यातम् । यद्गौणत्वमुक्तं तन्नेत्यर्थः, सर्गेति गौणोऽर्थः सर्गप्रागवस्था तत्र नियतपूर्वकत्वलक्षणं कार्यानुरूप्यं गुणयोग इत्यर्थः । आत्म-शब्दादिति सौत्रपदेनाविशेषेण ऐतदात्म्यं स आत्मेति वाक्यद्वयगत आत्म-सब्दो विवक्षित इत्यभिप्रायेण वाक्यद्वयमुपात्तम् ।

मू० सच्छब्दप्रतिपादितस्यात्म-शब्देन व्यपदेशात्, एतदुक्तम्भवति "ऐतदात्म्यमिदं सर्वं स आत्मेति चेतनाचेतनात्मकप्रपञ्चोद्देशेन सत आत्मत्वात्मोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छत इति, अतस्तेजोबन्नानामपि परमात्मैवात्मेति,

टी० सच्छब्दप्रतिपादितस्येति ऐतदात्म्यमित्यत्रैतच्छब्दस्य स आत्मेत्यत्र स इति पदस्य च प्रकृतपरामर्शित्वादिति भावः। आत्म-शब्दोऽपि मृदात्मको घटः, घटस्य मृदात्मेतिवत्स्वरूपानतिरिक्तार्थः स्यादित्यत आह "एतदुक्तमि"ति, चेतनाचेतनप्रपञ्चोद्देशेनेति, इदं सर्वमिति सर्वशब्दासङ्कोचस्य स्वतःप्राप्तत्वात्सन्मूलाः सर्वाः प्रजा इति पूर्ववाक्यैकार्थ्यात् इदं सर्वमसृजत् सच्च त्यच्चा भवत् विज्ञानं चाविज्ञानं चेति श्रुत्यन्तरैकार्थ्याच्च सर्व-शब्दश्चिदचिदात्मकजगद्गोचर इति भावः। नाचेतन इति न हि अचेतनस्य चेतनेन स्वरूपैक्यं सम्भवतीत्यर्थः। एवं गौणेक्षणसाहचर्यमभ्युपगम्य दूषणमुक्तम्-अथ यदुक्तं तदेव नास्तीत्यत्राह "अत" इति, अतः-चिदचिदात्मकप्रपञ्चस्यात्मत्वादित्यर्थः। किमर्थमीक्षणोपदेशरहितस्यात्रोपादनम्? उच्यते ईक्षणोपदेशविरहनिबन्धनाब्रह्मात्मकत्वशङ्कानिराकरणार्थम्, अन्यथा सर्वस्य कार्यजातस्य ब्रह्मात्मकत्वानवगमादिह सदिति सामानाधिकरण्यायोग्यत्वेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं न घटते, अतस्तदुपादानेन प्रतिज्ञासिद्ध्यौपयिकमनुप्रवेशश्रुतिसिद्धम् अत्रस्य ब्रह्मात्मकत्वमिहानुषङ्गिकं दर्शितं, न हि किञ्चिदप्यतदात्मकमित्यपि-शब्दाभिप्रायः अतदात्मकत्वेन त्वदभिमतानामपीति वा यदाश्रयतया प्रथममीक्षणं मुख्य स एवेत्येवकाराभिप्रायः-

मू० तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः, तथा हि "हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वं चेति "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" त्यपि मुख्य एवेक्षणव्यपदेशः। (शेषमग्रे)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

॥ श्रीगणेशाय नमः ॥

*(Continued from page 664. Vol. X.)*

तत्र

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥

इति सामान्यलक्षणम्· अवस्थितिश्चैषां स्रक्सूत्रन्यायेन, फेनबुद्बुदन्यायेन तु व्यभिचारिणामित्यनयोर्भेदः· विशेषलक्षणान्युक्तानि· अष्टावेव चेत् स्थायिनो,ऽतो न्यूनाधिकसंख्याशङ्का रसे निरस्तेति ॥

यद्यपि विभावानुभावावप्रतिपाद्य व्यञ्जकत्वपुरस्कारेण व्यभिचारिभेदोपदर्शनेन कश्चिच्चाय,स्तथापि व्यङ्ग्यभावविवेचनाय निर्वेदस्य स्थायित्वव्यवस्थापनाय च व्यभिचारिभेदानाह–

निर्वेद,ग्लानि,शङ्काख्या,स्तथाऽसूया,मद,श्रमाः, ।
आलस्यं चैवं,दैन्यं च, चिन्ता, मोहः, स्मृति,र्धृतिः, ॥ ३१ ॥
व्रीडा, चपलता, हर्ष, आवेगो, जडता तथा, ।
गर्वो, विषाद, औत्सुक्यं, निद्रा, ऽपस्मार एव च, ॥ ३२ ॥
स्वप्नो, विबोधो, ऽमर्षश्चा,प्यवहित्थ,मथोग्रता, ।
मति,र्व्याधि,स्तथोन्माद,स्तथा मरणमेव च, ॥ ३३ ॥

त्रासश्चैव, वितर्कश्च, विज्ञेया व्यभिचारिणः ।

त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ३४ ॥

नामत एव समाख्याता न तु लक्षणतः· तल्लक्षणानामन्यैरेव सप्रपञ्चं दर्शितत्वात्· तद्यथा–

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।
तत्र चिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वासदीनताः ॥
"चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभि"रिति केचित्· (१)
रत्यायासक्लमाभ्यासाद्ग्लानिर्निष्प्राणतेव या ।
तस्यां वैवर्ण्यकम्पानुत्साहकार्श्यादयो मताः ॥ (२)
अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् ।
वैवर्ण्यकम्पवैमुख्यपार्श्वालोकास्यशोषकृत् ॥ (३)
परोत्कर्षाऽक्षमा ऽसूया गर्वदौर्जन्यमन्युजा ।
दोषोद्घोषभ्रूविभेदा ऽवज्ञाक्रोधेङ्गितादयः ॥ (४)
सम्मोहानन्दसम्भेदः स्खलदङ्गवचोगतिः ।
मधुपानादिजो ज्ञेयो मदो विविधभावकृत् ॥
उत्तमसत्त्वः प्रहसति, गायति तद्वच्च मध्यमप्रकृतिः, ।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥ (५)
श्रमः खेदो ऽध्वरत्यादेः श्वासनिद्राभरादिकृत् ।
श्रमग्लान्योर्विभेदं तु चक्रे कारणकार्यता ॥
श्रमस्यातिशयावस्थामथ वा ग्लानिमूचिरे ।
"बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः" । इत्येके· (६)
आलस्यं श्रमगर्भादेर्जैड्यं जृम्भाक्रियादिकृत् । (७)
दौर्गत्यादेरनोजः स्याद्दैन्यं कार्श्याऽमृजादिमत् ॥ (८)
ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ।
प्रयत्नपूर्विकान्वेष्यस्मृतिश्चिन्तेति के चन ॥ (९)

मोहो विचित्तता भीतिदुःखवेगानुचिन्तनैः ।
घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥ (१०)
सदृशज्ञानचिन्ताद्यैः संस्काराज्जायते स्मृतिः ।
भ्रूसमुन्नासकारजवादनादिस्तदुद्भवः ॥ (११)
अभीष्टार्थस्य सम्प्राप्तौ स्पृहापर्याप्तता धृतिः ।
सौहित्यवदनोल्लाससहासप्रतिभादिकृत् ॥ (१२)
दुराचारादिभिर्व्रीडा धार्ष्ट्याभावोऽभिधीयते ।
वस्त्राङ्गुरीयकस्पर्शभूरेखाधोमुखादिकृत् ॥
'चेतोनिमीलनं व्रीडा न्यङ्गरागस्तवादिभिः"–इति केचित् । (१३)
मात्सर्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।
"आत्मप्रकाशनपरा चेष्टा चपलतोच्यते"–इति केचित् ॥
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः । (१४)
मनःप्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः । (१५)
आवेगो रागविद्रावरसाद्यैः सम्भ्रमो मतः ।
तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ॥ (१६)
अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥
क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः–इत्येके । (१७)
गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासाङ्गवीक्षाऽविनयावज्ञादिकृत्तु सः ॥ (१८)
प्रारब्धकार्याऽसिद्ध्यादेर्विषादः सत्त्वसंक्षयः ॥
निश्वासोच्छ्वासहृत्ताप(क)सहायान्वेषणादयः ॥ (१९)
कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसंभ्रमैः ॥
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः । (२०)

(क) कृतापेति सर्वत्रोपलम्भेऽपि उत्तरपद्यवत् हृत्तापेत्येव न्याय्यम् ।

निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः ॥
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वासनादयः । (२१)
आधि(क)श्चात्यन्तदुःखादेरपस्मारस्तथाविधः ॥
मनःक्षेपस्त्वपस्मारो ग्रहावेशादिसम्भवः—इति केचित् ।
विरोधिभावात्पूर्वस्य प्रस्मृतिर्विस्मृतिर्भवेत् ।
ध्यानजाड्यभ्रमोहाऽऽधिपरितापादिकृत्तु सा ॥ (२२) *
स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः(ख) ।
कोपावेगभयग्लानिसुखदुःखादिकारकः ॥ (२३)
निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः ।
जम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥ (२४)
अधिक्षेपावमानादेरमर्षोऽभिनिविष्टता ॥
तत्र स्वेदशिरःकम्पनेत्ररागाङ्गविक्रियाः । (२५)
लज्जाद्यैर्विक्रियागोपोऽवहित्थाऽऽत्मन्यऽविक्रिया ॥
व्यापारान्तरसक्तिस्त्ववदनानमनादयः । (२६)
दुष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ॥
अत्र स्वेदशिरःकम्पताडनातर्जनादयः । (२७)
भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः ॥
स्मेरता धृतिसंतोषौ बहुमानस्तथात्मनि । (२८)
व्याधयः सन्निपाताद्यास्तेषामन्यत्र विस्तरः ॥
प्रस्वेदकम्पतापाद्या अनुभावतयोदिताः । (२९)
उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः(ग) ॥

---

(क) आधिश्चेत्येव निष्प्रयास्ते ।

* "निद्रापस्मार एव चे"ति सूत्रे 'निद्रा विस्मृति रेव चे'त्येवंरूपः क्वचित्पाठो भवति। तमनुरुध्य विस्मृतिं लक्षयति—विरोधीतीति विभाव्यताम् ।

(ख) स इत्यन्यत्रास्ते। तच्चोत्तरान्वयि द्रष्टव्यम् ।

(ग) विक्रय इति तु नातिसमञ्जसः पाठः ।

तस्मिंश्चस्थानरुदितगीतहासाऽऽसितादयः[क] ॥ (३०)
जीवस्योद्गमनारम्भो मरणं परिकीर्त्तितम् ॥
सम्मोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत् । (३१)

अत्र च मरणस्थाने केचित्करुणं पठन्ति· स च परदुःखप्रहाणेच्छारूपत्वाच्चित्तवैक्लव्यमयाच्छोकान्नातिरिच्यत इति तद्ग्रहणमत्रानुचितमित्येके· अन्ये तु तस्या दयावीरस्थायित्वमित्यत्र तद्ग्रहणानौचित्यमित्याहुः· न चान्यत्र सञ्चारित्वाद् गणनं फलवदिति वाच्यं, स्थाय्यन्तरसाधारणत्वात्· तेपि हि क्वचन सञ्चारिणः· तदुक्तम्—

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ॥
इत्याद्यन्यत्समुच्चेयं स्वयं भावितबुद्धिभिः । इति·
गर्जितादेर्मनःक्षोभस्त्रासोऽत्रोत्कम्पितादयः । (३२)
ऊहो वितर्कः सन्देहे भ्रूशिरोङ्गुलिनर्त्तकः ॥ (३३)

निर्वेदस्यामङ्गलप्रायस्य पश्चान्निर्देश्यत्वेपि प्राङ्निर्देशो मुख्यत्वप्रकाशनेन स्थायित्वप्रतिपादनाय ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ तेन

निर्वेदस्थायिभावोऽस्ति[ख] शान्तोपि नवमो रसः ।

तत्प्रकृतिकत्वात्· यथा—

अहौ वा हारे वा, कुसुमशयने वा दृषदि वा,
मणौ वा लोष्टे वा, बलवति रिपौ वा सुहृदि वा, ।
तृणे वा स्त्रैणे वा, मम समदृशो यान्तु दिवसाः
क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥

स्त्रैणं स्त्रीसमूहः· वाशब्दाभ्यां द्वयोर्द्वयोस्तुल्यता द्योत्यते· अत्र वदन्ति—शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः· न चास्य स्थायी निर्वेदो युज्यते, तस्य विषयेष्वलंप्रत्ययरूपत्वात्,दात्मावमाननरूप·

(क) 'हासाभिधादय'इत्येकत्र,ऽन्यत्र च 'हासाऽसितादय' इत्याऽऽस्ते, परं, काचित्कत्वादेनयोः "०हासाऽऽसिता०" इत्येवार्तोऽष्ठपम् ।

(ख) 'निर्वेदस्थायिभावाख्यः'—इति प्रदीपेऽपूपलब्धावप्यस्याऽस्वलक्षणतया प्रकाशोपलब्धं ०'भावोऽस्ति' त्युपन्यस्यामः ।

त्वाद्वा· शान्तेश्च निखिलविषयपरिहारजनितात्मविश्रमानन्दप्रादुर्भावमयत्वानुभवात्· तदुक्तं—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

इति· अत एव "सर्ववृत्तिविरामो ऽस्य स्थायी"ति निरस्तम्, अभावस्य स्थायित्वायोगात्· तस्माच्छमो ऽस्य स्थायी· निर्वेदादयस्तु व्यभिचारिणः· स च "शमो निरीहावस्थायामानन्दः स्वात्मविश्रमा"दिति ॥

रसवद् भावोऽप्यलक्ष्यक्रमेषु पठितः, स किंरूपः, रत्यादीनां रसरूपत्वाद्, व्यभिचारिणां रसाङ्गतानियमेन प्राधान्याभावात्, सात्त्विकानामव्यञ्जकत्वादित्यत आह—

रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥ ३५ ॥
भावः प्रोक्तः—

रतिरिति स्थायिभावोपलक्षणम्· देवादिविषयेत्यपि, अप्राप्तरसावस्थत्वोपलक्षणम्·(क) तेन देवादिविषया सर्वा, कान्तादिविषयाप्यपुष्टा रति,र्हासादयश्चाप्राप्तरसावस्थाः, प्राधान्येन व्यञ्जितो व्यभिचारी च भाव इत्यवधातव्यम्· यदुक्तं—

रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयो ऽथ वा ।
अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक् ॥

इति· तदेतदाह वृत्तिकारः—"कान्तादिविषया तु व्यक्ता शृङ्गारः" ।
तत्र देवविषया रतिर्यथा—

कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥

मुनिविषया यथा—

हरत्यघं सम्प्रति, हेतुरेष्यतः शुभस्य, पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥

---

(क) "देवादिविषयेत्यपि, अप्राप्तरसावस्थत्वोपलक्षण"मित्येतावद्गङ्गाक्षरपुस्तके नास्ति, ऽथापि देवाक्षरपुस्तकयोस्सत्त्वाच्चौचित्याच्च संप्रत्यतिष्ठपाम [illegible]ाम ।

एवम् अप्राप्तपरिपोषा पुत्रादिविषया रतिः स्थाय्यन्तरं चादुष्टमुदाहार्य्यम् । व्यभिचारी प्राधान्येन व्यञ्जितो यथा—

जाने कोपपराङ्मुखी प्रियतमा स्वप्ने ऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।
नो यावत्परिरभ्य(क) चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥

अत्र विधिं प्रत्यसूया प्राधान्येन प्रतीयते ।

—तदाभासा अनौचित्यप्रवर्त्तिताः ।

तदाभासा, रसाभासभावाभासाश्चेत्यर्थः· अनौचित्येन प्रकर्षविरोधिना रूपेणेत्यर्थः· तच्चैकाश्रयत्वे तिर्यगादिविषतायां, बहुविषयत्वे व्यभिचारिणामाभासाङ्गतायां वा द्रष्टव्यम्· एकविषया रतिरेव नेति तु प्रलापः, "वन्दीकृत्य नृप द्विषामि"त्यादावुदाहरिष्यमाणत्वात्· रसाभासो यथा—

स्तुमः कं वामाक्षि! क्षणमपि विना यं न रमसे,
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे, ।
सुलग्ने को जातः शशिमुखि! यमालिङ्गसि बला,-
त्तपःश्रीः कस्यैषा मदननगरि! ध्यायसि तु यम् ॥

अत्र बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते· नन्वत्र व्यापारस्य बहुविषयत्वमसिद्धम्, एकत्रापि तादृशव्यापारसम्भवात्· यत्तु "अनेककर्मपदोपादानमनेकविषयत्वं क्रियाणां प्रकटयति· एकविषयत्वाभिप्राये त्वेकमेव कर्मपदमुपाददीते"ति, तत्तुच्छम्, स्तुमो विलेभइत्यादीनां भिन्नवाक्यस्थानामेकविभक्त्यन्तपदोपस्थापितेनानन्वये तदन्वयिनोऽभिन्नस्यापि कं क इत्यादिपदैरुपस्थापने भिन्नकर्मपदैरेवोपस्थापनार्हणात्· अत्र ब्रूमः—तुशब्देन व्यवच्छेदार्थेन व्यापारस्यानेकविषयत्वं लभ्यते, एवमेकत्र भेदाभिप्राये ऽवगते ऽन्यत्रापि तथैवावगम्यते· बहुपदमनेकपरं वा । भावाभासो यथा—

(क) ०परिरभ्येति प्रकाशः ।

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमास्या ।
तत्किं करोमि विदधे कथमत्र(क) मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवा(ख)भ्युपायः ॥

अत्र रतेर्व्यभिचारिभूता चिन्ता ऽनौचित्यप्रवर्त्तिता, नायिकाया-अननुरक्तया रतेरनुत्कृष्टत्वेन तद्व्यभिचारिणोऽपि तथात्वात्. एवमन्ये-ऽप्युदाहार्याः ।

"भावशान्त्यादिरक्रम" इत्यत्र भावशान्त्यादिपदप्रतिपाद्यमाह—

**भावस्य शान्तिरुदयः, संधिः, शबलता तथा ॥ ३६ ॥**

संधिरेककालमेव तुल्यकक्षयोरास्वादः. शबलता तु कालभेदेन निरन्तरतया पूर्वपूर्वोपमर्द्दनाम्. न च भावस्य शबलतायाः शान्त्युदया-भ्यामविशेषः, शान्तेरुदयस्य वा एकैकस्यास्वादे तद्द्वयोपगमात् । तत्र भावस्य शान्तिर्यथा—

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
सा ऽऽश्लिष्टा रभसेन तत्सुखवशात्तन्व्याऽपि तद्विस्मृतम् ॥

अत्र कोपस्य शान्तावेव चमत्कारविश्रामः । उदयो यथा—

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मान(ग)परिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णींस्थितस्तत्क्षणा-
न्मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥

अत्रौत्सुक्यस्योदयः । संधिर्यथा—

---

(क) ०मि कथमत्र तनोमि—इत्यन्यत्र ।

(ख) ०क इहाभ्यु०—इति क्वचित् ।

(ग) ०सद्यः कोपेति क्वाचित्कपाठस्तु नातिप्रशस्तः ।

औत्सिक्यस्य तपःपराक्रमनिधेरभ्यागमादेकतः

सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।

वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-

न्नाऽऽनन्दी हरिचन्दनेन्दुशिशिरस्पर्शो रुणद्ध्यन्यतः ॥

अत्र पूर्वार्द्धे सम्भ्रमात्मक आवेग, उत्तरार्द्धे हर्षः· अनयोस्तुल्यकालमेव स्वादः । शबलता यथा—

क्वाऽकार्यं शशलक्ष्मणः क्व च कुलं, भूयोपि दृश्येत सा,

दोषाणां प्रशमाय नः श्रुतमहो, कोपेपि कान्तं मुखम्, ।

किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेपि सा दुर्लभा,[क]

चेतः ! स्वास्थ्यमुपैहि, कः खलु युवा धन्यो ऽधरं धास्यति ॥

अत्र, क्वाकार्यमित्यादौ वितर्कः, भूयोपीत्यौत्सुक्यं,दोषाणामिति मतिः, कोपेपीति स्मृतिः, किं वक्ष्यन्तीति शङ्का, स्वप्नेपीति दैन्यं,चेतः स्वास्थ्यमिति धृतिः, कः खल्विति चिन्ता, स्फुटं पूर्वपूर्वोपमर्द्देन प्रतीयमाना शबलता चमत्कारभूमिः· ननु भावस्य शान्त्यादिवत्स्थितिरपि प्रकारः सम्भवत्येव, तत्कथं नोक्त इति चेन्न, भावोक्त्यैव तदुक्तेः, भावस्थितेर्भावाभिन्नत्वात् ॥ ३५ ॥ ३६ ॥

ननु व्यभिचारिस्थले नियमतो मुख्यस्य रसस्यावस्थानं, तत्कथं· भावोदाहरणमेतत्, कथं वा भावध्वनित्वं, रसाङ्गत्वेन तेषां गुणीभावादित्यत आह—

मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदा चन ।

ते, भावशान्त्यादयः· कदा चन, यदा त एवाङ्गित्वेन विवक्ष्यन्ते, विवहनप्रवृत्तराजानुगम्यमानभृत्यवत् ॥ * ॥

एवमसंलक्ष्यक्रमव्यङ्ग्यभेदं विचार्य्य संलक्ष्यक्रमव्यङ्ग्यप्रभेदानाह—

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥ ३७ ॥

शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ।

(क) ०धियो लेखैव साऽन्यादृशीति क्वाप्युपलभ्यते· परम्, "स्वप्नेऽपीतिदैन्य," मितिप्रदीपानुरोधेनकृतं तत् ।

घण्टायां हन्यमानायां मुख्यशब्दानन्तरं यथा तोद्दीयानपरोऽनुरणनरूपः शब्दः प्रतीयते· तद्वत्संलक्ष्यक्रमा व्यङ्ग्यस्थितिर्यत्र सः· शब्दश्चार्थश्चोभयं चेतिद्वन्द्वः· तेन शब्दशक्तिमूलव्यङ्ग्यः, अर्थशक्तिमूलव्यङ्ग्यः, उभयशक्तिमूलव्यङ्ग्यश्चेति त्रिधेत्यर्थः· शब्दशक्तिमूलत्वं चैतदेव, यत्तेनैव शब्देन तदर्थप्रतीतिर्न तु पर्यायान्तरेणापि· एतद्वैपरीत्यं चार्थशक्तिमूलत्वं· नत्वभिधया तत्प्रतीतिरिति· एतेनाऽभिधाया यत्र न नियमनं, तत्रैव भेदो द्रष्टव्यः· तन्नियमने तु नाभिधामूलत्वं, किन्तु व्यञ्जनामूलत्वमेव "भद्रात्मन" इतिवद्बोद्धे"ति यत्केन चिदुक्तं, तन्नादेयम्, "भद्रात्मन" इत्यादेरप्येतद्भेदत्वेनेष्टत्वात्· अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः· किञ्च, प्रथमोदाहरणे प्राकरणिकाप्राकरणिकयोरितिव्याख्यानेन, द्वितीये भवानित्यनेन, तृतीये असीत्यनेन प्रकरणस्याभिधानियामकस्य स्पष्टत्वात्तेषामुदाहरणत्वं विरुद्ध्येत· तस्माद्यथोक्तमेव न्याय्यम् । तेषुमध्ये–

अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥ ३८ ॥
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो द्विधा, अलंकृतस्यानलंकृतवस्तुमात्रस्य वा प्राधान्येन प्रकाशादित्यर्थः । तत्राद्यो यथा–

उल्लास्य कालकरवालमहाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥

कालो वैरिसंहर्त्ता यः करवालः, स एव महदम्बु धाराजलं वहतीति महाम्बुवाहः· यद्वा, मह उत्सवः, स एवाम्बु तद्वाहः· गर्जितं सिंहनादः· अत्र 'करवालमुल्लास्ये'तावन्मात्रे वक्तव्ये यदेतादृशशब्दप्रयोगस्तस्याऽसम्बद्धार्थकता मा प्रसज्यतामित्यप्राकरणिकैरिन्द्रवारिवाहादिभिः प्राकरणिकानां राजकरवालादीनामुपमानोपमेयभावे कवेस्तात्पर्यमित्युपमालङ्कारो व्यङ्ग्यः· स च शब्दशक्तिमूलः, पर्यायान्तरेण भूपादिना तदर्थोपस्थितौ तदप्रतीतेः· एवमन्येऽप्यूह्यम्· एवमलङ्कारान्तराण्यपि· यथा–

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो! मधुरलीलः ।

मतिमानतत्त्ववृत्तिः[क] प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥

अत्र तिग्मरुचिः, अप्रताप एवं क्रमेण एकैकपदस्य द्विपदत्वे विरोधाभासः पदाभेदेऽपि विरोधाभासो यथा—

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद! प्रभो! ।

अहितः सहितः साधुयशोभिरसतामसि ॥

ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव नेत्युच्यते तत्किमत्र सीमा? अपिशब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वं, तदभावे व्यङ्ग्यत्वमिति ।

निरुपादानसम्भारमभित्तावेव तन्वते ।

जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥

चित्रं नानाकारमालेख्यं च कला चन्द्रस्य षोडशो भागः, कौशलं च अत्रोपादानैर्भित्तावालेख्यकारिभ्यः कलावद्भ्यः शूलिनो व्यतिरेको व्यङ्ग्यः तस्य चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलता ननूदाहृतेषूपमादीनां प्राधान्यं, न वा आद्ये कुतस्तेषामलङ्कारत्वम्, त्यानलङ्करणात् द्वितीये कुतोऽस्य काव्यस्य ध्वनित्वं, व्यङ्ग्यस्याप्राधान्यादिति चेत्, पूर्वमयमलङ्कार आसीदित्येतावता ऽलङ्कारव्यपदेशात् यथा ब्राह्मणपूर्वबौद्धसंन्यासिनि ब्राह्मणव्यपदेशः नन्वेवं व्यपदेशसमर्थनेऽप्यलङ्कारध्वनित्वं न समर्थितमिति चेत्, अलङ्कारपदेन तद्योग्यताया विवक्षितत्वात् नचैवं रसादिध्वनावप्यलङ्कारध्वनित्वप्रसङ्गः, संलक्ष्यक्रमस्यैव तादृशस्य तथाभिप्रेतत्वात् वस्तुतस्तु, प्राधान्याऽप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव, न तु रसापेक्षयापि, तदपेक्षया सर्वत्र गुणीभावात् तथा चोपमादीनां रसाङ्गतया ऽलङ्कारत्वं, वाच्यापेक्षया प्राधान्यं चेति न दोषलेशावकाशः । वस्तुमात्रं यथा—

पंथिअ! ण एत्थ सत्थरमत्थिमणं पत्थरत्थले गामे ।

उण्णअपओहरं पेक्खिअ उण जइ वससि ता वसस ॥

(क) मितिमानतत्त्ववृत्तिरित्यन्यत्रत्यः पाठः ।

अत्र यदुपभोगक्षमोऽसि तदाऽऽस्स्वेति व्यज्यते। तच्च पयोहरेति-शब्दशक्तिमूलमिति। तथा–

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यस्य (क)प्रसीदसि पुनः स भात्युदारो ऽनुदारश्च ॥

अत्र प्रथमार्द्धे 'शनिरशनिश्चे'त्यनेन 'विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत' इति वस्तु ध्वन्यते, न तु विरोधालङ्कारः, शनिरशनिरित्यनयोः सामानाधिकरण्याभावात्, विरोधस्य च तत्रैव विश्रान्तेः। द्वितीयार्द्धे तु नोदाहरणम्, तत्र चशब्दस्य अप्यर्थत्वे विरोधस्य वाच्यत्वात्, समुच्चयमात्रार्थत्वे तु विरोधस्यैव व्यङ्ग्यत्वादिति ॥ * ॥

अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यं विभजते–

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः, ॥ ३९ ॥**
**प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा, ।**
**वस्तु वा ऽलङ्कृतिर्वेति षड्भेदो ऽसौ व्यनक्ति यत् ॥ ४० ॥**
**वस्त्वलङ्कारमथ वा, तेनाऽसौ(ख) द्वादशात्मकः ।**

स्वतः सम्भवी, न केवलं भणितिनिष्पन्नशरीरोऽपि तु बहिरप्यौचित्येन सम्भाव्यमानः। प्रौढोक्तिमात्रसिद्धः, बहिरसन्नपि वक्तृप्रतिभामात्रेण तथानिर्मितः। अयमर्थः–व्यञ्जकोऽर्थस्त्रिधा स्वतःसम्भवी, कविप्रौढोक्तिमात्रसिद्धः, कविनिबद्धनायकादिवक्तृप्रौढोक्तिमात्रसिद्धश्च। स त्रिविधोऽपि वस्तुमात्रमलङ्कृतिर्वेति षड्विधो व्यञ्जकः। षण्णां व्यङ्ग्यमपि प्रत्येकं वस्तु वा ऽलङ्कृतिर्वेति द्वादश भेदा भवन्ति । तत्र स्वतःसम्भविन्यर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा–

अलसशिरमणी(ग) धुत्ताण अग्गिमो पुत्ति! धणसमिद्धिमओ ।
इअ जंपिएण(घ) णअंगी पप्फुल्लविलोअणा जाआ ॥ (१)

(क) यत्र, यस्मिन्, यस्मै– इति पाठास्तत्र तत्र ।
(ख) तेनायमिति पुस्तकान्तरे प्रकाशेषु च ।
(ग) सिरोमणि इतीतरत्र ।
(घ) भणिएण–इति पुस्तकान्तरम् ।

'अलसत्वेनान्यत्रगन्तुमनिच्छु,धूर्तत्वेन रतिष्वनादृतगुणो, धनसमृद्धिमयतया कृपणः सुखी चे'ति निर्धार्य यत्प्रफुल्लनयनत्वं वस्तु, तेना'ऽन्यासामनाकर्षणीय इति ममैवोपभोग्य' इति वस्तु व्यज्यते । वस्तुनाऽलङ्कारस्य यथा–

धन्याऽसि या कथयसि प्रियसङ्गमे ऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः! शपामि यदि किञ्चिदपि स्मरामि ॥ (२)

अत्र वाच्येनवस्तुना 'त्वमधन्या, अहं तु धन्ये' ति स्वस्य व्यतिरेकालङ्कारो व्यज्यते· ननु व्यञ्जको धन्यासीतित्वत्पदार्थस्य व्यतिरेकालङ्कार एव· तत्कथं वस्तुव्यञ्जकोदाहरणमेतदिति चेन्न, सम्बोध्यव्यतिरेकस्तावन्न वाच्यः, आत्मनि कथनाभावस्याऽशाब्दत्वात्· व्यङ्ग्यस्तु यद्यपि भवत्येव, तथापि तमनपेक्ष्यैव वाच्येन वस्तुमात्रेण यथोक्तव्यतिरेकव्यञ्जनादिति । अलङ्कारेण वस्तुनो यथा–

दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तिनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥ (३)

अत्र कालीकटाक्ष इव कृपाणो व्यलोकीत्युपमा, न पुनरुत्प्रेक्षा, सम्भावनाविरहात्· तया च 'सकलरिपुक्षयः क्षणात्करिष्यत' इति वस्तु प्रकाश्यते । अलङ्कारेणालङ्कृतेर्यथा–

गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥ (४)

अत्र निजाधरदशनवैरिवधूजनोष्ठदशनव्यथामोचनयोः कारणकार्ययोः पौर्वापर्याभावलक्षणया ऽतिशयोक्त्या ऽलङ्कारेण दशनसमकालमेव शत्रवो व्यापादिता इति "समुच्चयो ऽसौ स त्वऽन्यो युगपद्या गुणक्रिये' त्युक्तलक्षणः समुच्चयालङ्कारो द्योत्यते· एष एव च 'तुल्यकालं योगि-

ते'ति व्युत्पत्त्या तुल्ययोगितेति केश्चिदुच्यते· 'मम त्वया ऽप्यन्यस्य दृति-
निवर्त्तनामि'ति नृपबुद्धेरुत्प्रेक्षणादुत्प्रेक्षा ऽप्यत्र व्यङ्ग्या । एषु व्यञ्जको-
ऽर्थः स्वतःसम्भवी ॥ * ॥

कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्ति-
र्यथा—

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्त्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का-
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति ॥ (५)

अत्र यद्यपि बिसिनीकाण्डसंजातशङ्का इति भ्रान्तिमान् ससन्दे-
हो वाऽलङ्कारो व्यञ्जक इति वस्तुमात्रव्यञ्जकत्वोदाहरणमयुक्तम्,
तथापि तद्ध्याननैरपेक्ष्येणापि ' किञ्चिच्छुक्लं कर्णे प्रविशती'त्येतावतापि
वस्तुमात्रेण ' येषामप्यर्थाधिगमो नास्ति तेषामप्येवं श्वैत्यमूर्तत्वादिबुद्धि-
जननेन त्वत्कीर्त्तिश्चमत्कारोती'ति व्यक्तिसम्भवाद्वस्तुमात्रोदाहरणमुक्तम्·
अत्र च कीर्त्तिश्रवणानन्तरं कर्णे हस्तावर्त्तनं हस्तिनो न स्वतःसम्भवि,
किन्तु कविसम्प्रदायात् कविना वर्णितमिति कविप्रौढोक्तिसिद्धत्वम्· एव-
मग्रेऽपि द्रष्टव्यम् । अत्रैव वस्तुना अलङ्कारस्य यथा—

केसेसु बलामोडिअ तेण समरम्मि जअसिरी गहिआ ।
जह कन्दराहि विहुरा तस्स दिढं कण्ठअम्मि संठविआ ॥ (६)

अत्र 'तेन तथा समरे केशेषु जयश्रीर्गृहीता, यथा तस्यारयः कन्द-
राभिः कण्ठे स्थापिता' इति वस्तुना 'एकत्रैव संग्रामे विजयदर्शनात्तस्यारयः
पलाय्य गुहासु तिष्ठन्ती'ति काव्यलिङ्गं, 'न पलाय्य गतास्तद्वैरिणो, ऽपि तु
ततः पराभवं सम्भाव्य कन्दरा एव न तांस्त्यजन्ती'त्यपह्नुतिश्च व्यज्यते·
यत्तु "केशग्रहावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान्कण्ठे गृह्णन्ती-
त्युत्प्रेक्षा व्यज्यत" इति, तद्भवेदेवं, यदि पूर्वं कन्दरादीनां नायिकात्वाद्या-
रोपः स्यात्, अन्यथा केशग्रहणस्य मदनोद्दीपकत्वायोगात्, तदभ्युपगमे
च न वस्तुमात्रस्य व्यञ्जकत्वं, किन्तु समासोक्तेरलङ्कारस्यापि । अत्रैवा-
लङ्कारेण वस्तुनो यथा—

गाढालिङ्गणरहसुज्जुअम्मि दइए लहुं समोसरइ ।
मणंसिणीण माणो पीलणभीरुव्व हिअआहि ॥ (७)

अत्र पीडनभीरुरिवेत्युत्प्रेक्षया ऽलंकारेण 'प्रत्यालिङ्गनादि तत्र जृम्भत' इति वस्तु ध्वन्यते । अत्रैवालङ्कारेणालङ्कारस्य यथा–

जा ठेरं व हसंती कइवअणंबुरुहबद्धविणिवेसा ।
दावेइ भुवणमंडलमण्णं विअ जअइ सा वाणी ॥ (८)

अत्र 'जाठेरं व हसन्ती'त्युत्प्रेक्षालङ्कारेण 'चमत्कारैककारणं नवं नवं जगदम्बुजासना निर्मिमीत' इति वाण्या ब्रह्मणो व्यतिरेकः प्रकाश्यते· यद्यप्युत्प्रेक्षां विनापि व्यतिरेकोऽयं प्रकाशते नियतिकृतनियमेत्यादिवत्, तथापि न स्फुटो भवतीति· यद्वा तावन्मात्रस्य व्यञ्जकत्वेऽप्युत्प्रेक्षाव्यञ्जकत्वं न विहन्यत इति ॥ * ॥

निबद्धवक्तृप्रौढोक्तिमात्रसिद्धव्यञ्जकार्थस्य ध्वनेर्भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा–

जे लङ्कागिरिमेहलासु खलिआ सम्भोअखिण्णोरई-
फारप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणं ।
ते एह्णिं मलआणिला विरहिणीणीसाससम्पक्किणो
जादा झत्ति सिसुत्तणेवि बहला तारुण्णपुण्णा विअ ॥ (९)

अत्र यथोक्तेन वस्तुना निश्वासेन 'प्राप्तैश्वर्या वायवः किं किं न कुर्वन्ती'ति वस्तु व्यज्यते· 'तारुण्णपुण्णा विअ'त्यस्य व्यक्तावनुपयोगात्· नचैवमस्याऽप्रयोजकत्व मुक्तिविशेषपरिपोषकत्वात्· निश्वाससम्पर्कस्य बहुलत्वहेतोरुपादानात् काव्यलिङ्गस्यैव व्यञ्जकतेति चेच, तस्य हेतुत्वाऽविवक्षयापि तथाव्यक्तेः । तत्रैव वस्तुना ऽलङ्कारस्य यथा–

सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासं ।
पियदंसणविहलंखलखणम्मि सहसत्ति तेण ओसरिअं ॥ (१०)

अत्र 'प्रियदर्शनविह्वलत्वक्षणे धीरत्वेनापसृतमि'तिवस्तुना 'ऽकृतेऽपि

प्रार्थने सा प्रसन्ने'ति विभावना, 'नूनं प्रियदर्शनसौभाग्यबलं धैर्येण सोढुं न शक्यत' इत्युत्प्रेक्षा च व्यज्यते । अत्रैवालङ्कारेण वस्तुनो यथा–

उल्लोल्लकरअरअणक्खएहिं तुअ लोअणेसु मह दिण्णं ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिए ॥ (११)

अत्र 'किमिति कुपिते लोचने वहसी'ति प्रश्नोन्नयनादुत्तरालङ्कारेण "कोवेण पुणोइमेणअक्कमिआ" इत्यपह्नुत्यलङ्कारसहितेन 'न केवलमार्द्रक्षतानि गोपयसि, किन्तु तेषामहं प्रसादपात्रमपि जाते'ति वस्तु व्यज्यते । अत्रैवालङ्कारेणालङ्कारस्य यथा–

महिलासहस्सभरिए तुअ हिअए सुहअ सा अमाअन्ती ।
दिअहं अणण्णकम्मा अङ्गं तणुअं वि तणुएइ ॥ (१२)

अत्र 'महिलासहस्रभरितत्वात्तव हृदि स्थानं न लभ्यते, ततोऽङ्गं तन्वपि तनयती'ति हेत्वलङ्काराभ्यां 'तनोस्तनूकरणेपि तव हृदये न वर्त्तत'-इति विशेषोक्तिः· अत्र कविनिबद्धा सखी वक्त्री ॥ एवमर्थशक्त्युद्भवस्य द्वादश भेदाः ॥

शब्दार्थोभयभूरेकः–

यथा–

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥

अत्र श्यामारूपकामिनीविशेषरजन्योरुपमा व्यङ्ग्या· सा चातन्द्रचन्द्रेत्यादेः परिवृत्त्यसहतया समुद्दीपितेत्यादेस्तत्सहतयोभयस्यापि व्यञ्जकत्वेन शब्दार्थोभयशक्तिमूला ॥

–भेदा अष्टादशाऽस्य तत् ॥ ४१ ॥

अस्य ध्वने,र्न्तु शब्दार्थोभयभुवः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

(शेषमग्रे)

सो मुद्धसामलंगो धम्मिल्लो कलिअललिअणिअदेहो ।
तीए खंधाहि बलं गहिअ सरो सुरअसंगरे जअइ ॥

अत्र 'सुरतसङ्गरे धम्मिल्लःस्मर' इति रूपकालङ्काराभ्यां 'तथा केशपाशः स्कन्धे पतितो, यथा रतिविरतावप्यनिवृत्तेच्छः कामुकोऽभू'दिति विभावना स्कन्धपदप्राधान्येन व्यज्यते ॥

अथ कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरव्यञ्जकार्थध्वनिषु पदप्राधान्येन वस्तुना वस्तुनो व्यक्तिर्यथा—

णवपुण्णिमामिअंकस्स सुहअ को तं सि भणसु मह सच्चं ।
का साहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥

अत्र यथोक्तेन वस्तुना 'ऽन्यस्यामपि प्रथममनुरक्तस्त्वमभूर्न तत'-इति वस्तु 'णअपुण्णिमामिअंक,पओसरअणी'पदप्राधान्येन द्योत्यते· अत्र परे रजनीवित्युपमानैरपेक्ष्येण कथं व्यञ्जकत्वमिति चिन्त्यम् । अत्रव वस्तुना ऽलङ्कारस्य यथा—

सहि णवणिहुवणसमरम्मि अंकवालीसहीए णिबिड़ाए ।
हारो णिवारिओ ब्विअ उच्चेरंतो तदो कहं रमिअं ॥

अत्र निधुवनसमर इतिरूपकस्य व्यञ्जनायामप्रयोजकतया वाच्येन वस्तुमात्रेण 'हारच्छेदानन्तरं प्रैढाङ्गनारताद्विलक्षणं नवोढायास्ते रतमभू,-त्कथय कीदृगि'ति व्यतिरेकालङ्कारः कहम्पदप्रकाश्यः । अलङ्कारेण वस्तुनो यथा—

पविसन्ती घरवारं विवलिअवअणा पलोइऊण पहं ।
खंधा घेत्तूण घड़ं हा हा णट्ठोत्ति रुअसि सहि किंत्ति ॥

अत्र 'नष्ट इति रोदिषी'ति हेत्वलङ्कारेण 'सङ्केतनिकेतनं गच्छन्तं कामुकं दृष्ट्वा यदि गन्तुमिच्छसि, तदपरं घटं गृहीत्वा गच्छे'ति वस्तु किंत्तिपदप्राधान्येन प्रकाश्यते· यथा वा—

विहलंखलं तुमं सहि दिट्ठूण कुडेण(क) तरलतरदिट्ठिं ।
वारप्फंसमिसेण अ अप्पा गरुओत्ति पाड़िअ विहिण्णो ॥

(क) घडेणेति क्वचित्पाठः, अर्थस्त्वभिन्नः ।

अत्र 'नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशसमये पश्चादागतं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वं द्वारस्पर्शव्याजेन त्वया घटः स्फोटित इति मयावगतं, तत्समाश्वासं विधाय समीहितसिद्धये व्रज, ऽहं तव श्वश्रूनिकटे सर्वं समर्थयिष्ये' इति वस्तु द्वारस्पर्शमिषेणेत्यपह्नुत्या "वारप्फंसमिसेण" तिपदेन द्योत्यते। अलङ्कारेणालङ्कारस्य यथा—

जोह्णाइ महुरसेण अ वितिण्णतारुण्णउच्छुअमणा सा।
वुड्ढावि णवोढिव्व परवहुआ अहह हरइ तुह हिअअं॥

अत्र 'परवधूत्वेन सा तव हृदयं हरती'ति काव्यलिङ्गालङ्कारेण—'ऽस्मानुज्झित्वा वृद्धां परवधूमभिलषसीति त्वदाचरितं वक्तुं न शक्यते' इत्याक्षेपालङ्कारः प्राधान्येन परवधूपदद्योत्यः प्रकाश्यते॥ शब्दार्थोभयशक्तिमूलस्तु पदप्रकाश्यो न भवति, तत्र वाक्यस्यैव प्राधान्यात्॥ एवं पञ्चत्रिंशद्भेदाः॥

—प्रबन्धेऽप्यर्थशक्तिभूः॥ ४२॥

अर्थशक्तिमूलः पदवाक्ययोः, प्रबन्धे च। प्रबन्धश्च संघटितनानावाक्यसमुदायः। स च ग्रन्थरूपस्तदवान्तरप्रकरणरूपश्चेति। तत्र पदवाक्ययोरुदाहृतम्। प्रबन्धे गृध्रगोमायुसंवादादौ। तथाहि—

अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे॥
नचेह जीवितः कश्चित्कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः, प्राणिनां गतिरीदृशी॥

इति दिवा प्रागल्भ्यवतो गृध्रस्य मृताऽर्भकपुरुषविसर्जनपरं वाक्यमेतकम्।

आदित्योऽयं स्थितो मूढाः! स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः॥

इति निशि प्रगल्भस्य गोमायोस्तत्त्रावस्तेनपरं श्मशानकृत्य,मिति प्रबन्ध एव व्यञ्जकः प्रयते। अत्र स्वतःसम्भविना वस्तुना गमननिवर्तनरूपवस्तुव्यक्तिः। एवमन्येऽप्येकादश भेदा द्रष्टव्याः॥

पदैकदेश,रचना,वर्णेष्वपि रसादयः।

रसादयोऽलक्ष्यक्रमाः पदैकदेशे, रचनायां, वर्णेषु, अपिशब्दात्प्रबन्धे। पदवाक्ययोस्तु "पदेऽप्यन्य" इत्यनेनैव प्रतिपादिताः। पदं द्विविधं सुबन्तं-तिङन्तं च। तदेकदेशो नामधातुस्वरूपप्रकृतिभागः, प्रकृत्येकदेशः, सुप्तिङ्-स्वरूपविभक्तिभागश्चोपसर्गादिरूपश्च। तत्र पदवाक्ययोरुदाहृतं प्राक्। पदैकदेशादिषूदाह्रियते। तत्र धातुरूपप्रकृत्यात्मकदेशे रसादिव्यक्तिर्यथा—

रइकेलिहिअणिअसणकर(क)किसलअरुद्धणअणजुअलस्स।
रुद्दस्स तइअणअणं पव्वइपरिचुम्बिअं जअइ॥

अत्र रतिव्यक्तौ जिधातुरूपप्रकृतेः प्राधान्यम्। यतः स्थगनव्यापारसाम्येऽप्यन्यनेत्रयोः कराभ्यां पिधान,मस्य तु लोकोत्तरेण कर्मणेति तदेवोत्कृष्टं-धन्यजीवितमिति रत्युत्कर्षप्रयोजकमनया व्यज्यते। अतएव जयतीत्युक्तं-न तु शोभत इत्यादि। एवमग्रेऽपि प्रकृत्यादे रसादिव्यञ्जने प्राधान्यं तत्तदर्थस्य। नामरूपतदेकदेशे तद्व्यक्तिर्यथा—

प्रेयान्सोयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः,।
तावत्प्रत्युत पाणिसम्पुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामक,महो प्रेम्णो विचित्रा गतिः॥

(क) ०णिअसणकर०—इत्येवमेव त्रिषु, प्रकाशादिष्वपि च प्रायो भवति, व्याख्यातं चैवमेवोदाहरणचन्द्रिकाप्रदीपोद्योतकृदादिभिः—'रतिकेलौ हृतं निवसनं येन स चासौ, करकिसलयाभ्यां रुद्धं पिहितमर्थाद्गौर्या नयनयुगलं यस्य तथाभूतश्चेति बहुव्रीहिद्वयानन्तरं कर्मधारयः। 'रतिकेलौ हृतं निवसनं यस्यास्तस्या अर्थात्पार्वत्याः करकिसलयाभ्या'मिति चण्डीदासादिव्याख्यानं तु णिअसणकरेत्यत्र ह्रस्वाश्चिन्त्य'इति। पर,मेते स्वच्छन्दमहानुभावाश्छन्दांस्यालं न पश्यन्ति, पश्यन्ति च प्रत्युत परस्य निरवद्यमपि वचः सावद्यमिति।

अत्र द्वारादिपदं परिहृत्य पद्वीनीत्युक्तम्· तेन द्वारपर्यंतं गमनेऽप्य-सहिष्णुतयोत्कण्ठातिशयो व्यज्यते । तिङ्सुपोर्यथा–

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां,-
दिशि दिशि पवमानो वीरुधां लासकश्च, ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा,
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥

अत्र किरतीति तिङा किरणस्य[क] साध्यता, तिङ्योगे साध्य-तयैव धात्वर्थोपस्थितेः· निवृत्तेति सुप्प्रत्ययेन निवृत्तेः सिद्धता, सुप्प्रयोगे तथैव प्रकृत्यर्थप्रतीतेः· तत्रापि क्तप्रत्ययेनातीतता प्रकाश्यत इति किरण-निवृत्त्योः पौर्वापर्यविपर्ययरूपातिशयोक्तिप्रकाशो रसोत्कर्षं पर्यवस्यति· यत्तु "लटा साध्यत्वं, क्तप्रत्ययेन भूतत्व"मितिव्याख्यानं, तदयुक्तं, सुप्तिङ्-भ्यां सिद्धत्वसाध्यत्वमभिधाय "तत्रापि क्तप्रत्ययेनातीतत्व"मित्यनेन वृत्तिव्या-ख्यानेन विरोधात् । अथ सुप्तिङ्विशेषेषु यथा–

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो,
निराहाराः सख्यः सततरुदितोच्छूननयनाः, ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै,-
स्तवावस्था चेयं, विसृज कठिने! मानमधुना ॥

अत्र लिखन्नित्युक्तं, न तु लिखतीति· तेन शत्रा लिखनस्य[ख]-ऽप्राधान्यमबुद्धिपूर्वकत्वरूपम्· आस्त इत्युक्तं, नत्वासीदिति· तेन तथाव स्थानस्य प्रसादपर्यन्तता तिङ्विभक्त्या व्यज्यते· यद्यपि शतृप्रत्ययः सुपः प्रकृतिरेव, तथापि तिङादेशिलड्प्रकृतितया तिङ्त्वेनैवोदाहृतः· भूमिमि-त्युक्तं,-नतु भूमाविति· तेन 'बुद्धिपूर्वकं भूमौ न किंचिल्लिख्यत'इति सुब्वि-भक्त्या व्यज्यते ।

गामारुहम्मि, [ग]गामे वसामि, णअरट्ठिदं ण जाणामि, ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥

(क) किरणस्येत्यत्र सर्वत्र पाठः, एतदीयसाधुत्वादिविचारस्त्वन्यत्र द्रष्टव्यः ।
(ख) लिखनस्येति प्रायः पुस्तकेषूपलभ्यमानत्वेऽपि लेखनस्येति न्याय्यम् ।
(ग) गामरुहम्मि–इति केषुचित्पाठः ग्रामरुहास्मीति च तदर्थः ।

अत्र नागरिकाणामितिषष्ठ्या पतिपदार्थे तादृशकलाभिज्ञतादिरूप उत्कर्षः प्रकाश्यते। "रमणीयः क्षत्रियकुमार आसी"दित्यत्र लङाऽतीतकालविहितेना चिरन्तनीयहिंसायाः सुकरत्वं व्यञ्जयता प्राधान्येन धूर्जटिधनुर्भङ्गजन्मा भार्गवक्रोधः प्रकाश्यते। वचनविशेषो यथा—

ताणं गुणग्गहणाणं ताणुक्कंठाणं तस्स पेम्मस्स।
ताणं भणिआणं सुन्दर! एरिसिअं जाअमवसाणं॥

अत्र 'गुणग्रहणादीनां प्रेमहेतूनां नानाप्रकारकत्वेऽपि कार्यं प्रेमैकजातीयमेव, न कदाचिदप्यभावं प्राप्त'मिति बहुवचनैकवचनाभ्यां व्यज्यते। पुरुषव्यत्ययस्य व्यञ्जकत्वं यथा—

रे रे चञ्चललोचनाञ्चितरुचे चेतः! प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि,।
त्वं मन्ये विहरिष्यसे, बत हतां मुञ्चान्तराशामिमा,-
मेषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ॥

अत्र 'त्वं मन्ये, ऽहं विहरिष्यस' इति "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च"ेति सूत्रेण युष्मदस्मदोर्योग उत्तममध्यमयोर्विपर्ययेण विधानं प्रहासमभिव्यनक्ति· पूर्वनिपातादयः पदैकदेशधर्मत्वात् पदैकदेशा एव गण्यन्ते· पूर्वनिपातस्य यथा—

येषां दोर्बलमेव, दुर्बलतया ते सम्मता,स्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः,।
ये क्ष्माशक्र! पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम्॥

अत्र चाटुके पराक्रमनयेत्यत्र नयस्याल्पाच्तरत्वेन पूर्वनिपातमविधाय पराक्रमस्य तथाभावो ऽभ्यर्हितत्वं द्योतयति। उपपदविभक्तिविशेषस्य यथा—

प्रधनाऽध्वनि वीर! धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्।
दिवसेन तु नरप! भवानयुद्ध विधिसिद्धसाधुवादपदम्॥

अत्र वीररसात्मनि भवान् दिवसेनायुद्धेत्यपवर्गे तृतीया· अपवर्गश्च

फलप्राप्तौ क्रियापरित्यागः। अतो भवत्पदार्थस्य युद्धरूपक्रियायां यत्फलं विजय,स्तत्प्राप्तिस्तृतीयया द्योत्यते। यस्तु "युद्धविधीत्यादि क्रियाविशेषण"मिति व्याख्यातवान्, सच्छन्दोभङ्गमपि नाज्ञासीदिति। प्रत्ययरूपस्य-प्रकृत्येकदेशस्य यथा—

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं-
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।
साक्षात्कामं नवमिव रतिर्मालती माधवं य-
द्गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति॥

अत्राङ्गकैरिति कस्वरूपतद्धितेनाल्पार्थकेनानुकम्पातिशयो द्योत्यते। उपसर्गरूपस्य तदेकदेशस्य यथा—

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपदं[क] यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो[ख]
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥

अत्र प्रध्वंसादिति प्रशब्दः प्रकृत्येकदेशः प्रकर्षद्योतकः। उपसर्गाणामवाचकत्वात्। निपातरूपपदैकदेशस्य यथा—

कृतं च गर्वाभिमुखं मनस्त्वया,
किमन्यदेवं निहताश्च नो द्विषः,।
तमांसि तिष्ठन्ति हि ताव,दंशुमा-
न्न यावदायात्युदयाद्रिमौलिताम्॥

अत्र चद्वयेन मनोगर्वाभिमुखीकरणशत्रुहननयोरेककालतारूपसमुच्चयो द्योत्यते। यद्यपि चेति भिन्नमेव पदं, तत्त्वन्यस्यैकदेश,स्तथापि केवलस्य तस्याऽसाधुत्वात्पदैकदेशत्वोपचारेणोदाहरणम्। अत एवोक्तं भोजराजेनोपमाप्रकरणे "नहीवादेः सार्थकत्वेपि पृथक्पदतामनुशास्ती"ति। एतेन तिङन्तसमभिव्याहृता उपसर्गा अपि व्याख्याताः। अथ बहूनां यथा—

(क) अनुभवपथमित्याकरे क्वचित्।
(ख) महामोहर्महिमा—इति चाकरः प्रायः।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्,।
बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

अत्रासावित्यत्र सर्वनाम्नः, भुवनेष्विति न तु देशेष्विति, भुवने वेति भुवनरूपप्रातिपदिकस्य, बहुवचनस्य च, विक्रमगुणैरिति न तु गुणेन दोषैर्वेति प्रातिपदिकवचनयोर्व्यञ्जकत्वम्। किञ्चास्मद्भाग्येत्यत्र न त्वद्भाग्येति, न वा मद्भाग्येतिकृतम्। तेनास्मदित्यस्य बहुवचनसिद्धतया सर्वाक्षेपकत्वम्। तथा भाग्यविपर्ययादित्यन्यथासम्पत्तिमुखेनोक्तं, नत्वभाग्यादित्यभावमुखेना,त-स्तथाविधानेनाऽभाग्यविरहेपि भाग्यान्येव तादृशत्वेन परिणतानीति व्यज्यते।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥

अत्र तरुणिमनीतीमनिचस्तरुणत्वपदेन, अनुमदनधनुरित्यव्ययीभावस्य धनुःसमीप इत्यनेन, मौलिमधिवसतीति कर्मभूताधारस्य मौलौ वसतीत्यनेन तुल्येपि वाचकत्वे ऽस्ति कश्चित्स्वरूपस्य विशेषो, यश्चमत्कारकारी, स एव व्यञ्जकः। तत्र त्वशब्देन प्रकृत्यर्थस्य प्रौढत्वं व्यज्यते। इमनिचा तुतद्व्यतिरेको नवत्वम्। धनुषः समीप इत्यत्र धनुषोऽत्यन्तगुणीभावः। अव्ययीभावे तु पूर्वपदार्थप्राधान्येऽप्युत्तरपदार्थस्य किञ्चिदेवाप्राधान्यम्। कर्मभूताधारस्थले तु व्याप्तिरवगम्यत इत्यवसेयम्। एवमन्येषामपि बोद्धव्यम्। वर्णरचनयोर्व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते। प्रबन्धे तु नाटकादौ रसादिव्यञ्जकत्वं द्रष्टव्यम्। यत्तु "पूर्वं प्रबन्धशब्देन संघटितावान्तरवाक्यसमूहोऽभिहित, इदानीं तु संघटितमहावाक्यमित्यपौनरुक्त्य"मिति कश्चिदाह, तदज्ञानात्, पूर्वं हि अर्थशक्तिमूलमात्रस्य प्रबन्धविषयत्व,मत्र त्वसंलक्ष्यक्रमव्यङ्ग्यस्येति पौनरुक्त्याभावात् ॥

भेदास्तदेकपञ्चाशत्—

तथा हि, अविवक्षितवाच्यस्य द्वौ भेदौ। तौ च प्रत्येकं पदवाक्य-

योरिति चत्वारो भेदाः· विवक्षितान्यपरवाच्येषु मध्ये ऽलक्ष्यक्रमव्यङ्ग्यः पद,वाक्य,तदेकदेश,रचना,वर्ण,प्रबन्धभेदेन षड्विधः· लक्ष्यक्रमेषु शब्दशक्तिमूलस्य द्वौ भेदौ· तौ च प्रत्येकं पदवाक्ययोरिति तस्य चत्वारो भेदाः· अर्थशक्तिमूलस्य द्वादश भेदाः· ते च प्रत्येकं पदवाक्यप्रबन्धेष्विति षट्त्रिंशदस्य भेदाः· उभयशक्तिमूलस्तु वाक्य एवेति ॥

—तेषां चान्योन्ययोजनम् ॥ ४३ ॥

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।
वेदखाब्धिवियच्चन्द्राः—( १०४०४ )—

सशयेनाऽङ्गाङ्गिभावेनै,कव्यञ्जकानुप्रवेशेन चेति त्रिविधः सङ्करः· उक्तप्रकारत्रय विना संयोगः संसृष्टिः· एवमेकपञ्चाशतो भेदानामेकपञ्चाशता भेदैर्योजनमिति तावता तावद्गुणनेन सहस्रद्वयमेकाधिका षट्शती च· संयोजनं च संसृष्ट्यादिचतुष्प्रकारैरिति तावतां चतुर्भिर्गुणने दश सहस्राणि चतुरधिकानि चत्वारि शतानि च सम्पद्यन्ते· नचानुग्राह्यानुग्राहकभावेन सङ्करस्थलेऽनुग्राहकस्याङ्गतया गुणीभाव इति न ध्वनिसङ्करत्वमिति वाच्यं, तत्र हि स्वतश्चमत्कारित्व एव तस्य किञ्चित्परोपकारकतामात्रं नतु शेषशेषिभाव एवेति· नन्वस्त्वेकपञ्चाशद्भिदेष्वेकतराणां पञ्चाशता योजनं, स्वस्य तु स्वेन कथं योजनेति चेत्, व्यक्तिभेदमादाय विजातीयवत् सजातीयेनापि सङ्करादिति सूत्रकर्तुराशयः । अत्राऽर्वाचीनाः—गणनेयं, न युक्ता, अविमाविमभेदस्य योजन एकैकभेदह्रासात्· तथाहि, अर्थान्तरसङ्क्रमितवाच्यस्याऽत्यन्ततिरस्कृतवाच्येन योजने यो भेदः, स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन योजनायाम्· एवमन्यत्रापि· तस्मात्,

"एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु ।
समार्धेनासमो गुण्य एतत्सङ्कलितं लघु ॥

इत्युक्तदिशा द्विपञ्चाशदर्द्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत्· तथाच, "रसदस्राग्निभिर्द्विन्य''इति (१३२६) त्रयोदश शतानि षड्विंश

त्यधिकानि जायन्ते· योगश्चतुष्प्रकार इति तेषु चतुर्भिर्गुणितेषु "वेदा-भ्रदहनेषव" इति (५३०४) पञ्च सहस्राणि चतुरधिकं शतत्रयं संकीर्णभेदा इत्येव ज्याय इति वदन्ति· अत्र ब्रूमः—अनुभवसिद्धौ तावत्पुण्ड्रकादीनुरसेष्विव[क] ध्वनिष्वपि हृद्यत्वातिशयानतिशयौ· तथाचार्थान्तरसङ्क्रमितवाच्यस्य यत्रातिशय,स्तत्रात्यन्ततिरस्कृतवाच्येन तद्योजनं, यत्र तु तद्वैपरीत्यं, तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः· एवमन्यत्राप्यूह्यम्· एतदेव प्राधान्यमादाय गणना सौत्री· नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं, तस्य भेदान्तरत्वं स्यादिति, मैवम्, अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात् तत्रोभयभेदसङ्करस्वीकारात्· एतादृशे च स्थाने[ख] पद्यालम्बनमात्रमेव महत्त्वरूपमिति सहृदयभावमास्थायालोचनीयमिति ॥

शुद्धभेदैः सह

—शरेषुयुगखेन्दवः (१०४५५) ॥ ४४ ॥

तेषु दिङ्मात्रमुदाह्रियते ।

छणपाहुणिआ देअर! जाआए सुहअ! किंपि दे भणिआ ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥

अत्रानुनयतेर्वाच्योऽनुनयः किमुपयोगलक्षणे लक्ष्ये सङ्क्रमितः, आहोस्विद् विवक्षित एव उपभोगस्य व्यञ्जक इत्यविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः सन्देहसङ्करः।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना·
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे,
वैदेही तु कथं भविष्यति ह हा हा देवि! धीरा भव ॥

अत्र मुख्यार्थबाधाऽलिप्तपदं सम्पर्कं लक्षयदतिशयं व्यनक्ति, पयोदे चाचेतने सौहृदाभावात् सुहृत्पदमुपकारित्वं लक्षयत्तदतिशयं प्रतिपादयति, पयोदानां मयूरनिष्ठकेकाद्युपकारशीलत्वात्· रामपदं च सर्वसहत्वानुप-

(क) पुण्ड्रकाद्याख्यरसेष्विवेत्यकत्रस्थस्तु नीत्यनुरूपार्थः ।
(ख) चाऽस्थाने–इत्यनेकस्थस्तु न प्रकृतावाचोयुक्तिः ।

युक्तशक्यार्थतया सकलदुःख भाजनत्वं लक्षयन् सीतां विनापि जीविष्या-मीति व्यञ्जयदेव विप्रलम्भं व्यनक्ति· तत्र लिप्तेति यपोदसुहृदामित्यनयो-रत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः· ताभ्यां सह राम इत्यर्थान्तरसंक्रमित-वाच्यस्यानुग्राह्यानुग्राहकभावेन सङ्करस्तयोरुद्दीपकत्वात्· रामपदेन चैक-व्यञ्जकानुप्रवेशेनार्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करः· रामोऽस्मीत्यनेने-नैव लक्षणामूलस्य विप्रलम्भस्य च व्यञ्जनाद् विलम्बे वाक्यव्यङ्ग्येयस्य प्राधान्यात्· एवमन्यदप्युदाहार्यम् ॥ ४२ ॥ ४३ ॥ ४४ ॥

इति महामहोपाध्यायश्रीगोविन्दकृते(क) काव्यप्रदीपे ध्वनिभेदवि-भागश्चतुर्थ उल्लासः ॥ ४ ॥

## ॥ अथ पञ्चम उल्लासः ॥

एवं ध्वनौ भेदप्रभेदाभ्यां निर्णीते गुणीभूतव्यङ्ग्यस्य भेदानाह—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ ४५ ॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदा मताः ।

वाच्यापेक्षया ऽचमत्कारकारित्वेन व्यङ्ग्यस्य गुणीभावः· तच्च स्वत एवासुन्दरत्वेनाऽगूढत्वादिविशेषणसप्तकेन चेत्यर्थः· अगूढं वा ऽस-हृदयैरपि द्राग्वेद्यम्· तादृशं वाच्यायमानतया न तथा चमत्करोति, यथा कामिनीकुचकलशवद्गूढम्· एवमपरेष्वपि भेदेष्वनुभव एव साक्षी· अपर-स्याङ्गम्, अपरस्य रसादेः स्वेनैरपेक्ष्येण लब्धसिद्धेरुपकारकम्· वाच्यसिध्यङ्गं, वाच्यस्य सिद्धिरेव यदधीना, न तत्· अस्फुटं, सहृदयानामपि दुःखसंवे-द्यम्· सन्दिग्धतुल्यप्राधान्येइति, सन्दिग्धप्राधान्यं, तुल्यप्राधान्यं चेति द्वन्द्व-मित्यर्थः· काक्वाक्षिप्तं, यया काक्वा विना वाक्यार्थ एवात्मानं न लभते, तया प्रकाश्यम्, काक्वा हठेनोपस्थापितमिति वा· असुन्दरं, स्वभावादेव वाच्यापेक्षयाऽचारु । तेष्वऽगूढं यथा—

(क) ०श्रीगोविन्दठक्कुरकृते—इति त्वन्यत्र ।

यस्याऽसुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेव सोऽस्मि,
जीवन्न सम्प्रति भवामि, किमावहामि ॥

अत्र जीवन्नित्यभिमतकार्याशक्तत्वे सङ्क्रमितवाच्यम्· तस्य च 'मरणमेव श्रेय' इति व्यङ्ग्यमसहृदयैरपि वाच्यवत् प्रतीयत इति गुणीभूतं व्यङ्ग्यम् । (१)

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥

अत्र चुम्बनेर्वक्त्रसंयोगो मुख्योऽर्थोऽचेतने बाधित इति संयोगमात्रं लक्षयतीत्यत्यन्ततिरस्कृतवाच्यत्वम्· व्यङ्ग्यश्चास्योदयः कालो वाच्यायमानतया गुणीभूतः· नन्वत्र लक्ष्यतावच्छेदकस्य संयोगत्वस्य वक्त्रसंयोगेऽपि सत्त्वात् कथमत्यन्ततिरस्कृतवाच्यत्वमिति चेत्, लक्ष्यतावच्छेदकस्य सत्त्वेऽपि वाच्यस्य संयोगविशेषस्य तत्र बाधात् ।

अत्रासीत्फणिपाशबन्धनविधिः, शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः, ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः,
केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता[क] च कण्ठाटवी ॥

अत्रानुनायकोपनायकप्रतिनायकेषु निर्दिष्टेषु चतुर्थवाक्ये ऽनुक्तोऽपि नायको राम एवार्थशक्त्या प्रतीयते· स च केनापीत्युपादानेन वाच्यायमानतया ऽगूढः कृतः· तस्याप्यत्रेतिपाठे गूढतया ध्वनित्वमव्याहतमेव· अत्र श्लोके प्रतिवाक्यमत्रेत्युपादानं प्रत्येकमेवाद्भुतत्वं व्यनक्ति । अपरस्य रसादेर्वाच्यस्य वा प्रधानस्याङ्गमलक्ष्यक्रमो, ऽनुस्वानाभलक्ष्यक्रमो वेति· द्विविधं· तत्र प्रथमे रसस्याङ्गभावेन गुणीभूतत्वं यथा—

(क) कृत्तास्थाने लूनेत्यन्यत्रास्ते ।

अयं स रशनोत्कर्षी पीनस्तनविमर्द्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र भूरिश्रवसश्छिन्नं हस्तमासाद्य तद्वधूनां प्रलापे शृङ्गारः करुणस्याङ्गम्। निष्पन्नस्य रसस्यापराङ्गत्वाभावाद्रसपदेनात्र स्थायिभावो द्रष्टव्यः । रसस्यैव भावाङ्गता यथा–

कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्द्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥

अत्र वक्तुर्देवीविषयरतिरूपभावे देवयोः शृङ्गारोऽङ्गम् । भावे भावस्याङ्गत्वं यथा–

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुःस्तुतिमिति प्रस्तौमि यावद्भुव,-
स्तावद्विभ्रदिमां स्मृतस्तव भुजो, वाचस्ततो मुद्रिताः ॥

अत्र भूविषयो रतिभावो राजविषयस्य रतिभावस्याङ्गम् । आभासस्याङ्गत्वं यथा–

बन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे!
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिस्तूयसे ॥

अत्र प्रथमार्द्धे शृङ्गारो ऽननुरक्तविषयतया, द्वितीयार्द्धे तु रतिरूपो भावः शत्रुविषयतया ऽऽभासः। तौ च राजविषयरतिभावस्याङ्गम् । भावशान्तेर्यथा–

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः, स गतः क्वापि तवेक्षणे क्षणात् ॥

(शेषमग्रे)

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी।

(*Continued from page* 10. Vol. XI.)

तद्धितश्चासर्वविभक्तिः ॥ इह यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधस्तथापि केवलस्य तद्धितस्य संज्ञायाः प्रयोजनाभावात् [1]तदन्तविधिर्विज्ञायतइत्याह । 'तद्धितान्तः शब्द इति' । अकच् तावत्प्रातिपदिकस्य सुबन्तस्य वा विधीयते । 'अव्ययादाप्सुप' इत्यत्राप्यव्ययाद्विहितस्य [2]सुपो लुग् न तु परस्या,त्युच्चैसावित्यादावपि प्रसङ्गात् । तत्पुरुषे" तुल्यार्थ,नाव्ययदिक्क्रुब्द,'खित्यनव्ययस्ये'त्यत्रापि पूर्वपदस्याव्ययस्य ग्रहणं, सर्वा विभक्तिर्यस्य सम्बन्धिनी न भवति सोऽसर्वविभक्तिः, किं पुनरिदं तद्धितस्य विशेषणमाहो स्वित्तदन्तस्य, कथञ्चेदं तद्धितस्य विशेषणं कथं वा तदन्तस्य, यदि सर्वा विभक्तिर्यस्य सम्बन्धिनी न भवति कारणत्वेन यस्योत्पत्तौ सर्वा विभक्तिः कारणं न भवति, यथा 'पञ्चम्यास्तसिलि'त्यादाविति कार्यमन्यपदार्थस्तदा तद्धितस्य विशेषणं भवति तद्धितस्यैव ह्युत्पत्तिर्न तदन्तस्य, एवं विशिष्टेन तद्धितेन तदन्तविधौ तादृशतद्धितान्तो ऽव्ययमित्यर्थो भवति । अथ तु सर्वा विभक्तिर्यस्य कार्यत्वेन सम्बन्धिनी न भवति यस्मात्सर्वा विभक्तिर्नोत्पद्यतइति कारणमन्यपदार्थस्तदा तदन्तस्य विशेषणं भवति । नहि तद्धितमात्राद्विभक्त्युत्पत्तिप्रसङ्गः । तत्र पूर्वस्मिन् पक्षे विना नानेत्यत्र न स्याद् नहि विनञ्भ्यामित्यत्र प्रतिनियता काचिद्विभक्तिराश्रीयतइति सर्वविभक्त्यन्ताभ्यां विनञ्भ्यावानाजौ भवतो ऽव्ययेभ्यस्तु निःसङ्ख्येभ्यः सामान्यविहिताः स्वादयो विभ्रन्तएवेति पक्षे येपि भवदादिप्रयोगे तसिलादयो विधीयन्त 'इतराभ्योपि दृश्यत' इति तेपि स भवाँस्ततो भवाँस्तं भवन्तं ततो भवन्तमित्यादिसर्वविभक्त्यन्तेभ्य उत्पद्यन्तइति तत्रापि न स्या 'त्तस्यापत्यं' 'तत्र भव'

---

[1] तदन्तस्य सञ्ज्ञा ज्ञायतइति पाठान्तरम् ।

[2] सुप इति नास्ति २ । ३ । पुस्तकयोः ।

इत्यादौ च षष्ठ्यादिकैकैव विभक्तिर्निमित्तं न तु सर्वस्यैापगवादावतिप्रसङ्गश्चेति द्वितीयं पक्षमाश्रित्याह । 'यस्मादित्यादि'। तत्र इत्यादौ 'प्राग्दिशो विभक्ति'रिति तसिलादीनां विभक्तित्वात्स्यदाद्यत्वं, कथं पुनरेतेऽसर्वविभक्तयो यावता यत्र च सङ्ख्या सम्भवति तत्रायमुपदेशो ऽव्ययेभ्यस्तु निःसङ्ख्येभ्य इत्यस्मिन्पक्षे 'अव्ययादाप्सुप' इति ज्ञापकाश्रयणे च सर्वविभक्तयो, ऽथ सङ्ख्याकर्मादयश्च स्वादीनामर्थास्तेन सहास्यैकवाक्यतेति पक्षस्ततो ऽविभक्तित्वमेवासत्त्वभूतार्थानामापद्येत । उच्यते । 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्रैकस्मिन्नित्यपनीयैकवचनमिति पृथक् सूत्रं कर्त्तव्यं, ततो द्विबह्वोर्द्विवचनबहुवचने इति, ततश्चैकवचनमेकस्मिन्नपि भविष्यति, सङ्ख्याकर्माद्यभावे चाप्राप्त[1]प्रापणार्थत्वादेकवचनमित्यस्य सूत्रस्य, द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां बाध्यते, ततश्चासत्त्ववचनेभ्योऽपि [2]सप्तानां विभक्तीनां सप्ताप्येकवचनानि भवन्ति । अव्ययीभावादप्येवमेव, तावतापि नाव्ययीभावा,त्तृतीयासप्तम्यो,रित्यस्योपपत्तेस्तदिदमुच्यतएकवचनमुत्सर्गतः करिष्यतइति । एवं स्थिते यस्मात्सर्वा विभक्तिर्नोत्पद्यतइत्येकवचनेन विग्रहोऽवयवकार्त्स्न्ये वृत्तिः सर्वशब्दो यस्य त्रिकस्य विभक्तिसंज्ञा विहिता तन्निरवशेषं यस्मान्नोत्पद्यते किं तु तदेकदेश एवेत्यर्थस्तदाह । 'यस्मात् सर्वा विभक्तिरिति' । यदि तु सर्वा विभक्तय इति बहुवचनेन विगृह्येत ततः सर्वाचीन इतिवत् प्रकारकार्त्स्न्येपि सर्वशब्दस्य सम्भवाद् एकवचनमात्रोत्पत्तावपि सर्वा विभक्तयः सप्ताप्येकवचनान्यसत्त्ववचनेभ्य उत्पद्यन्तइति न स्यादसर्वविभक्तित्वमिति भावः । इह 'तेनैकदिक्' 'तसिश्चे'त्येकस्मिन्नर्थे विधीयमानयोरप्यणतसोरण् द्रव्यप्रधानस्तसिस्तु द्रव्योपसर्जनतृतीयार्थप्रधान इति तस्यासत्त्ववचनता । 'तद्धित इति किमिति' । असर्वविभक्तिरव्ययमित्येवास्तु मा भूत्सर्वमेव प्रकरणं ये हि स्वरादयो ये च निपाताः ये च कृन्मेजन्ताः ये च क्त्वादयो यश्चाव्ययीभावः सर्वे ते ऽसर्वविभक्तय इति प्रश्नः । 'एको द्वौ बहव इति' । एते-

१ प्रयोगार्थत्वादिति पा० २ पुस्तके ।

२ सर्वासामिति पा० २ ।

भ्योपि सप्तस्वपि विभक्तिष्वेकैकमेव वचनमुत्पद्यतइति स्यादतिप्रसङ्ग इति कर्त्तव्यं तद्धितग्रहणं, तद्धितग्रहणे तस्मिंश्च कृते प्रकरणमपि कर्त्तव्यमिति भावः। विंशत्यादयस्तु कृतैकशेषा द्विवचनबहुवचनान्ता अपि भवन्तीति नासर्वविभक्तयः, एवं द्वयत्रयोभयशब्दा अयजन्ताः। एवमपि गोदयोर्[1]दूरभवो ग्रामः 'अदूरभवश्चे' त्यणो 'वरणादिभ्यश्चे'ति लुपि युक्तवद्भावात् सर्वासु विभक्तिषु द्विवचनस्योत्पत्तेरस्त्यतिप्रसङ्गः, स्यादयं पर्यनुयोगो यदि तद्धितान्तो गोदशब्दो वयं तु 'लुब्योगाप्रख्यानाद्' 'योगप्रमाणे च तदभावे दर्शनं स्यादि' त्यधीयाना नैवं पर्यनुयोज्याः, एवमपि 'सङ्ख्यायाःसञ्ज्ञासङ्घसूत्राध्ययनेषु' सञ्ज्ञायां स्वार्थउत्पाद्यः पञ्चैव पञ्चकाः शकुनयोऽत्र प्राप्नोति, पचतिरूपं पचतिकल्पमित्यादौ च एकवचनमेवोत्पद्यतइति स्यादेवातिप्रसङ्गस्तस्मात्तद्धितानां पाठ एवाश्रयणीयस्तदाह। 'सिद्धं तु पाठात्तसिलादयः प्राक् पाशपः शसप्रभृतयः प्राक् समासान्तेभ्यः मान्तः कृत्वोर्थस्तसिवती नानाञाविति'॥

कृन्मेजन्तः॥ अत्रापि पूर्ववत्तदन्तस्य सञ्ज्ञेति स्थिते मेजन्तग्रहणं कृदन्तस्य विशेषणं कृदन्तम्मेजन्तमव्ययमिति, कृत एव वा कृद्यो मेजन्तस्तदन्तमव्ययमिति, तत्राद्ये पक्षे प्रतामौ प्रतामः, लवमाचष्टइति णिचि क्विपि णिलोपे ऊठित्येधत्यूठ्स्विति वृद्धौ लौरत्रापि प्राप्नोति, भवति ह्येतत् प्रत्ययलक्षणेन कृदन्तं मेजन्तं च श्रूयतइतीमं दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह। 'कृद्य इति'। नन्वत्रापि कारयांचकार आमन्तस्य न प्राप्नोति, पूर्वत्र तु लिटः कृत्त्वात्सिद्ध,मत्रापि स्वरादिष्वामिति पाठात् सिद्ध,मथापि तत्र तद्धितस्य पाठः, एवमपि कृदन्तत्वादुत्पन्नानां सुपा 'माम' इति लुग्भविष्यति, लेरिति हि तत्र नानुवर्त्तते। 'स्वादुङ्कारमिति' 'स्वादुमि णमुल्' स्वादुमित्यर्थग्रहणात्सम्पन्नं कारमित्यपि भवति, स्वादुमीति निपातनात्पूर्वपदस्य मान्तत्वं, 'येन विधिस्तदन्तस्ये' त्येव सिद्धेरपार्थकमन्तग्रहणं तत्राह। 'अन्तग्रहणमित्यादि'। नित्ययोगे बहुव्रीहिविज्ञानादेकदेशिकप्रतिपत्तिः। 'आधयइति'। आङ्पूर्वाद्धाञ 'उपसर्गे घोः

---

१ नर्मदयोरित्यप्यधिकं २ पु॰।

कि:,’ चतुर्थ्येकवचने ‘घेर्ङिति’ आधये, भवत्ययं संप्रत्येजन्तो नोपदेशे, एवं चिक्रीर्षवे करोतेः सचन्ता ‘त्सनाशंसभिक्ष उः,’ कुम्भकारशब्दः कर्म्मण्यणन्तः ‘बहुवचने झल्येत्,’ अत्राव्ययसञ्ज्ञायामव्ययादिति लुक् स्यात्, सन्निपातपरिभाषया ऽप्येतत्सिद्धं तथा लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति, अन्तग्रहणं तु यथान्तरं द्रष्टव्यम् ॥

अव्ययीभावश्च ॥ ‘लुङ्मुखस्वरोपचारा इति’। अत्र मुखस्वरोपचारौ निवर्त्यमानतया प्रयोजनं मशकार्थो धूम इतिवत्। लुक् प्रवर्त्यमानतया उपाग्नीति। अव्ययादिति लुक्। ‘पूर्वपदप्रकृतिस्वर एवेति’। समासस्वरेणान्तोदात्तत्वम्। ‘उपपयः काम इति’। ‘शीलिकामिभिक्षाचरिभ्यो णः’ कर्म्मणि घञन्तेन वा बहुव्रीहिः, अत्र मुखस्वरनिवृत्तिरेव साक्षात्प्रयोजनं लुक् तु नाव्ययीभावादतोऽम्त्विति विशेषप्रतिषेधात् सिद्धोऽतः कृकमिकंसेत्यत्र चानुत्तरपदस्थस्येति वर्त्तते। नन्वन्यदप्यव्ययकार्यं सम्भवति उपाग्निकमित्यकच्, उपकुम्भमन्यइति मुम्प्रतिषेधः, उपकुम्भीभूत इति ‘अस्य च्वौ’ विर्तीत्वस्योपसङ्ख्यानिकः प्रतिषेधः, उपाग्न्यधीयानेति सुबामन्त्रितइत्यस्योपसंख्यानिकः प्रतिषेधस्तत्कुतोयं कार्यनियम इत्यत आह। ‘सर्वमिदमित्यादि’। इह चेत्यादिना न लोकाव्ययेत्यत्र यद्वक्ष्यति अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध इति तस्यावक्तव्यतां दर्शयति ॥

शि सर्वनामस्थानम् ॥ ‘कुण्डानीति’। ‘जश्शसोः शिः’ सर्वनामस्थानइति वर्तमाने ‘नपुंसकस्य झलच’ इति नुम्। ‘सर्वनामस्थाने चासम्बुद्धौ’ विति दीर्घो यद्यपि ‘जसः शि’ ‘नपुंसकाच्चे’ ति विहितस्य शीशब्दस्य शब्दरूपापेक्षया नपुंसकह्रस्वत्वे शि इति रूपं सम्भवति तथापि लाक्षणिकत्वात्त तस्य ग्रहणं सर्वनामस्थानप्रदेशेषु शिग्रहणे सुटो ग्रहणं न स्यात्, शिसुटोरिति वचने नपुंसकसुटोपि ग्रहणं प्राप्नोत्यतः संज्ञा तावत्कर्त्तव्या, किमर्थं तु महती क्रियते, केचिदाहुः, सर्वं नाम तिष्ठत्यस्मिन्निति सर्वनामस्थानं, नाम प्रातिपदिकं सर्वशब्दो ऽवयवकार्त्स्न्यवचनः सर्वावयवयुक्तं यत्र नाम तिष्ठतीत्यर्थस्तेनान्यत्र न्यूनं नाम तिष्ठतीत्यर्थः

गम्यते, किं सिद्धं भवति, उपेयुष इत्यादौ सम्प्रसारणे कृते पूर्वकृतस्येटो निवृत्तिः सिद्धा भवति, अन्यथा निवृत्तिकारणाभावात् अवतिष्ठेतेति, एवं तु कस्मिन् प्रातिपदिके किं न्यूनमिति न ज्ञायेत तस्मात्पूर्वाचार्यानुपालब्धुमेषा महती संज्ञा प्रणीता ॥

सुडनपुंसकस्य ॥ 'सुडिति पञ्च वचनानीति'। अनेनौटष्टकारेण प्रत्याहारो न टाशब्दस्येति दर्शयति, आदिरन्त्येनेत्यत्रान्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेन प्रत्याहारो लकारे त्वकारस्येत्संज्ञा विधानसामर्थ्यात् प्रत्याहार इति भावः। 'नपुंसकादन्यत्रेति'। अनेन पर्युदासतां दर्शयति, प्रसज्यप्रतिषेधे हि कुण्डानि तिष्ठन्तीति जसः शौ पूर्व्वेण या प्राप्तिस्तस्या अपि प्रतिषेधशङ्कायां 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति' परिहर्त्तव्यं स्याद् असमर्थसमासश्चाश्रयणीयः स्यात्। 'नपुंसके न विधिरिति'। स्त्रीपुंससम्बन्धिनः सुट उपादानाद् न प्रतिषेध इति विधिप्रधानत्वात् पर्युदासस्य। 'तेनेत्यादि'। यत एवं नपुंसकेनास्य व्यापारस्तेन जसो यः शिस्तस्य पूर्वेण संज्ञा भवतीति। 'सामनी इति'। नपुंसकाच्चेति शीभावः, 'विभाषा ङिश्योः' रित्यल्लोपाभावे दीर्घो न भवति ॥

नवेति विभाषा ॥ नवाशब्दोयमेकनिपातोऽप्यस्ति प्रतिषेधवाची नवोक्तार्थत्वादिति यथा, तस्य ग्रहणे विभाषादिक्समासइति प्रकृते 'न बहुव्रीहा' विति प्रतिषेधो ऽनैर्थक्यः स्याद्, विभाषाप्रदेशेषु च नशब्द एवोपादेयः स्याद्, अत एव संख्यावाचिनो नकारान्तस्याप्यग्रहणं, प्रत्ययस्त्रीलिङ्गवचनोऽपि न गृह्यते प्रदेशेष्वसम्भवात्, नहि 'विभाषा श्वे' रित्यादौ विधेयस्य नवपुराणत्वं स्त्रीलिङ्गता वा सम्भवति तस्मान्निपातसमुदायोयमित्याह। 'नेति'। 'प्रतिषेध इत्यादि'। तयोः प्रतिषेधविकल्पयोरित्यनेनार्थयोरेषा संज्ञेति दर्शितम्। ननु च स्वं रूपं शब्दस्येति वचनान्नवाशब्दयोरेव ग्रहणं युक्तं तत्राह। 'इतिकरणइत्यादि'। कर्म्मणि ल्युट्, इतिश्चासौ करणश्च सोऽर्थस्य संज्ञिनो निर्द्देशो यथा स्यादित्येवमर्थः। इतिशब्दो हि पदार्थविपर्यासकृत् तत्र लोके बाह्यार्थप्रधानेषु शब्देष्विति-शब्दः प्रयुक्तोर्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकत्वे व्यवस्थापयति

गौरित्ययमाहेति, इह तु व्याकरणे स्वं रूपमिति वचनात् स्वरूपपदार्थः, ततश्च नवाशब्दाभ्यां परत्र प्रयुक्त इतिशब्दस्तौ स्वरूपपदार्थकत्वात्प्रच्याव्यार्थपदार्थकत्वे व्यवस्थापयति, तस्मादर्थयोरेव संज्ञा । विभाषाप्रदेशेष्वित्यादिना प्रतिषेधविकल्पयोरेकस्मिन्नेव योगे सहोपस्थापनं तं विषयभेदेनेति दर्शयति, तथा सति विषयभेदो दुर्ज्ञानः स्यादिति भावः । तत्रेत्यादिना पूर्वं प्रतिषेधः प्रवर्तते पश्चाद्विकल्प इति दर्शयति । यदि तु पूर्वं विकल्पः प्रवर्तेत पश्चात्प्रतिषेधस्ततो विकल्पप्रवृत्तिरनर्थिकैव स्यात् । आनुपूर्वी च संज्ञाविधिवाक्ये श्रुतैव प्रदेशवाक्येष्वप्याश्रयितुं युक्ता । 'उभयत्र विभाषाः प्रयोजयन्तीति' । प्राप्तविभाषायामप्राप्तविभाषायां च संज्ञाकरणस्यानुपयोगात् । तथाहि । प्राप्तविभाषायां तावत् 'द्विभाषोपपदेन प्रतीयमान' इति स्वरितञित इत्यादिना नित्यमात्मनेपदे प्राप्ते विभाषा विधीयते, विभाषाशब्दश्चायं वान्यतरस्यामित्यादिवद्विकल्पवाचित्वेन प्रसिद्धः । तेन भावाभावयोः प्रतिपादितयोर्भावांशस्य प्राप्तत्वादभावांशपरता विज्ञायते भावांशस्थित एव । अप्राप्तविभाषायामपि 'विभाषोर्णो'-रित्यभावांशस्य प्राप्तत्वाद् भावांशपरता विज्ञायते, 'विभाषा श्वे' रित्यत्र तु यदि विधिमुखेन विभाषा श्रुतिः प्रवर्तते पित्स्वेव संप्रसारणं विभाषा स्यात्कित्सु तु यजादित्वान्नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तदा कित्स्वेव विकल्पः स्यान्न पित्सु, न च शक्यं वक्तुं पित्सु विधिमुखेन प्रवर्तते कित्सु प्रतिषेधमुखेनेति, एकत्वाद्वाक्यस्य, तस्य चान्यतरविकल्पएवोपक्षीणत्वात् संज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्ते किदकिदात्मो लिट् सर्व एव समीकृतो भवति, सर्वस्यासम्प्रसारणनिमित्तत्वात्, ततो विकल्पः सर्वत्र विधिमुखेन पक्षे सम्प्रसारणं सम्पादयति । एतच्चाकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्ततइति दर्शने प्रयोजनम् । यदा तु प्रतिलक्ष्यं 'विभाषा श्वे' रित्यस्य व्यापारस्तदा क्वचिद्विधिमुखेन क्वचित्प्रतिषेधमुखेन प्रवर्ततइति संज्ञाकरणमन्तरेणापीष्टं सिद्ध्यति । तथा च 'हृक्रोरन्यतरस्या' मित्यादावन्यतरस्यांग्रहणे वाग्रहणे चोभयत्र विभाषास्विष्टसिद्धिः । सूत्रारम्भ तु संज्ञाप्यर्थः, विभाषेत्यर्थः । संज्ञा

नवार्थयोरिति व्याख्येयम् । 'शुशावेति' । श्वयतेर्लिटि तिपो णलि सम्प्रसारणे वृद्ध्यावादेशौ ॥

इग्यणः सम्प्रसारणम् ॥ 'यणः स्थानइति' । कथं पुनरनुवादे स्थानसम्बन्धो लभ्यते, 'षष्ठी स्थानेयोगे'त्यत्राधिकारात् भूत इति, कार्यान्तरार्थमनूद्यमानो भूतो विधेयस्तु भावी तत्र च संज्ञिनो भावित्वात् संज्ञापि भाविन्येव यथा ऽस्य सूत्रस्य शाटकं वयेति, 'वचिस्वपियजादीनां किति' तद्भवति यस्य भूतस्य सम्प्रसारणसंज्ञा भवतीति इष्टमुप्तमिति वचिस्वपीत्यादिना सम्प्रसारणं, गृहीतमिति ग्रहिज्येत्यादिना 'ग्रहो ऽलिटि दीर्घः' । 'के चिदित्यादि' । एवं वदतां भाविनी संज्ञा नाश्रयणीया स्थानेयोगश्च लभ्यत,इग्यण इत्यत्र भवतीत्यध्याहारात्पूर्वसूत्राच्चेतिकरणानुवृत्तेर्यणः स्थाने इग्भवतीति योऽयं वाक्यार्थ इत्यर्थो लभ्यते, कथं पुनरर्थद्वयमेकस्य सूत्रस्य भवति, तन्त्रेणावृत्त्या वा, अस्य च लिङ्गं विभक्तिविशेषनिर्देशो, यदयं ष्यङः सम्प्रसारणमित्यादौ भाव्यमानविभक्त्या निर्देशं करोति ततो ज्ञापयति वाक्यार्थः संज्ञेति, नहि तत्र वर्णस्य सम्भवः सम्प्रसारणस्येत्यादौ तु भूतविभक्त्या निर्देशात् ज्ञायते वर्णः संज्ञीति, नहि तत्र वाक्यार्थः सम्भवति । तत्रेत्यादिना द्वयोरर्थयोर्विषयविभागेनोपस्थानं दर्शयति । 'अदुहितरामिति' । दुहेर्लङि कर्मकर्त्तरि उत्तमैकवचनइटि न दुहस्नुनमामिति यकि प्रतिषिद्धे शब्लुकि अदुहि इति स्थिते 'तिङश्चेति' तरपि किमेत्तिङव्ययघादित्यामु । तत्र लकारस्य यणः स्थाने इड्विहित इति सम्प्रसारणसंज्ञायां 'हल' इति दीर्घत्वं प्राप्नोतीति चोद्यमपाकरोति । 'सङ्ख्यातानुदेशादिति' । तरप उपन्यासोऽङ्गसञ्ज्ञार्थः । सङ्ख्यासाम्यात्सङ्ख्यातानुदेशे सति यकारस्थानिकस्येकारस्य संज्ञया भाव्यम्, अयं तु लकारस्थानिकः, द्युभ्यामित्यत्र 'दिव उ'दित्युत्वे यणादेशे 'हल' इति दीर्घत्वं प्राप्तं तपरकरणान्न भवति । अक्षद्यूः अक्षद्युवौ अक्षद्युव इत्यादावूठः सम्प्रसारणसंज्ञायां 'सम्प्रसारणाच्चे'ति पूर्वरूपत्वं प्राप्तं वार्णादाङ्गं बलीय इति उवङा बाध्यते ॥

आद्यन्तौ टकितौ ॥ अत्र द्वौ पक्षौ सम्भवतः संज्ञा स्यात् प्रारभा-

षा वेति, तत्र संज्ञापक्षे ऽयमर्थः। टकितावित्ति कर्म्मधारयः इत्संज्ञकौ टकार-ककारौ आद्यन्तयोः संज्ञेति, तत्रेडित्यत्राद्यर्थेन टकारेण बहुव्रीहौ इकारादिः शब्दो गृहीत आदेशो विधीयमानस्तव्यस्य स्थाने ऽन्तरतम इतव्यो भवतीति सिद्धमिष्ट,मेवं षुक्यन्तवचनेन ककारेण बहुव्रीहौ षकारान्तो गृहीत आदेशो भियो भीष भवतीति सिद्धम्। नन्वस्मिन्पक्षे संज्ञा संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य स्वयमेव निवर्तिष्यतइति किमिद्ग्रहणेन टकावित्येवास्तु। उच्यते। इत्संज्ञकत्वेन देशविशेषो लक्ष्यते तेनेत्संज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ संज्ञे भवत इति आलजाटचौ 'टस्येक' इत्यादौ टकौ संज्ञे न भवतः। अस्मिन्पक्षे दोषः, 'लुङ्लङ्लृङ्क्ष्वडुदात्त' इत्यडित्यकारादेरादेशस्य विधानात्तस्यैवोदात्तत्वमलोन्त्यस्य स्यात् नाकारस्य, नैष दोषः। अडुदात्त इति त्रिपदो बहुव्रीहिः, उदात्तोकार आदिरस्येति, विशेषणस्याप्युदात्तस्य सौत्रः परनिपातः, एवमप्याडजादीनामित्यत्रोदात्तग्रहणमेवानुवर्त्ततइति बहुव्रीहेरसम्भवाद्दोषस्तस्मात्परिभाषापक्षमाश्रित्याह। 'आदिष्टिद्भवतीति'। 'परेण' परिभाषाप्रकरणेन साहचर्यादिति भावः। यद्वा 'षष्ठी स्थानेयोगे'त्यत्रेदमनुवर्त्यमत एवाह। 'षष्ठीनिर्दिष्टस्येति'। तेन 'चरेष्टः' 'आतोनुपसर्गे कः' इत्यादयः प्रत्यया आद्यन्तभूता न भवन्ति। एवमपि 'गापोष्टक्' 'व्रीहिशाल्योर्ढगि' त्यत्र प्रसङ्गस्तत्र टक्ष्टित्त्वकित्त्वयोगे परत्वादन्त्यः स्यात्। नैष दोषः। 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते न परानिति' एवमयं स्थानेयोगं बाधते न प्रत्ययपरत्वम्। 'भीषयतइति'। ञिभी भये, णिच्। 'भियो हेतुभये षुक्' 'भीस्म्योर्हेतुभये'॥

मिदचोन्त्यात् परः॥ अच इति निर्धारणे षष्ठी 'जातावेकवचनमित्याह'। 'अचामित्यादि'। अत्रापि जातौ बहुवचनम्। यदि पुनरन्त्यादित्यनया समानाधिकरणा पञ्चमी स्यात् ततो हलन्तेष्वस्याः प्रवृत्तिर्न स्यात्, ततश्च 'नपुंसकस्य झलच' इति नुमिहैवान्त्यात्परः स्यात् कुण्डानीति, यशांसीत्यत्र त्वलोन्त्यस्य स्यात्, एवं 'शे मुचादीना'मित्या-

दौ,[1] ततश्च तेषु मित्त्वमनर्थकं स्यादिति भावः । समानजातीयस्यैव निर्द्धारणं भवतीत्यन्त्योप्यचेव विज्ञायतइत्याह । 'अन्त्यादचः परइति' । पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यैवायमपवादो युक्त इत्याशङ्क्याह । 'स्थानेयोगप्रत्ययपरत्वस्यापवाद इति' । स्थानेयोगश्च प्रत्ययपरत्वं चेति समाहारे द्वन्द्वः, तृणह इति निर्देशात्, श्नमो मकारो न श्रवणार्थो मित्करणसामर्थ्यात् प्रत्ययपरत्वस्याप्ययमपवादो युक्त इति भावः । 'मस्जेरित्यादि' । 'मस्जिनशोर्झली' ति नुम् यद्यन्त्यादचः परः स्यात् ततो निष्ठायां मनस्जइति स्थिते 'स्कोस्संयोगाद्योरन्ते चे' ति सलोपो न स्यात् । बहूनां समुदाये समुदायस्यैका संयोगसंज्ञा न द्वयोर्द्वयोरित्यस्मिन् पक्षे सत्यपि वा सलोपे तस्यासिद्धत्वादनुपधानकार इति अनिदिताभित्यनुषङ्गलोपो न स्यात्, नकारस्योपधाया अनुषङ्ग इति पूर्वाचार्याणां संज्ञा, तस्मान्नकारात्पूर्वो नुम् कर्त्तव्य इत्यर्थः । 'मग्नइति । 'ओदितश्चे' ति निष्ठानत्वं तस्यासिद्धत्वात्कुत्वम् । अत्र 'अन्तो टकिताव' त्यतोन्त इत्यनुवृत्तौ पूर्वस्य सङ्घातस्य मिदन्तावयवो भवति । आदिरित्यनुवृत्तौ तत्र सान्निहितस्य परस्यादिर्भवति । यथोभयं निवृत्तं, ततो ऽभक्त इति त्रयः पक्षाः । तत्राभक्ते ताता पिण्डानामिति नलोपो न स्यात्, तच्छ्न्दा 'ज्जशशसोश्शिः' तानि 'शेश्छन्दसिबहुलमि' ति शेर्लुक् । वहंलिहः, अभ्रंलिहः 'वहाभ्रे लिह' इति खशि 'अरुर्द्विषदजन्तस्य मुमि' ति मुम् । अस्यापदान्तत्वादनुस्वारो न स्यात्, त्रपुणी इत्यत्र परत्वान्नित्यत्वाच्च नुमि कृते तेन व्यवधानादोङः शीभावो न स्यात् । अथ परादिः त्रपुणे 'घेर्ङितीति' गुणः प्राप्नोति, अतिसखीनि 'सख्युरसम्बुद्धावि' ति णिद्वद्भावे 'ऽचो ञ्णिती' ति वृद्धिः प्राप्नोति, त्रपुणि 'अच्चघेः' शुचीनि 'नोपधायाः' इति दीर्घत्वं न प्राप्नोति, ताता पिण्डानामिति नलोपः । वहंलिहइत्यनुस्वारः, तस्मात्पूर्वान्त एवायं मिद्देषितव्यः ॥

( शेषमग्रे )

१ दृष्टव्यमित्यधिकम् पुस्तकान्तरे ।

२ समवाय इति पा॰ २ ।

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

---

*(Continued from page 55. Vol. XI.)*

वैश्वानरेष्टेः पुत्रगतफलत्वाधिकरणम् ।

सू० फलसंयोगस्त्वचोदितेन स्याद्-
शेषभूतत्वात् ॥ १७ ॥

"वैश्वानरन्द्वादशकपालन्निर्वपेत्पुत्रे जाते" इति विधायाम्नायते "यस्मिन् जात एतामिष्टिन्निर्वपति पूत एव स तेजस्वी अन्नाद इन्द्रियावी पशुमान्भवती"ति । तदिदम्पूतादिकं रात्रिसत्त्रप्रतिष्ठावत् फलमिति स्थितम्, तत्किमिष्टिकर्त्तुः फलं पितु? रुत पुत्रस्ये? ति विचारे अन्यफले कर्मण्यन्यस्य प्रेरणासम्भवात्पितुरेव प्रेर्यत्वादाधानगतात् स्वात्मनेपदादङ्गिनसाध्यकर्मफलानामाधातृगामित्वनियमात्पितुरेव फलम् । नैतदेवं "येनैव वाक्यशेषेण फलमेतत्प्रकल्प्यते । तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा" । यस्मिन् जाते निर्वपति स पूतो भवतीति स्पष्टम्पुत्रगामित्वम् । पुत्रफलमपि पितुरभिलषितमेवेति विधेरात्मनेपदस्य चाविरोधः, एवं वा इयमेव वैश्वानरीया चिन्त्यते किं जननानन्तरमेव कर्त्तव्या? उत कृते जातकर्मणी? ति निमित्तानन्तरं नैमित्तिकमुपसम्प्राप्तं विना कारणेन नातिक्रमितव्यम् अतोऽनन्तरमेव स्यात्, सत्यम्, इह त्वस्ति कारणम्पुत्रफलार्थं हीदङ्कर्म तस्य च कृते जातकर्मणि स्तनप्राशनं न पुनः प्राक्, अकृते हि जातकर्मणि दृष्टिर्निरुध्यमाणास्तनप्राशनमुत्कर्षेत् ततः कुमारविप्रतिपत्तिप्रसङ्गात् दृष्टिरेवेयमनर्थिका स्यात्, तस्मात्कृते जातकर्मणि कर्त्तव्या । पुनश्चिन्त्यते किं जातकर्मानन्तरमन्तर्दशाह एव कर्त्तव्या? उताशौचापगमे स्वकाले वा ऽऽगत इति "निमित्तानन्तरम्प्राप्ता प्रयोजनविरोधतः । उत्कृष्टां तदभावात्तु पुनर्नोत्क्रष्टुमर्हति । शौचाङ्गेन विनाऽप्येषा कर्त्तव्या च निमि-

त्ततः ॥ अपि वाऽप्येकदेशे स्यादिति षष्ठे हि वक्ष्यते"। उच्यते "निमित्त-स्वरसात्प्राप्तिर्या तावत्सा निवारिता। प्रयोजनविरोधेन तस्मादङ्गोपसङ्ग्रहः"। निमित्तानन्तर्यन्तावत्प्रयोजनविरोधादेव बाधितमित्युत्कृष्टेष्टिः उत्कृष्टा वेदवैगुण्याय शीघ्रकालप्रतीक्षया। आशौचापगमे पौर्णमास्यादिकाले कर्त्तव्या ॥

सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यताऽधिकरणम्।

सू० प्रधानेनाभिसंयोगादङ्गानाम्मुख्यकालत्वम् ॥ १८ ॥

"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति वाजपेयाङ्गत्वेन चोद्यमानो बृहस्पतिसवः किम्प्रधानकाले शरदि तेन सहैकप्रयोगः कर्त्तव्यः? उतातिदेशप्राप्ते स्वकाले वसन्ते? इति संशयः, तत्र "साङ्गस्य हि प्रधानस्य विधानं देशकालयोः। अङ्गान्तरवदस्यापि तदङ्गत्वात्सह क्रिया। न हि वाजपेयः शरदि कर्त्तव्यश्चोद्यते किन्तु वाजपेयकरणको यः फलार्थो व्यापारः प्रयोगः फलभावनाख्यस्तस्यायङ्कालविधिः शरदि वाजपेयेनेति तृतीयानिर्देशात्तस्यैव फलसामग्रीभूतस्य चिकीर्षितस्य कालापेक्षितत्वात् स च व्यापारोऽङ्गप्रधानव्यासक्त इति तुल्यः प्रधानस्याङ्गानाञ्च यत्कालयोग इति वाचनिककालविरोधादतिदिष्टः कालो बाध्येत। नन्वयङ्कालो बृहस्पतिसववर्जिताङ्गेषु कृतार्थ इति नातिदेशम्बाधितुमुत्सहते, अतिदेशोऽपि कालातिरिक्ताङ्गेषु कृतार्थ इति न वचनसङ्कोचायालम् ॥ तस्मात्प्रधानकालत्वमेवम्प्राप्तेऽभिधीयते "सत्यं वाचनिकः कालो बाधेतैवातिदेशिकम् बृहस्पतिसवे त्वेष शरत्कालो न चोद्यते। यस्य कालविधिस्तस्मात् बहिः षट्वेन हि स श्रुतः"। वाजपेयकरणको यः स्वकार्यम्प्रति व्यापारः शरदि विहितस्तमेवेहापि समभिव्याहृतेन क्त्वाशब्देन प्रतिनिर्दिश्य ततः पश्चात्तनद्वृहस्पतिसवश्चोद्यमानस्तत्प्रयोगबहिर्भावाच्च तत्कालं लभते यदि परं वाजपेये कृते कर्त्तव्यः सर्वातिक्रमकारणाभावादनन्तरमेतत्क्रियेत, अस्ति त्वतिक्रमकारणङ्कालोपसंहारः। क्त्वा च पूर्वकालतायां स्मर्यते नानन्तर्ये, तस्मात्स्वकाले प्रयोगः, निर्वृत्तमपि च वाजपेयापूर्वमनेनाङ्गेन बलवत्क्रियते ॥

इति शास्त्रदीपिकायां चतुर्थस्य तृतीयः पादः ॥

# अथ चतुर्थाध्याये चतुर्थः पाद आरभ्यते ।

राजसूयेज्यानां विदेवनाद्यङ्गकत्वाधिकरणम् ।

सू० प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥

अनुमत्यादीनि विदेवनादीनि च यागायागकर्माणि प्रकृत्य श्रूयते "राजसूयेन स्वाराज्यकामो यजेते"ति तत्र संशयः किं सर्वाण्येव फलवन्ति समप्रधानानि पुरुषार्थानि? उतायागाः क्रत्वर्थाः? इति तत्र "सर्वेषामप्रकृतत्वेन फलापेक्षितया तथा । राजसूयपदस्यापि समानत्वात्फलान्वयः । राजसूयप्रातिपदिकं यद्यप्यप्रसिद्धं तथाऽपि तृतीयान्तत्वात्फलसाधनाभिधायित्वेन निर्णीतमप्रकृतानाम्फलापेक्षिणामविशेषात्सर्वेषामेवेत्यध्यवसीयते, एवं साधनेऽवगते स्वाराज्ये च फले भावनामात्रविधियुक्तादाख्यातात्प्रतिपाद्यमपेक्षितमिति तन्मात्रपरमाख्यातं, केवलप्रत्ययप्रयोगासम्भवात्तु यत्र क्वचन धातावुपादातव्ये रूढिन्यायेन यागायागसमुदाये यजिरनुवादभूतः प्रयुज्यते, ततः सर्वेषां फलान्वयात्प्राधान्यम् उच्यते "धात्वर्थानाम्फलैर्योगो न नाम्नामिति हि स्थितम् । यजिश्च यागमेवाह यजेस्तेन फलान्वयः ॥ राजसूयपदं वापि यज्यैकाधिकरण्यतः । यागनामैव तेनात्र यागानां स्यात्प्रधानता । इतरत्तु फलवत्सन्निधानात्तदङ्गम्भवति ।

विदेवनस्य कृत्स्नराजसूयाङ्गताऽधिकरणम् ।

सू० मध्यस्थं यस्य तन्मध्ये ॥ २ ॥

स्थितमयागानामङ्गत्वम्, तत्र विदेवनादयोऽभिषेचनीयाख्यसोमयागविध्यनन्तरमाम्नातास्तदीयमाहेन्द्रस्तोत्रकाले ऽपकृष्टाः माहेन्द्रस्तोत्रम्प्रत्यभिषिच्यत इति, अयं विदेवनादीनामभिषेकान्तानामपकर्ष इति ते इमे अभिषेचनीयाङ्ग?मुत राजसूयाङ्ग?मिति संदेहे कथम्भावगृहीतप्राकृताङ्गमध्यपातादवान्तरप्रकरणेनाभिषेचनीयाङ्गतामाशङ्कमानस्योत्तरम्, तत्र "तत्र प्रयोजनोपेताकर्मणां यत्र चोदना । विदेवनादिकानान्तु न मध्ये प्रकृतो विधिः" अभिषेचनीयानन्तरं विहिताः प्रयोजनापेताः सन्निधिप्राप्ताभिषेचनीयाङ्गत्वबाधेन प्रकरणाद्राजसूयाङ्गताचोताः नापकर्षसमये भूयः

प्रयोजनमपेक्षन्ते येनावान्तरप्रकरणविषयतां प्रतिपद्येरन्, तस्माद्राजसूयाङ्गम् ॥

सौम्यादीनामुपसत्कालकत्वाधिकरणम् ।

**सू० प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ३ ॥**

राजसूये एव "सौम्यञ्चरुम्बभ्रुर्दक्षिणे"ति विधाय श्रूयते । "पुरस्तादुपसदां सौम्येन प्रचरन्ती"ति । किमयञ्चरुरुपसदामङ्गम् ? अङ्गप्रयोजनसम्बन्धोऽयम् ? उत यागान्तरवत्फलार्थः कालार्थोऽयं संयोग ? इति चिन्त्यते "तत्र प्रकरणापेक्षात्सामान्यवचनादयम् । स्वाराज्ये विनियुज्येत साक्षादुपसदङ्गता । न हि सौम्येनेति स्वशब्देन तृतीयान्तेन षष्ठीनिर्दिष्टोपसदङ्गत्वेन विनियुज्यमानः सौम्यः प्रकरणापेक्षेण सामान्येन राजसूयवाक्येन फलसम्बन्धं लभते । पुरस्ताच्छब्दश्चाङ्गस्य तत्समीपेऽनुष्ठानात् यथाकथञ्चिदनुवादः । "अत्राभिधीयते नेयं षष्ठी तादर्थ्यवाचिनी । दिग्योगलक्षणा त्वेषा पुरस्ताच्छब्दयोगतः ॥ अङ्गाङ्गिभावमात्रे हि पुरस्तादित्यनर्थकम् । प्रसज्येत पदं तस्मात्कालस्तावद्विधीयते । तथा च सति नाङ्गत्वं विधातुं शक्नुयाद्विधिः" न ह्यनुत्पत्तिविधयोऽनेकार्थव्यावृत्तिक्षमाः तस्मात्कालार्थ एव संयोग इति फलार्थः सौम्यः ॥

आमनहोमानां सांग्रहणयवदङ्गताऽधिकरणम् ।

**सू० फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ४ ॥**

"वैश्वदेवीं साङ्ग्रहणीं निर्वपेत् ग्रामकाम" इति प्रकृत्यामनमस्यामनस्यामदेवा इति तिस्र आज्याहुतीर्जुहोती"त्यामनहोमा विहिताः किङ्ग्रामकामपदानुषङ्गेण साङ्ग्रहणीवत् फलार्थाः ? उत साङ्ग्रहण्यङ्ग ? मिति संशये साङ्ग्रहण्याः प्रकृताङ्गनिराकाङ्क्षायाः पुनरङ्गापेक्षाऽभावात् आमनहोमानाञ्च फलपदानुषङ्गेण प्रयोजनावाप्तेरनपेक्षत्वात्सम्भवति च प्राधान्येऽङ्गत्वायोगात्तात्फलार्थत्वे प्राप्ते अनुषङ्गे सकृदाम्नातस्य पुनरनुसन्धानात् यथा च सति सकृदाम्नातरूपबाधात् अत्यन्तागतिकतया तदाश्रयणादिह चानपेक्षतया साङ्ग्रहण्याः प्रकरणाभावेऽपि सन्निधेरेव तदङ्गत्वसम्भवात् आमनहोमानाञ्च प्राकृताङ्गमध्यविहितत्वेन प्रकरणसंस्पर्शस्यापि सम्भवा-

दगतित्वाभावादनुषङ्गानाश्रयणात्परिप्लिमन्त्रव्यवायाश्रयणे तदसम्भवादङ्गत्वमेव न्याय्यम् ॥

दधिग्रहस्य नित्यताऽधिकरणम् ।

सू० दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ५ ॥

ज्योतिष्टोमे श्रूयते "यां वा अध्वर्युर्यजमानश्च देवतामन्तरितस्तस्या आवृश्चते प्राजापत्यन्दधिग्रहं गृह्णीया" दिति सोऽयं दधिग्रहः नैमित्तिकः ? उत नित्यो नैमित्तिकश्च ? अथ नित्य एवे ? ति संशये "देवतान्तरिते यागोनिमित्तेऽयं विधीयते । तस्मान्नैमित्तिकः सत्यनित्योऽपि ज्येष्ठशब्दतः" । नैमित्तिक इति सत्यनित्योऽपि स्यात् । कुतः ज्येष्ठशब्दसंस्तवात् "ज्येष्ठो वा एष ग्रहाणा" मिति प्रशस्तवचनो ज्येष्ठ–शब्दो नित्यश्च प्रशस्तो न चञ्चलः अथवा प्राथम्यनिमित्तं ज्यैष्ठ्यंनित्यश्च सचयं पाठक्रमात् ग्रहान्तरेभ्यः प्रथमङ्गृह्यमाणो भवति ज्येष्ठः, नैमित्तिकस्तूपजाते निमित्ते क्रियमाणो न नियोगतः ज्येष्ठः स्यात् । "तस्मादुभयरूपः स्यान्न त्वेवंनित्य एव सः । न तु नैमित्तिको यस्मान्निमित्तस्याश्रुतत्वतः । न ह्यन्तरायो निमित्तत्वेन श्रूयते यदि–शब्दाद्यभावात्, यच्छब्दस्य चाकर्तृसमानाधिकरणस्य तत्प्रतिपादकत्वाभावात् अर्थवादमात्रमन्तरायश्रवणमिति नित्य एव स्यात् ॥

वैश्वानरस्य नैमित्तिकत्वाधिकरणम् ।

सू० वैश्वानरश्च नित्यः स्यान्नित्यैः समानसङ्ख्यत्वात् ॥ ६ ॥

"यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामिगर्भो विपद्यते तादृगेव 'तदार्तिमार्च्छेद्वैश्वानरं द्वादशकपालम्पुरस्तान् निर्वपे" दिति अत्रापि पूर्ववदर्थवादमात्रं संवत्सराभरणमिति नित्यतां मन्यते । यच्छब्दस्तु कर्तृसमभिव्याहृतो निमित्ततां संवत्सराभरणस्य प्रतिपादयति निमित्तिकतैव स्थिता ॥

षष्ठ्याश्चितेर्नैमित्तिकत्वाधिकरणम् ।

सू० षट्चितिः पूर्ववत्त्वात्स्यात् ॥ ७ ॥

"योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्ति अथ षष्ठीचितिं चिनुते प्रतिष्ठित्या" इति किमियं षष्ठीचितिर्नित्य एवाग्निः

षट्चितिकः ? उत सपञ्चचितिक एव ? इदन्तु चयनान्तरमेकचितिकः अप्रतिष्ठायानिमित्ते विधीयते तत्र "पूरणप्रत्ययो न स्यात्षट्सङ्ख्यापूरणाद्विना। पञ्चभिः सहिता चैषा पूरयेत्तां न केवला। न हि केवला चितिः षष्ठीति शक्या वक्तुम्। तस्मान्नित्यानित्य एवाग्निषट्चितिकः, नैवम्। "यच्छब्दाद्ध्यप्रतिष्ठायाः स्पष्टमाह निमित्तताम्। अभिधानक्रियापेक्षं षट्सङ्ख्यापूरणम्भवेत्। नित्याः पञ्चचितयः प्रागभिहिताः ततः परमियं नैमित्तिक्यभिधीयते इत्यभिधानापेक्षं षष्ठीत्वमुपपन्नमिति न यच्छब्दावगतनिमित्तापह्नवः शक्यते कर्त्तुमिति नैमित्तिकीयम्॥

पिण्डपितृयज्ञस्यानङ्गता-ऽधिकरणम्।

## सू० पितृयज्ञः स्वकालत्वादनङ्गं स्यात्॥ ८॥

"अमावास्यायामपरान्हे पिण्डपितृयज्ञेन चरन्ती"ति अनारभ्याधीतः पितृयज्ञः क्रत्वर्थः ? पुरुषार्थः ? इति संशये कर्मवचनेनामावास्या-शब्देन समभिव्याहारात्तदङ्गत्वम्। यद्यपि कालस्यापि साधारणोऽयं शब्दस्तथापि फलकल्पनापरिहाराय कर्मवाचितैवाङ्गीक्रीयते, तस्मात् क्रत्वर्थ एवायमाहिताग्निः, अनाहिताग्नेरप्यनाहिताग्निना कार्य इति विहितः, तस्य क्रत्वभावाद्भवतु पुरुषार्थः तथा च भगवता मनुना "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मन" इति वदता दर्शाङ्गत्वं प्रदर्शितम्। अनङ्गं हि तेन विना क्रियते, तस्माद्दर्शाङ्गं, "नैवं साधारणत्वेऽपि सामानाधिकरण्यतः। कालवाचित्वमेव स्यात्तत्सापेक्षश्च कर्मणि"। यद्यपि तावत्साधारणोऽमावास्या-शब्दः तथाप्यपरान्हसामानाधिकरण्यलिप्सया कालवाचित्वमध्यवसीयते, न चायमतीव साधारणः काले हि निरपेक्षोऽयङ्कालसम्बन्धापेक्षयो तु कर्मणि वर्त्तते॥ तस्मात्कर्मसमभिव्याहाराभावादनङ्गम्। मनुवचनस्य त्वयमर्थः श्राद्ध-शब्देन मासि मासि श्राद्धमुच्यते। दर्श-शब्देनाप्यमावास्याकालः तदयमर्थः अमावास्यायामेवाहिताग्निः श्राद्धङ्कुर्याच्च तेन विना सर्वेष्वेवापरपक्षाहःसु क्रियमाणेऽपि पितॄन्प्रीणातीति स्मृत्यन्तरवशादन्येष्वप्यहःसु कुर्यादिति एवं च स्मृत्यन्तरमनाहिताग्निविषयम्भविष्यति तत्सिद्धं पितृयज्ञस्यानङ्गत्वम्॥

पिण्डपितृयज्ञस्यानङ्गताऽधिकरणम् ।

सू० पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ ९ ॥

आश्विनङ्ग्रहङ्गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयम्पशुमुपाकरोतीति येयं सवनीयस्याङ्गभूता रशना सा किं पशुबन्धनार्था ? उत यूपसंस्कारार्थेति संशये "यूपार्था सत्यदृष्टार्था दृष्टार्थापशुबन्धनी अनपक्रमणात्तेन पश्वङ्गं रशना भवेत्" । न हि यूपस्य रशना किञ्चिद्दृष्टं करोति पशोस्त्वनपक्रमणाद्कुर्वती भवति दृष्टार्था तेन त्रिवृत्प्रातिपदिकाभिहिता रशना वाक्येन पशुयागाङ्गतया विधीयते त्रिवृत्युक्तया आग्नेयमुपाकरोतीति, सा च दृष्टेनैव पश्वनपक्रमणेन तदङ्गतां प्रतिपद्यते या च त्रिवृच्छब्दे तृतीया या च यूपं परिव्ययतीति द्वितीया तत्सर्वं प्राप्तानुवादः । यूपे हि पशुर्बन्द्धव्यश्चोदकप्राप्तेः यश्च रशनया यूपे पशुम्बध्नाति सोऽवश्यं यूपे रशनां व्यापारयति, यश्च व्यापारयति. स शक्यते तया यूपं परिव्ययतीति वक्तुम् अतोऽयमनुवाद इति पश्वर्था रशना चोदकप्राप्ता चान्या रशना ताभ्यामुभाभ्यां पशुर्बध्यते ततः पश्वर्था रशना तदर्थं च परिव्याणं यूपे तस्याः प्रतिमोचनम् । प्रतिमुक्ता हि सा अनपक्रमणाय कल्पते । यूपोऽपि स्थाणुस्थानीयः तदर्थं एवेति सर्वमेव दृष्टार्थं भवति, तस्मात्पश्वर्थन्येवं प्राप्ते ब्रूमः । 'यद्यदृष्टार्थता यूपे स्यादेवङ्क्लिष्टकल्पना ।·यूपार्था सत्यपि त्वेषा दृष्टार्था दार्ढ्यजन्मनः । परिव्याणं हि यूपार्थं द्वितीयातोऽवगम्यते । रशना च परिव्याणशेषभूता तृतीयया । श्रुत्योर्न्तु विपरीतं स्यात्पश्वर्था रशना यदि । यूपार्था रशना तस्माद्भवेन्न पशुबन्धनी । केचित्तु पूर्वपक्षेऽपि न पशुबन्धनार्था रशना यूपस्यैव परिव्याणपशूपाकरणव्यापारादुपकारकमिति पूर्वपक्षः, सिद्धान्तस्तु यूपसंस्कारार्थमित्येवमाहु । तथा सति अनुष्ठानाविशेषान्निष्प्रयोजना चिन्ता स्यात्· पशुगणे त्वेकयूपे सकृत्कृतमेव परिव्याणमगृह्यमाणविशेषत्वात्तन्त्रेण सर्वेषामुपकुर्यादिति प्रति पशुरशनाकार्यमिति प्रयोजनच सिद्ध्येदित्यास्तां तावत् ॥

स्वरोः पश्वङ्गताधिकरणम् । सू० स्वरुस्त्वप्येकदेशत्वात् ॥ १० ॥

"यूपस्य स्वरुं करोति स्वरुणा पशुमनक्ती"ति । किं यूपार्थः स्वरुः तस्य पश्वञ्जनं प्रतिपत्तिः ? उत पश्वर्थः ? तस्य यूपादुपादान ? मिति संशये । यूपस्येति षष्ठ्या देवदत्तस्य गौरितिवत्तादर्थ्यं मन्यते "स्वरुणा पशुमित्येवं शेषशेषिविभक्तितः । स्वरोः पश्वञ्जनाङ्गत्वं पशोश्चापि प्रधानता. यूपस्येत्यवयवव्यतिरेकजनिता षष्ठी न तादर्थ्यङ्गमयतीति पश्वर्थः स्वरुः ॥

आवारादीनामङ्गताधिकरणम् । सू० दर्शपूर्णमासयोरिज्याप्राधान्यविशेषात् ॥ ११ ॥

दर्शपूर्णमासयोः किं सर्वेषां यागानां प्राधान्यम् ? उताग्नेयादीनामेककालयोगिनामितरेषां तदङ्गत्वमिति चिन्त्यते "य एवं विद्वानित्येतदुक्तावनुवादकौ न विधायकावित्यनुवादस्य तु प्रयोजनमाग्नेयादीनामेव प्राधान्यसिद्धिरित्येतावत्स्यतं द्वितीये, अधुना तु तदेव प्रयोजनं सिध्यति नेति चिन्त्यते । "तत्राख्यातानुसारित्वात्संज्ञाया राजसूयवत् । तस्या विशेषतो वृत्तिः सर्वयागप्रधानता नामधेयन्तावदाख्यातानुसारि यत्राख्यातं तत्र वर्तते न तु यत्र नाम तत्राख्यातम् आख्यातञ्च अविशेषात्सर्वानेप रूपवतः प्रकृतान् यागात् उपादाय फले विनियुङ्क्ते, अतो नामाप्युत्पन्नं द्विवचनान्तप्रतिरूपकं सर्वत्र वर्तत इति सत्यामप्यनुवादेन समुदायद्वयसिद्धौ सर्वेषां प्राधान्यम्. उच्यते "यद्धि नामाप्रसिद्धार्थं तदाख्यातवशम्भवेत् । इदं पुनः प्रसिद्धार्थमाख्यातस्य विशेषणम् प्रातिपदिकं तावत्कालद्वयसंयोगादाग्नेयादिषु प्रसिद्धार्थं द्विवचनमपि य एवं विद्वानित्येवं संयुक्तानुवादद्वयपरिकल्पितसमुदायद्वयाभिप्रायमप्रसिद्धार्थमेव । न च दर्शशब्दस्याप्रसिद्धार्थत्वमन्वारम्भणीयावाक्यशेषे ऽमावास्यापर्यायत्वेन प्रसिद्धार्थत्वात् । तदेवं प्रसिद्धार्थं विशिष्टवाचिनामधेयं शक्नोत्याख्यातं सामान्यवचनं स्वविषये स्थापयितुमिति षण्णामेव प्राधान्यमितरेषां तु प्रकरणात्तदङ्गत्वम् ॥

ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् । सू० ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ १२ ॥

दीक्षणीयाग्नीषोमीयादीष्टिपशुयागात् सोमयागञ्च प्रकृत्य श्रूयते । "ज्योतिष्टोमेन स्वर्गकामो यजेत" तत्र चिन्त्यते किं सर्वयागानां फलसम्बन्धेन प्राधान्यम् ? उत सोमयागस्यैव इतरेषां तदङ्गत्वमिति "तत्राख्याताविशेषेण सर्वयागप्रधानता । नामधेयं प्रसिद्धार्थमाख्यातं विशिनष्टि हि । ज्योतिराख्या न हि स्तोमाः प्रसिद्धाः कस्यचिद्यजेः ।॰यत्रावयवशोवृत्तिर्नामधेयस्य गम्यते । त्रिवृदादिषु तच्छब्दस्तुतिमात्रतयोदितः । न तु स्तोमाभिधेयत्वं ज्योति शब्दस्य तावता । अस्तुवा त्रिवृदादीनां ज्योतिः शब्दाभिधेयता । तथापि सर्वयागानां तत्सम्बन्धात्प्रधानता । स्तोमाहि सर्वयागानामङ्गं स्युरविशेषतः । सर्वेषां फलवत्त्वेन प्रक्रिया न विशिष्यते अतः प्रकरणात्स्तोमाः सर्वयागाङ्गतामियुः । सोमयागेन संयुक्ताः स्तोमवाक्येन चैव तत् । ग्रहणस्तोत्रयोरैक्ये कालार्थासङ्गतिर्यतः । द्वयोरपि कृतार्थत्वात्स्तोत्रस्य ग्रहणस्य च । स्तोत्राणि तावदाज्यैः स्तुवत इत्यादिवाक्योत्पन्नानि प्रकरणात् यागाङ्गानि कृतार्थानि ग्रहणमप्यैन्द्रवायवादिवाक्यविहितसोमसंस्कारतया कृतार्थमेव, अतोऽत्र कालार्थ एव संयोगः "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्या"दिति न त्वङ्गाङ्गिभावोऽङ्गत्वन्तु प्रकरणाविशेषात्सर्वयागात् प्रत्यवगम्यते, स्तोत्रीया संख्या च स्तोत्रमशब्देनोच्यत इति तत्सम्बन्धः सर्वेषामविशिष्टः । "तेनाख्याताविशेषेण नाम्नश्चाप्यविशिष्टतः प्राधान्य सर्वयागानामिति प्राप्तेऽभिधीयते । ज्योतिष्टोमाभिधानस्य यागस्यात्र फलं श्रुतम् । ज्योतिष्टोमपदन्त्विदं वाक्यशेषे निरुच्यते ज्योतिष्टोमपदनिर्वचनार्थं ह्येतद्वचनम्, त्रिवृत्पञ्चदशः सप्तदश एकविंशः एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा इति । तदिह यदि त्रिवृदादिकस्तोत्रीयसङ्ख्याचतुष्टयस्य ज्योतिःशब्दो वाचकः अथापि न वाचकः सर्वथा तावत्तत्सम्बन्धिनि यागे ज्योतिष्टोमपदं नामतया वर्तत इत्येतत्तावद्विस्पष्टमवगतम् अतस्तत्सम्बन्धिन एव यागस्य फलमिदं नान्यस्य, न च दीक्षणीयादीनां फलवाक्यप्रवृत्तिवेलायां स्तोमसम्बन्धः प्रसिद्धोयागानां स्तोत्राणां च निष्फलत्वाद्विशेषेणाङ्गाङ्गिभावानिष्पत्तेः, फलसम्बन्धोत्तरकालभाविप्राकरणिकस्तोमसम्बन्धाभिप्रायं छेदनादिविधाविव यूपपदं ज्योतिष्टोमपद-

वाच्यत्वसहत्व मभिधया प्रतिपाद्यमानस्यापि चमत्कारकारित्वम्· तयो-राद्यं वस्तुमात्रमलङ्कारश्च· अलङ्कारस्य प्राधान्येपि यथालङ्कारत्वं तथोक्तं प्राक्· रसादिलक्षणस्त्वर्थो न कदाचिदपि वाच्यत्वं सहते· स हि सामा-न्यतो रसभावादिपदैर्विशेषतः शृङ्गारनिर्वेदादिपदैर्वाभिधीयमानश्चमत्का-रकारी स्या,त्त्वेवम्· तथा ऽभिधानेपि विभावाद्यप्रतीतौ चमत्काराभा-वाद्, विभावादिप्रतीतौ त्वनभिधानेपि व्यक्तस्य चमत्कारकारित्वादित्य-न्वयव्यतिरेकाभ्यां विभावादिमुखेनैव प्रतीयमानस्तथेति निर्णीयते· तेनासौ व्यङ्ग्य एव चमत्कारकारी· ननु विभावादिवाचकपदैर्लक्ष्य एवास्तु रसा-दिः· नहि विभावादिवाचिपदं विना तत्प्रतीतिरिति चेच, मुख्यार्थबा-धादिविरहात् ।

ननु व्यञ्जनायाः प्रसरविषाणायमानत्वात् कुतो व्यङ्ग्य-त्रैरूप्यकृतो भेद इति चेत्, उच्यते, लक्षणामूले वस्तुमात्रं व्यङ्ग्यं विना लक्षणैव न सम्भवतीति प्राक् प्रतिपादितम्· अभिधामूलेष्वपि शब्दशक्तिमूलो द्वितीयोर्थ,स्तेन समम्नुपमा व्यङ्ग्यैवेति निर्विवादम्, अभि-धाया नियमनात्· अर्थशक्तिमूलेप्येवमङ्गीकर्तव्यम्, यतः, पदेभ्यः प्रथमं पदा-र्थस्मृति,रथ पदार्थविशेषणामन्वयविशेषरूपस्य वाक्यार्थस्य प्रत्यय,स्तते व्यङ्ग्यप्रतीतिरिति तृतीयकक्षायां कुतोभिधायाः प्रसरणं, द्वितीयकक्षाया-मेव तदनपेक्षणात्· यतः,अभिहितान्वयवादे ऽशक्य एवान्वय आकाङ्क्षादि वशेन प्रतीयते· "शब्दबुद्धिकर्मणां विरम्यव्यापाराभाव" इति च सर्वसिद्धम्। येप्यन्विताभिधानवादिनः–"देवदत्त! गामानये"त्यादि प्रयोजकवृद्धवाक्यं श्रुत्वा तदनन्तरं प्रयोज्यवृद्धेन सास्नादिमन्तमर्थं देशान्तरं नीयमानमालोक्या-'यमेतद्विषयकैतत्क्रियागोचरकार्यताज्ञानवान्, तद्विषयकचेष्टावत्त्वात्तद्विषय-कप्रवृत्तिमत्त्वाद्वा, मद्व'दितिप्रयोज्यवृद्धस्य ज्ञानमनुमिमीते· ततः कारणं विना कार्यानुपपत्त्या ऽखण्डवाक्यस्यान्वयव्यतिरेकिणस्तज्ज्ञानेन कार्यत्वकारणत्व-रूपां शक्तिमवधारयति· अथ ज्ञेयसम्बन्धं विना वाक्यस्य सा शक्तिरनु-पपन्नेत्यर्थापत्त्या ऽखण्डवाक्यार्थेनाखण्डस्य वाक्यस्य वाच्यवाचकभावरूपं सम्बन्धमवधारयति· यदुक्तं–

शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति, ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया. ॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्, ।
अर्थापत्त्या च बुद्धोत सम्बन्धं त्रिप्रमाणकम् ॥

इति· त्रिप्रमाणकमिति जात्यपेक्षया त्रित्वं, न तु व्यक्त्यपेक्षया· एवमखण्डयोः सम्बन्धमवधार्य विशेषतो व्युत्पद्यत इत्थम्—अनन्तरन्तेनैव प्रयोजकेन "चैत्र! अश्वमानय, देवदत्त! गां नये"त्यादिवाक्येषु कस्यचिदन्यपदस्याऽऽवापे कस्यचिदुद्वारे सति यस्य भागस्यान्वयव्यतिरेकाभ्यां यस्य वाक्यार्थभागस्यान्वयव्यतिरेकावुपलभते, तत्र तस्य शक्तिमवधारयति· तच्च शक्त्यवधारणमन्वित एव पदार्थे, प्रथममन्वय एव वाक्यस्य शक्तिग्रहात्, पदार्थमात्रे शक्तावुपजीव्यविरोधात्, व्यवहारेणान्वितज्ञानस्यैवोपस्थापनाच्च· न च वाक्यं विना क्वचिदाद्यव्युत्पत्तिः, व्यवहारेणैवाद्यव्युत्पत्तेः· व्यवहारस्य च प्रवृत्तिनिवृत्तिरूपस्य पदमात्रेण कर्त्तुमशक्यत्वात्· अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु सङ्केतग्रहादन्विता एव पदशक्याः· त एव च वाक्यार्थ इति न वाक्यार्थबोधे शक्तेर्विरामः, नत्वभिहितानां पदार्थानामन्वयोऽशक्य एव प्रतीयते, योग्यतादिवशादिति युक्तम्· ननु तथापि संसर्गविशेषोऽशक्य एव, पदार्थसामान्यान्वित एव शक्तिग्रहा,दन्यथा गामानयेतिपदं श्रुत्वाऽश्वमानयेत्यादिवाक्ये तदेवेदमानयपदमित्यादिप्रत्यभिज्ञा न स्यात्, पूर्वस्य गवान्वितानयनपरस्याश्वान्वितानयनेऽशक्तत्वेनार्थभेदेन भेदादितिचेत्,पदार्थत्वेन सामान्येन विशेषणामेवान्वये शक्तिग्रहात्, अन्वितानां च विशेषरूपत्वादित्याहुः।—तेषामपि मते सामान्येनैव रूपेण विशेषः शक्यो न तु विशेषरूपेण, तथाच पदार्थान्तरसामान्यान्विते पदानां शक्तिः· गवादिविशेषान्वितस्तु विशेषो वाच्य एव· तस्मादभिहितान्वयवादेऽनन्वित एवा,न्विताभिधाननये तु पदार्थसामान्यान्वितः स्वार्थः सङ्केतविषयो, गवादिविशेषान्वितानयनादिरूपस्त्वसङ्केतित एवेत्यवाच्य एव वाक्यार्थः ॥ यदपि कैश्चिदुच्यते "शब्दश्रवणानन्तरं यावानर्थः प्रतीयते, तत्र सर्वत्रापि शब्द एव निमित्तम्· यतो नैमित्तिकानुरो.

धेन निमित्तानि कल्प्यन्त" इति· तदप्ययुक्तम्· शब्दस्य ह्यर्थे निमित्तत्वं कारकत्वं, ज्ञापकत्वं वा· न प्रथमं, शब्दस्यार्थानुत्पादकत्वात्· चरमं पुनरनुमन्यते, परं तु सङ्केतवत्त्वेन ज्ञातस्य· अज्ञातस्य, स्वरूपमात्रेण ज्ञातस्य वा ज्ञापकत्वे ऽतिप्रसङ्गात्· नचान्वयविशेषे सङ्केतग्रहः· अस्तु विशेष एव सङ्केतग्रह इति चे,ल्लोष्टाद्यन्विताानयनादेर्विशेषस्योपस्थापकान्तराभावेन शब्दादेवोपस्थितिर्वाच्या· तथा च तत्र सङ्कतग्रहे शब्दात्तदुपस्थितिः, शब्दाच्च तदुपस्थितौ सङ्केतग्रह इत्यन्योन्याश्रयात्· तस्मान्नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम्। अथ "सोयमिषोरिव दीर्घदीर्घतरो व्यापार" इति, "यत्परः शब्दः, स शब्दार्थ" इति च "नि.शेषे"त्यादौ विधिरेव वाच्य इति भट्टमतोपजीविनः· अस्यार्थः, यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणं च रिपोर्विधत्ते, तथा एक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिञ्च विधत्ते· अतो व्यङ्ग्यत्वाभिमतार्थस्य वाच्यत्वमेव· किञ्च, यत्र शब्दस्य तात्पर्यं, स शब्दार्थ इति निःशेषेत्यादौ तात्पर्यार्थे· विषयतया विधिर्वाच्य एवे"ति· ते तात्पर्यवाचोयुक्तेस्तात्पर्यमजानन्तः पशवः· तद्वाक्यवर्तिपदोपस्थापित एव हि तात्पर्यमुच्यते, न प्रतीतमात्रे· तथाहि, "भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत" इति सिद्धान्तः· अस्यार्थः, भूतं सिद्धं, भव्यं साध्यम्, तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यते इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि प्रधानक्रियानुकूलतया साध्यीभूतया स्वक्रियया योगात् साध्यायमानतामाप्नुवन्तः स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या इव भवन्ति· ततश्च दहनेनादग्धमात्रं यथा दह्यते, न तु दग्धमपि· तथा यावदेवाऽप्राप्तं तावदेव शब्देन विधीयते· यथा ऋत्विक्प्रचरणे प्रमाणान्तरप्राप्ते "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"त्यनेन लोहितोष्णीषत्वमात्रं विधीयते, न तु ऋत्विक्, प्रचरणं वा· उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम्· हवनस्यान्यतः सिद्धौ च "दध्ना जुहोती"त्यनेन दध्नः करणत्वं, न तु

दधि, हवनं वा। एवं "रक्तं पटं वये" त्यादौ रक्तत्वपटवयनानां(क) मध्ये एकस्य द्वयोस्त्रयाणां वा सिद्धौ एकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यावदेव विधेयं, तावत्येव तात्पर्यम्। विधेयं च शब्दोपात्तमेवेति सुष्ठूक्तं शब्दोपात्त एव तात्पर्यमिति। यदि च प्रतीतमात्रे तात्पर्यं, तदा पूर्वो धावतीत्यादौ पूर्वादिसमानसंवित्संवेद्यतया प्रतीते पराद्यर्थेपि कदाचित्तात्पर्यं स्यात्। ननु तद्वाक्यवर्तिपदोपस्थापित एव तात्पर्यमिति न व्याप्तिः, "विषं भुङ्क्ष्व, मा चाऽस्य गृहे भुङ्क्था"(ख) इत्यत्र विषं भुङ्क्ष्वेतिवाक्यस्य मा चेत्यादिवाक्यार्थेपि तात्पर्यादिति, मैवम्, यत एतदेकमेव वाक्यं, चकारस्यैकवाक्यतासूचकत्वात्। अन्यथा तद्वैयर्थ्यप्रसङ्गात्। नचाख्यातवाच्यक्रिययोः साक्षादन्वयः सम्भवति, "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्या" दितिन्यायात् सुहृद्वाक्यं चेद,मतो भवितव्यमत्रान्वयेन। तथा च तद्वाक्यस्थपदोपस्थापित एव तात्पर्यमिति सिद्धम्। तस्मा"द्यत्परः शब्द" इत्यादि यदुक्तं, तत्तात्पर्याज्ञानात्। यदपि "सोयमिषोरिवे" ति तदप्ययुक्तम्, यतः, शब्दश्रवणानन्तरं यावानर्थः प्रतीयते, तावति सर्वत्र यदि शब्दस्याभिधैव व्यापारः स्या,त्तदा "चैत्र! पुत्रस्ते जातः, कुमारी ते गर्भिणी" त्यादिवाक्यानन्तरं हर्षविषादयोः प्रतीते,स्तयोरपि तद्वाक्यस्याभिधा स्यात्। अथ तच्छब्दप्रतिपाद्ये सर्वत्राभिधा। हर्षादयस्तु न तत्प्रत्याय्या इत्युच्यते। तर्हि लक्षणीयेप्यभिधैव स्यादिति लक्षणोच्छेदः। किमिति च "श्रुति,लिङ्ग,वाक्य,प्रकरण,स्थान,समाख्यानां समवाये पारदौर्बल्य;मर्थविप्रकर्षा" दितिसूत्रेण भगवाञ्जैमिनिः श्रुत्यादिषु पूर्वबलीयस्त्वं प्रतिपादयाम्बभूव, सर्वत्रैवाभिधाप्रसङ्ग उत्तरस्य दौर्बल्ये बीजाभावात्। सूत्रं तु प्रकृतार्थविच्छेदकत्वेपि बहूपकारकत्वाद्दुरूहत्वाच्च व्याक्रियते। श्रुतिलिङ्गादयः षडिह विनियोजकाः। तत्र विरुद्धयोरेकत्रापनिपाते समुच्चयो न

(क) ०वानानामिति तु न्याय्यम्।

(ख) "भुङ्क्था" इत्येवं यावत्स्ववोपलभ्यमानत्वेऽपि वस्तुगतिपरवशा "भुक्था"-इत्येव स्थापयामः।

सम्भवतीत्येकेनापरस्य बाधो वक्तव्यः· स च बलवता दुर्बलस्येति स्थिते दौर्बल्यप्रतिपादकं सूत्रं "श्रुतिलिङ्गे"त्यादि· अस्यार्थः—श्रुत्यादिनां समवाये, एकत्रोपनिपाते, तेषां मध्ये यदपेक्षया यत्परं, तदपेक्षया तद् दुर्बलम्· कुतः, अर्थविप्रकर्षात्, पूर्वापेक्षया विलम्बेनार्थप्रत्यायकत्वात्· यथा चैत,त्तथोदाहरणे स्फुटीकरिष्यते· तत्र निरपेक्षो रवः श्रुतिः· यथा "व्रीहीनवहन्ती"ति· अत्र क्रियाफलभागित्वं कर्मत्वं बोधयन्ती द्वितीया निरपेक्षैव व्रीहीणामवघातशेषत्वं प्रतिपादयति। अर्थविशेषप्रकाशनसामार्थ्यं लिङ्गम्· यथा "बर्हिर्देवसदनं दामी"ति· अत्र लवनार्थप्रकाशकतया बर्हिर्लवने विनियोगः। परस्पराकाङ्क्षावशात् क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यम्·(क) यथा "देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी"त्यत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यताबलेन देवस्य त्वेत्यादिभागस्यापि तत्र विनियोगः । लब्धवाक्यभावानां पदानां कार्य्यान्तरापेक्षावशाद्वाक्यान्तरेण सम्बन्धे आकाङ्क्षापर्यवसन्नं प्रकरणम्· यथा "समिधो यजती"त्यादौ· अस्य हि दर्शपौर्णमासकथंभावाकाङ्क्षायां पाठवशाच्छेषत्वम् । स्थानं क्रमः· स चानेकस्याम्नातस्य सविधिविशेषाम्नानम्· यथा "दब्धिरसी"त्यत्राग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणेषु पठिताः· मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम्· तत्राग्नेयवैष्णवयोर्लिङ्गेनैव द्वयोर्विनियोगसिद्धिः· दब्धिरसीत्यत्र तु न लिङ्गादि विनियोजकं, किंतु यस्मिन् प्रदेशे ब्राह्मण उपांशुयागविधानं, तस्मिन्नेव प्रदेशे मन्त्रेष्वस्य पाठ इतिक्रमादुपांशुयागानुमन्त्रणे ऽस्य विनियोगः । समाख्या योगबलम्· यथा हौत्र,मौद्गात्रमित्यादि· तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानि ॥

अथैषां विरोधोदाहरणानि।—तत्र श्रुतिलिङ्गयोर्विरोधे लिङ्गस्य दु-

(क) अत्र खल्वेकत्र पुस्तके त्रुटिमुद्रया लिखितमास्ते—"ततश्च क्वचिद्वाक्यार्थतया विनियोगः सिध्यति, यथा "ऽरुणया क्रीणातीत्यत्र, क्वचिदेकवाक्यताबलात्"इति· न्याय्यत्वेऽपि प्रक्षिप्तत्वाच्च खल्विदं मूले निवेश्यते ।

बलत्वं यथा "कदाचन स्तरीरसि नेन्द्र सश्चसी"त्यादिकाया ऋचो विनियोजिका श्रुति"रैन्द्र्या गार्हपत्यमुपतिष्ठत" इति· अत्र चेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादिन्द्रोपस्थापने विनियोगः प्रतिभाति, अन्यप्रकाशकस्यान्यत्र विनियोगायोगात्· श्रुत्या गार्हपत्योपस्थापने स प्रतीयते· गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया कामपि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति, क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात्· एवमैन्द्र्येतितृतीया प्रकृत्यर्थस्य शेषत्वम्, क्रियां प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात्· तदत्र श्रुतिलिङ्गयोर्विरोधः· नच वाच्यं,—निरपेक्षया द्वितीयया शेषित्वमात्रं प्रतीयते, नत्वैन्द्रीमृचं प्रति, तच्चाग्नेयीमृचं प्रत्यपि सम्भवतीति कुतो विरोधः· ऐन्द्र्येतिपदमपेक्ष्य विशेषबोधनाद्विरोध इति चे,न्न तर्हि श्रुतेर्विरोधः, किन्तु वाक्यस्य· तच्च लिङ्गापेक्षया दुर्बलमेवेति,—यतः, शेषशेषिभावः सामान्यतः श्रुत्यैवावगम्यते, पदान्तरापेक्षया तु विशेषे व्यवस्थाप्यते· विशेषणसम्बन्धमात्रस्य पदान्तरसम्बन्धाप्रतीतेः· तस्मात् सामान्यतः श्रुत्या प्रतिपाद्योऽसौ वाक्यलभ्यं विशेषमपेक्ष्य लिङ्गप्रतिपाद्येन विरुध्यते । तत्रायं पूर्वः पक्षः—सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका· नह्यसमर्थं श्रुतिसहस्रेणापि बोधयितुं शक्यते, यथा वह्निः प्रसेके, जलं वा दाहे· अतो लिङ्गस्य बलवत्त्वादिन्द्रस्योपस्थाने ऽस्या विनियोगः· तदनुरोधेन द्वितीया सप्तम्यर्थतया व्याख्येया· गार्हपत्यसमीपे ऽनयेन्द्र उपस्थातव्य इत्यर्थः पर्य्यवस्यति । सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते, नतु तद्बोधमपि, येन लिङ्गम्बलवद् भवेत्· 'तस्य च पूर्वं सत एव ज्ञानं विनियोगान्यथानुपपत्त्या पश्चादुपजायते· लिङ्गं तु विनियोजने श्रुतिमपेक्षते· नह्य'नेनेन्द्र उपस्थातव्य' इति लिङ्गात् स्वरसतः प्रतीयते, किं त्वी'दृगिन्द्र' इत्येतावन्मात्रम्· तथाच प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथानुपपत्त्या विनियोगः कल्पनीयः· तथा चार्थविप्रकर्षः· तथाहि, श्रुतार्थापत्तिसाधकन्यायेन "शब्दोपस्थापितेनैव शाब्द्योऽकाङ्क्षा पूर्यत" इति लिङ्गेना'नयेन्द्र उपस्थातव्य' इति श्रुतिः कल्पनीया· ततस्तया विनियोगो भवेत्· ततो यावल्लिङ्गं श्रुतिकल्पनाये

प्रक्रान्तव्यापारं, तावत् प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध एवेति प्रकरणे निराकाङ्क्षे कथानुपपत्त्या श्रुतिः कल्पनीया· तस्माच्छ्रुतेर्बलवत्त्वात् तदनुगुणतया सामर्थ्यं नीयमान इन्द्रपदं परमैश्वर्यवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यते ॥

लिङ्गवाक्ययोर्यथा–पुरोडाशस्य स्थानकरणस्थापनस्वरूपयोः सदनसादनयोः प्रकरणे "स्योनं ते सदनं कृणोमि (क)घृतस्य धारया सुशेवं कल्पयामि, तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेद सुमनस्यमान" इति मन्त्रः पठित,स्तत्र कल्पयामीत्यन्तः पूर्वभागः सदने, शेषभागस्तु सादने प्रयोक्तव्य इति लिङ्गात् प्रतिभाति· अयं मन्त्र एकं वाक्यम्, यत्पदापेक्षया 'यत्कल्पयामि तस्मिन् सीदे'त्येकार्थावच्छिन्नत्वाद्विभागे साकाङ्क्षत्वाच्च· ततश्चैकवाक्यत्वात् समस्त एवोभयत्र विनियोक्तव्यो "देवस्य त्वे"त्यादिवदिति वाक्यादवगम्यते· तदनयोर्विरोधः । अत्र पूर्वपक्षः–अस्यैकवाक्यत्वे निश्चिते पश्चात्तदुपपत्तये ऽभिधानसामर्थ्यं कल्पनीयम्· यत्कल्पितया श्रुत्या विनियोगो भवेत्· यथा "देवस्य त्वे"त्यादिमन्त्रे 'अग्नये' 'निर्वपामी'ति पदयोः समवेतार्थयोरेकवाक्यतया ऽतादृशां पदान्तराणां सामर्थ्यकल्पना· तथाचैकवाक्यत्वनिर्वाहाय क्लृप्तं सामर्थ्यं न तद्बाहन्तुमर्हति, किन्तु विनियोजिकां श्रुतिं कल्पयत् समस्तमन्त्रविनियोजिकामेव कल्पयतीति वाक्यस्योपजीव्यत्वेन बलवत्त्वात् समस्तस्यैवोभयत्र विनियोग इति । सिद्धान्तस्तु–यद्येकवाक्यतामवगम्यैव सामर्थ्यमवधार्येत, तदोपजीव्यत्वाद्वाक्यं बलवद्भवेत्· नत्वेवं, प्रत्युता,वधृतसामर्थ्यानां सन्निहितपठितानां पदानां सामर्थ्यवशेन प्रयोजनैकतया चैकवाक्यत्वावधारणम्· यावन्ति पदानि प्रधानमेकमर्थं प्रतिपादयितुं समर्थानि विभागे साकाङ्क्षाणि भवन्ति, तावन्त्येकं वाक्यं भवन्ति· अनुष्ठेयश्चार्थो मन्त्रे प्रकाशमानः प्रधानम्· सदनसादने चात्र तथाभूते· तथा च सदनप्रकाशनसमर्थः पूर्वभागः, सादनप्रकाशनसमर्थः शेषभाग इति प्रथमप्रतीताभ्यां तत्सामर्थ्याभ्यां

(क) करोमीति पुस्तकद्वये सद्भावेऽपि श्रौतः "कृणोमी"त्येव न्यस्तः ।

क्लृप्तेन श्रुतिद्वयेन द्रागेव तद्भागयोः प्रत्येकं विनियोगे सिद्धे तावतैव प्रकरणपाठोपपत्तौ समस्तमन्त्रस्यैकवाक्यताबुद्धिरत्यन्ताप्याभासी भवति, लिङ्गेन बाधात्· तथाक्लृप्तमपि सामर्थ्यं न श्रुत्यन्तरं कल्पयितुमर्हतीत्यर्थविप्रकर्षाद् वाक्यं दुर्बलम्· तस्मादत्रावान्तरवाक्ये विरोधिलिङ्गान्तरं नास्ति, तत्र समवेतार्थकेनैकेन पदेन द्वाभ्यां त्रिभिर्वा सहैकवाक्यता पदान्तराणामपि सामर्थ्यं विनियोजकश्रुतिकल्पनानुकूलं कल्पयति· यथा· चैव "स्योनन्त" इत्यादिभागानाम्·

वाक्यप्रकरणयोर्यथा, दर्शपौर्णमासप्रकरणे "इदं द्यावापृथिवी भद्रमभू" दित्यादिकः सूक्तवाकनिगदः पठितः· तत्र च "इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायो ऽक्राता" "अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायो ऽक्राता"मित्यवान्तरवाक्यद्वयं श्रूयते· तत्र पौर्णमास्यामिन्द्राग्नी न देवते इति लिङ्गात्तत्पदमपनीयते· अमावास्यायां तु समवेतार्थत्वात्प्रयुज्यते· एवमग्नीषोमपदममावास्यायामसमवेतार्थत्वेन त्यज्यते, पौर्णमास्यां तु प्रयुज्यते·(क)तत्रैवं सन्दिह्यते-इन्द्राग्नीपदैकवाक्यतापन्नान्यवीवृधेतामित्यादिपदानि तत्रापनेयानि· अथवा प्रयोक्तव्यान्येवेति· तत्र प्रकरणात्तत्प्रयोगः प्रतिभाति· असमवेतार्थतया देवतामात्रस्यापनयनात्· वाक्यात्तु तान्यपनेयानीति प्रतीयते· येन सह यदेकवाक्यतापन्नं, तेन सहैव तदपनयनानौचित्यात्, तदनयोर्विरोधः· तत्र प्रकरणमेवाङ्गं सम्बन्धप्रतिपादकमतस्तस्य बलवत्त्वाच्छेषभागः प्रयोक्तव्य एवेति पूर्वपक्षे सिद्धान्तः-प्रकरणं विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य न विनियोजकं, येनैतदेवं भवेत्, किंतु तदपेक्षमेव· कथमन्यथा "पूष्णाऽहं देवयज्यया प्रजया पशुभिश्च जनिषीये"तिपूषानुमन्त्रणमन्त्रं तद्देवताविरहिणोर्दर्शपूर्णमासयोर्न विनियुङ्क्ते· "तिस्र एवोपसदः साह्नस्य द्वादशाहीनस्ये"त्यत्र चैकाहविधेयसोमयागस्वरूपे साह्ने ज्योतिष्टोमादौ द्वादशोपसत्तां न बोधयति· सा पुनर्बहुदिवसविधेया सोमयागरूपाऽहीननाम-

(क) "एवमग्नीषोमपदममावास्यायामसमवेतार्थत्वेन त्यज्यते, पौर्णमास्यां तु प्रयुज्यते" इत्येतावदेकत्र नास्ति ।

ककतुविशेषं नीयते, "अङ्गः खः क्रता"वित्यनुशासनात्· स्वरूपपर्यालोच· नायां तु श्रुत्या लिङ्गेन वाक्येन वा झटितिप्रवृत्तिकेन यद्रूपमनीयते यद्वा ऽन्यत्र नीयते, तद्विहायावशिष्टेन प्रकरणाकाङ्क्षा पूर्य्यते· यत्र तु वि· रोधे श्रुत्यादिकं नास्ति· तत्र प्रकरणं विनियोजकम्· यथा, "समिधो यजती"त्यादिबोधितस्य समिदादेः· यत्र तु यथा लिङ्गेनेन्द्रादिभागो· ऽपनीयते· तथा वाक्येन तच्छेषभागोऽपीति क्व पश्चात्प्रवृत्तिकस्य प्रक· रणस्यावकाशः· न च तथात्वमस्याऽसिद्धम्, यतो, वाक्ये पदानां सम्ब· न्धः प्रत्यक्षसिद्धः, प्रकरणे त्वाकाङ्क्षावशात्कल्पनीयः· तथा च वाक्ये प्रथ· ममेवाभिधानसामर्थ्यं कल्प्यते, ततस्तेन श्रुति,स्तया विनियोग इति तृतीयः कालो विनियोगस्य· प्रकरणे तु प्रथमं वाक्ययोः सम्बन्धः कल्प्यते, ततः सामर्थ्य,मथ श्रुति,रथ विनियोग इति चतुर्थः कालः· ततो वाक्यात्प्र· थमं शेषभागस्यापनये सिद्धे क्लृप्तापि श्रुतिरकिञ्चित्करी, वाक्यविरोधा· दिति ॥

प्रकरणस्थानयोर्यथा राजसूयस्य प्रधाननानाकर्म्मात्मकस्य प्रकरणे प्रधानादभिषेचनीयादनन्तरं शौनःशेपोपाख्यानमाम्नातम्· तत्र, किं सम· स्तराजसूये तदङ्ग,माहोस्विदभिषेचनीयमात्र इति सन्देहः· तत्र प्रकर· णस्य बलवत्त्वात् सर्वाङ्गता ऽवगम्यते· स्थानस्य तु बलवत्त्वे ऽभिषेचनी· याङ्गता· तदनयोर्विरोधः· यद्यप्याकाङ्क्षाऽऽसत्त्योरुभयोरपि तुल्यबलता 'अयमेति पुत्रो राज्ञ' इत्यादौ 'गामानय प्रसादं पश्ये'त्यादावुभयविरहेणा· न्वयाबोधात्· तथापि विनिगमनाविरहादुभयोस्तुल्यबलत्त्वाच्च विकल्पे· नाङ्गतास्त्विति पूर्व्वपक्षे सिद्धान्तः—आकाङ्क्षासन्निधी द्वे अपि विनियोगप्र· योजिके इत्युभयसम्मतम्· राजसूये च कथं स्यादित्याकाङ्क्षा तन्नियस्य धृतिं यावदनुवर्त्तते· सन्निधानं च प्राकरणिकत्वेन सर्वदा बुद्धिसन्निहितत्वादु· स्त्येव· अभिषेचनीये तु सत्यपि सन्निधान आकाङ्क्षोत्थाप्या· तथाच यदो· त्थिताकाङ्क्षया प्रकरणेनैकवाक्यत्वं कल्पनीयं, तदा सन्निधानादाका· ङ्क्षोत्थापनं ततश्चैकत्र सामर्थ्यकल्पनं, श्रुत्युन्नयनं, विनियोगः· अपरंत्र एक· वाक्यताकल्पनं, सामर्थ्योन्नयनं, श्रुतिकल्पनं, विनियोगश्चेत्यर्थविप्रकर्षात्

स्थानस्य दुर्बलत्वात् प्रकरणेन सर्वत्र राजसूये शौनःशेपोपाख्यानस्य विनियोगो, नतु विकल्प इति ॥

स्थानसमाख्ययोर्यथा—दर्शपौर्णमासप्रकरणे पौरोडाशिकसमाख्याते काण्डे सान्नाय्यक्रमे "शुन्धध्वं दैव्याय कर्मणे" इति मन्त्रः श्रूयते· स च प्रकरणाद्दर्शाद्यर्थ,स्तत्र तथात्वं च तस्य समवेतार्थत्वौचित्यात् कस्यचिच्छुन्धने विनियोगाद्भवेत्· शुन्धनीयं चात्र द्वयमुपस्थितं सान्नाय्यपात्रं पुरोडाशपात्रं च· तत्र समाख्यावशात् पुरोडाशपात्रशुन्धने विनियोगः प्रतिभाति, स्थान· वशात्तु सान्नाय्यपात्राणाम्· तदनयोर्विरोधः· तत्र पूर्वपक्षः पौरोडाशशब्देन पुरोडाशसम्बन्धीन्युलूखलमुसलादीन्युच्यन्ते· तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकमिति· अतः समाख्या श्रुतित एव साक्षाद्विनियोजिका· क्रमस्तु प्रकरणाद्युत्थापनद्वारा तथेति समाख्या बलवतीति । सिद्धान्तस्तु पौरोडाशिकपदं न पुरोडाशमन्त्रविशेषयोः सम्बन्धमाह, किन्तु पुरोडाशविशिष्टं काण्डम्· वैशिष्ट्यानुपपत्त्या तु सम्बन्धस्तत्र कल्प्यते, सोपि न शेषशेषिभावः, किन्तु सम्बन्धमात्रम्· द्वारेण तु मन्त्रभेदस्यापि तदनुमानम्· तथाच समाख्ययापि क्रमादिकमुत्थाप्य विनियोगो, नतु श्रुत्यैव· एवं च समाख्यया क्रमोऽनुमेय,स्तेन प्रकरणं, तेन वाक्यं, तेन लिङ्गं, तेन श्रुति, स्तया विनियोग इति समाख्यायां षष्ठः कालो विनियोगस्य· स्थाने तु क्रमः प्रत्यक्ष एवेति न कल्पनीयः· तथाच तेन प्रथमत एव प्रकरणमनुमेयं, तेन च·वाक्यं, तेन लिङ्गं, तेन श्रुति,स्तया तु विनियोग इति पञ्चमः कालः· तस्मादर्थविप्रकर्षात्समाख्या स्थानतो दुर्बलेति न पुरोडाशपात्रशुन्धनेऽस्य विनियोगः· कथं तर्हि काण्डस्य पौरोडाशिकसंज्ञा· पुरोडाशसम्बन्धिबहुमन्त्रघटितत्वादित्यवेहि· तदयं निर्गलितोर्थः—

एकद्वित्रिचतुःपञ्चवस्त्वन्तरितकारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥
बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥

इत्यलमति विस्तरेणेति प्रकृतमनुसरामः ॥— (शेषमग्रे)

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 109. VOL. XI.)

९. अज्ञातसत्त्वं नेष्टं चेद् व्यवहारः कथं भवेत् ।
नह्यदर्शनमात्रेण विपत्तौ नार्थनिश्चयात् ॥ १० ॥

ननु कथमेवमुच्यते तेनाऽननुभूयमानं द्वैतं नास्तीति यावता अज्ञातस्यापि द्वैतस्य सत्त्वमभ्युपगच्छन्ति । अत एव त्रिविधसत्त्वमङ्गीकुर्वन्ति वृद्धाः । न च तदज्ञातसत्त्वानभ्युपगमे उपपद्यते प्रातीतिकपारमार्थिकभेदेन द्वैविध्यस्यैव सम्भवात् । अन्यथा गृहान्निर्गतस्य पुत्रपश्वादिसकलसाधनजातमपश्यतस्तदभावनिश्चयेन शोकाग्निना दह्यमानस्य रुदतो मरणप्रसङ्गः ।

9. If the existence of things when unperceived is an inadmissible assumption, pray how is common experience possible? For no man grieves for an object, thinking it destroyed merely because he sees it not....X.

Objection: the view that the esse of things is percipi (which is a part of the jīva-unity theory) is opposed at once to common sense and to the express teaching of the ancients as to three kinds of existence:—pāramārthikī sattā, real existence, sc. that of Brahman alone; prātibhāsikī, the esse of which is percipi, sc. that of objects of the dream—world and of those erroneously imagined in the waking state: vyāvahārikī, practical existence, sc. that of objects of waking consciousness.

An opponent asks how we concluded above that 'for this reason no unperceived order of duality really exists', seeing that some thinkers have maintained a real existence for a dual order also even when unperceived; and adds that it was just because duality exists though unperceived that ancient Vedānta teachers taught three kinds of existence; and that this three-fold division of existence will not stand, if the existence of an unperceived object is denied; for then there can be only two kinds of existence, viz., the absolutely real (pāramārthikī) and the merely perceptional (prātītikī). If (he continues) the existence of an unperceived object is denied, it should follow that the man, who leaves son and home

ननु स्वप्नवज्जागरेऽपि प्रातीतिकसत्त्वसंपन्नेनैव द्वैतेन व्यवहारः किमिति नोपपद्यत इति चेत् न वैषम्यात् जागरबोधेन तस्य बाधात् इह तु साक्षात्कारात्पूर्वं तदभावादिति। अत्राहुः

सत्त्वत्रयं वदन्वादी प्रष्टव्योऽत्राधुना मया।
सत्यं द्वैतमसत्यं वा नाऽसत्ये त्रिविधं कुतः॥ ११॥

किं द्वैतं पारमार्थिकमाश्रित्याज्ञातसत्त्वं साध्यते उतानिर्वचनीयम्।

and herds and all other sources of joy, should die weeping and consumed by sorrow in the conviction that these loved objects exist not, since he no longer beholds them.

Here the opponent (speaking in *v.* 10.) might be asked by way of objection, why experience of a dual order of things whose existence is merely perceptional is not possible in the waking state as it is posible in the dreaming state, (for all schools hold that the esse of the dream-world is percipi). This objection he would put aside, because the waking and dreaming states are dissimilar: for whereas the latter state is put an end to by waking knowledge, there is no sublation of the world in the waking state previous to an intuition of Brahman. To the opponent's view they rejoin:—

Met: the common sense view that a thing exists even when unperceived is beset with difficulties: Ancient teachers admitted vyavahāriki sattā only out of a kind regard for the needs of the vulgar mind.

The man who maintains three different kinds of existence must be asked whether he holds duality to be real or unreal. Real it cannot be. If unreal (non-existent, asatya); how can existence (sattva) be three-fold ?....XI.

Does the opponent prove that an object exists even when unperceived by maintaining that the dual order is either absolutely real or is what is technically termed *inexplicable** ?

* An *inexplicable* object is one that merely appears in consciousness as some thing, *i.e*, more than nothing (asat), and yet is proved by experience to be less than real (sat, Brahman). Hence it is *inexplicable*, or a product of Māyā.

नाद्यः प्रत्यक्षादिप्रामाण्यनिरासेन निरस्तत्वात् । अन्त्ये अनिर्वचनीयं प्रथमतः क्वचित्सिद्धं न वा । न चेत् तर्हि दृष्टान्ताभावात् कथमाकाशादेरनिर्वचनीयत्वं साधनीयम् । सिद्धं रज्जुसर्पादिकमिति चेत् तर्हि तत्र यादृशं सत्त्वं तादृशमेवाकाशादेः प्रपञ्चस्येति स्थिते विवेचनीयं किमज्ञातसत्त्वं किं वा प्रातीतिकमेव । यद्यज्ञातमपि सत्त्वमाकाशादेः कल्प्येत तदा कथमयं दृष्टान्तो दार्ष्टान्तिके सामञ्जस्येनोपसंह्रियेत विरोधात् ।

The former alternative will not hold, for an absolutely real duality must be rejected on the (already shown) rejection of the trustworthiness of perception, inference and other sources of evidence, (cf *v.* 4).

If the latter alternative be adopted, it may be asked whether this merely apparent existence was observed in any instance prior (to the inference which establishes a merely apparent order of duality), or not? If not observed, how, in the absence of an instance confirmatory of the inference, is the merely apparent existence of the world, beginning with the subtile element ether, to be proved. If it be replied that the snake, which erroneously appears in the place of the rope seen at night, is a well-known instance, among others, of a merely apparent object, then, it being premised that the existence of the world beginning with ether is precisely similar to the existence of the snake in the example adduced, the question remains to be discussed whether the object-world exists even when unperceived, or only so long as perceived. If an existence independent of perception be surmised for the world, the example (sc. the existence of the snake) and the case in point (sc. the existence of the world) do not sufficently correspond, because of the dissimilarity (with regard to the snake whose *esse* is admittedly *percipi*).

नच गृहाद्विनिर्गतस्यासत्त्वनिश्चयेन रोदनादिप्रसङ्गो दोषः बाधकप्रमाणस्याप्रवृत्तत्वेन अभावनिश्चयानङ्गीकारात् स्वप्नवत्सर्वव्यवहारस्योपपादितत्वाच्च । नच तत्र बाधोऽस्तीति वैषम्यं भ्रमावस्थायां कुत्रापि बाधस्यानङ्गीकारात् । प्रमाणप्रवृत्तौ बाधेपि न कश्चिद्दोषः तदानीं भ्रमसिद्धेन व्यवहारानभ्युपगमात् । नच त्रिविधसत्त्वाभ्युपगमविरोधः सर्वस्य द्वैतस्य प्रातीतिकसत्त्वमपरित्यज्य तैर्भ्रान्तसन्तोषमात्रस्य कृतत्वात् प्रातीतिकत्वेपि प्रपञ्चस्य भ्रान्तबुद्धिसिद्धावान्तरवैषम्यमाश्रित्य व्यावहारिकसत्त्वाभिधानाविरोधात् ।

Nor against us can be urged the case of the man, who leaving home ought (as a logical consequence of our view, you said) to weep for his dear ones, because certain of their non-existence. For we do not say that he is convinced of their non-existence so long as no evidence subversive of his belief in their existence is forthcoming; and, futher, because we have shown that all experience is like that of dreams. [In dreams, the esse of all objects is percipi, admittedly; and yet the dreamer weeps not for his absent son].

Nor can it be argued that there is a difference between the states of dreaming and waking, in that the former is destroyed by waking knowledge; for in neither case, while the error lasts, is any sublation (of either state) maintained. Nor is there any inconsequence in holding that there is a sublation of error on the application of evidence; for none would say that, when the error has been removed, there can be any further dealings with the erroneously surmised object.

Nor is the view of a two-fold existence contradictory of the older view of a three-fold existence; for while ancient teachers (e. g. Sarvajna Muni in the Saṃkshepaśārīraka I, 1, 178.) did not abandon the position that the existence of a dual order of things is dependent on the perception of it, they taught a third kind of existence (the so called *practical*) to satisfy the deluded vulgar. For although the esse of the world is percipi, there is no contradiction in maintaining the *practical* as a third kind of existence, if attention is had to those intermediate differences (sc. between the waking and dreaming states) which the unphilosophic are persuaded of.

१० द्वैतभेदे प्रति ज्ञानं प्रत्यभिज्ञा कथं वद ।
दशानां युगपत्सर्पभ्रमे तद्वत्तथैव सा ॥ १२ ॥

तथापि अज्ञातसत्त्वानभ्युपगमे सुप्तप्रबुद्धस्य स एवायं प्रपञ्च इति प्रत्यभिज्ञाने का गतिरिति चेत् एकस्यामेव रज्ज्वां मन्दान्धकारवर्तिन्यां दशानां युगपत्सर्पभ्रमेण पलायमानानां परस्परं संवादेन एक एव सर्पः सर्वैरनुभूत इति प्रत्यभिज्ञायां या सैवेति सन्तोष्टव्यम् । तत्र हि स्वस्वभ्रमसिद्धः सर्वैः पृथक् पृथगेवानुभूयते विषयः अन्यभ्रमसिद्धस्यान्येन ज्ञातुमशक्यत्वात् अन्यभ्रमस्याज्ञानात् ।

10. If for each cognition there is a separate object (as must be the case on the view that the esse of things is percipi), then you must explain how recognition is possible (sc. how the present object is recognised as the identical one previously known). The reply is that the recognition in this instance is precisely similar to the recognition in the case of the imaginary snake observed simultaneously by ten men (each declaring to the other:—I saw the same snake as you did)....XII.

Objection: If esse is percipi, recognition (which implies continuity of the object) would be impossible. Answer: recognition itself is error.

Still (an opponent may urge as above)—if the view that an object exists though unperceived be not maintained, what explanation is there of the case of the man who waking from dreams recognises the present world as identical with the one he knew before falling asleep? Our opponent, we reply, must content himself here with the explanation he is prepared to offer for the recognition—'one and the same snake we all saw'—of which the ten men speak when they have fled from an imaginary snake, which was only a piece of rope lying in the dark. For in this example the erroneously perceived object (sc. the snake) is perceived by all and each separately, since the object erroneously perceived by the one man cannot possible be perceived by another, for one cannot have immediate knowledge of another's error.

अविवेकादेव तु तत्र प्रत्यभिज्ञानमेक एव सर्पः सर्वैरनुभूयत इति । एवं जाग्रदवस्थायां प्रपञ्चमनुभूय सुषुप्तिं गत्वा पुनरुत्थाय योऽयं प्रपञ्चानुभवः स प्रपञ्चान्तरमेव विषयीकरोति प्रत्यभिज्ञानं त्वविवेकादेव । नच सुषुप्तौ प्रपञ्चविलये प्रमाणाभावः नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदिति श्रुत्या सुषुप्तौ द्वितीयाभावं वदन्त्या तत्र सर्वप्रपञ्चाभावस्य दर्शितत्वात् ।

११ सर्पभ्रमाद्विशेषोऽस्ति जाग्रद्बोधेऽन्यथा कथम् ।
इन्द्रियादेरुपादानं तदभावे यतो न धीः ॥ १३ ॥

The fact is that the recognition—'one and the same snake we all saw'—is simply due to error. And so when a man passes from waking consciousness into the state of dreamless sleep from which again he awakes, his present consciousness relates to a different series of objects; but his recognition of the identity of the present and former series is simply due to error.

Nor can it be said that there is no proof that in the state of dreamless sleep there is an end to the world of experience. For the cessation of all experience during dreamless sleep is indicated in the Śruti passage declaratory of the absence of any second thing during that state:—'For there is no loss of sight to the seer, because it cannot perish. Nor is there then (in dreamless sleep) any second, any thing different from him that he could see'.

Brihad: Up: IV. 3. 23.

11. Waking consciousness is different from the false consciousness of an imaginary snake. If not different, how is it that the organs of sense are accepted as necessary to bring about waking consciousness? For when organs of sense are absent, no knowledge results....XIII.

Common Sense reasserts itself: If esse is merely percipi, the well ascertained distinctions between true and false knowledge are at an end.

तथापि रज्जुसर्पादिज्ञानादाकाशादिप्रपञ्चज्ञानेऽस्ति कश्चिद्विशेषः प्रत्यक्षादिप्रमाणाविद्याकारणकत्वभावाभावाभ्याम्। नहि यादृशमर्थमिन्द्रियादिजन्यं ज्ञानं विषयीकरोति तादृशमेवाविद्याजन्यभ्रमोऽपीति सम्भवति भ्रमात्पूर्वं विषयस्यासत्त्वात् इन्द्रियादिजन्यज्ञानस्य च सन्निकर्षादिजन्यत्वेन ज्ञानात्पूर्वं विषयसत्त्वस्यावश्यम्भावात् अन्वयव्यतिरेकाभ्यां चेन्द्रियादेः कारणत्वस्य सिद्धत्वात्।

In the above an opponent urges that, in spite of what has been said for the view that the esse of a thing is percipi (tathāpi), there is a difference between knowledge of ordinary objects and that of an imaginary object like the snake seen in a rope—the difference being due to the presence and absence respectively of perception and the other sources of evidence, on the one hand, and of Nescience, on the other, as causes (of these two kinds of knowledge, sc. sense-organs, and not Nescience, are the cause of ordinary waking consciousness; whereas only Nescience is the cause of the false consciousness of an imaginary object). For it is not possible (so runs the objection) that the erroneous cognition effected through Nescience should have as its object one precisely similar to that which the cognition, effected through sense-organs, has as its object, since the imaginary object did not exist previous to the erroneous cognition; and, because the cognition effected through the sense-organs and other sources of evidence was effected through contact of the object with the sense-organs &c., the existence of the object previous to its being cognised is a necessary postulate; and because it can be proved by the inductive method of conjoint presence and absence that sense-organs &c. are causes of knowledge (sc. when these are present, knowledge results; when absent, no knowledge.)

तस्मात्प्रपञ्चस्याज्ञातसत्त्वाऽभ्युपगमोऽवश्यम्भावी । अन्यथा वैलक्षण्यानुपपत्तेः । मेवम्

इन्द्रियाणां कारणत्वे भवेच्चोद्यं तदा तव ।
स्वप्नभ्रमे यथा तेषामन्वयव्यतिरेकधीः ॥ १४ ॥

इन्द्रियादेर्वस्तुतः प्रपञ्चज्ञानं प्रत्यकारणत्वात् । कुत इति चेत् तत्र वक्तव्यं किमिन्द्रियादेः प्रमितिमात्रे कारणता किं वा भ्रमप्रमासाधारणज्ञानमात्रे भ्रममात्रे वा ।

Hence, concludes our opponent, the view that the world exists though unperceived is a necessity; for on any other view the difference (between true and false knowledge) is inexplicable.

Not so, we reply:—

Your objection would hold if the sense-organs were causes of knowledge. Similar to the consciousness of the presence and absence of these in the delusion of sleep (is the consciousness, in the waking state, of the presence and absence of sense-organs, which you urged as a proof of the sense-organs being causes of knowledge, *i.e.* our consciousness in both cases is false; for no one maintains that the dreamer sees with his eyes though he may imagine that he does so)...XIV.

But common Sense is delusive: The senses can prove nothing real: The world, or sum of effects, is a pure fiction due to Nescience as its cause.

For sense-organs &c. are not really instruments of our cognition of the world. Why not, you ask. Declare then, we say, whether the sense-organs, and the rest, are instruments of true knowledge only, or of true and false knowledge, or of false knowledge only?

नाद्यः इन्द्रियादिजन्यज्ञानप्रामाण्यं भ्रमविषयव्यावृत्तार्थविषयत्वेन साधनीयं भ्रमविषयव्यावृत्तार्थत्वं च प्रमितिविषयत्वेनेत्यन्योन्याश्रयात् । नच प्रमितिविषयत्वमर्थसत्यत्वे हेतुरपि मिथ्येदं रजतमिति प्रमित्याऽसत्यस्यापि विषयीकरणात् अबाधितत्वस्य चाऽसिद्धेः । किञ्च इन्द्रियाणां प्रमाणत्वेन अज्ञातार्थविषयत्वे वक्तव्येऽधिष्ठानमात्रविषयत्वं प्राप्तं प्रपञ्चस्य सर्वस्य जडत्वेन अज्ञातत्वाभावात् ।

• Not of true knowledge merely; for the truth of the knowledge effected through sense-organs &c. would have to be proved by declaring that the object of (sc. what was made known by) this knowledge was something different from what false knowledge makes known; and again, that its object was something different from the object of false knowledge would be proved by the declaration that its object was the object of true knowledge—which would give rise to a logical see-saw. Nor does the fact that the knowledge is true, prove the real existence of the object made known by that knowledge; for in the case of the true cognition—'this silver is unreal'—(*e. g.* where mother of pearl is mistaken for silver) a true cognition has as its object an unreal thing (sc. the imagined silver). And (it cannot be urged that the difference between true and false objects consists in objects of the former kind being such as are not subsequently proved false, for) absence of falsification cannot be maintained (in the teeth of Śruti and argument, which prove all save Brahman to be false). Moreover, since it must be held (on your view of things existing independent of cognition) that the sense-organs as sources of knowledge must have for their objects things which exist even when unperceived (for it is the essential character of an organ of knowledge, you say, to make known what existed before unknown), it follows that the sense-organs have as their sole object the substrate of all things (sc. the Self, Brahman). For the whole world of objects being non-intelligent (jaḍa *i. e.* is Nescience when considered apart from Self, Intelligence the substrate), it cannot be what is termed *unknown* (ajṇāta, meaning thereby *invested by Nescience;* for the objects are Nescience itself, and Nescience could only invest or make *unknown* Intelligence and not itself).

तथाचाऽधिष्ठानत्वस्यात्मन्येव विश्रान्तत्वेन प्रत्यगात्मविषयाणीन्द्रियाणि प्रमाणानीति वक्तव्यं तच्च नोपपद्यते प्रत्यगात्मन इन्द्रियाऽविषयत्वात् तस्य निर्द्धर्मकत्वात् । तथाच श्रुतिः न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनं पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्निति । नचानयैव श्रुत्येन्द्रियाणां प्रपञ्चविषयत्वं दर्शितमिति वाच्यं स्वप्नेन्द्रियवदन्वयव्यतिरेकभ्रमसिद्धप्रपञ्चज्ञानकारणत्वानुवादेनात्मन इन्द्रियाविषयत्वप्रदर्शने तात्पर्य्यात् । एतेन भ्रमप्रमासाधारणज्ञानकारणत्वमप्यपास्तं प्रमाकारणत्वस्य निरूपयितुमशक्यत्वात् ।

Accordingly, since the fact of being the locus of the world can apply satisfactorily to the Self only, you will have to declare that the sense-organs as sources of knowledge have the Self within as their object; and such a declaration is impossible, for the Self cannot be an object for the sense organs, since it is without attributes. And thus runs the Śruti—'His form is not to be seen, no one beholds him with the eye.'

Katha Up: II. 6, 9: 4. 1.

'The Self-existent pierced the openings of the senses so that they turn forward (outward): therefore man looks outward not inward into his Self.' Nor can it be said that this passage declares that the sense-organs have the world of phenomena as their object. For while the passage re-states the instrumentality of the sense-organs in regard to our knowledge of the world—which instrumentality is commonly regarded as proved by a method of conjoint presence and absence which is really false, as (the presence and absence of) sense-organs in dreams (is purely imaginary)—the real meaning of the passage lies in showing that the Self is not an object for the sense-organs.

By thus showing that the sense-organs cannot be instruments of true knowledge, we have refuted the (second) alternative that they are instruments of true and false knowledge together.

अस्तु तर्हि भ्रममात्रे कारणतेन्द्रियाणाम् । न भ्रमज्ञानस्याऽविद्यामात्रयोनित्वस्य त्वयैवोक्तत्वात् ज्ञानं प्रतीन्द्रियान्वयव्यतिरेकयोश्च स्वप्नेन्द्रियान्वयव्यतिरेकवदुपपत्तेः । एवं घटादिकार्यमात्रे कारणाकाङ्क्षायां कारणत्वेनाऽविद्यैवोपसंहर्तव्या । तत्तदर्थिनां तत्तत्कारणविशेषोपादानं तु तथैव स्वप्नवदुपपादनीयम् । तस्मै ब्रह्मातिरिक्तं कृत्स्नकार्यजातं ज्ञानं ज्ञेयरूपं तत्सर्वमाविद्यकमेव । इति प्रातीतिकमेव सत्त्वं सर्वस्येति सिद्धम् । तदुक्तं वसिष्ठेन अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव । क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥

( शेषमग्रे )

Let then the (third) alternative stand, *viz.*, the sense-organs are instruments of false knowledge only. This will not hold, for you yourself declared that Nescience alone is the cause of false knowledge (cf p. 135). And because we also have proved that the presence and absence of sense-organs (which you urged as a proof that the latter are instrumental with regard to (waking) knowledge is on precisely the same footing as the presence and absence of sense-organs which we are conscious of in dreams (sc. is a bare imagining).

Thus, to meet our expectation of a cause for all effects, such as earthen pots, cloth &c., Nescience alone is to be accepted as their cause. But the acceptance of special causes for each of these effects (—clay for the pot, threads for the cloth—) by those who desire these effects can be proved to be precisely similar to the acceptance during the dreaming state (of these special causes, when, as all admit, the clay, threads &c. are purely fictitious).

Hence, with the sole exception of Brahman, all things whether cognitions or things cognised are the effects of Nescience; and their esse has been proved to be percipi only. And thus Vasishtha declared :—'All things have Nescience as their source: bubble-like they spring up for a moment and are refunded into the great ocean of knowledge (sc. Brahman).'

Yogavāsishṭha Nirvāṇaprakaraṇa. śl. 20.
The Bombay edition, p. 211, reads भेदाः

*(To be continued).* A. V.

॥ श्रीः ॥

श्रीमद्रामानुजाचार्यप्रणीत इति प्रसिद्धो

# वेदान्ततत्त्वसारः ॥

श्रीमते रामानुजाय नमः ॥

( *Continued from page* 234. Vol. X. )

ननु "मायाभासेन जीवेशौ रोती" कति जीवेश्वरयोर्ब्रह्मप्रतिविम्बत्वं श्रूयते, अतो बुद्धिप्रतिविम्बितो जीवो मायाभास ईश्वर इति चेन्निर्विशेषोपलब्धिमात्रस्य ब्रह्मणः प्रतिविम्ब इति न शक्यते वक्तुम्। श्रुतिविरुद्धश्च, "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" "न जायते म्रियते वा विपश्चित्"। नित्यानां जीवानां करणकलेवरप्रदानश्रवणविरोधोऽपि, तथा च वेदस्तुतौ "बुद्धी-

If it be said that in the words Māyā produces Soul and Lord in appearance only (*ābhāsena*), it is declared that Soul and Lord are mere reflections of Brahma, (and not real in themselves); accordingly Soul is that which is reflected in the intellect, and Lord is mere appearance (reflected in) Māyā; we reply that Brahma being (181) undifferenced intelligence only, a reflection thereof cannot be affirmed; and is, moreover, opposed to the Śruti passages (182) "He is the cause, the Lord of the lord of the organs, of Him there is neither parent nor lord," (183) "The wise is not born nor dies." It is also opposed to the declaration of the bestowal of organs and bodies on eternal souls (184). As, for example, in the Vedastuti (a section of the latter half of the tenth Skandha of the Bhāgavata Purāṇa) "The Lord created the

181. According to the Śankara view.

182. Śvetāśvatara Upanishad VI. 9. The Lord is uncaused.

183. Kaṭha Upanishad I. 2. 18. Soul, too, is uncaused and eternal.

184. Soul is eternally existent, but at each new creation of the universe, God creates the body etc., by means of which it passes through its transmigratory existence.

न्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः'। मात्रार्थं च भवार्थं चात्मने कल्पनाय च" ॥ श्रुत्यर्थस्तु माया आभासेन, अयाथात्म्येन, जीवेशौ करोति, उभयोस्तत्त्वे वैपरीत्यञ्जनयति, दृश्यते ह्युक्तार्थे आभास-प्रयोगः, हेत्वाभासो धर्माभासः । किं तद्वैपरीत्यम्, उच्यते "अजो नित्यः शाश्वतो ऽयम्", "आत्माप्यनीशः", "अनीशया शोचति मुह्यमान" इत्याद्युक्ते जीवतत्त्वे देहात्मभ्रमं स्वतन्त्रात्मभ्रमञ्चोत्पादयति, तेन "देहोऽहमीश्वरो ऽहमहं भोगी"तिवक्तारो भवन्ति ।

intellect, the organs of sense, the mind, and the vital breath of living beings, for the enjoyment of material objects, for worldly existence, and for ministering to Soul." In our view the meaning of the above quoted statement of the Veda is that Māyā produces (causes to appear) Soul and Lord falsely (*ābhāsena*), in a manner contrary to their true nature, *i. e*, generates wrong notion in regard to the nature of both, for the word *ābhāsa* is found to be used in the aforesaid sense—e. g. *hetvābhāsa* (false reason), *dharmābhāsa* (false devotion). What is that wrong notion? We reply in regard to the nature of Soul, described in the words (185) "unborn, eternal, everlasting," (186) "Soul also is powerless (because of pleasure and pain)", (187) "Soul) mourns because of its powerlessness, being deluded," Māya produces the error that body is Soul, and the error that Soul is self-dependent (188). In consequence of this, men use such locutions as, 'I am body,' 'I am Lord,' 'I am experiencer (189).' Similarly in regard to the na-

185. Katha Upanishad I. 2. 18.

186. Śvetāśvatara Upanishad I. 2.

187. Śvetāśvatara Upanishad IV. 7.

188. But the quoted passages show that soul is not the perishable body, nor the Omnipotent Lord, but is dependent, and subject to pleasure and pain, viz., is in a state of bondage.

189. Men mistakenly talk of their bodies as if they were their real selves, as if they were not subordinate to the supreme Lord, and as if they were the sole experiencers of worldly existence

तथा "पतिं विश्वस्यात्मेश्वरम्", "शाश्वतं शिवमच्युतम्", "यो मामजमनादिं च", "आत्माधारोऽखिलाश्रय", इत्युक्त ईश्वरतत्त्वे कार्य्यत्वान्याधारत्वमायोपाधिकत्वबुद्धिं जनयति, तथा च गीयते, "अव्यक्तं व्यक्तिमापन्नम्", "अवजानन्ति मां मूढाः", "परं भावमजानन्तः"। नन्वाभासः प्रतिविम्बार्थे प्रसिद्धः, स एवाचाङ्गीकार्यः, हन्त तर्हि, "असद्वेदमग्र आसीत्", "वीरहा विषमः शून्य" इत्यचासच्छून्यशब्दाभ्यां प्रसिद्धार्थेन शून्यमेव तत्त्वमिति विज्ञायते कुतोऽनाङ्गीक्रियते, तनदङ्गीकारे यत्कारणं तदचापि समानम्। नन्वयं जीवो यदि

ture of the Lord, described in the words "Lord of all, the Ruler of Soul," "Everlasting, blessed, imperishable," (190) "He who knows me to be unborn and beginningless," "The self-based, the substrate of all," Māyā produces the notions (191) that he is an effect, has another as basis, and is conditioned by Māyā; and so it is sung (in the Bhagavadgītā), "The unwise think me the invisible to have become visible (192)", "Fools despise me," "Not knowing my higher nature (193)."

It may be objected that the word *ābhāsa* is commonly used in the sense of a reflection, and that meaning alone is to be admitted in the passage under consideration. Well then, in these sentences (194) "Truly non-existent was this in the beginning", "A slayer of heroes, cruel, naught (is Vishṇu)," the words 'non-existent' and 'naught' according to their usual meaning

uninfluenced by the power of desert, and unactuated by divine agency in accordance with their past deeds. 'Swata evāham bhogī nādṛishṭādibhiḥ'—Rāmānuja's Commentary on Bhagavadgītā XVI. 14.

190. Bhagavadgītā X. 3.

191. Notions contradicted by the text just referred to.

192. Bhagavadgītā VII. 24.

193. Ibid. IX 11. These passages, relating to the incarnation of Kṛishṇa, are adduced as proofs of the erroneous conceptions of Īśvara entertained by those who are under the influence of illusion.

194. Taittirīya Upanishad II. 7.

मिन्नस्तर्हि कथं "तत्त्वमस्या"दिवाक्यैरेकत्वव्यपदेश इत्यत्र "अंशो नानाव्यपदेशादन्यथा चापि दासकितवादित्वमधीयत एके", ब्रह्मांशो जीवः, कुतः, 'नानाव्यपदेशाद', 'न्यथा चै'कत्वेन व्यपदेशात्, उभयथा हि व्यपदेशो दृश्यते । नानाव्यपदेशस्तावत्, स्रष्टृत्वसृज्यत्वनियन्तृत्वनियाम्यत्वसर्वज्ञत्वाज्ञत्वस्वाधीनत्वपराधीनत्वशुद्धत्वाशुद्धत्वकल्याणगुणाकरत्वविपरीतत्वपतित्वशेषत्वादिभिर्दृश्यते । 'अन्यथा चा'भेदेन व्यपदेशोऽपि, "तत्त्वमस्य" "यमात्मा ब्रह्मे"त्यादिभिर्दृश्यते । "अपि दासकितवादित्वमधीयत एके" "ब्रह्मदाश

affirm that nihility is the only reality, and why is that doctrine not accepted by you? The same reason for that not being accepted exists here also (195).

Again, it may be asked, If Soul is distinct from Brahma, how is it that "That thou art" and the like sentences make a representation of unity? Here applies the Sūtra (196) "A portion because of the representation of plurality, and otherwise. Moreover some read that there is the condition of fishermen and gamblers etc." *I. e.* Soul is a portion of Brahma. Whence? Because there is representation of plurality—'And otherwise,' because there is representation according to unity, for both kinds of representation are found (in the Veda). There is found representation of plurality, as that (Brahma and Soul are) respectively the Creator and the (197) created, the Actuator and the

195. The words 'non-existent' and 'naught' are not taken literally by the Śaṅkaras, since they believe that Brahma is absolute reality, and that Īśvara has a practical existence, in accordance with their views of Vedic doctrine. "In the same way," argues the Rāmānuja, "we hold that *ābhāsa* cannot signify a mere reflection, for that would contradict the Veda, as is shown in the texts previously quoted."

196. Brahma Sūtras II. 3. 43.

197. Jīva is 'created' (sent forth), that is, receives, at the creation, body and organs conducive to the experiencing of the fruit of deeds, and the attainment of emancipation. During the period of *pralaya* there is an absorption of body, etc., in *Prakṛiti*.

ब्रह्मदासा ब्रह्मेमे कितवा"इत्याथर्वणिका ब्रह्मणो दासकितवादित्वममप्यधीयते, ततश्च जीवव्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थः । एवमुभयव्यपदेशमुख्यत्वसिद्धये जीवोऽयं ब्रह्मणोंऽश इत्यभ्युपगन्तव्यः । न च भेदव्यपदेशानां प्रत्यक्षादिप्रसिद्धार्थत्वेनान्यथासिद्धत्वम्, ब्रह्मसृज्यत्वतन्नियाम्यत्वतच्छरीरत्वतच्छेषत्वतदाधारत्वतत्पाल्यत्वतत्संहार्यत्वतदुपासकत्वतत्प्रसादलभ्यधर्मार्थकाममोक्षरूपपुरुषार्थभोक्तृत्वादयः, तत्कृतश्च जीवब्रह्मणोर्भेदः प्रत्यक्षाद्यगोचरत्वेनानन्यथासिद्धः । अतो जगत्सृष्ट्यादिवादिनीनां प्रमाणान्तरसिद्ध-

actuated, the Omniscient and the nescient, the Self-dependent and that which is dependent (198) on another, the (199) Pure and the (200) impure, the Repository of good qualities and the (201) opposite, the Master and that which is supplementary (or subsidiary) (202) to him 'And otherwise'—representation according to identity is also found in "That thou art," (203) "this soul is Brahma" and like sentences. 'Moreover some read that there is the condition of slaves, gamblers, etc.,' *i. e.*, in the words (204) "Fishermen are Brahma, slaves are Brahma, these gamblers are Brahma", the Atharvavedins read that there also pertains to Brahma the condition of slaves, gamblers, etc., Hence, because Brahma pervades (205) all souls, there is representation of identity. Such is the meaning. After the manner thus stated, Soul is to be acknowledged as a portion of Brahma, so as to secure to both

198. viz., Brahma.

199. Free from illusion or nescience.

200. Involved in illusion.

201. Associated with *heya, prākṛita,* guṇas.

202. In the Śrutaprakāśikā (Ṭīkā on Śrībhāshya) śeshitvam is explained by tadvattā, the possessing jīva, etc., as subsidiary.

203. Māṇḍūkya Upanishad II.

204. Said in Śaṅkara's Commentary *in loco* to be a quotation from the Brahma Sūkta.

205. As the Internal Ruler.

भेदानुवादेन न मिथ्यार्थोपदेशपरत्वम् । "अपि स्मर्यते" "ममैवांशो जीवलोके जीवभूतः सनातनः", मद्विभूतिभूतो मदंश एव स्वभावतः सत्यसङ्कल्पादिगुणकः सन्कश्चिदनादिकर्मरूपाविद्यावेष्टनतिरोहितस्वरूपो जीवभूतोऽतिसङ्कुचितज्ञानैश्वर्यो जीवलोके संसारे वर्त्तमानः । तथा च श्रुतिः "त इमे सत्याः कामा अनृतापिधानाः" । जीवानां कर्मप्रवाहानादित्वं तु "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चे"तिसूत्रादवसेयम् । स्मृतिश्च, "अनादिकालसंसुप्तः संसारपदवीं गतः" । नन्वेकवस्त्वेकदेशवाची

kinds of representation a literal application. Nor should it be said that such representations of difference are established by other means of proof because they relate to matters known through sense—perception, etc., (for) that Soul is created by Brahma, is actuated by him, is his body, is supplementary (or subsidiary) to him, has him as its basis, is preserved by him, is retracted into him, is his worshipper, and is an experiencer of the four objects of life consisting of virtue, wealth, pleasure, and liberation, obtainable by his favour; and the difference thereby made between Soul and Brahma, are matters not established by other means of proof (than the Veda), because incognisable by sense—perception, etc. Hence the Śruti passages which declare the creation of the world, etc., are not concerned with the (206) teaching of what is false by mere re-statement of difference already established by some other means of proof. There is also the Sūtra (207) 'Moreover it is said in the Smṛiti', 'An (208) eternal portion of me having become Soul in the world of Soul,' *i. e.*, a certain portion of me, a divine emanation of me, being

206. 'Re-statement of difference already established by some other means of proof' is, according to Śānkara ideas, the teaching of what is false, and not intended as true by the Veda; for all knowledge of the external world is purely fictitious, as is the external world itself.

207. Brahma Sūtras II. 3. 45.

208. Bhagavadgītā XV. 7.

ह्यंशशब्दः, जीवस्य ब्रह्मैकदेशत्वे तद्गता दोषा ब्रह्मणि भवेयुः । न च ब्रह्मखण्डो जीव इत्यंशत्वोपपत्तिः, खण्डानर्हत्वाद्ब्रह्मण इत्यत्र "प्रकाशादिवत्तु नैवं परः" । तु शब्दश्चोद्यं व्यावर्त्तयति । "प्रकाशादिव"ज्जीवः परमात्मनोऽशः, यथाऽग्न्यादित्यादेर्भास्वतो भारूपप्रकाशो ऽंशो भवति, यथा गवां शुक्लकृष्णादीनां गोत्वादिविशिष्टानां गोत्वादीनि विशेषणान्यंशाः, यथा वा देहिनो देवमनुष्यादेर्देहोऽंशस्तद्वत् । एकवस्त्वेकदेशत्वं ह्यंशत्वं विशिष्टस्यैकवस्तुनो विशेषणमंश एव । तथा च विवेचकाः, विशिष्टे वस्तुनि विशेषणांशो-

anturally possessed of real resolve, and other like qualities, having become Soul whose true essence is concealed by a wrapping of nescience consisting of beginningless deeds, whose knowledge and power are exceedingly limited when dwelling in the world of Soul, in the transmigratory state (209). And in accordance therewith is the Śruti (210) "These true desires are covered by what is false." That the works of souls have a beginningless course is determined by the Sūtra "There were no works because of non-diremption—we deny this, for they are beginningless, and this is both congruous (is accordant with reason), and is found (is revealed in the Veda)." And the Smṛiti also declares "Sunk in sleep from beginningless time Soul has trodden the path of transmigratory life."

It may be said that the word portion designates an integral part of a single thing ; but if Soul were an integral part of Brahma, the faults pertaining to it (Soul) would belong to him. Nor can the being a portion be upheld by the assumption that Soul is a *separate* part of Brahma, for Brahma is insusceptible of division into separate portions. Here applies the Sūtra (211) 'But (it is a portion) after the manner of light, not such is the

209. Partly quoted from Rāmānuja's Commentary *in loco.*
210. Chhāndogya Upanishad VIII. 3. 1.
211. Brahma Sūtras II 3. 46.

ऽयं विशेष्यांशोऽयमिति व्यपदिशन्ति । विशेषणविशेष्ययोरंशांशित्वे- ऽपि स्वभाववैलक्षण्यं दृश्यते । एवं जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वं स्वभावभेदश्चोपपद्यते ।

तदिदमुच्यते 'नैवं पर' इति यथाभूतो जीवस्तथाभूतो न परः, यथैव हि प्रभायाः प्रभावानन्यथाभूतस्तथा प्रभास्थानीयतदंशाज्जीवादंशी परो ऽप्यर्थान्तरभूत इत्यर्थः । एवं जीवपरयोर्विशेषणविशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रवर्त्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्य्यन्तत्वमाश्रित्य

Supreme." The word 'but' debars the objection urged. Soul is 'a portion of the Supreme after the manner of light,' after the same manner as light consisting of brightness is a portion of the bright fire, the sun, etc., as the bovine nature, and other differencing parts are portions of white, black, and other cows differenced by that nature, or as the body is a portion of the embodied soul-*viz.* god, man, etc. For the being a portion is the being an integral part of a single thing, and the differencing part of a single thing (thereby) differenced is a portion of it, Accordingly the discerning affirm that in a differenced thing one part is that which differences, and the other part is that which is differenced thereby. Moreover, although the differencing part and that which is thereby differenced constitute a portion and that of which it is a portion, a distinction of nature is observed. Thus it is admissible that Soul and the Supreme as differencing part and what is differenced thereby, should form a portion and that of which it (Soul) is a portion, and should at the same time possess a distinction of nature. This is declared in 'not such is the Supreme', *i. e.*, the the Supreme is not such as Soul, for just as (a lamp or other luminous body) possessed of brightness is other than the brightness proceeding from it, so the Supreme also, of whom Soul is a portion, is a being distinct from Soul, which is a portion of him, as exemplified by brightness (in the foregoing example.) Such is

मुख्यत्वेनोपपद्यन्ते "तत्त्वमसि" "ऽयमात्मा ब्रह्मे"त्यादिषु तच्छब्द-ब्रह्मशब्दवत्त्वमयमात्मेतिशब्दोऽपि जीवशरीरकब्रह्मवाचकत्वेनैकार्थाभिधायित्वात् । अयमर्थः प्रागेवप्रपञ्चितः । ननु "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवती"ति जीवपरयोः स्वरूपैक्यं श्रूयत इति चेत्, "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति स्वापदशायां जीवस्य सर्वज्ञेन परमात्मना निरस्तसमस्तश्रमस्य बाह्याभ्यन्तरज्ञानलोपः श्रूयते, नह्यकिञ्चिज्ज्ञस्य तदानीमेव सर्वज्ञेन सता स्वेन परिष्वङ्गः सम्भवति । 'सता

the meaning. After the manner thus stated there occur (in the Śruti and Smṛiti) declarations of distinction, being based on the diversity of the nature of Soul and the Supreme resulting from the fact that the one, Soul, is the differencing part, and the other, the Supreme, he who is differenced thereby. Again, declarations of the identity (of Soul and Brahma) are admissible in their literal sense, being based on the fact that the differencing parts incapable of separate existence ultimately extend to (involve and express) that which is differenced by them; and in "That thou art," "This soul is Brahma" and other sentences the words 'Thou' and 'This soul' (are admissible) equally with the words 'That' and 'Brahma, because they express the same object in that they designate Brahma having Soul as his body. This matter has been explicated before.

Should it be said that in (212) "when a man sleeps here, then, my dear child, he is united with the existent, he is gone to his own (self)," there is a scriptural declaration of a unity of essence (being) possessed by Soul and the Supreme, we would reply that in the words (213) "This person, embraced by the omniscient self, knows nothing that is without nothing that is

212. Chhāndogya Upanishad VI. 8. 1.

213. Bṛihad Āraṇyaka Upanishad IV. 3. 21.

सोम्येत्यत्रापि न जीवपरयोः स्वरूपैक्यमुच्यते । अपि तु सुषुप्तिकाले नामरूपानुसन्धानाभावात्प्रलयकाल इव ब्रह्मणि लयः प्रतिपाद्यते स्वमपीतो भवति स्वात्मनि ब्रह्मणि लीनो भवति न तु स्वस्मिन्नेव स्वस्य लयः सम्भवति । अत्रापि सता सोम्य तदा सम्पन्नो भवतीति तृतीयास्वारस्यात्सम्पन्निशब्दस्य परिष्वक्तशब्दैकार्थ्याच्च स्वरूपैक्यसम्भवः । तथा च सूत्रकारः, "सुषुप्त्युत्क्रान्त्योर्भेदेने"ति ।

( शेषमग्रे )

within," it is declared that in the state of deep sleep there is a sublation of all knowledge pertaining to Soul of what is without and within, because it has been freed from all weariness (when embraced) by the all-knowing Supreme Spirit; for one who is devoid of knowledge cannot at the same time be embraced by his own self being all-knowing and truly existent. And in "He becomes united with the existent, my dear child" also, it is not declared that there exists a unity of essence in the case of Soul and the Supreme Spirit, but rather it is imported that because of the non-existence of consciousness as to name and form in the time of profound sleep there is absorption in Brahma as in the time of the dissolution of the universe. 'He is gone to his own self' *i. e.* he is then absorbed in Brahma as his own self, but absorption of his own self in his own self is impossible. Also in, 'then, my dear child, he is united with the truly existent' the words 'united with' agreeing in meaning with the word 'embraced,' according to the proper force of the third (instrumental) case, (viz. *satā*, it is impossible that Soul and Brahma should be one in essence. Hence it is said by the author of the Sūtras (214) "Because there is representation of difference in sound sleep, and in the going forth (of Soul at death)."

J. J. JOHNSON.

*(To be Continued.)*

214. Brahma Sūtras I. 3. 42.

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 82. VOL. XI.)

एच इग्घ्रस्वादेशे ॥ परिभाषेयं स्थानिनियमार्था, ह्रस्वो नपुंसक इत्यादावुपतिष्ठते । इहैचां पूर्वो भागो मात्रात्मकः कण्ठ्योऽकारसदृशः, एदैतोरुत्तरस्तालव्य इकारसदृशः, ओदौतोरोष्ठ्य उकारसदृशः । एवमवयवसमाहारात्मनामेचां ह्रस्वशासनेषु समुदायान्तरतमस्याभावाद् अवयवान्तरतमो ह्रस्वो भवन् कदा चिदकारः स्यात् कदा चिदिकारोकारौ मा कदा चिदकारो भूदित्यवमर्थमिदमारभ्यते, तदाह । 'इगेव ह्रस्वो भवतीति' । यदि त्वयं विधिः स्यात् तदा ह्रस्वादेशइति विषयोपलक्षणमेतत्स्याद् यस्मिन्विषयएचो ह्रस्वादेशप्रसङ्गस्तत्रेग्भवतीति, ततश्च दीर्घाणां स्थाने दीर्घा एवेकः स्युः सवर्णग्रहणात् । नैष दोषः । 'भाव्यमानोण सवर्णान्न गृह्णाति' 'भाव्यमानोप्युकारः सवर्णान् गृह्णाति' 'दिव उदि' ति तपरकरणाद् अमभ्यामितिवत्, तथैचामिकां च साम्यात् संख्यातानुदेशोपि स्याद् आदेशग्रहणं चानर्थकं स्यात्, तत आदेशग्रहणसामर्थ्याद् ह्रस्वादेशे ह्रस्वादेशनकालइक्कुर्तेभ्यो ह्रस्वादेशं कुर्वन्निकं कुर्यादित्यर्थः, यद्वा ऽऽदिश्यन्तइत्यादेशाः, ह्रस्वश्चासावादेशश्च ह्रस्वादेशः, निर्द्धारणे सप्तमी, जातावेकवचनम् । आदिश्यमानेषु ह्रस्वेषु मध्ये इगेव ह्रस्वो भवतीति सर्वथा नियमरूपेणास्य प्रवृत्तिः, प्राप्तिपूर्वकश्च नियम इति ये प्राप्ता अन्तरतमास्तेष्वेव नियमः । न च ऋकारलृकारौ प्राप्ताविति कुतो यथासङ्ख्यं कुतो दीर्घप्रसङ्गः, एवं चेगित्येव सिद्धे इग्ग्रहणं परेण मा भूदिति । 'अतिरि अतिनु', रायमतिक्रान्तं नावमतिक्रान्तं ब्राह्मणकुलमिति प्रादिसमासे नपुंसकह्रस्वत्वम् । 'उपग्विति' । अव्ययीभावः । ऐशब्दश्छन्दस्येवेति भाष्यम्, एकारस्याप्रसिद्धत्वादुदाहरणं न प्रदर्शितं, हेशब्दमतिक्रान्तं ब्राह्मणकुलमतिहि । 'अतिखट्व इति' । उपसर्जनह्रस्वः । 'देवदत्तेति' आमन्त्रिताद्युदात्तत्वं, 'देवदत्त' । गुरोरनृत इत्यादिना प्लुतः ॥

षष्ठी स्थानेयोगा । 'योगनियमार्थेति' । यद्यपि षष्ठी स्थानेयोगैवे-त्यस्यां वचनव्यक्तौ यत एवकारस्ततोऽन्यत्रावधारणमिति षष्ठीनियमः श्रुत्या प्रतीयते तथापि स्थाननिमित्तक एव सम्बन्धः षष्ठ्या वाच्य इत्यर्था-त्सम्बन्धनियमोऽपि भवतीति भावः । योगे वा नियमो योगनियमः, यदि योगनियमः क्रियते लोकेऽपि नियमः प्राप्नोति अवयवषष्ठ्यादयश्च न सि-ध्यन्ति, ततश्च 'शास इदङ्हलोः' शासेश्चान्त्यस्य स्यादुपधामात्रस्य च, 'ऊदुपधाया गोहः' गोहेश्चान्त्यस्य स्याद् उपधामात्रस्य च, तत्राह । 'इह-शास्त्रे या षष्ठ्यनियतयोगेति' । एतेन शास्त्रे ऽयं नियमः शास्त्राङ्गत्वात्परिभा-षाणां तत्राप्यनियमप्रसङ्ग इति दर्शयति । अनियमप्रसङ्गे नियमः कर्त्तव्यो लोकवत्, तद्यथा लोके ग्रामान्तरं जिगमिषुः कश्चित्कं चिदाह पन्थानं मे भवानुपदिशत्विति, स यत्र संदेहः पथि द्वैविध्यात् तत्रैवोपदिशति अमुष्मिन्नवकाशे ऽनेन पथा गच्छेति, एवमिहापि 'अस्तेर्भूः' अस्तेः स्थाने ऽनन्तरो वेति संदेहे नियमः क्रियते स्थानेयोगैवेति, एतदेव स्पष्टयति । 'स्थाने योगस्य निमित्तभूत इति' । निमित्तभूते, निमित्तत्वं प्राप्ते, निमित्तग्र-हणं कुर्वन् स्थानइति निमित्तसप्तमीति दर्शयति, स्थानशब्दोऽयमस्त्यपकर्षव-चनो गोस्थाने ऽश्वो बध्यतामिति, अस्ति च निवृत्तिवचनः श्लेष्मणः स्थाने कटुकमौषधमिति, अस्ति च प्रसङ्गवचनः, दर्भाणां स्थाने शरैः प्रस्तरितव्य-मिति, तदिह चरमस्य ग्रहणमित्याह । 'स्थानशब्दश्चेति' । चशब्दोऽवधारणे भिन्नक्रमश्च[1]वाचीत्यस्यानन्तरं द्रष्टव्यः । प्रसङ्गवाच्येवेति क्व[2] यथेत्याह । 'यथेति' । निवृत्तिवाची न गृह्यते ऽस्तेरुपदेशसामर्थ्यात्, नह्यार्धधातुके निवर्त्तितस्य सार्वधातुके श्रवणमुपपद्यते, नहि मथुरायां व्यापादितः स्रुघ्ने जीवति । नाप्यपकर्षवचनो नह्यर्थेन नित्यसम्बद्धस्य ततोऽपकर्षः सम्भवति । नाप्यार्द्धधातुकादपकर्षो नहि नित्ये प्रकृतिप्रत्ययसमुदाये प्रकृतेरपकर्षः सम्भवति, स्वाभाविक एव ह्यस्तेरप्रयोग आर्द्धधातुके भूशब्दस्य च प्रयोगो ऽनेन प्रकारेणान्वाख्यायते, अतः प्रसङ्ग एव स्थानं, प्रसङ्गः प्राप्तिः, अस्तेः

१ प्रसङ्गे इत्यधिकं २ पुस्तके ।

२ कर्थमिवेति पा॰ २ ।

प्राप्तौ भूः प्रयोक्तव्य इत्यर्थः । अस्मिन्नर्थं प्रतिपादयितुमुदुत्रुक आर्द्ध-धातुके विषये भवतिना प्रतिपादयेदिति यावत् । प्रसङ्गसम्बन्धस्येत्यादिना सूत्रार्थमुदाहरणे [1]दर्शयति । ब्रुव इत्युपलक्षणं, किं पुनर्बहवः षष्ठ्यर्था यत इदमुच्यत इत्यत आह । 'बहवो हीति' । एकशतं षष्ठ्यर्थास्तत्र स्वस्वामिभावादयः शब्दे न सम्भवन्ति समीपादय एव तु सम्भवन्तीति, अतो यावन्तः शब्दे सम्भवन्तीत्युक्तं, व्यवहितमपि समीपं भवतीत्यनन्तरार्द्वेदेनोपादानं, स्थानेयोगेत्यसमासश्चेद् योगेति स्त्रीलिङ्गं षष्ठीशब्देन च सामानाधिकरण्यमनुपपन्नं, समासेऽपि तत्पुरुषश्चेत् तौ च पूर्वोक्तदोषौ सप्तम्या लुक् प्रसङ्गश्च, बहुव्रीहावपि लुक्प्रसङ्गो ऽनिवार्य एवेत्यत आह । 'षष्ठी स्थानेयोगेत्यादि' । यद्वाऽयोगेति पदच्छेदः । न विद्यते योगो यस्याः साऽयोगा, तत्र योगमन्तरेण षष्ठ्या एवाभावात् विशिष्टो योगो यस्या नास्तीत्यर्थः । एवं च कृत्वा संदेहएवोपस्थानमित्येवं सर्वत्र सिद्धं भवति । अथ वा योगवती योगा, षष्ठ्याश्चावश्यं भावी योग इति सामर्थ्याद्भि मत्वर्थीयोऽकारः, बहवो योगा यस्याः सन्तीति, अस्मिन्नपि पक्षे सन्देहविषयउपस्थानमिति सिद्धं, भाष्ये सूत्रं प्रत्याख्यातं, कथम् 'अस्तेर्भू'-रित्यत्र सन्देहः स्थाने ऽनन्तरः समीप इति, लक्ष्यानुरोधात् स्थानइति व्याख्यास्यामः, इदं तु षष्ठ्यन्तं यथा स्थानेन युज्येत अतः षष्ठ्युच्चारिता तेन 'निर्दिश्यमानस्यादेशाभवन्ती' ति सिद्धं भवतीति, तत्र सूत्रे षष्ठ्यन्तं गृह्यते षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते न तु प्रतीयमानमिति, तेन 'पादः पदि' त्यस्यायमर्थः, पादन्तस्याङ्गस्य यो ऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टस्तस्य पच्छब्द आदेशो न तु प्रतीयमानस्य तदन्तस्येति ॥

स्थानेन्तरतमः ॥ यद्ययं स्वतन्त्रो विधिः स्याद् अत्रापि प्राप्नोति दधि मधु, अस्तु न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतः स एव तस्य भविष्यति । न । तस्याप्यन्य इत्यनवस्थाप्रसङ्गात् । प्रयोजनमन्तरेण हि प्रवर्त्तमानमसकृदपि प्रवर्त्तते ततश्च सर्वस्य निवृत्त्युन्मुखत्वादर्थप्रत्या-

१ अवदर्शयतीति पा॰ २ ।

यनाय प्रयोगो न स्यात्, अपि च बिसं मुसलमित्यादै। यदा समुदायस्य समुदायस्तदा सकारमात्रस्यानादेशत्वात् षत्वाप्रसङ्गेऽपि सकारमात्रस्य सकार[1] इति षत्वं प्राप्नोति, अतः परिभाषाप्रकरणात् परिभाषेयं यत्र स्थानषष्ठी तत्रोपतिष्ठते, तेन विधिवाक्यानामनेन सूत्रेणैकवाक्यत्वाद् विधानकालएवान्तरतम आदेशो विधीयतइत्याह। 'स्थाने प्राप्यमाणानामिति'। अत्रैवशब्दाप्रयोगात् प्राप्यमाणानामिति वचनाच्च विशिष्टविधिरेवायं न नियमः, अर्थोस्त्वनन्तरतमव्युदास इति दर्शितं भवति। अन्तरतम इत्यस्यार्थमाह। 'सदृशतम इति'। 'कुतश्चेति'। शब्दत्वस्य साधारणत्वात् प्रातिस्विकविशेषस्य चासाधारणत्वात् प्रश्नः। 'वतण्डी चासौ युवतिरिति'। विग्रहवाक्यमेतदुदाहरणम्। अत्र वतण्डस्यापत्यं स्त्री 'वतण्डाच्च' लुक् स्त्रियामिति यञो लुक्,शार्ङ्गरवादिपाठान्ङीन्। पोटायुवतीति समासे सति पुंवत्कर्मधारयेति पुंशब्दो निर्दिश्यमानो वतण्डापत्यवाचिनो वतण्डशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति। 'चकारस्येत्यादि'। अल्पप्राणत्वादिकं सवर्णसंज्ञायामुक्तम्। 'अमुष्मै अमूभ्यामिति'। अदसश्चतुर्थ्येकवचने त्यदाद्यत्वं 'सर्वनाम्नः स्मै,' भ्यामि 'सुपि चेति' दीर्घत्वम्। 'स्थानइति वर्तमानइति'। पूर्वसूत्राद्, यद्यपि तत्र समस्तं तथापि स्वरितत्वानुषङ्गाद्नुवृत्तिरविरुद्धा। 'पुनः स्थानेग्रहणमिति'। प्रकृतेन हि स्थानशब्देन स्थाने प्राप्यमाणानामित्ययमर्थो लभ्यते, अयं तु ताल्वादिस्थानवचनो वाक्यभेदेन सम्बध्यते, स्थानेन्तरतमो भवति। 'यत्रानेकमान्तर्यं तत्र स्थानकृतान्तर्यमाश्रीयत' इति वाक्यभेदस्य च तमब्ग्रहणं लिङ्गं, स्थानकृतएव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात् तमब्ग्रहणं व्यर्थमेव स्यात्। 'तमब्ग्रहणं किमिति'। सुसदृशसम्भवे तदेव ग्रहीष्यतइति प्रश्नः। 'वाग् घसतीत्यादि'। ईषत्सदृशेपि लोके सादृश्यव्यवहारदर्शनात् तमब्ग्रहणमिति भावः। 'सोष्मणः सोष्माण इत्यादि'। ऊष्मशब्दोत्र गुणमात्रवचन, इतिकरणो हेतौ, यस्मादूष्मगुणयुक्तास्तस्मा-

१ आदेशइत्यधिकं २ पुस्तके।

रूष्मगुणायुक्तस्य हकारस्य द्वितीयाः प्रसक्ता इत्यर्थः । 'शादय ऊष्माण, सस्थानेन द्वितीया हकारेण चतुर्था' इति शिक्षा, अत्रोष्मशब्दो गुणवचनः सस्थानेनेति इत्थंभूतलक्षणे तृतीया, इशषसाः खछठादीनां द्वितीयानां सस्थाना यथा ते ऊष्माण एवं द्वितीया अपीत्यर्थः । फकारस्य सस्थान ऊष्मा नास्ति, तस्मात्तस्य विशेषत ऊष्मत्वं वक्तव्यं, हकारेण चतुर्था इति, यथा हकार ऊष्मा एवं तेपीत्यर्थः । एवं नादवतो नादवत इती-त्यत्रापि हेत्वर्थो योज्यः । इह दृष्टमुक्तम् आन्तर्यतोर्द्धमात्रस्य व्यञ्ज-नस्यार्द्धमात्रिक संप्रसारणं प्राप्नोति, इह च दध्यत्र कुमार्यत्र ब्रह्मबन्ध्वर्थं मात्रिकद्विमात्रिकत्रिमात्रिकाणामिकां मात्रिकद्विमात्रिकत्रिमात्रिका यणः प्राप्नुवन्त्यान्तर्यतो, नैव लोके न च वेदे ऽर्द्धमात्र इगस्ति नापि मात्रिको द्विमात्रिको वा यण् योस्ति स भविष्यति, इहान्तरतमशब्दः सप्तम्यन्तोपि पठितो भाष्ये, स्थानेन्तरतमउरण् रपर इति संहितापाठो नित्यस्तत्र पदच्छेदे सप्तम्यन्तमपि सम्भवति, तत्र चायमर्थः षष्ठीति वर्त्तते, अन्तर तमो य आदेशस्य स्थानी तत्र षष्ठी यत्र षष्ठी तस्यादेश इत्य 'कः सवर्णे दीर्घ' इत्यादौ विधीयमानस्य दीर्घस्यान्तरतमे स्थानिन्यक इति षष्ठ्योपसंहा-रात् सिद्धमिष्टं, तथा 'वान्तो यि प्रत्यय' इत्यत्रैच इत्यनुवृत्तायाः षष्ठ्या वान्तादेशस्यान्तरतमयोरोदौतोरुपसंहारात् सिद्धम्, इतरथैज्-मात्रस्य वान्तादेशः स्यात् । अत्र पक्षे दोषः 'इको यणचि' ति यणो येऽ-न्तरतमा इकस्तत्र षष्ठीति दध्यत्रेत्यादावेव स्यात् कुमार्यत्रेत्यादौ न स्यात्, तथे 'को गुणवृद्धी' गुणवृद्ध्योर्येन्तरतमा इकस्तत्र षष्ठीति इहैव स्याद् नेता लविता नायको लावक,श्चेता स्तोता चायकः स्तावक इत्यत्र न स्यात्, एवं दोषवत्त्वादस्य पक्षस्य यथाव्याख्यातमेव साधीयः । 'वान्तो यि प्रत्यय' इत्यत्र परिहारं वक्ष्यति ॥

उरण् रपरः ॥ अत्र चत्वारः पक्षाः सम्भवन्ति, उः स्थाने रपरोण् भवतीत्यनेन रपरत्वविशिष्टोण् भाव्यतइति प्रथमः पक्षः, उः स्थाने ऽणेव भवति स च रपर इति अणनण्प्रसङ्गे ऽण् नियम्यते, तस्य च

१ गुणार्थेति पा- २ ।

रपरत्वं विधीयतइति द्वितीयः पक्षः, उः स्थाने विहितोऽणित्यनूद्य तस्य विधानोत्तरकाले रपरत्वमात्रं विधीयतइति तृतीयः पक्षः । अ उः स्थानेऽणिवधीयते इत्यनूद्य तस्य प्रसङ्गावस्थायामेव रपरत्वमात्रं विधीयतइति चतुर्थः पक्षः । तत्र प्रथमपक्षे नाप्राप्तेषूदात्तादिषु विधीयमानोऽण् तेषां बाधकः स्यात् तैरनवकाशस्य विषयस्याभावात्, एवं हि तदा वचनव्यक्तिः, षष्ठीनिर्दिष्टमात्रस्याभवत्रादेशो ऽन्तरतमो भवति ऋवर्णस्य त्वण् रपर इति, ततश्च कृतिरित्यत्र 'ञ्नित्यादिर्नित्य' मिति प्राप्तमुकारं बाधित्वाऽण् रपरः स्यात्, प्रकृतमिति शेषनिघातः स्वरितश्च, नॄः पाहीति पूर्वसवर्णदीर्घत्वमनुनासिकं च बाधित्वाऽण् रपरः स्यात्, कर्त्ता कारक इति च गुणवृद्धी बाधित्वा ऽण् भवन्नकार एवेति नियमाभावादिकारोकारावपि रपरौ स्यातां, ये चामी प्रतिपदमुः स्थानआदेशाः 'ऋत इद्धातो' रित्यादयस्तेषु रपरत्वं न स्यात्, द्वितीये तु कामं गुणवृद्ध्योर्द्वोषो न स्यात् । तथाहि । सर्वेषु गुणवृद्धिसञ्ज्ञकेषु प्राप्तेषु अणेव भवतीति नियमादकाराकारावेव गुणवृद्धी रपरे भवत इति सिद्धं कर्त्तेत्यादि, शास्त्रान्तरेण योऽण् प्रसक्तः स एव नियमादपि भवतीतीकारोकारावपि न प्राप्तुतः । नन्वनियमप्रसङ्गे नियम इति वृद्धावेव स्याद् अस्ति तत्रानियमप्रसङ्ग इति कृत्वा, गुणस्तु कर्त्तेत्यादौ मात्रिकस्य मात्रिको ऽकार एव प्राप्नोति तरितेत्यादौ द्विमात्रस्य द्विमात्र एव भवेद्, अणेवेति तत्र नियमाभावात् तरितेत्यादावेङेव गुणः स्यात्, कर्त्तेत्यादौ तु यद्यप्यकार एव गुणो लभ्यते, तस्य रपरत्वं तु न लभ्यते, यो ह्यणनण्प्रसङ्गे ऽणेवेति भवतीति नियतो योऽण् तस्यैव रपरत्व विहितम् अतो नियमपक्षेपि गुणविषये दोषस्तदवस्थ एव । उच्यते । द्वे एते परिभाषे आदेशनियमार्थे 'स्थानेन्तरतम' इति च 'उरण् रपर' इति च, तत्र पूर्वस्या अवकाशः 'चजोः कुघिण्ण्यतो' रित्यादि, अस्या अवकाशो यत्रान्तरतम्ये विशेषो नास्ति यथा तारकं इत्यादौ, वृद्धीनां कर्त्ता तरितेत्यादौ, गुणो भवतीत्युक्ते सर्वेषु गुणेषु प्राप्तेषु 'स्थानेन्तरतम' इति नियमोस्तु 'उरण् रपर' इति वा, परत्वात् 'उरण् रपर' इत्ययमेव भविष्यति, अतः सुष्ठूक्तं नियमपक्षे गुणविषये न कश्चिद्दोष इति, किन्तूदात्तादिषु दोषस्तदवस्थ

एव स्यात् । तथाहि । कृतिरित्यादावुदात्तो भवतीत्युक्ते सर्वेषूदात्तसञ्ज्ञकेषु प्राप्तेषु परत्वादनेनाण एवोदात्ताः स्युस्ते च रपरा, एवमनुदात्तादिष्वपि द्रष्टव्यं, ये च प्रतिपदमादेशाः 'ऋत इद्धातो' रित्येवमादयस्तेष्वनियमप्रसङ्गाभावादसति नियमे रपरत्वं न स्यात्, तदाह । उरण् रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोष इति । तृतीये पक्षे उदात्तादिषु न दोषः ङिनत्यादिभिरन्तरतमस्यैव विधानात्, किरतीत्यादौ च न दोषः, गुणवृद्धोरुक्तदोषः स्यादेव, तथाहि । विहितस्य पश्चादनेन रपरः विधीयते विधानकाले त्वान्तर्यतो मात्रिकस्य मात्रिके गुणे रपरे कर्त्तव्यादि यद्यपि सिध्यति तरितेत्यादौ त्वेङेव गुणः स्याद्वृद्धिषु च विधानसमये कस्याश्चिदान्तर्याभावात् तिसृषु प्रवृत्तास्वाकारस्याण्त्वात् रपरत्वे कारकः कारक इति यद्यपि सिद्ध्यति वायकस्तावक इत्याद्यनिष्टमनुसज्यत एव, अत एवमेतेषु पक्षेषु दोषसद्भावाच्चतुर्थं पक्षमाश्रित्याह । 'उः स्थानेण् प्रसज्यमान एवेत्यादि' । एतच्च स्थानद्वयग्रहणानुवृत्तेर्लभ्यते, तत्रैकमुः स्थाने योण् विधीयत इत्यनुवादेऽपि स्थानसम्बन्धलाभाय, द्वितीयं तु सोण् प्रसङ्ग एव प्रसज्यमानावस्थायामेव रपरो भवतीति रपरत्वस्य कालविधानार्थं, 'स्थानेन्तरतम' इत्यत्र हि यद्यपि तात्वादिवचनः स्थानशब्दस्तथापि न तेनात्र कश्चिदर्थोऽस्तीति प्रसङ्गवचन एवेह सम्पद्यते । एवं च गुणवृद्धी प्राप्त्यवस्थायामेवाणौ रपरौ सम्पन्नौ इति प्रमाणतोऽन्तरतमावेङैचौ बाधित्वा स्थानतोऽन्तरतम एव भविष्यतीति न कश्चिद्दोषः । न चानेकाल्त्वात्सर्वादेशप्रसङ्गः, आनुपूर्व्या सिद्धेः । यदाङ्गस्येति षष्ठी चान्त्येऽल्यनुसंहृता तदायमुः स्थाने यदायमुः स्थाने तदा रपरो यदा रपरस्तदानेकालिति न पुनः परावृत्त्य सर्वादेशो युज्यते । 'द्वैमातुर इति' । 'मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः' । 'खेयमिति' । 'ई च खनः' । 'सौधातकिरिति' । 'सुधातुरकङ् च' अत्रायमकङादेशोऽनण्त्वाद्रपरो न भवति । अथ योऽत्राण् स परः कस्मान्न भवति अनादेशत्वात्, समुदायो ह्यत्रादेशः, यद्येवं खट्वर्श्य इत्यादावपि रपरत्वं न स्यात् पूर्वपरयोर्हि समुदायोऽत्र स्थानी नावयव अकारः । उच्यते । पूर्वपरयोरिति द्विवचननि-

---

१ एवैवाविति पा० २ ।

द्दुंशात्तयोरिव स्थानित्वं न समुदायस्य, अनिर्देशात् । अत एव द्वयोः स्थानिनोर्भिन्नादिषु नत्ववत् द्वावादेशौ स्याताम् इति तत्रैकग्रहणं क्रियते, तत्र ऋकारस्यापि स्थानित्वमस्त्येव तदिदमुच्यते यो ह्युभयोः स्थाने भवति लभते सोन्यतरव्यपदेशमिति, अतस्तत्रापि रपरत्वं भविष्यति ॥

अलोऽन्त्यस्य ॥ अल इति जसन्तं चेदयमर्थः स्यात्, अलात्मका आदेशा अन्त्यस्येति, तत्र रहोरजसां लोपः सर्वादेशः स्याद् नीरजीकरोतीति, अन्त्यस्य चाविशेषितत्वात् 'वसुस्रंसुध्वंस्वनडुहां द' इति दत्वं पदस्याप्यन्त्यस्य स्यात् परमानडुद्भ्यामिति, असन्देहार्थं चालोन्त्यस्येति वाच्यं स्याद् अतोलोन्त्यस्येत्यनेन सा[1]मानाधिकरण्यात् षष्ठ्यन्तमिति स्थितं, यदि षष्ठी स्थानेयोगेत्यनेनैकवाक्यतास्य स्यात् ततोयमर्थः स्यात्, इह शास्त्रे या काचन षष्ठी सान्त्यस्यालो भवति सा स्थानेयोगेति, ततश्चार्द्धधातुकस्येड्वलादेरित्यस्याप्यन्त्येल्यनुसंहारादार्द्धधातुकान्त्यस्यैवेट् स्यात् स च भव 'चाद्यन्तौटकितौ' वित्यन्त्यात्प्राक् स्यात्, 'आद्यन्तौ टकितौ' वित्यनेन हि स्थानेयोगत्वमेव षष्ठ्या बाध्यते न पुनरन्त्येल्यनुसंहारोपि, अतो भिन्नं वाक्यं तदाह । 'षष्ठीनिर्दिष्टस्येत्यादि' । सामान्यवचनेपि 'षष्ठी स्थानेयोगे' त्यधिकारात् स्थानषष्ठीनिर्दिष्टस्येति वेदितव्यम् । अन्यथा षष्ठीमात्रस्याधिकारे यस्य षष्ठीनिर्दिष्टस्य यत्कार्यं यथाभूतमुच्यते आदेशरूपमागमरूपं वा तत्तथाभूतमेव तदन्त्यस्य भवतीत्यर्थः स्यात् ततश्च स एव दोषो य एकवाक्यतायाम्, अतः 'षष्ठी स्थानेयोगे' ति सर्वमनुवर्त्यम् । अयञ्चार्थोभवति । स्थानषष्ठीनिर्दिष्टस्य यदुच्यते तत्तदन्त्यस्यालो भवति न तस्य कृत्स्नस्येति, सोय कार्यस्यान्त्येल्यनुसंहारो वृत्तिकारेण दर्शितः । यद्वा या स्थानेयोगा षष्ठी सान्त्यस्याल इति षष्ठ्या एवानुसंहारो वेदितव्यः, अत्र पक्षे 'ङिच्चे'त्यस्यायमर्थः, यत्र ङिदादेशो विधीयते तत्र या षष्ठी सान्त्यस्याल इति एव सर्वत्र, कार्यानुसंहारे तु यथाश्रुतमेव षष्ठ्याः स्यादनुसंहारे ङिच्चेत्यादावसङ्गतिः, अतः कार्यानुसंहारो वृत्तिकारेण दर्शितः ॥

१ समानाधिकरण्यमिति पा॰ २ ।

ङिच्च ॥ 'होतापोतारौविति' । 'ऋतो ङिसर्वनामस्थानयो'-रिति गुणः । अप्तृन्नित्यादिना दीर्घः । 'मातापितराविति । 'पितामात्रे' त्येकशेषाभावपक्षे ऽभ्यर्हितत्वान्मातुः पूर्वनिपातः । पितुर्दशगुणं माता गौरवेणातिरिच्यते । अथ तातङन्त्यस्य कस्मान्न भवति तत्राह । 'तातङीत्यादि' । अनन्यार्थेङित्त्वेष्वनङादिषु चरितार्थमेतद् गुणवृद्धिप्रतिषेधार्थतया चरितार्थेङित्त्वे तातङि परेणानेकाल्शित्सर्वस्येत्यनेन बाध्यतइत्यर्थः । ननूत्सर्गापवादयोरयुक्तो विप्रतिषेधोऽतुल्य[1]कक्षत्वात्, न चान्तरेण सर्वादेशतां गुणवृद्धिप्रतिषेधार्थत्वस्योन्मेष इति चरितार्थत्वमपि ङित्त्वस्य चिन्त्यम् । न ब्रूमो गुणवृद्धिप्रतिषेधार्थस्य निश्चितत्वाद् दुर्बलं ङित्त्वमिति किं तु सर्वादेशेपि तातङि गुणवृद्धिप्रतिषेधः प्रयोजनं सम्भाव्यते तावता च कियानपि विलम्बो भवति, अनङादिषु सर्वादेशत्वे न किञ्चिन्ङित्त्वस्य प्रयोजनमिति सर्वादेशार्थता सम्भावनापि नास्तीति । तेष्वेव सहसा प्रवर्त्तते ततश्च विप्रतिषेधोपपत्तिः । अथ वा एर्लरित्यस्यानन्तरं तुह्योस्तातङाशिषीति वक्तव्यम् एरित्येवैवं वक्तव्ये ङित्करणं गुणवृद्धिप्रतिषेधार्थमेवेति निश्चितमिति विप्रतिषेधोपपत्तिस्तदाह । 'तातङि ङित्करणस्य सावकाशत्वाद्वृद्धिप्रतिषेधात्सर्वादेश इति' । अथ वा यथोपदर्शितं गुणवृद्धिप्रतिषेधार्थत्वं सर्वादेशतामन्तरेण नोपपद्यतइति अन्तरेणैव विप्रतिषेधं सर्वादेशस्तातङ् भवति ॥

आदेः परस्य ॥ शास्त्रे न क्वचित्परस्येत्युच्चार्य्य कार्यं विधीयतइति निर्विषयमेतदित्यभिप्रायेणाह । 'क्व चेति' । 'यत्रेत्यादि' । पञ्चमीनिर्देशेषु तस्मादित्युत्तरस्येति परस्य कार्यं विधीयतइत्यर्थः । 'आसीन इति' । आस उपवेशने अनुदात्तेत् । 'द्वीपमिति' । द्विर्गता आपो ऽस्मिन्निति 'ऋक्पूरब्धूःपथामानक्ष' इति अकारः समासान्तः ॥

अनेकाल्शित्सर्वस्य ॥ अनेकाल्ग्रहणं किमर्थम् 'अस्तेर्भूः' सर्वस्य, यथा स्यादलोन्त्यस्य मा भूत् । नैतदस्ति प्रयोजनम् । 'ङिच्चे'-

---

[1] तुल्यत्वादिति पा० २ ।

त्येतन्नियमार्थं भविष्यति, यत्रानेकालन्त्यस्य भवति ङिद्वेति, एवमप्यम-त्यनेकाल्ग्रहणे 'ङसो भिस ऐसि'त्यादिषु पञ्चमी निर्देशेष्वनेकालप्या-देश आदेः परस्य स्यात्, सति तु तस्मिन् द्वावेतावलोऽन्त्यस्येत्यस्यापवादौ 'आदेःपरस्य' 'अनेकाल्शित्सर्वस्ये' ति तत्रादेः परस्येत्यस्यायमवकाशो य एकालादेशो लोपो वा 'ईद्रासः' 'बहोर्लोपो भू च बहोः' आसीनो, भूयान् । 'अनेकाल्शित्सर्वस्ये' त्यस्यावकाशो यत्र पञ्चमीनिर्देशो नास्ति 'अस्तेर्भूः' इहोभयं प्राप्नोति 'अतो भिस ऐस्' अपवादविप्रति-षेधादनेकाल्शित्सर्वस्येत्ययमेव भवतीति सिद्धमिष्टम् । शिद्ग्रहणं कि-मर्थं 'जसः शी' सर्वस्य यथा स्यात्, अनेकालित्येव भविष्यति, शकारे लुप्ते नानेकाल्, आनुपूर्व्यात्सिद्धं, यदायं सर्वादेशस्तदा प्रत्ययो यदा प्रत्य-यस्तदेत्संज्ञा, यदेत्संज्ञा तदा लोपो यदा लोपस्तदैकाल् तदिह सर्वादेशत्व-मन्तरेण नैकाल्त्वमुपपद्यते, 'इह तर्हि 'इदम इश्' 'इदंकिमोरीश्की' अत्र ह्यन्तरेणापि सर्वादेशतां प्रागेवेत्संज्ञा भवति । नन्वत्रापि शकारः प्रयोजनान्तराभावाद् अनेकाल्त्वमादेशस्य संपाद्य निवर्त्तिष्यते । इह तर्हि 'ङसोरद्वावभ्यासलोपश्चे' ति लोपः शित्सर्वस्य यथा स्यात् । 'इदम इशि' त्यादावपि प्रयोजनाभावादित्संज्ञैव शकारस्य न स्यादिति अव-णप्रसङ्गः ॥ (शेषमग्रे)

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम्

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम्

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page* 112. Vol. XI.)

भू॰ इतश्च न प्रधानम् ।

सू॰ हेयत्वावचनाच्च ॥ ८ ॥

भा॰ यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत् तदा मुमुक्षोः

श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात्, न च तत्क्रियते, प्रत्युत उपादेयत्वेनैव "तत्त्वमसि"- "तस्य तावदेव चिर"मित्युपदिश्यते ।

इतश्च न प्रधानम् ।

सू० प्रतिज्ञाविरोधात् ॥ ९ ॥

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति वाक्योपक्रमे हि एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्, तच्च कार्य्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात् ।

टी० सू० हेयत्वावचनाच्चेति न परं प्रत्यानुकूल्याभावमात्रं किन्तु प्रातिकूल्यं चास्तीत्याह "प्रत्युते"ति, स्थूलोऽहमित्याद्यनुसन्धानस्येव न सदात्मकत्वानुसन्धानस्य हेयत्वं प्रतिपाद्यते अपि तूपादेयत्वमेवोच्यते तच्च, प्रधानपरत्वेऽनुपपन्नम्, अनादिमायया सुप्तः, मायया सन्निरुद्धः, अनीशया शोचति मुह्यमानः, जहात्येनां भुक्तभोगामजोऽन्य इत्यादिषु प्रधानप्रस्तावेषु तस्य हेयत्वेनैव प्रतिपादनादित्यर्थः । एवं तदैक्षतेत्यादिवाक्यप्रभृति तदुपरितनवाक्यावगता हेतव उक्ताः, तेषां समाप्तौ च-शब्दः प्रयुक्तः । यद्वा उपादेयतोक्त्यनुपादेयतानुक्त्योः सूत्रद्वयप्रतिपादितयोरन्वयव्यतिरेकात्मना परस्परसङ्गतयोरेकीकारार्थ इह च-शब्दः, अत एव हि प्रत्युतेत्यादिना पूर्वसूत्रार्थनिगमनं कृतम् । अथोपक्रमविरोधे सत्युत्तरवाक्यगतहेतूनां दौर्बल्यात् प्रधानमेव प्रतिपाद्यमिति शङ्कां परिहरति सू० "प्रतिज्ञाविरोधा"त्, कस्मिन्नर्थे विरोध? इत्यपेक्षां पूरयन् व्याचष्टे "प्रधानकारणत्व" इति, त्वन्मतानुगुणत्वेन यदुक्तं तदेव त्वन्मतप्रतिकूलमिति सूत्रकारहृदयमिति भावः । कथमित्यत्राह "वाक्योपक्रमे ही"ति, प्रतिज्ञावाक्ये सर्वशब्दाभावेऽपि "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदित"मिति समानप्रकरणवाक्यैकार्थ्यात्सर्वाः प्रजा इति वक्ष्यमाणस्वारस्याच्च सर्वविज्ञानं प्रतिज्ञातमित्युक्तम् । न च सर्वं मृन्मयमिति वत्कार्य्यभूतसर्वाचिद्विज्ञानमेव सर्वविज्ञानमिति वाच्यम् "सन्मूला-

स्सोम्येमाः सर्वाः प्रजा" इति सर्वशब्दसमानाधिकरणप्रजाशब्दस्वारस्या-वगतानां चेतनानामपि सन्मूलतया ज्ञातव्यसर्वैकार्यान्तर्भावादिति भावः । ततः किमित्यत्राह "तच्चे"ति, कार्यकारणयोरनन्यत्वेनेति न हि विदवि-तोरनन्यत्वमिति भावः । नन्वन्यत्वेऽपि एकविज्ञानात् सर्वविज्ञानं घटते पृथिव्यादीनां कार्य्यतया चिदंशस्याकार्य्यतया च ज्ञानसम्भवादित्यत्राह—

(शेषमग्रे)

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(*Continued from page* 92. VOL. XI.)

### अथ पञ्चमाऽध्याये प्रथमः पादः आरभ्यते ।

श्रुतिबलीयस्त्वन्यायः । सू० श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाण-त्वात् ॥ १ ॥

"प्रयुक्तिलक्षणे स्थितः प्रयोज्यवर्गनिर्णयः । प्रयोज्यगोचरः क्रमस्ततः परं निरूप्यते" ॥ प्रथमं तावच्छ्रुतिलक्षणो वेदविहित एव क्रमः पदार्था-नामाश्रयणीयः, अथ वा ऽनियम ? इति संशये प्रयोगप्राशुभावादनियममा-शङ्क्य वेदप्रामाण्यात्तद्विहित एव क्रमः समाश्रयणीय इति प्राक् सिद्धं चोदनाप्रामाण्यमेव बहुकृत्वोऽपि पथ्यं वदि[१]तव्यमित्येवं पुनः कथितमनेन सूत्रेण । अथवा भवति केषाचिन्मन्दधियामयं भ्रमः क्रम[२]स्याभावार्थत्वेन स्वतो विधिर्न सम्भवति, न च द्रव्यादिवत्तद्विशेषणतया, क्रमस्यैकैकपदा-र्थाश्रयत्वेनानवगमात्संघातविशेषणत्वात् तस्याविधेयत्वादशब्दाभिहि-

१ वेदितव्यमिति तु पाठान्तरम् ।
२ भ्रमस्येति स्वपपाठः ।

तत्वाच्च क्रमस्य विध्यन्वयासम्भवादविधेय एव क्रम इति, तदपनोदनार्थ-मिदं सूत्रम्, आनुपूर्व्यं श्रुतिलक्षणं द्रव्यादिवत्क्रियाविशेषणत्वात्, न चासौ संघातविशेषणं तस्यैकत्वेनाक्रमभाजनत्वात्, पदार्थास्तु यद्यपि प्रत्येकं न क्रममनुभवन्ति परस्परमिलितास्तु संयोगादिवद्वृत्तितद्रूपं क्रमं बिभ्रति बहवश्च ते प्रयोगविधिना विधीयन्त इति तद्विशेषणतया श्रुत्यादिसमर्पितः क्रमः सुखं विधीयते अनभिहितोऽपि कथंचिद्बुद्धिमागतोऽपेक्षितो योग्यश्चेति प्राकृतोपकारवद्विकृतौ शक्यते विधातुमिति विधिलक्षणमेवानुपूर्व्यमाश्रयितव्यं भवति। अथवा न सर्वः क्रमोऽत्र चिन्त्यते किन्तु श्रुतिक्रम एव क्वचिदुदाहरणे चिन्त्यते द्वादशाहे सत्त्रभूते श्रूयते "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती"ति तदिह किं दीक्षा विधीयते? क्रमस्तु पाठतो लभ्यते। अथवा क्रम एव विधीयते? श्रुतिक्रमोऽयमिति तत्र "वाक्यार्थविविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे। तस्माद्दीक्षाविधिः पाठाद्दीक्षाणां लभ्यते क्रमः। उच्यते "सर्वेषां यजमानत्वाद्दीक्षा प्राप्तैव चोदकात्। क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते"। कर्तृनियमः कस्माच्च भवति अध्वर्युरिमानिति चोदकप्राप्तत्वादेव। नन्विह यजमानानामेवार्त्विज्यकारित्वादध्वर्युर्नास्ति कथमस्य दीक्षायां प्राप्तिः? असतो वा कथं कर्तृनियमः? अस्ति चाध्वर्युः सत्त्रे इति दर्शितं तृतीये, अध्वर्युर्दीक्षायां तु "चित्पतिस्त्वा पुनात्वि"ति मन्त्रलिङ्गविरोधादुत्तरेषु च "न पूतः पात्रये"दिति प्रतिषेधादध्वर्योः कर्तृत्वासम्भवादितरमन्यस्तेषां यतो विशेषः स्यादित्येवं प्रतिप्रस्थातुरध्वर्योर्वार्द्धेषु च प्राप्तिः, एवमेव तृतीयिषु पादिषु च नेष्टुर्वेचोः प्राप्तिरतो विधेयान्तराभावाद्गृहपतिं दीक्षयति ब्रह्माणं दीक्षयतीत्येवमानुपूर्व्येण कीर्त्तितानां दीक्षाणां योवितर्तिविशेषः प्रतीयते स एव विधीयते, अनभिहितोऽपि प्रातिस्विकेन विधिना विधीयमानत्वाच्छ्रुतिक्रम इत्युच्यते, अर्थो[1]दिषु प्रयोगविधिमा[2]त्रमिति विवेकः एवं चाध्वर्युर्गृहपतिमित्यादि ब्रह्मचारी वाऽऽचार्यप्रेषित इत्येवमन्तं वितर्तिविशेषे-

१ अर्द्धादिषु इति पा०।

२ प्रयोगविधिसंग्रहणमात्रमिति पा०।

कार्यविधानादेकं वाक्यं, यदा तु पौर्वापर्यं क्रमस्तदा क्त्वा–शब्देन तदभिधानादनभिधानं नास्ति प्रतिदीक्षं च तद्भेदाखानाव्याख्यानीति विवेकस्तस्माच्छ्रुतिक्रमोऽयम् ॥

क्वचिदार्थिकत्वाधिकरणम् सू० अर्थाच्च ॥ २ ॥

"अग्निहोत्रं जुहोति यवागूं पचती"ति यवागूपाकहोमयोः किमनियमः ? अथवा पूर्वं पाकस्ततो होम ? इति नियमप्रमाणाभावाद् विध्योः पाकहोममात्रपर्यवसानाच्च क्रमोऽत्र पूर्ववद्बुध्यते अतो ऽनियमः, प्रयोजनवशात्तु नियमः, होमद्रव्यं हि यवागूस्तदुत्पत्त्यर्थं अन्या लिङ्गेन च पाकः स पश्चात् क्रियमाणोऽनर्थकः स्यात्, होमोऽप्यसति द्रव्ये न निवर्त्तेत अतः पक्त्वा होमः ॥

क्वचिदनियमाधिकरणम् । सू० अनियमो ऽन्यत्र ॥ ३ ॥

अनियमोऽन्यत्र यत्रोक्तवक्ष्यमाणनियमकारणाभावस्तत्रानियम एव क्रमस्य; यथा वसन्तमृतूनामित्यादीनामेकैकमेका तस्येत्येश्रमादीनां च शाखाभेदेनाम्नातानां प्रयाजानुमन्त्रणानां यच्छाखागतेनानुमन्त्रणेन समित्प्रथममनुमन्त्रितस्तच्छाखागतेनैव तनूनपादपि प्रवृत्तिक्रमादिति चेन्न प्रत्यासत्त्यनुग्रहाय हि प्रवृत्तिक्रमो वक्ष्यते, न चेहानेकशाखागतानामनुमन्त्रणानां मिथः प्रत्यासत्तिर्विहिता यद्वशात्प्रवृत्तिराश्रीयेत अतोऽत्रानियमः ॥

क्रमस्य क्वचित्पाठानुसारिताऽधिकरणम् । अयमेव च पाठक्रमः । सू० क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥

"समिधो यजति तनूनपातं यजती"ति क्रमेण पठितानां यागानामनियमेनानुष्ठानम् ? त पाठक्रमेण ? ति श्रुत्यर्थयोरभावात्पाठस्याविधायकत्वात् विधीनां च पदार्थमात्रपर्यवसानादनियम इति प्राप्ते ब्रूमः "यथापाठमनुष्ठानं तथैव प्रतिपत्तितः । स्मृतिः प्रयोगवेलायां वाक्यैरेव च कर्मणां क्रमपठितेषु हि पदार्थेषु गन्धपुष्पादिषु तथैवानुष्ठानं लौकिकाः प्रतिपद्यन्ते, वेदाच्चाध्ययनोपात्ताद्प्रयोजनं शक्यते कर्तुं तस्य सर्वस्यार्थेन वेदोपादानं, शक्यते च विधिवाक्येभ्योऽपि सम्बन्धनिमित्तं स्मरणं प्रयोगकाले पदार्थान

कर्तुमिति तदपि प्रयोजनं स्वाध्यायविधिविहितस्य पाठक्रमो विध्यवस्थायामनुपयुक्तः स्मृत्यवस्थायामुपयुज्यते, यथापाठं च क्रियमाणं स्मरणं तत्क्रममेव भवति, स्मृतिकार्यं चानुष्ठानमिति तस्यापि स एव क्रमः तस्मात्पाठक्रमेणात्र क्रमनियमः ॥

क्रमस्य क्वचित्प्रथमप्रवृत्त्यनुसारिताऽधिकरणम् । अयमेव च प्रावर्तिकक्रमन्यायः ।

सू० प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ५ ॥

वाजपेये प्राजापत्याः पशवः सह क्रियन्ते तत्रोपाकरणनियोजनादयः संनिपातिनः प्रतिपश्वावर्तनीयास्तेषां चावृत्तिर्नैकस्य पशोः कात्स्न्येन कृत्वाऽपरस्यापि तथैव क्रियत इत्येवं, किं तर्हि सर्वेषामुपाकरणं यतः कुतश्चित्पशोरारभ्य कृत्वा ततोनियोजनमिति वक्ष्यामः, तत्रोपाकरणं यतः कुतश्चित्पशोरारभ्य क्वचित्समाप्यते, नियोजनादौ तु सन्देहः किं तत्राप्यनियमः? उत येन क्रमेणोपाकरणं प्रवृत्तं स एवोत्तरत्रापि, नियामकाभावात्प्रथमद्वितीयादावप्यनियमः "प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात् । अन्यथा व्यवधानं स्यादनुज्ञाताधिकैरपि"। एकैकस्य हि पशोः पदार्था मिथः प्रत्यासन्नाः कर्तव्याः वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वचनावगतपश्वन्तरसाहित्यबलादन्यदीयैः षोडशभिः पदार्थैर्व्यवधिमनुजानाति नाधिकैः प्रवृत्त्या च क्रमनियमे तावद्भिरेव व्यवधानं भवति, अन्यथाऽधिकैरपि स्यात्तस्मात्प्रवृत्त्या नियमः ॥

क्रमस्य क्वचित्स्थानानुसारिताऽधिकरणम् ।

सू० स्थानाच्चोत्पत्तिसंयोगात् ॥ ६ ॥

साद्यस्के "सह पशून् आलभत" इति श्रुतं साहित्यं च सवनीयस्थाने इति स्थितं, तत्रोपाकरणादीनां प्रतिपशु भेदे किं नियमः क्रमस्य, उताग्नीषोमीयस्य? प्रथममुपाकरणं? अथवा सवनीयस्ये? ति नियामकाभावादनियमः प्रकृतिदर्शनाद्वा अग्निषोमीयस्य प्राथम्ये प्राप्ते सवनीयस्येत्याह "आश्विनग्रहणेनासौ पर्युपस्थाप्यते यतः। इतरश्चलितः स्थानात्नोपस्थाप्येत केनचित्"। अग्नीषोमीयप्रणयनानन्तरं ह्यग्नीषोमीयस्य स्थानं स तेनोप-

स्थितोऽपि सहाभ्यवचनेन तस्मात्स्थानाच्चलितत्वादननुष्ठितोऽत्र तु न किञ्चित्तस्योपस्थापकमस्ति, सवनीयः स्वस्थानादस्खलितः सन् आश्विनग्रहणादुपस्थितस्तस्मात्तदनन्तरमुपाक्रियते, ततः साहित्यवचनादितरोपाकरणम् अतः सवनीयस्यैव प्राथम्यम्, इतरयोस्तु मिथः क्रमे ऽनियम एव तयोरुप[1]स्थापने विशेषाभावात् । अथवा प्रकृतिदृष्टपौर्वापर्यमात्रमसति बाधके ऽनुग्रहीतव्यमित्याग्नीषोमीयमुपाकृत्यानुबन्ध्योपाकरणम् ॥

अङ्गक्रमस्य मुख्यक्रमानुसारितार्ऽधिकरणम् ।

सू० मुख्यक्रमेण चाङ्गा[2]नां तदर्थत्वात् ॥७॥

सारस्वतौ भवतः इति यागद्वयं विहितं स्त्रीपुंसदेवत्यम् "एतद्वै दैव्यं मिथुनमि"ति वाक्यशेषात् तत्र स्त्रीदेवत्यस्य प्रथममनुष्ठानं ततः पुन्देवत्यस्य याज्यानुवाक्यापाठक्रमात्, तत्र चोदकप्राप्तो निर्वापः किमनियमेन कर्त्तव्यः? उत स्त्रीदेवत्यं निरूप्य ततः पुन्देवत्य? मिति नियमकारणाभावादनियमः, मुख्यक्रमात्तु स्त्रीदेवत्यं प्रथममिति स्थितम् । ननु च प्रवृत्त्या नियमः सिद्ध्यति येन क्रमेण याज्यानुवाक्ययोः प्रवृत्तिः स एव निर्वापादीनामुपाकरणक्रम इव नियोजनादीनां पूर्वपदार्थप्रवृत्त्या उत्तरेषां नियमः नोत्तरप्रवृत्त्या पूर्वेषामिति चेन्न प्रत्यासत्त्यनुग्रहाविशेषात्तच्चिन्तनत्वाच्च क्रमनियमस्य, सत्यं, मुख्यक्रमादपि क्रमनियमः सिद्ध्यतीत्युदाहृतम्, अन्यतोऽपि सिद्ध्यत्यर्थे किमर्थं कारणान्तरमुपन्यस्तं, यद्यपीह प्रमाणयोः सङ्करः न तु स[3]र्वत्रैव प्रमाणे सङ्कीर्णे, अस्ति हि तदुदाहरणं यत्रासिद्धान् प्रवृत्त्या नियमो मुख्यक्रमादेव सिद्ध्यति दर्शपूर्णमासयोर्द्वेधः पूर्वं धर्माः प्रवर्त्तन्ते शाखाहरणादयः, तत आग्नेयस्य निर्वापादयः, याज्यानुवाक्ययोस्तु विपरीतौ प्रवृत्तिः पाठवशात्तत्र भूतभाविप्रवृत्तिद्व[4]यवशात्प्रयाजशेषाभिघारणे ऽनियमः प्राप्नोति मुख्यक्रमात्त्वाग्नेयस्य प्रथममभिघारणं तदेतच्चतुर्थे पादे वक्ष्यामः, तस्मादनवद्यम् । किं पुनः कारणं मुख्यक्रमेण-

१ उपस्थाने इति पाठान्तरम् ।

२ चाङ्गानामिति पा० ।

३ सर्वत्रैते इति पा० ।

४ प्रवृत्तिद्वयवशादिति तु पा० ।

ङ्गानां नियमे प्रत्यासत्त्यनुग्रहः ? एवं 'सत्यङ्गप्रधानयोर्यावदनुज्ञातममव्यवधानं भवति, इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथममङ्गं क्रियमाणं प्रधानेनात्यन्तव्यवहितं स्यात्, तस्मान्मुख्यक्रमेण नियमः, अत्र प्रधानप्रत्यासत्तिरङ्गानां नियमकारणं प्रकृतिक्रमे तु अङ्गानां मिथः प्रत्यासत्तिरित्येतावान्विशेषः' ॥

अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलवत्त्वाधिकरणम् ।

सू० प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ ८ ॥

दर्शपूर्णमासयोराग्नेयानन्तरमाज्यहविरुपांशुयाजः,ततोऽग्नीषोमीयः पुरोडाशहविः, तत्र किं मुख्यक्रमादाज्यनिर्वापः पूर्वं? उत पाठक्रमादाग्नीषोमीयनिर्वाप इति, "तत्र मुख्यक्रमादाज्यनिर्वापस्य पुरस्क्रिया पाठतस्त्वौषधस्यैव प्राथम्यमनपेक्षतः" मुख्यक्रमो हि मुख्ययोः क्रमं प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसंपत्तयेऽङ्गेषु कल्प्यमानो विलम्बते पाठतस्त्वन्यानपेक्षादङ्गानामेव क्रमावधारणात् बलीयस्त्वम् अतः प्रथममौषधधर्मास्तत आज्यधर्माः ॥

ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वाधिकरणम् ।

सू० मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः ॥ ९ ॥

इदानीं पाठयोरेव मन्त्रब्राह्मणगतयोर्बलाबलचिन्ता दर्शपूर्णमासयोरग्नीषोमीयस्य प्रथमं ब्राह्मणं तत आग्नेयस्य विपरीतं मन्त्राम्नातं तत्र "विधिक्रमबलीयस्त्वमुत्पत्ताववधारणात् । उत्पन्नेषु नियुक्तेषु मन्त्रे मन्त्रक्रमो भवेत् । विधिक्रमो[1]त्पत्तिदशायामेव पदार्थानां गम्यते मन्त्रक्रमस्तूत्पन्नेषु पदार्थेषु मन्त्रेषु च विनियुक्तेषु पश्चादिति दुर्बलः "नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत् । स्मारकक्रमतश्चापि स्मृतीनां क्रम इष्यते मन्त्राश्चानन्यकार्यत्वात्स्मृत्यर्था विधयः पुनः । विधिनैव कृतार्थत्वात्वावश्यं स्मारका मताः" । तस्मान्मन्त्रक्रमेणैवानुष्ठानं, तदभावे तु विधिरपि स्मारक इति, तत्रैव क्र[2]मस्य प्रामाण्यम् ॥

१ विधिक्रमो ह्युत्पत्तिदशायामेवेति पा० ।
२ तत्क्रमस्येति पा० ।

प्रयोगवचनात् चोदकस्य बलवत्त्वाधिकरणम्। सू० तद्वचनात्तु विकृतौ यथाप्रधानं स्यात्॥ १०॥

"आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्सरस्वत्याऽऽज्यभागा स्यात् बार्हस्पत्यश्चरुरिति तत्रोपांशुयाजाग्नेयविकृत्योराज्यबार्हस्पत्योः कस्य धर्माः प्रथममनुष्ठेयाः? किं प्रयोजगविधिचोदिताङ्गप्रधानप्रत्यासत्त्यनुग्रहान्मुख्यक्रमेणाज्यधर्माणां प्रथममनुष्ठान? मुत चोदकवशादाज्यधर्मेभ्यः पूर्वं बार्हस्पत्योषधर्माः कर्त्तव्या? इति तत्रौपदेशिकत्वेन प्रयोगवचनाश्रयः। मुख्यक्रमोऽतिदेशेन प्रापितं बाधते क्रमम्। नैवं "प्राप्तानां हि पदार्थानां विकृतौ क्रमचिन्तनम्। ते च सक्रमका एव प्राप्यन्ते चोदकादिह। नैराकाङ्क्ष्यात् क्रमस्तेषां न भूयोऽन्यः प्रकल्प्यते। शरवत्प्राप्तत्यागोऽत्र कल्प्यत्वाच्चोपपद्यते। "शरमयं बर्हि" रिति क्लृप्तं शास्त्रं पूर्वप्राप्तकुशबाधेन प्रवर्त्तते। कल्प्यस्तु प्रयोगवचनाश्रयः क्रमः, कल्पना चाकाङ्क्षाधीना, निराकाङ्क्षाश्चेह पदार्था इति न कल्पनं सम्भवति॥

विकृतौ क्वचित् प्रकृतिधर्मानतिदेशाधिकरणम्। सू० विकृतिःप्रकृतिधर्मत्वात्तत्कालः स्याद्यथाशिष्टम्॥ ११॥

चातुर्मास्येषु साकमेधस्तृतीयं पर्व तत्र श्रूयते "अग्नये ऽनीकवते प्रातरष्टाकपालं निर्वपेन्मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सायमे[1]दनमिति, किमेता द्व्यहकाला इष्टय? उत सद्यस्काला? इति, तत्रातिदेशतस्तासां प्राप्नोति द्व्यहकालता। प्रातःश्रुतेर्विरोधश्च नामावास्याश्रुतेरिव। "य इष्ट्वा पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा" इति वचनं सामगा[2]न कर्माणि अमावास्याकालं प्रत्युपाददानं द्वयोरह्नोस्तत्कालासम्भवाद्युक्तं यदाऽतिदेशिकं द्व्यहकालत्वं बाधते प्रातरादिश्रुतिस्तु अहर्द्वयेऽपि प्रातःकालसम्भवादतिदेशाविरोधिनी, न तद्बाधं कर्तुमुत्सहते। तस्मादद्यतनेषु प्रातरादिषु प्रक्रम्य श्वस्तनेषु प्रातरादिषु समापनीया इति प्राप्ते ब्रूमः, "साङ्गं प्रारिप्सितं कर्म प्रातः काले विधीयते। स चाविशेषात्तन्त्रेण सर्वस्यैको भविष्यति। चिकीर्षितार्थेन हि कालो

---

१ "सायमिति" इति पा०। २ साङ्गानि इति पा०।

विधीयते सर्वाङ्गप्रधानयुक्ता च भावना चिकीर्षिता नैकदेशमात्रम्, अतो य एवैकः प्रातरादिकालः प्रयोगाय संगृह्यते, स एव सर्वप्रारिप्सायां संगृह्यमाणः प्रारम्भापरनाम्नः प्रक्रमस्याविशेषात्सर्वेणैक एव सर्वाङ्गयुक्तप्रधानार्थेनोपात्तो भवति, न प्रातर्द्वयस्यावकाशः, तस्मादुपदेशात्सर्वस्कालाः ॥

अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम् ।

सू० अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्ष स्यात् ॥ १२ ॥

अग्निषोमीये पशौ प्रकृतितो हविरासादनोत्तरकाले प्राप्तानां प्रयाजानामपकर्षः श्रुतः "तिष्ठन्तं पशुं प्रयजन्ती"ति तथोत्कर्षः "सवनीयेऽनुयाजानाम आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती"ति तत्र किं श्रुतमात्रनिष्ठावुत्कर्षापकर्षौ ? उत तदाद्युत्कर्षः तदन्तापकर्ष इति संशये "श्रुतोत्कर्षापकर्षाभ्यां वचनस्योपपत्तितः । न तदन्ततदादीनां भवेतामप्रमाणकौ । प्रधानसंनिधिश्चैवं बाधितो न भविष्यति । ऊर्ध्वपूर्वपदार्थानामेवं प्राप्तेऽभिधीयते । पूर्वेणोपस्थितं कार्यमुत्तरं कर्मचोदकात् । प्राप्तं तदन्यथाभावे क्रमलोपाद्विलुप्यते ॥ अनूयाजोपस्थितास्तदुत्तरकालं सूक्तवाकादयः कर्तव्याः अनुयाजेषूत्कृष्टेष्वनुत्कृष्टाः पूर्वं क्रियमाणा विगुणाः एव माघारोत्तरकाले कर्तव्याः प्रयाजाः केवला अपकृष्यमाणाः क्रमलोपाद्दुष्येयुः तस्मात्तदादीनामुत्कर्षस्तदन्तानां चापकर्षः ॥

प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभावित्वाधिकरणम् ।

सू० प्रवृत्त्या कृतकालानाम् ॥ १३ ॥

प्रातरनुवाकप्रैषं होत्रे दत्त्वाऽनन्तरं प्रतिप्रस्थातः सवनीयान्निर्वपस्वेति प्रेष्यतीति विधायाऽनन्तरं प्रचरणीहोमादयः सौमिकाः पदार्थाः पठितास्तत्र प्रैषवशान्निर्वापस्तावत्तदैव कर्तव्यः तदनन्तरं सौमिकाः पदार्थाः कर्तव्याः आग्नीदग्नीन्विहरबर्हिस्तृणीहि पुरोडाशानलङ्कुर्वित्येतत्प्रैषपर्यन्तास्तत ऐष्टिकाः प्रोक्षणादयः ? उत प्रोक्षणादीन् प्रागलङ्करणात्कृत्वा ततः सौमिका इति निर्वापः प्रतिप्रस्थातृकर्तृत्वाच्चाध्वर्योः प्रोक्षणमुपस्थापयति सौमिकानामपि निर्वापव्यवहितानां नास्त्युपस्थापकं, तस्मादनियमः, उच्यते "निर्वापेऽध्वर्योरपि कर्तृत्वमस्ति प्रयोजकत्वात्, अतोऽसौ प्रोक्षणादीन् उपस्थापयति, अतस्ते तावत्कर्तव्याः ततः सौमिकाः ॥ (शेषमग्रे)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

## विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

॥ श्रीगणेशाय नमः ॥

*(Continued from page 128. Vol. XI.)*

पूर्वोक्त इषुदृष्टान्तो वैषम्यादनुपपन्नः· तथाहि, तत्र वेगव्यापारस्य स्वरूपसत एव जनकतया दीर्घदीर्घतरत्वं सम्भवति· अभिधायास्तु ज्ञाताया एवानुकूलत्वाद्व्यङ्ग्यनिष्ठतया चाज्ञानादित्यन्विताभिधानवादेपि "निःशेषे"त्यादौ विधेर्व्यङ्ग्यत्वमेवेति स्थितम्· किञ्च, यदि वस्तुगत्या पदार्थान्तरेण यो ऽन्वितः, सोऽभिधयोपस्थाप्यत इत्यन्विताभिधानम्, तदावश्यं व्यञ्जना स्वीकार्य्या· अन्यथा 'रुचिं कुर्वि'तिशब्दस्य दुष्टत्वं न स्यात्· दुष्टिहेतोरसभ्यार्थोपस्थितेस्तत्राभावप्रसङ्गात्, तदर्थस्यानन्वितत्वात्· किञ्च, वाच्यवाचकभावातिरिक्तो व्यङ्ग्यव्यञ्जकभाव इत्यवश्यं काव्यज्ञदृष्ट्यापि स्वीकर्त्तव्यम्, अन्यथा कष्टत्वादयो ऽनित्यदोषा, असाधुत्वादयो नित्यदोषा इति विभागो न स्यात्· वाच्यस्यार्थस्याविशेषेण कष्टत्वादीनामपि सर्वत्र दुष्टत्वस्याऽदुष्टत्वस्य वा प्रसङ्गात्· व्यञ्जनाभ्युपगमे तु व्यञ्जनीयस्य बहुविधत्वाद्रौद्रादौ व्यङ्ग्येऽनुकूलत्वं, शृङ्गारादौ तु दुष्टत्वमिति युज्यते विभागव्यवस्था· एवं पर्य्यायेषु मध्ये कस्य चिदेव कुत्रचित्काव्ये ऽनुगुणत्वमित्यपि व्यवस्था न स्यात्, वाच्यार्थस्याऽविशेषात्· दृश्यते चासौ· यथा "द्वयं गतं सम्प्रति शोचनीयतां संमागमप्रार्थनया कपालिनः" इत्यादौ न पिनाक्यादिपदमनुकूलं, किन्तु जुगुप्साव्यञ्जकतया कपालिपदमिव· ननु द्वयमप्येतदयुक्तं, व्यङ्ग्यत्वेनाभिमतस्य वाच्यत्वस्वीकार एवानुकूलत्वप्रतिकूलत्वयोर्व्यवस्थोपपत्तेरिति चेत्

न, अभिधास्वीकारे सङ्केतग्रहं विना तदनुपस्थितिप्रसङ्गस्योक्तत्वात्॰ किञ्च, काव्ये शास्त्रे वा वाच्यव्यङ्ग्ययोः प्रतिपत्तिहेतुव्यापारभेदनिबन्धनो भेदो ऽवश्यं स्वीकर्त्तव्यः, वैधर्म्यदर्शनात्॰ वाच्यो ह्यर्थः सर्वैरेक एव प्रतीयत इति नियतः॰ व्यङ्ग्यस्तु वक्तृप्रकरणादिवशादनियतः॰ तथाहि, "गतो ऽस्तमर्कः" इति वाक्ये राज्ञः सेनापतीन्प्रति 'शत्रूणामाहवेनावमर्दनावसर'इति, दूतीनामभिसारिकाः प्रत्य 'भिसरणमुपक्रम्यता'मिति, सख्या वासकसज्जां प्रति 'प्राप्तप्रायस्ते प्रेया'निति, कर्मकरस्य सह कर्म्मकुर्वतः प्रति 'कर्म्मकरणान्निवर्तामह' इति, भृत्यस्य धार्म्मिकं प्रति 'सान्ध्यो विधिरुपक्रम्यता'मिति, आप्तस्य कार्यवशेन बहिर्गच्छतः प्रति 'दूरं मा गा' इति, गृहिणो गोपालकं प्रति 'सुरभयो गृहं प्रवेश्यन्ता'मिति, दिवसे ऽतिसंतप्तस्य बन्धून्प्रति 'संतापो ऽधुना न भवती'ति, आपणिकानां भृत्यान् प्रति 'विक्रेयवस्तूनि संह्रियन्ता'मिति, नायकाऽऽगमनप्रस्तावे प्रोषितभर्तृकायास्तत्कथकं प्रति 'नागतोद्य प्रेया'नित्येकस्यैव वक्तुर्बहून् प्रति तत्तत्प्रकरणवशादेवमादिरनवधिर्व्यङ्ग्योऽर्थः प्रकाशते, वाच्यस्तु सर्वान् प्रत्यविशिष्ट एव॰ ननु नैतद्वाच्यवैधर्म्यम्, नानार्थसैन्धवादिपदे नानार्थावगतिदर्शनादिति चेन्न, एकवाक्यवर्तिनस्तस्याप्यर्थैक्यनियमात्॰ यदग्रे वक्ष्यति "लवणीयार्थस्य नानात्वेप्यनेकार्थपदाभिधेयवन्नियतत्वमेवे"ति॰ तथापि यत्र लवणाद्यधिकारिणः प्रति सकलस्वामिनः सैन्धवमानयेतिपदप्रयोग, स्तत्रानियतत्वं दुर्वारमेवेति चेन्न, तात्पर्य्याज्ञानात्॰ नह्यत्र सर्वैर्वाच्यैः समं सर्वव्यङ्ग्यानां भेदः प्रतिपाद्यते, किंतु "गतो ऽस्तमर्क्क" इत्यस्य वाच्यव्यङ्ग्ययोः॰ तथाच तद्वाच्यस्य नियतत्वं, तदर्थपुरस्कारेणैव सर्वेषां व्यङ्ग्यस्यापि प्रतीतेः॰ तदयं नियतत्वानियतत्वरूपविरुद्धधर्म्मसंसर्गाभिहितः॰ एवं विलक्षणस्वरूपकालादिभेदोपि भेदको द्रष्टव्यः॰ वैधर्म्यसत्त्वेपि यद्यभेदः स्या, त्तदा नीलानीलादेरपि न क्वचिद्भेदः स्याद्, वैधर्म्यस्याऽविशेषात्॰ यदुक्तम्—"अयमेव हि भेदो भेदहेतुर्वा, यद्विरुद्धधर्माध्यासः कारणभेदश्चे"ति॰ सुप्रसिद्धश्च तत्र तत्र स्वरूपभेदेऽर्थभेदः, तत्र "निःशेष"त्यादौ,

मात्सर्य्यमुत्सार्य्य विचार्य कार्य्यमार्याः समर्य्यादमुदाहरन्तु[क] ।

सेव्या नितम्बाः किमु भूधराणा, मुत स्मरस्मेरविलासिनीनाम् ॥ इत्यादौ,

कथमवनिप! दर्पो यन्निशातासिधारा-
दलनगलितमूर्द्धां विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता-
स्त्रिदिवमपगताङ्गैर्व्वल्लभा कीर्त्तिरेभिः ॥

इत्यादौ च स्वरूपभेदः· प्रथमे हि वाच्यो निषेधरूपो, व्यङ्ग्यस्तु विधिरूपः· द्वितीये वाच्यः संशयरूपः, प्रतीयमानस्तु शान्ते शृङ्गारिणि वा वक्तरि तदुचितैककोटिनिश्चयः· तृतीये वाच्यो निन्दारूपः, प्रतीयमानस्तु स्तुतिरूपः· कालभेदस्तु सर्वत्र, पूर्वं हि वाच्यः प्रतीयते, पश्चात्तु व्यङ्ग्य इति· वाच्यस्य तु शब्दमात्रमाश्रयः, प्रतीयमानस्य तु पदशब्दैकदेशीभूत-काक्वादितदर्थवर्णसंघटना इत्याश्रयभेदः· वाच्यस्य व्याकरणकोषादिमात्रेणावगमः, प्रतीयमानस्य तु प्रतिभानैर्मल्येनाप्यधिकेनेति ज्ञापकभेदः· वाच्येन व्युत्पन्नमात्रस्य प्रतीतिमात्र,मन्येन तु विदग्धपदवाच्यस्य सहृदयस्य चमत्कृतिरिति कार्य्यभेदः· "गतोऽस्तमर्क"इत्यादौ दर्शितनयेन वाच्य एकः, प्रतीयमानस्तु नानेति संख्याभेदः ।

कस्स वा ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
सभमरपउमग्घाइणि वारिअवामे! सहसु एह्णिम् ॥

इत्यादौ वाच्यार्थस्य संबोध्या सखी विषयः, तत्र हि वाच्योर्थः श्रोतुर्व्यवतिष्ठते· प्रतीयमानस्य तु 'भ्रमरेणास्या अधरः खण्डितो, नतूपपतिने'ति (१)तत्कान्तः, 'ममैवं वैदग्ध्य'मित्यस्य प्रतिवेशिनी, इदानीम्मया समाहितं पुनरेवं त्वया न विधेयमि'त्यस्योपपतिः, एवं सपत्न्यादिविषयोऽपीति विषयस्य भेदः· एवं स्वरूपादिभेदादवश्यमङ्गीकर्त्तव्यो वाच्यव्यङ्ग्ययोर्भेदः· किंच, वाचकव्यञ्जकयोरपि वैधर्म्याद्भेदो वक्तव्यः· यतो वाचकस्य सङ्केतितार्थापेक्षा, सङ्केतित एव ह्यर्थे ऽभिधा प्रवर्त्तते, नत्वेवं व्य-

(क) समर्यादमिदं वदन्त्वित्यपि क्वचित् ।
(१) इतीति· इत्यस्य प्रतीयमानस्य विषयस्तत्कान्त इति सम्बन्धः· एवमुत्तत्रापि ।

ञ्जकः· अन्यत्रापि व्यञ्जनया प्रत्ययजननात् ॥ यच्चोक्तं "तात्पर्य्यविषये शब्दः प्रमाण"मिति तद्वदतोप्यनुपपन्नम्· यतो व्यङ्ग्यस्य वाच्यताभ्युपगमे ऽपि नानार्थन्यायेन तात्पर्य्यादेव नियमो वाच्यः· अन्यथा सर्वत्र सर्वव्यङ्ग्यप्रतीतिप्रसङ्गात्· तथाच यत्र "वानीरकुडुङ्गे"त्यादौ व्यङ्ग्यप्रतीतावपि वाच्यएव चारुत्वविश्राम,स्तत्र तात्पर्या ऽविषयो व्यङ्ग्यो ऽर्थः कथं प्रतीयेत· "यत्परः शब्द" इत्युक्तमते तु सुतराम्· एतेन तात्पर्य्यमेव व्यङ्ग्यप्रतीतौ व्यापार इत्यपि निरस्तम्· तस्मात्तात्पर्य्यमभिधा वा न प्रतीयमानेर्थे व्यापारः ॥ नन्वस्तु लक्षणा· नहि वाच्यवल्लक्ष्योपि व्यवस्थितो विशेषव्यपदेशाहेतुर्वा· यतो "रामोस्मि सर्वं सहे" इत्यत्र रामपदेन सर्वदुःखभाजनत्वं,

प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा,
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः,।
व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम् ॥

इत्यत्र कातरत्वम्, "रामो ऽसौ भुवनेषु विक्रमगुणै"रित्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते· अतो रामपदलक्ष्य एवानेको भवति, अर्थान्तरसङ्क्रमितवाच्यादिविशेषव्यपदेशहेतुश्च[क] भवति· एवमन्यत्रापि स्यात्· तदुक्तं "भाक्तमार्गस्तदन्य"[ख] इति लक्षणीयविशेषावगमश्च प्रकरणादिसापेक्षेण शक्यार्थेन स्या,दतो नात्यतिरिक्तः प्रतीयमानो नाम । मैवम्, लक्षणीयस्य नानात्वेपि हि नानार्थसैन्धवादिपदाभिधेयस्येव नियतत्वमेव· न खल्वनियतसम्बन्धो मुख्येनार्थेन लक्षयितुं शक्यते· प्रतीयमानस्तु प्रकरणादिव·

(क) विशेषापदेशहेतुश्चेति पाठः क्वाचित्कोऽप्यनतिरिक्तार्थः ।

(ख) अत्र खलु, "भाक्तमार्गस्तदन्य"· इत्येष पाठः, "तस्मादभिधेयादन्यो भक्तिर्लक्षणा, तया मार्गणं प्रकाशनं यस्य स इत्यर्थः"—इति प्रदीपप्रभासंमतः· "भाक्तमाहुस्तमन्ये" इति क्वचित्रोपलभ्यते· सोऽपि प्रामाणिकः· तथा च प्रदीपोद्द्योतः—"तं व्यङ्ग्यस्वरूपमन्यं भाक्तं लाक्षणिकमाहुरित्यर्थः· भाक्तमार्गस्तदन्य इति पाठान्तरम्· तदन्यः शक्यान्यो भाक्तमार्गो लाक्षणिकमार्ग इत्यर्थः"—इति· बहूनामनुरोधो न्याय्य इतिन्यायेनात्र प्रभासंमतमेवाद्रियामहे ।

शेन नियतसम्बन्धो ऽनियतसम्बन्धः सम्बद्धसम्बन्धश्चेति· तत्स्वरूपं सो-दाहरणमग्रे प्रदर्शयिष्यते· किञ्च, "अत्ता एत्थ णिमज्जइ"त्यादौ विवक्षि-तान्यपरवाच्ये कथं लक्षणा,मुख्यार्थबाधाऽभावात्· ननु तत्रापि तात्पर्या-धीनान्वयानुपपत्ति "शङ्खचिणो यान्ती"त्यत्रेवेति चेन्न, लक्षणायां प्रयोज-ननियमात्· तस्य च व्यापारान्तरागम्यत्वात् तदर्थं व्यञ्जनास्वीकारे किं प्रथमयापि लक्षणया· अथ निरूढलक्षणायामिवान्यत्राप्यस्तु प्रयोजनानपे-क्षेति चेन्न, यथा हि सङ्केतग्रहसापेक्षा ऽभिधा, तथा मुख्यार्थबाधतद्योग-रूढिप्रयोजनान्यतरस्य[क]मुख्यार्थसङ्केतग्रहस्य च सापेक्षा लक्षणा· तत्कथं रूढेः प्रयोजनस्य वा ऽभावे भवेत्· यतः सङ्केतग्रहसापेक्षा सा· अत एवा'भिधापुच्छभूता से'त्याहुः· किञ्च, न लक्षणाव्यञ्जनयोरभेदः, लक्ष-णामुपजीव्यतद्दर्शनात्· नापि लक्षणानुगतमेव ध्वननमिति ध्वनेस्तल्ल-क्षणमिति वाच्यम्, अभिधोपजीवनेनापि भावात्· नच लक्षणाभिधोभया-नुसार्येव· वर्णमात्रानुसारेणापि हि दृश्यते रसादिव्यञ्जना· नच वर्णमात्रे ऽभिधा लक्षणा वा· नापि शब्दानुसार्येव, विकसच्चर्तकीनेत्रत्रिभागावलोक-नादिगतत्वेनापि प्रसिद्धेः· तस्मादभिधालक्षणातात्पर्यविलक्षणस्तुरीयो ध्वननव्यञ्जनद्योतनप्रकाशनादिपर्यायो व्यापारो ऽन ऽपह्नवनीय एव । तत्र, "अत्ता एत्थ णिमज्जइ"त्यादौ व्यङ्ग्यार्थो नियतसम्बन्धः, "कस्स वा ण होइ रोसो"इत्यादावनियतसम्बन्धः· नियतसम्बद्धत्वं च व्यङ्ग्यप्रती-त्योरेकविषयतात्मकत्वम्· प्रथमे तस्य भावः, पथिकरूपैकविषयकत्वात्· द्वितीये तु तदभावः,सखीतत्कान्तादिविषयभेदादिति केचित्· तच्च सम्य-गाभाति, लक्ष्यस्य नियतसम्बद्धत्वमेव, व्यङ्ग्यस्य तु तथात्वमन्यथात्वं चेति पूर्वप्रतिपादितस्य हीदमुदाहरणमिति लक्ष्यसाधारणं नियतसम्बद्धत्वं वाच्यं, नचोक्तं तथा भवति· अन्ये तु प्रथमे सर्वेषामेव सत्यताप्रतीतिः· द्वितीये तु कान्तस्यैव सत्यतया, ऽन्येषां त्वसत्यतयेति नियताऽनियत-सम्बन्धत्वमित्याहुः· तदपि न मनोरमम्· यत, एवं वाच्यप्रतीतेरेव सत्य

(क) मुख्यार्थबाधतद्योगेरूढिप्रयोजनान्यतरस्येत्येकस्य पुस्तकस्य पाठस्तु सर्वथो-च्छृङ्खलः ।

त्वाऽसत्यत्वप्रतीतिविषयत्वरूपं वैलक्षण्यमुच्यते. ननु व्यङ्ग्यप्रतीतेः तस्मान्नियतसम्बन्धत्वं तेन वाक्येन सह ज्ञाप्यत्वरूपसम्बन्धनियम इति युक्तमुत्पश्यामः सम्बद्धसम्बन्धो यथा—

विवरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठं ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥

अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वं, तन्निमीलनेन सूर्यास्तमयः, तेन पद्मसङ्कोचः, ततो ब्रह्मणः स्थगनं, तस्मिन् सति गोपनीयाङ्गस्याऽदर्शनेन निर्यन्त्रणं निधुवनविलसितमिति सम्बन्धसम्बद्धानि द्योत्यन्ते ॥ वेदान्तिनस्तु—क्रियाकारकादिपुरस्कारेण शब्दानां प्रवृत्तिर्धर्मधर्मिभावमपुरस्कृत्य न सम्भवति. धर्मधर्मिभावश्च प्रपञ्चगोचरो वा स्यात्, ब्रह्मगोचरो वा. नाद्यः, प्रपञ्चस्य बाध्यत्वात्. नान्त्यः, ब्रह्मणो धर्मशून्यत्वात्. अतः पदपदार्थविभागमन्तरेणैव "सत्यं विज्ञान"मित्यादि वाक्यमखण्डमेवाऽखण्डब्रह्मवाचकमित्यातिष्ठन्ते. अतस्तन्मतानुसारेण प्रतीयमानेपि वाच्यस्य शक्तिरेवेत्यपि न वाच्यम्, यतो व्यवहारमार्गे तैरपि पदपदार्थकल्पना ऽवश्यमङ्गीकर्त्तव्या. व्यवहारे तेषां भट्टनयस्वीकारात्. यदि च पदार्थकल्पना ऽविद्यादशायामपि नाङ्गीक्रियते. कुतस्तर्हि व्युत्पन्नाऽव्युत्पन्नविभागव्यवहारः. वाक्यार्थ एव वाक्यस्य सङ्केतग्रहमाश्रित्येति चेत्, वाक्यार्थस्यापूर्वत्वेनाऽऽनन्त्यात्तत्र[क] सङ्केतग्रहस्याऽशक्यत्वात्. अविद्यामार्गतिरस्कारे च कथमखण्डयोरपि वाच्यवाचकभावः, पारमार्थिकभेदाभावात्. तस्मात्तन्मतेपि विध्यादिर्व्यङ्ग्य एव ॥ महिमभट्टास्तु—न तावदसम्बद्ध एव वाक्यात् प्रतीयते, सर्वस्मात्सर्वोपलब्धिप्रसङ्गात्. सम्बन्धाच्च व्यङ्ग्यव्यञ्जकभावो भवन्वा ऽनियताद्भवतीति प्रतिबद्धरूपादेव भवतीत्यास्थेयम्. सम्बद्धाप्यर्थो न स्वाधिकरणत्वेनाज्ञाते व्यङ्ग्यं प्रतिपादयति, सर्वत्र तत्प्रतीतिप्रसङ्गात्. एवं च व्यङ्ग्यव्यञ्जकभावो ऽनुमेयानुमापकभाव एव पर्य्यवसन्नः. यतो व्याप्तत्वेन सकलपक्षनिष्ठत्वेन च सपक्षसत्त्ववि-

(क) अपूर्वत्वादानन्त्याच्चेति पाठः पुस्तकान्तरस्थस्तु नातियुक्तः ।

पक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवतो लिङ्गाल्लिङ्गिज्ञानमेवानुमानम्· तदे-तदुक्त"मनुमानं च,तद्रूप" इति· तेनानुमानेन रूप्यते तत्व्यतिरिक्तया व्यक्त्येति हि तस्यार्थः· एवमनुमानादेव व्यङ्ग्यप्रतीतिः· तथाहि ।

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ तेण ।
गोलाणईकच्छकुडुंगवासिणा दरिअसीहेण ॥

सङ्केतनिकेतनीभूतं गोदावरीनिकुञ्जं पुष्पावचयादिहेतोः कदाचित्संचरतो धार्म्मिकस्य निवारणाया ऽविनयवत्या इयमुक्तिः· तदत्र निकुञ्जवासिसिंहकृतया श्वनिवृत्त्या गृहे भ्रमणविधिर्वाच्यः· स एव निकुञ्जभ्रमणायोग्यतानुमित्यै (क)प्रभवति· यद्भीरुभ्रमणं तद्भयकारणनिवृत्त्युपलब्धिपूर्वकं, निकुञ्जे च (ख) सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धेः पर्य्यवसानात्· भ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः प्रतीता· तद्विरुद्धं यद्भयकारणं तदुपलब्धेः· यथा नात्र तुषारस्पर्शो वह्नेरिति· अनुमानं चैवं— गोदावरीनिकुञ्जं श्वभीरुभ्रमणायोग्यं, (ग) सिंहवत्त्वात् । अत्रोच्यते—श्वभीरोरवीरस्वभावस्य भ्रमणायोग्यत्वमत्र साध्यं,वीरस्वभावस्य वा, विशेषौदासीन्येन तत्सामान्यस्यैव वा· आद्ये व्यभिचारः, तादृशस्यापि प्रभोर्गुरोर्वा निदेशेन प्रियानुरागेण निधिलाभादिशङ्कया वा तत्र भ्रमणदर्शनात् । अत एव नान्त्योऽपि· मध्यमे तु विरोधः,स्पर्शादिशङ्कया ऽपौरुषेयतया वा श्वतो बिभ्यतो ऽपि मृगयादिकुतूहलेन सिंहवद्देशे वीरस्य (घ) भ्रमणदर्शनात्· किञ्चात्र पक्षे सिंहसद्भावो न मानान्तरेणावधारितः, किन्तु पुंश्चलीवाक्यादवगतः· नच तद्वचनं निश्चायकम्, अर्थेन समं सम्बन्धा ऽनियमादित्यनिश्चयरूपा ऽसिद्धिः· एवं "निःशेषच्युतचन्दने"त्यादौ चन्दनच्यवनादीन्युपभोगव्यञ्जकतयोपात्तानि· नच तानि तद्व्याप्यानि, कारणान्तरतो ऽपि सम्भवात्· अत एवात्र स्नानकार्य्यत्वेनोपात्तानि· अतो ऽनैकान्तिकत्वात्

(क) अयोग्यानुमित्यै प्रभवतीत्येकतमे ।
(ख) निकुञ्जे चेत्यस्य स्थाने लिङ्गं चेत्येकस्मिन्पुस्तके पठ्यते· तत्तु न युक्तम् ।
(ग) भीरुभ्रमणाऽयोग्यमिति 'श्व'पदरहितमेकत्रास्ते ।
(घ) वीरस्यापि भ्रमणादित्येकत्र, न तु युक्तम् ।

कथमनुमितिः स्यात्· ननु व्यक्तिरपि कथं तैरितिचे,द्धर्मपदसाहित्यादिति ब्रूमः·· अस्माकमपि तत्साहित्येनानैकान्तिकताव्यतिरेक इति चेद्,भवेद· प्येवं यद्यधर्मत्वं प्रमाणावधारितं भवेत्, नत्त्वेवमस्ति·· व्यक्तिरपि कथं तादृशादुवेदिति चेद्,धिङ्मूर्ख! व्यञ्जनायां न व्याप्ते,र्वापि पक्षधर्म्मताया निर्द्धारणमङ्गं, किन्तु सम्भावितादप्येवंविधादेवंविधो ऽर्थः प्रतीयत इति मूकीभव ॥ ४६ ॥ ४७ ॥

इति महामहोपाध्यायश्रीगोविन्दविरचिते काव्यप्रदीपे पञ्चम उल्लासः ॥ * ॥

## ॥ अथ षष्ठ उल्लासः ॥

एवं गुणीभूतव्यङ्ग्यभेदे निर्णीते चित्रभेदं दर्शयितुमवसरः· तत्र यद्यपि शब्दचित्रार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव दर्शितं, तत्प्रभेदा· श्चालङ्कारप्रभेदप्रदर्शनेव दर्शिता भविष्यन्तीति न किञ्चदस्ति तत्र प्रद· र्शनीयम्, तथापि प्रदर्शितभेदद्वयमेव तावदनुपपन्नं शब्दार्थालङ्कारयोरन्यो· न्यनैरपेक्ष्येणानुपलम्भात्· उपलम्भेवाप्युभयसद्भावे तृतीयभेदप्रसङ्गादिति तदुपपादयति—

शब्दार्थचित्रं यत्पूर्व्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः[क] ॥ ४८ ॥

शब्दार्थालङ्कारयोरेकैकमात्रावस्थानपुरस्कारेण नायं विभागः, किन्तु प्राधान्यपुरस्कारेण· तथाच न काचिदनुपपत्तिरिति भावः· ननु तथापि विभागो ऽनुपपन्न एव, यतः, के चिच्छब्दालङ्कारमात्रं, केचिच्छब्दा· र्थालङ्कारमात्रमूरीचक्रिरे, तत्कस्य मतमाश्रित्य विभाग इति चे,त्सन्त्येव केचिदुभयाङ्गीकारिणः· तथाचोक्तं—

(क) स्थितिः शब्दार्थचित्रयोरिति क्वचित्मकाशपुस्तके पाठ्यते, तस्त्वतियुज्यते।

रूपकादिलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥
रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥ इति·

अस्यार्थः—अर्थस्यैव विभावादिरूपत्वेन रसव्यञ्जकत्वात्तन्निष्ठो रूपकादिरेवालङ्कारः कैश्चिदुक्तः· केचित्तु काव्यस्यालङ्कारो वाच्यः· काव्यं च कविकर्म्म शब्द एवेति तदाश्रितानां सुपां तिङां च विशिष्टा विशेषलक्षणयोगिन्युत्पत्तिरलङ्कारः·[क] रूपकादिस्त्वर्थाश्रितो ऽलङ्कारो बाह्यः· अलङ्कारपदप्रयोगस्तु तत्र गौण एवेति वाञ्छन्ति· व्युत्पत्तिरेव कथं नार्थालङ्कार इत्यत आह तदेतदाहुरित्यादि· शब्दाभिधेयेति, शब्दवदर्थस्यापि कविसंरम्भव्याप्यत्व,मर्थस्येव शब्दस्यापि रसप्रतीत्युपयोगित्व,-मत उभयाश्रितोप्युभयरूपो ऽलङ्कार इति· तत्र शब्दचित्रं यथा—

प्रथममरुणच्छायस्ताव,त्ततः कनकप्रभ,-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः, ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥

अत्रार्थालङ्कार उपमा गुणीभूतः, शब्दालङ्कारस्त्वनुप्रासः प्रधानम्, आसमाप्ति कवेस्तत्रैव संरम्भात्· प्राधान्यस्य कविविवक्षामात्रनिबन्धनत्वात् । अर्थचित्रं यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च, ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥

(क) विशिष्टोत्पत्तिरलङ्कार इत्येकत्रास्ते ।

अत्र शब्दालङ्कारो ऽनुप्रासः, स गुणीभूतो, ऽर्थालङ्कारस्तु समुच्चयः प्रधान,मारम्भादासमाप्ति तन्निर्वाहणात्· यथा चात्र किंचिद्व्यङ्ग्यसत्त्वे ऽप्यधमकाव्यत्वं, तथोक्तं प्रथमोल्लास एव· एषां भेदाश्चालङ्कारभेदाद्भवन्तीत्यलङ्कारनिर्णयेनैव ते निर्णेष्यन्त इति ॥ ४८ ॥

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे षष्ठ उल्लासः ॥ * ॥

## ॥ अथ सप्तम उल्लासः ॥

एवं धर्मिणि काव्ये सप्रभेदे निरूपिते प्राप्तावसरतया दोषाभावादीनि लक्षणस्थानि विशेषणानि विवेचनीयानि· तेषु च दोषाभावः प्रधानम्,सति दोषे गुणादेरकिञ्चित्करत्वात्· यदाह "स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भग"मिति· सति तु दोषाभावे गुणादिकं विनापि किञ्चिदाह्लादसम्भवात्, "अपदोषतैव विगुणस्य गुण"इतिन्यायात्· अतः प्रथमं तस्मिन्निरूपणीये ऽभावस्य स्वरूपतो निरूपणानर्हतया प्रतियोगिनिरूपणाधीनरूपणीयत्वाद्द्वेयापरिचये तद्धानाऽसम्भवाच्च दोषा निरूपणीयाः· नच सामान्ये ऽविज्ञाते विशेषे जिज्ञासेति तत्सामान्यलक्षणमाह-

मुख्यार्थहतिर्दोषो, रसश्च मुख्यस्तदाश्रयाद्वाच्यः, ।
उभयोपयोगिनः स्युः शब्दाद्या,स्तेन तेष्वपि सः ॥ ४९ ॥

मुख्यार्थस्य हतिर्यस्मादिति व्यधिकरणत्वेपि गमकत्वाद्बहुव्रीहिः· करणसाधनो हतिशब्द इत्येके· मुख्यत्वमर्थस्य न शक्यत्वलक्षणं, येनार्थाऽसङ्गतिः स्यात्, किन्त्वन्यदित्याह रसश्च मुख्य इति· रस्यत इति व्युत्पत्त्या रसशब्देन भावादिरप्युपसंगृह्यते· नन्वेवं नीरसेषु न कश्चिद्दोषः स्याद् विघाताभावादित्यत आह (क)तदाश्रयाद्वाच्य इति· आश्रयणमाश्रयः· तथाच तेन रसेनाश्रयणादुपकारित्वेनानुसमापेक्षणाद्वाच्योपि मुख्य इत्यर्थः·

(क) विभावाद्यभावादित्यत आहेति पुस्तकान्तरम् ।

नचैवं मुख्यशब्दार्थस्य नानात्वेनाऽननुगमः, काव्ये प्रधान्येनोद्देश्यप्रतीति· विषयत्वेनानुगमात्· तदेवं रसवति सर्व एव दोषा, नीरसे त्वऽविलम्बि· तचमत्कारिवाक्यार्थप्रतीतिविघातका एव ज्ञेया इति मन्तव्यम्· नन्वेवं तयोरेव दोषाधारत्वमुचितं, नतु शब्दादीनामित्यत आह उभयोपयोगिन इत्यादि· अत्र शब्दपदं प्रतिपादनात्मकशब्दनाख्यापारवतोः पदवाक्ययो· र्वर्त्तते· तेनाद्यपदाद्दुर्वर्णरचने संगृहीते इति प्रकाशस्वरसः· (क) नच तत्र बीजाऽभावः, अन्यथावर्णस्यापि शब्दपदेनैव प्राप्तौ शब्दाद्या इति बहुव· चनाऽसङ्गतेः· स्यादेतत्, हतिर्विनाशः· नच दोषेण रसो नाश्यते· तस्मा· दलक्षणमेतत्· मैवं,हतिशब्दस्यापकर्षवाचित्वात्· नन्वेवं रसानुत्पत्तिप्र योजकेष्वव्याप्तिः· अथानुत्पत्तिरेव हतिशब्दार्थ,स्तर्हि,यत्र रस उत्पद्यत एव· परंत्वपकृष्यते· तत्राव्याप्तिः· तदेतल्लक्षणमतिदरिद्रदम्पत्योः कृशतरनि· शावगुण्ठनीयवसनमिवैकेनाऽऽकृष्यमाणमपरं परिहरति· किंचार्थरूपस्य मुख्यार्थस्यानुत्पत्तिरपकर्षो वा न दोषाधीन इत्यत्र ब्रूमः—उद्देश्यप्रती· तिविघातलक्षणोपकर्षो हतिशब्दार्थः· उद्देश्या च प्रतीती रसवत्यविल· म्बिता,ऽनपकृष्टरसविषया च, नीरसेत्व ऽविलम्बिता चमत्कारिणी चार्थवि· षया· तथाच तादृशप्रतीतिविघातकत्वं सर्वेषामविशिष्टम्· यतो दुष्टेषु क्वचिद्रसस्याऽप्रतीतिरेव· क्वचित्प्रतीयमानस्याप्यपकर्षः· क्वचित्तु विलम्बः· एवं, नीरसे क्वचिदर्थस्य मुख्यभूतस्याऽप्रतीतिरेव· क्वचिद्विलम्बेन प्रतीतिः· क्वचिदचमत्कारितेत्यनुभवसिद्धमित्युद्देश्यप्रतीतिविघातो व्यक्त एव· तद्वि· घातकता च कस्यचित्साक्षात्, यथा रसदोषाणाम्· कस्यचित् परम्प· रया, यथा शब्दार्थदोषाणाम्· तेष्वपि कस्यचिदर्थोपस्थितेरभावात्, यथा समर्थत्वादेः· कस्यचित्तद्विलम्बात्, यथा निहतार्थत्वादेः· कस्यचि· द्वाक्यार्थबोधाभावात्,. यथा च्युतसंस्कृत्यादेः· कस्यचित्तत्र विलम्बात्, यथा क्लिष्टत्वादेः· कस्यचित्सहृदयवैमुख्यव्ययताद्यापादनेन, यथा निरर्थ· कत्वादेः· कस्यचिद्विरोध्युपस्थापनेन विपरीतोपस्थापनेन(ख) वा, यथा

(क) प्रकाशकारस्वरस इति पु· ।

(ख) विपरीतार्थोपस्थापनेन वेति अन्यतमे ।

विरसविरुद्धमतिकृत्त्वादे(क)रित्याद्यूहनीयम्· विघातकत्वं च कस्यचिज्ज्ञातस्य, यथा व्याहतत्वादेः, कस्यचित्तु स्वरूपसत एव, यथा निहतार्थत्वादेः· स चायं द्विविधो नित्यश्चाऽनित्यश्च· तत्रानुकरणादन्येन प्रकारेण समाधातुमशक्यो नित्यः; यथा च्युतसंस्कृत्यादिः· अन्यादृशस्त्वनित्यः, यथा ऽप्रयुक्तः ॥ अथ विशेषलक्षणानि वक्तव्यानि· तत्र द्विविधोप्ययं त्रिविधः—शब्ददोषो ऽर्थदोषो रसदोषश्चेति· तत्र शब्दार्थरसानां यथापूर्वमुपस्थितिः प्राथमिकीति तत्क्रमेणैव दोषभेदा निरूपणीया इति(ख)शब्ददोषाणां प्राथम्यम्· शब्दस्तु त्रिधा पदं तदेकदेशो वाक्यं च· एवं च तदाश्रितशब्ददोषोपि त्रिविधः· तत्र पदानां वाक्यघटकत्वेन प्राथम्यात् प्रथमं तद्दोषनिरूपणमिति परमार्थः· तत्रेदं शङ्क्यते—एवं पदैकदेशस्य पदापेक्षयापि प्राथम्यात्तद्दोषनिरूपणस्यैव प्राथम्यमर्हतीति· अत्र भास्करः, "सत्यमुच्यते, परं तु पददोषेष्वेव यथासम्भवं केचित्पदैकदेशदोषा" इति समादधे तन्नातिमनोरमम्· अस्त्वेव तथापि पदैकदेशदोषत्वेन प्रथमाभिधानापादने किमुत्तरमिति । वयं त्वालोचयामः—उपदेशे तावत् प्राथम्यादिविचारणा· अतिदेशस्तूपदेशानन्तरमेव· नच पदैकदेशे दोषोपदेशो, ऽतिदेशेनैव तल्लाभे लाघवात्· नच पदैकदेश एवास्तूपदेशः, पदे त्वतिदेश इति वाच्यम् । पदैकदेशावृत्तीनामपि केषांचित् पदवृत्तित्वेन तदर्थं पदेषूपदेशस्यावश्यकत्वादिति ॥ ४९ ॥ पददोषविशेषलक्षणमाह—

दुष्टं पदं श्रुतिकटु,च्युतसंस्कृत्य,ऽप्रयुक्त,मसमर्थम्, ।
निहतार्थ,मनुचितार्थं, निरर्थक,मवाचकं, त्रिधाऽश्लीलम्, ॥५०॥
सन्दिग्ध,मप्रतीतं, ग्राम्यं, नेयार्थ,मथ भवेत् क्लिष्टम्, ।
अविमृष्टविधेयांशं, विरुद्धमतिकृत्समासगतमेव ॥ ५१ ॥

दुष्टं पदमिति प्रत्येकं सबध्यते· ननु श्रुतिकटुप्रभृतिशब्दानां लक्ष-

(क) विरुद्धमतिकृदादेरिति पुस्तकान्तरम् ।

(ख) अत्र खलु 'इति' शब्दस्य स्थाने मुद्रात्र पुस्तके "अतस्तद्दोषो शब्दार्थाविस्थत्र काव्यलक्षणेपि शब्दस्य प्राङ्निर्देशाच्च· इति पाठो वर्त्तते· स तु नातिसमञ्जसः· टिप्पणी चेयं कदाचिल्लिपिकारप्रमादान् मूले प्रविष्टा स्यादिति संभावयामः ।

णपरत्वे विभागपरत्वाभावाल्लक्ष्यानुपस्थितौ कथं लक्षणवाक्यत्वनिर्वाह इति· उच्यते, रूढियोगाभ्यामुभयार्थोपस्थितौ लक्ष्यलक्षणयोरुभयोरपि प्रत्ययः· यथा "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य" इती[क]न्द्रियलक्षणसूत्रे गौतमीये·[ख] अथैवं लक्षणवाक्यत्वे त्रिधाऽश्लीलमित्यत्र त्रिधेति निरर्थकम्, तस्य विभागमात्रार्थत्वेन लक्षणेऽनुपयोगादिति चेत्, अश्लीलशब्दस्य व्रीडादिव्यञ्जकत्रितयसाधारणैकावयवशक्तिविरहेण नानार्थतया लक्षणत्रयार्थत्वमित्यस्य तदर्थत्वात्· तत्र श्रुतिकटुत्वं, श्रुत्युद्वेजकत्वम्· तच्च यद्यपि पुरुषभेदेनाऽनियतम्, तथापि तज्जनकतावच्छेदकरूपवत्त्वं विवक्षितम्· तच्च परुषवर्णवत्त्वं, तच्च दुर्वचत्वम्· उदाहरणम्—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः।
तन्वङ्ग्या ऽऽलिङ्गितः कण्ठे[ग] कार्तार्थ्यं लभते कदा॥

अत्र कार्तार्थ्यमितिपदं परुषवर्णप्रायम्· किं पुनरस्य दूषकताबीजम्· उद्वेजकत्वमिति चेत्, रौद्रादावपि दोषत्वप्रसङ्गात्· माधुर्य्यव्यञ्जक[घ]रचनामध्यगुम्फितमेव तदुद्वेजयतीति चेत्, तत्किं तादृशत्वेन ज्ञातं तत्तथा, उत स्वरूपसदेव, नाद्यः, रसविशेषव्यञ्जकत्वाज्ञानेपि प्राथमिकतादृशपदश्रवणेनोद्वेगाभावप्रसङ्गात्· नचेष्टापत्तिरनुभवविरोधात्· अन्त्ये तु, सत्यादयः प्रमाणं न ह्यऽविदितविशेषानपि तत्रैव तदुद्वेजयति, नान्यत्रेत्यत्र प्रमाणमस्ति· किंचैवं वैयाकरणादौ वक्तरि किञ्चिबन्धनो दोषत्वाभावः स्यात्· अत्रोच्यते—स्वायत्ते शब्दप्रयोगे कर्णोपतापकशब्दप्रयोगे श्रोतुरुद्वेगो रसापकर्षायेति स एव तद्बीजम्· अत एव प्रतिकूलवर्णादस्य भेदः, तस्य कर्णोपतापाऽहेतुत्वात्· अत एव चानुकरणे, वैयाकरणादौ वक्तरि,

(क) एकत्र पुस्तके "भूतेभ्य इतो"तीन्द्रियेत्यादि भवति· परं, सूत्रकृत्त्विस्य इतिकारो नाकरस्थः।

(ख) देवाक्षरपुस्तकद्वये "गौतमीये" इति पाठस्यास्तित्वे ऽपि वङ्गाक्षरोपुस्तकस्थं गोतमीय इत्येव स्थाप्यते· गोतमो हि भगवान्महर्षिः शास्त्रकार इति स्थितिः· गोतमीयेत्यत्र च नामधेयत्वेन वृद्धत्वाच्छो गोनर्दीयादिवदित्याद्यन्यत्रास्माभिर्निर्णीतम्।

(ग) आलिङ्गितः स तन्वङ्ग्येति प्रायः प्रकाशः।

(घ) ०व्यञ्जकवचनरचनेति क्वचित्·

श्रोतरि वा, रौद्रादौ रसे व्यङ्ग्ये, नीरसे च काव्ये ऽस्य दोषत्वाभावः· आद्ये तस्यैवानुकरणीयतया स्वायत्त्यभावात्· द्वितीये च तत्स्वभावावगमेनोद्वेगाभावात्· तृतीये च श्रोतुस्तेना ऽनुद्वेगात्· चतुर्थे तदनुगुणत्वेनोद्वेगाहेतुत्वात्· पञ्चमे मुख्यार्थहतेरभावात्· एवमर्थौचित्यप्रकरणादिवशेनाप्यनुद्वेजकतया दोषत्वाभाव उपपद्यते ॥ (१)

च्युतसंस्कृति, च्युता स्खलिता संस्कृतिः संस्करणं व्याकरणलक्षणानुगमो यत्र, यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धं य,त्तत् तद्भाषायां च्युतसंस्कृतीत्यर्थः· देश्यं तु न लक्षणविरुद्धं, किन्तु तदविषयः· सञ्ज्ञाशब्दानां बहुलवचनेन संस्कृतत्वाच्च तत्रातिव्याप्तिः· उदाहरणम्—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदराऽऽपाण्डुर[क]-
प्रान्तं हन्तपुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि ! कुञ्जरकुलं कुम्भाऽभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृत्तं मा कृथाः ॥

अत्र नाथत इति याचत इत्यर्थे च्युतसंस्कृति· सामान्यतस्तिबादिसूत्रेण प्राप्तस्यात्मनेपदस्य नियामकेना "शिषि नाथ" इति सूत्रेणा[ख]ऽनाशिषि तन्निषेधात्· तस्मा'न्नाथति स्तनयुग'मिति पठनीयम्· ननु नाथत इति रूपं संस्कृतमेव, तथाचार्थविशेषे न तथेति वक्तव्यम्· एवं चार्थदोषत्वं प्राप्तमिति, मैवम्, यत्र शब्दपरिवर्त्तनेपि यो दोषो ऽनुवर्त्तते, तस्यार्थदोषत्त्वम्· यस्तु तथा सति निवर्त्तते, तस्य शब्ददोषत्त्वमिति विभागात्· अत्रार्थाऽप्रतीतिर्दूषकताबीजमिति नित्यदोषत्त्वम्· अनुकरणे ऽर्थपरत्वाभावाद्दोषत्वाभावः ॥ (२)

अप्रयुक्तं, तथा ऽनुशासनसिद्धमपि कविभिर्यन्न प्रयुक्तम्· यथा—

यथायं दारुणाचारः सर्वदैव विभाव्यते, ।
तथा मन्ये दैवतो ऽस्य पिशाचो राक्षसो ऽथवा ॥

(क) ०पाण्डर० इत्येकत्रानतिशयितार्थकः· पाण्डरशब्दः पाण्डुरार्थकोऽव्युत्पन्नं प्रातिपदिकम् ।

(ख) वस्तुतस्तु वार्त्तिकमिदम् ।

अत्र "दैवतानि पुंसि वे"त्यनेनाऽऽम्नातोऽपि पुल्लिङ्गो दैवतशब्दः कविभिर्न क्वापि प्रयुक्तः· नन्वत्र किं दूषकताबीजम्· न तावच्छक्तिविरह,स्तत्सत्त्वात्· शक्तिस्मृतिविरह इत्यपि नास्ति, शब्दानुशासनेन तद्ग्रहे स्मृतौ प्रतिबन्धकाभावादिति चेत, पदार्थोपस्थितिविलम्बस्तद्बीजम्· अत एव श्लेषयमकादावदोषत्व,मुद्भटालङ्कारसम्पत्त्या प्रतीत्यऽविलम्बस्य तत्रानुद्देश्यत्वात्· वस्तुतस्तु, तादृशकविसमयविलङ्घनप्रयोजनानुसन्धानव्यग्रतया मुख्यार्थविच्छित्तिर्दूषकताबीजम्· अत एवानुकरणे दोषाभावः· यमकादावप्यदोषत्वम्· अन्यत्राऽप्रयुज्यमानस्यापि तदर्थं कविभिः प्रयोगस्य दर्शनेन व्यग्रताभावादिति ॥ (३)

असमर्थमित्यत्रार्थे नञ्· तेन यत्तदर्थपरिपठितमपि प्रकृतस्थले विवक्षितार्थसामर्थ्यरहितमित्यर्थः· समर्थस्यैवाऽसामर्थ्यं विरुद्धमिति चेच, उपसन्दानोपजीवित्वात्सामर्थ्यस्य· यथा हनधातोः पद्धतिजघनजङ्घादिषु पदादिपदोपसन्दानेन मार्गाद्यर्थोपसन्दानेन वा गतौ सामर्थ्यं, न पुनरविशिष्टस्य· यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्क्रतिः[(क)] ।
सुरस्रोतस्विनीमेव हन्ति संप्रति सादरम् ॥

अस्यार्थानुपस्थितिर्दूषकताबीजमिति नित्यता ॥ (४)

निहतार्थम्,निहतः प्रसिद्धेनार्थेनाऽप्रसिद्धतया व्यवहितो विवक्षितोऽर्थो यस्य तत्· गूढेऽप्यर्थे क्वचित्प्रयोगाच्चाऽप्रयुक्तसंकरः· उदाहरणम्—

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥

अत्र शोणितपदम्· अस्य हि रुधिरे प्रसिद्धि,रप्रसिद्धिस्तूज्ज्वलीकृतत्वरूपे विवक्षितार्थे· दूषकताबीजं प्रसिद्धस्यैव द्रागुपस्थित्या विवक्षितस्य विलम्बोपस्थितिः·[(ख)] अतो यमकादावदोषत्वम्,तत्रोपस्थितिविलम्बस्यापि सहृदयसम्मतत्वेनाऽविलम्बस्यानुद्देश्यत्वात् ॥ (५)

(क) ०सत्क्रिय इत्येकत्रानतिशायि ।
(ख) विलम्बोपस्थितिरित्येकत्र, नार्थे विशेषकम् ।

अनुचितार्थम्, अनुचितो विवक्षितार्थतिरस्कारको ऽर्थो यस्य तत्. यथा–

तपस्विभिर्या सुचिरेण मृग्यते प्रयत्नतः सत्रिभिरिष्यते च या, ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥

अत्र शौर्य्यं प्रतिपाद्ये पदान्तरानपेक्षमेव पशुपदं कातरतामभिव्यनक्ति,तदर्थे तस्या ऽदर्शनात्. विरुद्धमतिकृत् पदान्तरसापेक्षं तथेति तस्माद्भेदः. दूषकताबीजं च विवक्षिततिरस्कारकार्थोपस्थितिः. अतो ऽस्य नित्यदोषत्वम् ॥ (६)

निरर्थकम्, अविवक्षितार्थकम्. वृत्तनिर्वाहमात्रप्रयोजनकमिति यावत्. अत एव वाक्यालङ्कारभूतं यमकादिनिर्वाहकं च खल्वादिपदमदुष्टम् .तच्च निपातरूपं चादिपदं, बहुवचनादि वा. उदाहरणम्–

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥

अत्र 'हि'पदम्, अर्थस्या ऽविवक्षणात्. दूषकताबीजं त्वस्य चिन्त्यताम्. तद्धि न तावदर्थानुपस्थितिः, पदान्तरैरेव यावदभिधेयोपस्थापनात्. न चैवमवाचकादौ, तत्र तदभिधेयस्य वाक्यार्थघटकस्य पदान्तरैरनुपस्थापनात्. नापि प्रतिकूलवर्णवद्रसविरोधिता, चादीनां सार्थकत्वस्थलेऽपि रसविरोधित्वप्रसङ्गात्, स्वरूपस्य तादूप्यादिति. उच्यते–निरर्थकं प्रयुञ्जानस्य वचसि सहृदयानां वैमुख्यं दूषकताबीजम्, प्रयोजनानुसंधानव्यग्रता वा ॥ (७)

अवाचकं, विवक्षितधर्मविशिष्टस्य विवक्षितधर्म्मिणि क्वापि न वाचकं यत्, तदित्यर्थः. अत एवा ऽसमर्थाद्भेदः. तस्य क्वचिच्छक्तिस्वीकारात् एतादृशविशिष्टविरहश्च क्वचिद्धर्म्मिणि शक्तावपि विवक्षिते प्रकारे शक्तिविरहात्, क्वचित्प्रकारे शक्तावपि धर्म्मिणि शक्तिविरहात्, क्वचित्प्रकारधर्म्मिणोरुभयोरपि शक्त्यभावात्. तत्राद्यं द्विधा,अपेक्षितयोगमनपेक्षितयोगं च. तयोराद्यं यथा– (शेषमग्रे)

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 159. Vol. XI.)

स्थानिवदादेशोऽनल्विधौ ॥ ननु तत्स्थानापन्नस्य तद्धर्म्मलाभो लोकवेदयोः सिद्ध एव. लोके तावदेकस्मिन्नुपाध्याये मृते तत्स्थाननिविष्टस्या[1]प्यभिवादनाद्युपाध्यायधर्मलाभो भवति, एकस्मिंश्च राजनि प्रोषिते तत्स्थानेऽभिषिक्तस्य तत्पुत्रादेरपि तद्धर्म्मलाभो भवति, वेदेऽपि व्रीहिस्थाना[2]पतिता नीवारादयोऽवघातादीन् व्रीहिधर्मान् लभन्ते. तद्वदत्राप्यस्तिस्थानापन्नो भूरस्तिधर्म्मान् धातुत्वादीन् लप्स्यते नार्थोऽनेनेत्याशङ्क्याह । 'स्थान्यादेशयोरित्यादि' । अयमभिप्रायः । उपाध्यायत्वप्रयुक्ता उपाध्यायधर्म्मा राजधर्माश्चाभिषिक्तत्वप्रयुक्ता व्रीहिधर्माश्चापूर्वसाधन[3]त्वनिबन्धना न तत्तत्स्वरूपनिबन्धना इति युक्तं तत्प्रकारजुषां भवन्तीति, इह तु स्वं रूपमितिवचनादस्त्यादिस्वरूपनिबन्धना धातुत्वादयो धर्म्मा न भवनाद्यर्थाभिधानलक्षणकार्यप्रयुक्तास्तच्च स्वरूपमादेशानां नास्तीति तत्स्थानापन्नानामपि न स्युरिति तदाह । 'पृथ[4]क्त्वादिति' । रूपभेदादित्यर्थः । नन्वतत्प्रकारजुषोऽपि तत्स्थानापन्नस्य तद्धर्मलाभो दृश्यते, यदा ह्युपाध्यायः शिष्येण यज्ञार्थमुपनिमन्त्रितः कार्यव्यासङ्गात् स्वशिष्यमन्यं प्रेरयति तदा स तत्र गत्वाऽऽसनादीनुपाध्यायधर्म्मान् लभते, अत्राप्युपाध्यायप्रतिनिधित्वात् तद्बुद्ध्यैव तद्धर्म्मा अनुष्ठीयन्ते, एवं कृते तु सत्युपाध्याय इति न तत्स्थानापन्नतया, न चैवमत्र संभवतीत्यारब्धव्यमेव सूत्रम् । युष्मदस्मदोरादेशनिषेधात्सिद्धम् । यदयं 'युष्मदस्मदोरनादेश'इत्याह तज्ज्ञापयति भवति स्थानिकृतमादेशइति, अलाश्रये चाप्रसङ्गो जग्धिल्यब्ग्रहणात् । यदि हि स्थान्यलाश्रयमप्यादेशे स्यात् किती-

१ अर्थेति पा॰ २ ।
२ स्थानपतितेति पा॰ २ ।
३ विशेषेत्यधिकम् २ पुस्तके ।
४ स्थान्यादेशयोरित्यधिकं २ पुस्तके ।

त्येव सिद्धे ल्यब्ग्रहणमनर्थकं स्यात् । सत्यम् । उत्तरार्थं तावत् स्थानिव-दादेश इति वक्तव्यम् । अजादेशस्य विषयविशेषे स्थानिवत्त्वं वक्ष्यामि, पदान्तादिविधिषु प्रतिषेधं वक्ष्यामीति सोऽन्यार्थः सन्निहैव क्रियते लिङ्गानाश्रयणाय । षोढातिदेशो, निमित्तातिदेशो व्यपदेशातिदेशः, शास्त्राति-देशो, रूपातिदेश,स्तादात्म्यातिदेशः, कार्यातिदेश, इति । तत्र निमित्तम-शक्यमतिदेष्टुं ब्राह्मणवत्[1], नहि ब्राह्मणस्यापभे।जनादिनिमित्तं ब्राह्मण्यं वचनशतेनापि क्षत्रियेऽतिदेष्टुं शक्यते 'पूर्ववत्सन' इत्यत्रापि न प्रकृतिग-तन्निमित्तं ङित्त्वादि सनन्ते ऽतिदिश्यते, किं तु प्रकृतिगतमेव तत् सना व्यवधानेऽप्यात्मनेपदनिमित्तमिति ,एतावता निमित्तातिदेशवाचो ऽयुक्तिः । व्यपदेशातिदेशः संज्ञापक्षात्र भिद्यते तत्र च वतेरानर्थक्यं वक्ष्यते, कः पुनरायुष्मतो व्यपदेशो ऽभिप्रेतः, किं स्थानीति व्यपदेशः, यथा 'आद्यन्तव-देकस्मिन्' इत्यत्र व्यपदेशातिदेशपक्ष, उत स्थानिनो ये व्यपदेशा धातुर-ङ्गमित्यादयस्तआदेशस्य भवन्तीति, पूर्वः पक्षो भवतोऽप्यनभिप्रेतः, द्विती-यस्य तु संज्ञापक्षान्महान् भेदः । तथाहि । संज्ञापक्षे यत्र स्थानिरूपमु-च्चार्यत 'आङो यमहन' इत्यादौ तत्रैव कार्यं स्याद् न धातोस्तव्या-दयो ऽङ्गस्येनादय इत्यादौ, नह्यत्र संज्ञात्वेन विनियुक्तमस्त्यादि स्थानि-रूपमुच्चारितं यच्चोच्चारितं न सा संज्ञा, आदेशस्यैव कार्यं स्याद् न स्थानिनो, नहि संज्ञाच्चारिता स्वयं कार्यंण युज्यते,'स्थानिनस्तु व्यपदेश आदेशस्यातिदिश्यमाने धातोस्तव्यादयो ऽङ्गस्येनादय इत्यादौ स्थान्याद-शयोरुभयोरपि कार्यं सिद्ध्यति, उभयोरपि व्यपदेशसद्भावात् । 'आङो यम-हन' इत्यादिकं तु स्थानिस्वरूपनिबन्धनं कार्यमादेशस्य न स्यात्, नह्यत्र कश्चिद्व्यपदेशो य आदेशस्यातिदिश्येत, अथापि स्वं रूपमिति वचनाद्वधि-त्यपि हन्तेर्व्यपदेश इति तस्मिन्नतिदिष्टे कार्यं सिध्यतीत्युच्यत एवमपि पूर्वोक्तस्तावद्विशेषो विद्यतइत्यास्तामेतत् । अप्रधानत्वात्तु व्यपदेशो न भव·

---

१ यद्यपि बहुषु पुस्तकेषु ब्राह्मणवदित्येव पाठ उपलभ्यते तथाप्यर्थसंगत्या-ब्राह्मणवदित्येव पाठस्स्थापितः । सोऽपि पाठो लोपनीयश्चेद् ब्राह्मणवदीत्यस्यार्थं इतिवाक्येनेति शोधयित्वा कथं चित् लोप्यताम् ।

ति । अत एव शास्त्रातिदेशोपि न भवति । स्थानिरूपे चाऽ[1]तिदिश्यमान-आदेशविधानं व्यर्थं स्यात् । न च वचनद्वयप्रामाण्याद्विकल्पो 'वा लिटीति' विकल्पारम्भात् । तादात्म्यातिदेशो ऽसंभवाच्च भवति. द्वयोर्हि सहावस्थितयोरन्योन्यतादात्म्यमतिदिश्यते सुबामन्त्रितयोरिव, इह त्वादेशेन स्थानी निवर्त्तित इत्यसंभवः, अतः पारिशेष्यात्प्राधान्याच्च कार्यातिदेशोयं तदाह । 'स्थान्याश्रयकार्यमिति' । 'स्थान्याश्रयेषु कार्येष्विति' च । तात्पर्यतश्चायं कार्यातिदेशो व[2]र्ण्यते, अक्षराणि त्वादेशः स्थानिना तुल्यं वर्त्ततइत्येतावत्येव पर्यवसितानि, केन तु प्रकारेण तुल्यत्वमित्यपेक्षायां तत्कार्य्यापत्त्येति तदाह । 'स्थानिना तुल्यं वर्ततइति' । 'स्थानिवदिति' । 'स्थान्याश्रयेष्विति' । बहुव्रीहिः । अनल्विधावित्यस्यार्थमाह । 'अनलाश्रयेष्विति' । एतेन विधीयतइति विधिः कार्यम्, अलाश्रयो विधिरल्विधिरित्युत्तरपदलोपी समास इति दर्शयति, किमर्थं पुनरुत्तरपदलोपाश्रयणम् । स्यादेतत् । सति तस्मिन् यश्चालि विधिः, यश्चालो विधिः, यश्चालः परस्य विधिः, यश्चाला विधिः, [3]सर्वश्चासावलाश्रय इति सर्वत्र प्रतिषेधः सिध्यति, तत्रालि विधिः । यजे. क्तः इष्टः, क इष्ट इत्यत्र संप्रसारणस्य स्थानिवत्त्वात् को यष्टेत्यादिव 'दृशि चे'त्युत्वं प्राप्तं न भवति, स इष्ट इत्यत्र एतत्तदोः सु लोपो न भवति । अलो विधिः, द्युकामः । उकारस्य 'लोपो व्योर्वली'ति न भवति । उत्वं तु अहर्विमलद्यु इत्यत्र चरितार्थम् । अलः परस्य विधिः । द्यौः, पन्थाः, सः । हल्ङ्याब्भ्यिति लोपो न भवति । अला विधिः । व्यूढोरस्केन । अत्र 'सोपदादा'विति विसर्जनीयस्य स्थाने विहितस्य स्थानिवत्त्वात् विसर्जनीयस्याट्सूपदेशाद् अड्व्यवाये इति णत्वं प्राप्तं न भवति । अतः सर्वविभक्त्यर्थसंग्रहार्थमुत्तरपदलोपाश्रयणम् । अन्यथा हि षष्ठीसमास एवाश्रीयते ऽलस्थानिक एव विधिराश्रितः स्यादिति, तच, सम्बन्धसामान्ये षष्ठीविज्ञानादपि सर्वविभक्त्यर्थसंग्रहस्य सिद्ध-

१ अतिदेशस्येत्यधिकं २ पुस्तके ।

२ वर्ण्यत इति पा० २ ।

३ स सर्व एवेति पा० २ ।

स्यात्, अनुवादे हि स्थानियोगाभावात् सर्वाल्सम्बन्धी विधिः प्रतिपत्स्यत,-एवं तर्हि यत्र गुणभावेनाप्यलाश्रीयते तत्रापि निषेधो यथा स्यात् प्रपठ्येति, अत्र हि वलादेरिति प्रत्ययः प्राधान्येनाश्रितो वल् तु गुणभावेनेति अप्राधान्यान्न स्यात्, उत्तरपदलोपे तु भवति अलाश्रयत्वादिड्विधेः। यद्यलाश्रयेषु स्थानिवत्त्वं न भवति वृत्ताय 'सुपि चे' ति दीर्घो न स्यात् यञादौ सुपीत्यलाश्रयत्वात्। अरुदितामित्यत्र सार्वधातुकस्य तसस्तामादेशे 'रुदादिभ्यः सार्वधातुक' इति वलाश्रय इण् न स्यात्, अत आह 'स्थान्यलाश्रयाणीति'। स्थानिनो ऽल् स्थान्यल्स आश्रयो येषां तानि तथोक्तानि। अयमभिप्रायः। यथा गुरुवद्गुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात् पादोपसंग्रहणाच्चेति अतिदेशे प्रवृत्ते यदा गुरुपुत्रः स्वयं गुरुर्भवति तदोच्छिष्टं भुज्यते पादौ चोपसंगृह्येते तत्कस्य हेतोरतिदेशेनैकवाक्यतामापन्नः प्रतिषेध आतिदेशिकीमेव प्राप्तिं प्रतिषेधतीति तथेहाप्यातिदेशिक एवाल्विधिः प्रतिषिध्यते, न च वृत्ताय अरुदितामित्यत्रातिदेशापेक्षा स्वयमेव यञादित्वाद्वलादित्वाच्च, ततश्च यत्र स्थानिन एवालाश्रीयते स एव निषिध्यते यथा प्रपठ्येत्यत्र, नह्यत्र ल्यप् स्वयं वलादिरिति। ननु च गुरुपुत्रस्य स्वयं गुरुत्वउच्छिष्टभोजनादौ न मात्रयाप्यतिदेशापेक्षा, इह तु सत्यपि स्वयमेव यञादित्वे नान्तरेणातिदेशं दीर्घः सिद्ध्यति असुप्त्वात् ? अरुदितामित्यत्रापि सत्यपि स्वयं वलादित्वे ऽसार्वधातुकत्वादतिदेशेनैव वेट् प्रार्थनीयः। सत्यम्। द्वे कार्ये सुप्संज्ञा च दीर्घत्वं च, नहि प्रयोगसमवाय्येव कार्यमतिदेश्यमिति नियमोस्ति, यत्तु शास्त्रीयं तदेवातिदिश्यते, न च सुप्संज्ञा ऽलाश्रयेति तस्यामतिदिष्टायां स्वाश्रयं यञादित्वमाश्रित्य दीर्घत्व भविष्यति, अरुदितामित्यत्राप्यातिदेशिकं सार्वधातुकत्वं स्वाश्रयं च वलादित्वमाश्रित्येड् भविष्यति। ननु च वृत्तायेत्यत्र स्थानिन एकारस्याल्त्वात्तदाश्रयं सुप्त्वमलाश्रयमेव, उच्यते। कार्यापेक्षमल्विधित्वं नोदाहरणापेक्षम्, एतदुक्तं भवति। यस्मिन् कार्ये विधीयमाने ऽल एवासाधारणं किं चिद्रूपं निमित्तादिरूपेणाश्रीयते हशि हलि व्योर्वलि हल् ङ्याब्भ्यः आङ्ह्रस्वायदिति स

एवाल्विधिः, 'सुपि चे' त्यत्र तु नैवंविधं किं चिदस्ति, केवलं वृत्तायेत्यत्रोदाहरणेऽलात्मकः स्थानीत्येतावत् किमुदाहरणमिति प्रश्नः । 'धात्वादेशाः प्रयोजनमित्युत्तरं, तत्र प्रयुज्यते ऽनेनेति प्रयोजनमुदाहरणं न प्रयुज्यतइत्यर्थात्प्रश्नानुरूपं प्रतिवचनम् । ननु चास्तिब्रुवोरार्द्धधातुके परत आदेशाभ्यां भाव्यं तत् किं[1]मतिदेशेनेत्यत आह । 'आर्द्धधातुके विषयइत्यादि' । दाधिकं, दध्नि संस्कृतं 'दधष्ठक्' । 'अव्ययादेशइति' । क्त्वामात्रस्य ल्यबादेशः क्त्वान्तस्याव्ययसंज्ञा स कथमव्ययादेशः, तस्मात् क्त्वाग्रहणेन ल्यपो ग्रहणात्तदन्तस्यापि संज्ञा भवतीत्येवं परमेतत् । तत्रापि 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण' मिति प्रस्तुत्येति संघातस्य भवति । 'वत्करणं किमिति' । विनापि तेन तदर्थो गम्यते, यथा [2]ङित्किदित्यादाविति प्रश्नः । 'स्थानीत्यादि' । असति वत्करणे संज्ञाप्रकरणत्वात् स्थान्यादेशस्य संज्ञा विज्ञायेत मैवं विज्ञायीति वत्करणमित्यर्थः । किमर्थं पुनः स्थान्यादेशस्य संज्ञा नेष्यतइत्याह । 'स्वाश्रयमपीति' । संज्ञायां हि स्थानिस्वरूपनिबन्धन 'माङो यमहन' इत्यादि[3] कार्यमादेशएव स्याद्, न स्थानिनि, नहि संज्ञोच्चारिता स्वयं कार्येण युज्यते । 'आत्मनेपदेष्वन्यतरस्या' मिति च विषयसप्तमी विज्ञायते, 'स्वाश्रयमपीति' । कोर्थः, स्थानिन्यपीत्यर्थः । तथा चोत्तरग्रन्थउभयत्रेति सप्तमीनिर्द्देशः । 'आदेशग्रहणं किमिति' । यथा पितृवत्स्थूल इत्युक्ते सम्बन्धिशब्दात्पुत्र इति गम्यते, तथेहापि स्थानिवदित्युक्ते क इत्यपेक्षायां यदपेक्षं स्थानित्वं स एवादेश इति गम्यतइति प्रश्नः । 'आनुमानिकस्येत्यादि' । द्विविधो हि आदेशः प्रत्यक्षश्चा- 'स्तेर्भू' रित्यादिः, आनुमानिकश्च 'एह' रित्यादिः । अत्रेकारेणेकारान्तः स्थान्यनुमीयते, विषाणेनेव गौः । उकारेण चोकारान्त आदेशः, ततस्तेस्तुरिति संपद्यते । तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नानुमानिकस्य, पुनः श्रुतेस्तु व्याप्त्यर्थत्वाद् आदेशमात्रं स्थानिवद्भवति । तेन

१ अत्रेत्यधिकं ४ पुस्तके ।

२ लिद् किदिति ४ पुस्तके पाठः ।

३ आर्वधिष्टेत्यधिकं ४ पुस्तके ।

पचत्वित्यत्र तिङन्तं पदमिति पदसंज्ञा सिद्धा भवति। ननु चेकारमात्रस्यो-कारमात्रमादेशोऽस्तु किं तदन्तानुमानेन, एवं हि 'एरु' रित्येतच्च यथा-श्रुतमेव व्याख्यातं भवति आदेशग्रहणं च न कर्त्तव्यं भवति, 'एकदेश-विकृतस्यानन्यत्वा' त्पदसंज्ञा भविष्यति, एवं तर्हि पुनः श्रुतिरेव लिङ्गम् एकदेशविकारः शास्त्रे नाश्रीयतइति, तेन

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥

इति सिद्धं भवति। 'ह्रुपधेत्यत्रादेशा इति'। 'दिव औत्,' 'पथिमथ्यृभुक्षामात्,' 'त्यदादीनाम,' इत्येते। ननु सामान्यातिदेशे विशेषानतिदेशस्ततश्च यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति ब्राह्मणमात्रकार्यमेव भवति न माठरादिविशेषकार्यं, तथा स्थानिवदादे-श इत्युक्ते यः स्थानी यदाकारविशिष्टः सूत्रे श्रुतस्तदादेशस्य तदाकारप्रयु-क्तेनैव कार्येण भवितव्यं, क्त्वो ल्यबित्यत्र च वस्तुस्थित्या सन्निहितमपि वलादित्वं स्थानिरूपेण नाश्रितम्। तथाहि। इडादिरपि क्त्वा भवत्येव, क्त्वा केवलोपि, दत्वायेति यगन्तोपि, इष्ट्वीनमिति मान्तोपि, तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं ह्रस्वप्रत्ययत्वादि तदादेशे ऽतिदिश्यतां वला-दित्वस्य तु कुतोतिदेशः। एवं क इष्ट इत्यादावपि च यण इक् भवति, दिवो ऽलोन्त्यस्यौत्वौत्वे भवतः, पथ्यादीनामन्त्यस्याद्भवति, त्यदादीनाम-न्त्यस्याकारः, विसर्जनीयस्य सत्वमित्येवं यणादिरूपेण स्थानिन आश्रयणं ततश्च तत्तदाकारप्रयुक्तस्यैव कार्यस्यापि अतिदेशो न हल्त्वादिविशेष-निबन्धनस्येति नार्थो ऽनल्विधाविन्यनेन, यत्र तर्हि विशेषरूपमेव स्थानि-त्वेनाश्रीयते यथा च्छ्वोः शूडिति वकारः, तत्र तत्कार्यमादेशस्य मा भूद् अक्षद्यूभ्यां वलि लोपो न भवति। अथात्रापि वकारान्तस्याङ्गस्यालोन्त्यस्यो-ऽडिति रूपेण स्थानिन आश्रयणम्, एवमपि विशेषातिदेशज्ञापनार्थमिदमु-च्यते, अन्यथा ल्यपो वलादित्ववत् कित्त्वस्याप्यतिदेशो न स्यात्, देवित्वे-त्यादावकितोपि क्त्वः सम्भवात्, अनुबन्धाश्च स्थानिन्यसन्त एव कार्येषु

युज्यन्तइति तत्कार्येष्वनल्विधाविति निषेधो न भवति, लिङ्गाच्च । यदयं 'सेड्यपिच्चे' त्याह, तज्ज्ञापयति भवत्यनुबन्धकार्याणामतिदेश इति ॥

अचः परस्मिन् पूर्वविधौ ॥ 'अच इति स्थानिनिर्देश इति' । यद्यप्यनूद्यमानादेशविशेषणत्वात् स्थानषष्ठी न लभ्यते तथाप्यचो य आदेश इत्युक्ते तत्स्थानिक एव प्रतीयतइति. परस्मिन्निति निमित्तभावे सप्तमी न परसप्तमी, परशब्देनैव परत्वस्योक्तत्वात्, परस्मिन्य आदेश इति अनुवादस्याच्च, क्तिति येगुणवृद्धी इतिवत्, पूर्वविधाविति विषयइति प्रकृतत्वात् स्थानिवत्त्वस्य, पूर्वविधौ कर्तव्ये स्थानिवदिति, एवं पदतात्पर्यं दर्शयित्वा वाक्यार्थमाह । 'अजादेश इत्यादि' । किमर्थमिदमुच्यते, पूर्वत्र स्थानिकार्यमादेशेतिदिष्टमिह तु स्थानिनि सति पूर्वस्य यत्कार्यं तदादेशेपि सति पूर्वस्य भवतीत्यतिदिश्यते । ननु तत्रापि स्थानिनिमित्तमन्यस्य तदप्यतिदिश्यते, यथा वृक्षायेति 'सुपि चे' ति दीर्घत्वम् । एवं तर्ह्यत्विधार्थमिदम् । तथाहि । वव्रश्चेत्युरदत्वे 'न संप्रसारणे संप्रसारणमि' ति वकारस्य संप्रसारणप्रतिषेधः स्थान्यलाश्रयो ऽस्मादुचनाद्भवति, इदं च संप्रसारणे परतः प्रतिषेध इति पक्षे प्रयोजनं, संप्रसारणभाविनि यण्येव प्रतिषेध इति तु पक्षे न प्रयोजनम् । इहाचितीकः बहुचितीक इति चितेः कपि दीर्घत्वे कृते 'ह्रस्वान्तेन्त्यात्पूर्व' मिति स्थान्यलाश्रयः स्वरो भवति, एवं यातेर्यङन्तात् क्तिचि अतो लोपे यलोपविधिं प्रति स्थानिवत्त्वनिषेधाद्यलोपे च यायाति इति स्थिते यङकारलोपस्य स्थानिवत्त्वा 'दातो लोप इटि चे' त्याकारलोपे पुनर्यलोपे यातिरिति भवति । न च पुनराकारलोपः पुनश्च यलोप इति प्रत्ययमात्रस्य श्रवणप्रसङ्गः, अाल्लोपस्य स्थानिवत्त्वाच्छ्रिणो लुङ्न्यायेनासिद्धत्वाद्वा, तथा च वरे विधौ स्थानिवत्त्वं निषिध्यते यायावर इति, स्थानिवद्भावादातो लोपो माभूदिति, तथा तिष्ठतेर्यङन्तात् क्तिच् अल्लोपयलोपयोस्तेष्ठीति स्थिते अल्लोपस्य स्थानिवत्त्वादियङ् भवति, तथा चोत्तरसूत्रे कण्डूतिरित्यत्र उवङ्प्रसङ्गं चोदयित्वाऽस्तु तस्यैव क्नोः शूडित्यूट् करिष्यतइत्युक्तं, इयङि च कृते यलोपे च तेष्ठितिरिति भवति, न च पुनरियङ्, आदिष्टादचः पूर्वत्वात्, तथा पेपीयतेः क्तिचि अल्लोपय-

लोपयोरेरनेकाच इति यणि यलोपे पेप्तिरिति भवति, शोतनूकरणे यङ्न्तात् क्विपि अल्लोपयलोपाल्लोपेषु पूर्वत्रासिद्धीये न स्थानिवदिति स्थानिवत्त्वनिषेधात्ककशां ष इति षत्वे शार्ष्टिरिति भवति, एवं विचायते[1] श्चेक्तिरित्येवमादिक्, तथा तितञमावष्टइति णिचि टिलोपस्य स्थानिवत्त्वादचो ञ्णितीत्यस्याभावे 'अत उपधाया' इति स्थान्यलाश्रया वृद्धिर्भवति । न चात्र क्नितुगुपधात्वेत्युपधाविधिं प्रति स्थानिवत्त्वनिषेधस्तस्य प्रत्ययविधिविषयत्वात्सत्यां च वृद्धौ पुकि सति तितापयतीति भवति । न च पुक्यपि स्थानिवत्त्वम्, आदिष्टादचः पूर्वत्वात् । ननु पूर्वस्य कार्ये कर्त्तव्ये सति स्थानिवत्त्वेन भवितव्यम्, अत्र च सर्वत्र स्थानिवत्त्वे सति पूर्वस्य कार्यप्राप्तिरिति इतरेतराश्रयम्, नात्र स्थानिवत्त्वात् प्रागेव पूर्वस्य कार्ये प्राप्ते स्थानिवत्त्वं किं तर्हि प्राग्वा पश्चाद्वा पूर्वस्य कार्ये चिकीर्षिते । अत एव वरे विधौ स्थानिवत्त्वनिषेधस्तदेवमल्विध्यर्थमिदम्, किं च ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमित्यत्र ब्राह्मणाश्रयं कार्यं प्राप्यते न तु स्वाश्रयं युद्धादिकं व्यावर्त्यते पूर्वसूत्रेपि स्थान्याश्रयं प्राप्यते न स्वाश्रयं व्यावर्त्यते यथा वृत्तायेति दीर्घत्वमादेशाश्रयं भवति, भविता भवितुं भवितव्यमिति गुणः, इह तु स्थान्यलाश्रयमेवेष्यते स्वाश्रयं नेष्यते, तथा च पटयतीति टिलोपे कृते प्राप्ता उपधावृद्धिर्न भवति, अवधीदि[2]ति हलन्तलक्षणा । बहुखट्वक इति ह्रस्वान्तेन्त्यात्पूर्वमिति स्वरो न भवति, वाय्वोर्यलोपो न भवति, तन्वन्तीतीण् न भवति, एवं बहूनि स्वाश्रयनिवृत्तेरुदाहरणानि । अत एव द्विर्वचनादिविधौ स्थानिवत्त्वनिषेधः । अतोजादेशः परनिमित्तकः पूर्वस्य विधौ स्थानिवदेव यथा स्यात् मा भूत्स्वयंनिमित्तमिति नियमार्थमपीदमारब्धव्यम् । कथं पुनरेकेन यत्नेनोभयं लभ्यं विधिश्च नियमश्च, विधिग्रहणसामर्थ्यादिति तन्निरूपणे वक्ष्यामः । अथ वा विधिग्रहणं विधिमात्रे स्थानिवद्भावो यथा स्यादशास्त्रीये च विपरीते च, तेन पटयतीत्यादौ स्थानिनि दृष्टो वृद्ध्यभावादिरशास्त्रीयो ऽप्यतिदिश्यते, तत्र

1 "चेचीयतेः क्विपि चेक्तिरिति पाठान्तरम् २ पुस्तके ।
2 दिहेति पा· २ पुस्तके ।

वृत्तिकारेण यत्नसाध्यत्वादशास्त्रीयोदाहरणानि दर्शितानि, विधिशब्दः कर्म्मसाधनः पूर्वस्येति शेषलक्षणषष्ठी, पूर्वस्य व्यवस्थितस्य सतः सम्बन्धिनि कार्यें कर्त्तव्ये इति, पूर्वत्वं त्वत्राजपेक्षमाश्रीयते नादेशापेक्षं निमित्तापेक्षं वा, न चाजपेक्षे पूर्वत्वे विधिशब्दो भावसाधनः सम्भवति, भावसाधने हि तस्मिन् पूर्वस्येति कर्म्मणि षष्ठीविज्ञानात् पूर्वस्मिन्विधातव्ये स्थानिवदित्यर्थः स्याद्, अवस्थिते चाचि ततः पूर्वे किं चिद्विधेयं भवति, इहंचा'देशः स्थानिवदितिवचनात् आदेशेन स्थानी निवर्तित इति नायमर्थः सम्भवति, अत्रादेशः परनिमित्तकस्तस्यैवादेशस्य स्थानिभूतो योच् ततः पूर्वस्मिन्विधातव्य इति । तथाहि । अचो य आदेश इत्यादेशात्प्रागवस्थानूद्यते, ततश्च संनिधानात् प्रतीयमानमवधित्वमपि तदवस्थस्यैवाचो युक्तम् । अत एवोच्यते यो ऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावइति । आदेशनमादिष्टं तदकृतं यस्य सोनादिष्टः, अकृतादेशादचः पूर्वस्येत्यर्थः । आदेशात्प्रागवस्थायामिति यावत्, न चास्या अवस्थायाः पूर्वस्मिन् विधातव्ये तदादेशः स्थानिवदिति सम्भवति । ननु कर्म्मसाधनेप्यजादेशः स्थानिवद्भवति अकृतादेशादचः पूर्वस्य विधाविति नायमर्थः सम्भवति, स्थानिवद्भावदशायामच आदेशेन निर्वर्त्तितत्वात्, नात्र सम्प्रत्यचः पूर्वस्येत्ययमर्थः किं तर्हि अचोवस्थानदशायां पूर्व्वत्वेन दृष्टस्याजवस्थाप्रभृतिपूर्वस्येत्यर्थः, तदेवमजपेक्षस्य पूर्वत्वस्याश्रयणात् कर्म्मसाधन एव विधिशब्दः, किं पुनः कारणमजपेक्षमेव पूर्वत्वमाश्रीयते न पुनरादेशापेक्षं निमित्तापेक्षं वा, उच्यते, तदपेक्षे पूर्वत्वे वैयाकरणः सौवश्व इत्यत्र स्थानिवद्भावादैचोरायावौ प्राप्नुतस्तावपि हि यणादेशात्तन्निमित्ताच्च परस्मादचः पूर्वस्य कार्यं, न च वाच्यं सत्यपि स्थानिवत्त्वे ऽन्तर्भूताज्निमित्ततया ऽन्तरङ्गयोरायावोः कर्त्तव्ययोर्बहिर्भूतताद्भूतापेक्षतया बहिरङ्गावैचावसिद्धावित्यायावौ न भविष्यत इति । नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरितिवचनात् । यथा अवद्युरिति बहिर्भूतक्विपपेक्षोप्यूडन्त-

१ चाजादेशइति पा॰ २ पुस्तके ।

२ बहिःप्रक्लृप्तिरिति पा॰ २ पुस्तके ।

भूताजपेक्षे यणि नासिद्धो भवत्यजपेक्षे तु पूर्वत्वे विप्रकारणः सुश्रव- इत्यजवस्थायां ग्वोरभावेनैत्रोरदर्शनादप्रसङ्गस्तद्‌ाह । अचः पूर्वत्वविज्ञाना- देचोः सिद्धमिति, किं च निमित्तापेक्षे पूर्वत्वे द्वाभ्यां देयं लवनमित्यत्रात्वे- त्वगुणाः स्वनिमित्तात्पूर्वेषां स्वेषामेव कार्येषु दीर्घगुणावादेशेषु स्थानि- वत्स्युस्तयोभयोरपि पवयोरपीपवदित्यादौ सन्वल्लघुनीति सन्वद्भावो न स्यात्, उपधाह्रस्वस्य स्थानिवत्त्वादलघूपधत्वात्, अजपेक्षे तु पूर्वत्वे पाचि अत् इति स्थिते द्विर्वचनमुपधाह्रस्वत्वं णिलोप इत्येतेषु प्राप्तेषु परत्वादन्तरङ्गत्वाच्च णिलोपे कृते परत्वान्नित्यत्वाच्च ह्रस्वत्वे च पश्चा- द्विर्वचने ऽभ्यासस्य स्थानिनोऽचः पूर्वत्वेनादृष्टत्वान्नास्ति स्थानिवद्भाव- स्तथा च तत्र तत्रोच्यते योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानि- वद्भाव आदिष्टाच्चैषोऽचः पूर्व इति, तस्मादजपेक्षमेव पूर्वत्वम् । यत्रैव तन्वन्तीत्यत्रेटि कर्त्तव्ये यणः स्थानिवत्त्वं न स्यात् तनुअन्तीत्यजव- स्थायां यत्पूर्वमङ्गं न तस्येट् किं तर्हि ततः परस्यादेशस्यैव, निमित्तापेक्षे तु यणो निमित्तादन्त्यकारात्पूर्वस्य तस्यैव यण इड्विधेय इति कर्म- साधने भावसाधने च विधिशब्दे स्थानिवत्त्वं लभ्यते, आदेशापेक्षेऽपि भाव- साधने यणः पूर्वत्वेनेटो विधेयत्वात्सिध्यति । नैष दोषः । आर्द्धधातुकस्ये- डित्यत्र एकाच उपदेशेऽनुदात्तादित्यत उपदेशइत्यनुवृत्तेरुपदेशे वलादेरिड्भविष्यति, नन्दक इत्यत्रापि तर्हि प्राप्नोति, 'नेड्वशि कृतीति' निषेधो भविष्यति । तत्राप्युपदेशइत्यनुवृत्तेरेवमपि चोरिष्यतइत्यादौ वलादिलक्षणो चिणवदिटि च प्राप्ते नित्यत्वाच्चिणवदिडिति, वक्ष्यति नित्यश्चायं वह्निर्निमित्तविघाती- ति । तच्चोपपद्यते, उक्तेन प्रकारेण वलादिलक्षणस्यापीटो नित्यत्वात् । एवं तर्हि बहिरङ्गस्य यणो ऽसिद्धत्वादिडभावः । यद्वा पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासोप्याश्रीयते, तेन पूर्वस्मादङ्गादिटो निमित्त- त्वेनाश्रितात्परस्य यण इटि कर्त्तव्ये स्थानिवद्भविष्यति ॥

( शेषमग्रे )

॥ श्रीः ॥

श्रों नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम्

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम्

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page* 161. VOL. XI.)

भू० तत्कार्य्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम् । तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्य्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते ॥

इतश्च न प्रधानम् ।

सू० स्वाप्ययात् ॥ १० ॥

तदेव सच्छब्दवाच्यं प्रकृत्याह "स्वप्नान्तम्मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवतीति, सुषुप्तं जीवं सता सम्पन्नं स्वमपीतः स्वस्मिन्प्रलीन इति व्यपदिशति ।

टी० "तत्कार्य्यभूतचेतनाचेतनप्रपञ्चस्ये"ति, मृत्पिण्डतत्कार्य्यादिदृष्टान्तबलात्सन्मूलाः सर्वाः प्रजा इति वाक्ये प्रजा–शब्दस्वारस्याच्च चेतनस्यापि कार्य्यतयैव ज्ञातत्वं वक्तव्यमिति भावः । ज्ञाततयैवोपपादनीयमिति देवदत्तज्ञानेन ग्रामविज्ञानवचात्र सर्वविज्ञानमौपचारिकम् औपचारिकत्वे सर्वविज्ञानस्य लोकदृष्टत्वेन कथं नु भगव इति प्रश्नायोगात् अनन्यभूतमृत्तत्कार्यादिदृष्टान्तमुखेन मुख्यतयैव सर्वविज्ञानोपपादनदर्शनाच्चेति भावः । उक्तविपर्ययेण प्रतिज्ञाविरोधं दर्शयति "तत्त्वि"ति, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं कार्य्यकारणभावनिबन्धनं सुषुप्तौ परमा-

त्मनि चेतनस्य प्रलयश्च तन्निबन्धन इति कार्य्यकारणभावनिबन्धनत्व-साम्यात्सङ्गतम् । सुषुप्तौ लयं हेतुत्वेनाहेत्यभिप्रयन्नाह "इतश्चे"ति, सू० स्वाप्ययात् सच्छब्दस्य जीवोपस्थापकस्वशब्दसमानविषयत्वनिबन्ध-नामर्थान्तरत्वशङ्कां व्युदस्यति "तदेव सच्छब्दवाच्यमि"ति, जगत्कार-णवस्तुविषय एवात्रापि सच्छब्द इत्यभिप्रायः । यत्र—यदेत्यर्थः । ननु सता सम्पत्तिः प्रकृतिसंसर्गोऽस्तु स्वाप्ययोऽपि जीवस्य स्वस्वरूपेऽवस्थानमिति स्वसच्छब्दयोर्भिन्नार्थः स्यादिति नैतद्वाक्यं प्रधानकारणत्वविरोधीति तदे-तत्परिहरन्व्याचष्टे "सुषुप्तमि"ति, स्वमपीत इतीदं विवृणोति "स्वस्मि-न्प्रलीन"इति, स्वमिति द्वितीया सतेति तृतीया च फलतस्सति सम्पन्नेति सप्तम्यनुगुणार्था, व्यपदेशभेदस्तु धातुस्वभावभेदादित्यभिप्रायः अपीतेर्व्या-प्तिरूपत्वाद् द्वितीयानिर्देशः, "ब्रह्मैव सन् ब्रह्माप्येति" "यत्प्रयन्त्यभिसं-विशन्ती"ति हि श्रुत्यन्तरं साहित्यसद्भावात् तृतीयानिर्देशः, सम्पन्न इति कर्मणि निष्ठा वा तदानीं सम्पत्तेः प्राप्तिरूपत्वात्सतः कर्तृत्वविवक्षया तृतीया, प्राज्ञेनात्मना सम्परिष्वक्त इति वदप्ययस्य स्थानसापेक्षत्वात्स-प्तमीनिर्देशः

भा० प्रलयश्च स्वकारणे लयः, न चाचेतनं प्रधानञ्चेतनस्य जी-
वस्य कारणम्भवति स्वमपीतो भवति आत्मानमेव जीवो-
ऽपीतो भवतीत्यर्थः । चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव
जीव—शब्देनाप्यभिधीयत इति नामरूपव्याकरणश्रुत्योक्तं
तज्जीव—शब्दाभिधेयं ब्रह्म सुषुप्तकालेऽपि प्रलयकाल इव
नामरूपपरिष्वङ्गाभावात्केवलसच्छब्दाभिधेयमिति सता
सोम्य तदा सम्पन्नो भवति स्वमपीतो भवतीत्युच्यते,
तथा समानप्रकरणे नामरूपविभागपरिष्वङ्गाभावेन प्राज्ञे-
नैव परिष्वङ्गात् प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं कि-
ञ्चन वेद नान्तर"मित्युच्यते, आमोक्षाज्जीवस्य नामरूपप-

रिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः, सुषुप्तिकालेऽपि हि नामरूपे विहाय सता सम्परिष्वक्तः पुनरपि जाग्रद्दशायां नामरूपे परिष्वज्य तन्नामरूपा भवन्तीति श्रुत्यन्तरे स्पष्टमभिधीयते—

टी० व्युत्पत्तिवशेन प्रलयवाचिनां शब्दानां स्थानापेक्षाया उत्कटत्वात् सप्तम्यनुरोधेन व्याख्यातम्, एवं सम्पत्त्यप्यय—शब्दयोः प्रलयपरतयैकार्थ्यमुक्तं, स्वसच्छब्दयोश्च प्रलयस्थानपरतयैकार्थ्यमुक्तम् । अयमभिप्रायः—सता सोम्य तदा सम्पन्नः सति सम्पद्येति प्रतिज्ञानिगमनवाक्यमध्यगतस्य स्वाप्ययवाक्यस्यानपेक्षितार्थान्तरपरत्वेऽन्वयवैषम्यं स्फुटम् । अथैतदपियन्त्यन्ततः ब्रह्मैव सन् ब्रह्माऽप्येति तदा सम्पद्यते ब्रह्मेत्यादिप्रयोगप्राचुर्यादप्ययसम्पत्ति—शब्दस्वारस्योपस्थापितस्य प्रलयस्य स्थानप्रतिपादकत्वात् स्वसच्छब्दयोरेकार्थत्वपर्यवसायित्वमुचितम् । जीवेनात्मना तत्त्वमसीति जीवात्म-शब्दयोस्त्वन्तच्छब्दयोरिव च स्वसच्छब्दयोरपि जीवरूपेण स्वेन रूपेण चावस्थितकारणवस्तुविषयतयैकार्थपरत्वं प्रकरणवशादप्युचितम् । जीवादर्थान्तरे सति तस्य लयानुपपत्तिरिति शङ्कापरिहारार्थं स्व—शब्दाभिधेयस्य तस्य सत्पर्यन्तताप्रतिपादनस्यापेक्षितत्वाच्च तयोरेकार्थत्वं युक्तमिति । अस्तु लयस्थानोपस्थापकयोः स्वसच्छब्दयोरैकार्थ्यं तत्तु स्व—शब्दस्य स्वीयपरत्वेन स्वसच्छब्दयोरुभयोरपि प्रधानपरत्वेऽप्युपपद्यत इत्यत्राह "प्रलयश्चे"ति, कार्य्यतारूपविसदृशावस्थाप्रहाणेन कारणान्तर्भावो हि लयः । ततोऽपि किं? मित्यत्राह "न चे"ति अचेतनम् अचित्त्वादित्यर्थः, स्थूलावस्थस्य जीवस्य सूक्ष्मावस्थे स्वकारणीभूते सत्तायोगिनि स्वात्मनि लयोपपत्तेः सच्छब्दस्य तत्परत्वं सम्भवतीति शङ्कां व्युदसितुमाह—

सू० "यदा सुषुप्तः स्वप्नं न कथंचन पश्यति अथास्मिन्प्राण एवैकधा भवति तस्माद्वा एतस्मादात्मनः प्राणा यथाऽऽयतनं

१ वैघट्यमिति पा० ।

विप्रतिष्ठन्ते तथा त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्तीति।

टी "तथा सुषुप्तमि"ति, स्वव्यदेहेन्द्रियानपेक्षत्वादिगुणकपरमकारणविषयत्वात् तत्संवादि श्रुत्यन्तरानुगुण्याच्च नात्र सच्छब्दोऽति ऽसङ्कुचितज्ञानसद्भावस्थजीवमात्रविषय इत्यभिप्रायः । ननु नित्यस्य जीवस्य लयोऽनुपपन्नः कार्य्यकारणयोरनन्यत्वाज्जीवविलक्षणस्य परस्य तत्कारणत्वायोगात्तस्मिंज्जीवलयश्चानुपपन्नः, नैवं, सर्वदा जीवविशिष्टस्य परमात्मनोऽवस्थाविशेषरूपकार्यकारणभावोपपत्तेः, तथा हि स्वमपीत इत्यत्र स्वशब्दस्तावन्न जीवमात्रपरः, "सता सोम्य तदा सपन्नो भवति स्वमपीतो भवती"ति स्वशब्दस्य सच्छब्दसमानविषयत्वात्, सच्छब्दस्य चास्मिन्प्रकरणे परमात्मविषयत्वात्, नापि निष्कृष्टब्रह्मपरः, नित्यनिर्विकारस्य तस्योपादानत्वायोगेनाप्ययस्थानत्वायोगात्, कार्य्यस्य प्रलय उपादानभाव एव, अतो जीवरूपेणावस्थितपरमात्मपरत्वं वक्तव्यम्, तत्रापि न शुक्तौ रजतस्येव लयः, तस्येव जीवस्य स्वरूपनिवृत्तिप्रसङ्गात्, नापि महाकाशे घटाकाशस्येव लयः, देहाद्युपाधेरवस्थितत्वात्, नापि क्षितितले घटस्येव लयः, घटत्वस्येव जीवत्वस्य प्रहाणे जीवनित्यत्वश्रुतिविरोधादुपाधेरवस्थितत्वेन जीवत्वप्रहाणायोगात्, आमोक्षावस्थायितयाऽभिमतस्य जीवभावस्य स्वापमात्रेण निवृत्तौ मोक्षोपायवैयर्थ्यप्रसङ्गात्, प्रकृताभ्यागमादिप्रसङ्गात् प्रत्यभिज्ञाविरोधात्, प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरमिति तदानीमज्ञत्वसर्वज्ञत्वाभ्यां भेदव्यपदेशाच्च जीवत्वे स्थित एव स्वाप्ययस्य सर्वैरभ्युपगन्तव्यत्वात्, अतो भेदादेव स्वशब्दोजीवविशिष्टपरमात्मपरः, अत एव ह्युक्तं सारे, "आत्मानमेव जीवोऽपीतो भवतीत्यर्थः जीवस्वरूपो हि पर एव नामरूपव्याकरणश्रुते"रिति तस्य सम्पत्तिर्नाम बहिर्मुखज्ञानप्रसररहितजीवरूपेणावस्थानं, निर्गमो नाम बहिर्मुखज्ञानप्रसरः । ननु कथं देहविशिष्टस्य सतो जीवस्य स्थिते देहे विशेष्यांशलयः? नैवं विशेष्यांशे रागद्वेषाद्यन्वयवत् तत्रैव प्रलयरूपावस्थान्वयोपपत्तेः । ननु तर्हि स्वापे ज्ञानेन देहधारणाभावात्स्वरूपेण धारणस्य महाप्रलयेऽपि

तुल्यत्वात् देहस्य जीवं प्रत्यपृथक्सिद्धिर्देहलक्षणं च न घटते, न, जीवस्य देहापरित्यागाद्देहस्य तत्सङ्कल्पेन धारणयोग्यत्वाच्च । पृथक्सिद्धिदेहलक्षणोपपत्तेः, अतो मनुष्यादिनामरूपाभिमानरागलोभाद्यनुगुणबहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः—

सू० तथा सुषुप्तं जीवं प्राज्ञेनात्मना सम्परिष्वक्त इति च वदति, तस्मात्सच्छब्दवाच्यं परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव ।

टी० परमात्मा देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यविरहितजीवशरीरकः स्वात्मन्यन्तर्भूत इति श्रुत्यर्थः । अप्ययस्य प्राप्तिरूपत्वात् स्वारे आत्मानमिति द्वितीयानिर्देशः, अप्ययस्य स्थानसापेक्षत्वात् स्वस्मिन् प्रलीन इत्युक्तं भाष्ये, एकस्य परमात्मनः स्थानस्थानिभावव्यपदेशश्चांशांशिभेदाभिप्रायः, घटादेर्लयस्थानस्य घटानुपयुक्तस्यापि पृथिव्यंशस्य हि कारणजातीयत्वात् कारणत्वं, ब्रह्मणि तु जीवविशेषविशिष्टतरितरांशभेदेन स्थानस्थानिभावो धर्म्यैक्यात्कारणत्वं, कारणावस्थाऽन्वयिनि धर्मण्यन्तर्भावः सर्वत्र समानः, अत औपाधिकाकाराभिमानुगुणज्ञानविकासवज्जीवविशिष्टता कार्य्यावस्था अतदभिमानजीवविशिष्टता कारणावस्था, तत्र प्रलयस्थानभूतस्य परमात्मनः कारणावस्थापेक्षया लीयमानांशस्य विसदृशावस्था हि नामरूपाद्यौपाधिकाकाराभिमानानुगुणज्ञानप्रसरवज्जीवविशिष्टता, तस्मादौपाधिकाकारानभिमानजीवविशिष्टतारूपकारणावस्थाश्रये स्वात्मन्यवस्थानं स्वाप्यय इत्यनुपपन्नम् ।

अत एव जीवस्य नित्यत्वाविरोधश्च ज्ञानसङ्कोचविकासविशेषव्यतिरेकेण जीवत्वप्रहाणाभावात्, आमोक्षाज्जीवभावस्य स्थिरत्वं हि परैरप्यभिमतम्, अतस्तदविरोधेन स्वाप्ययो वर्णनीयः, तदानीं प्राज्ञेनात्मना सम्परिष्वक्त इति भेदप्रतिपादनाविरोधश्चैवं सति भवति, एवं विध एव प्रलयो महाप्रलयोऽपित्यभ्युपगन्तव्यं, जीवबहुत्वानादित्वकर्मवासनावि-

शेषवस्थित्यभ्युपगमेन वैषम्यनैर्घृण्यादेः परिहर्तव्यत्वात्, न च नविज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति ज्ञाननित्यत्वश्रुतिविरोधः तस्य सङ्कोचमात्रवतस्तुच्छत्वाभावात्, न च प्रसरोपलम्भयोरभावात् ज्ञानद्रव्यस्य तुच्छत्वं शङ्कनीयं, न ह्यनुल्लितरत्नप्रभायाः प्रसरोपलम्भयोरभावान्नास्तित्वं "यथा न क्रियते ज्योत्स्नामलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथेति" हि स्मृतिः आत्यन्तप्रलयेऽपि यथोक्तप्रकार उपपद्यते, तदानीं नामरूपाद्यौपाधिकाकाराभिमानरूपविसदृशदशाप्रहाणेन कारणावस्थे परमात्मन्यवस्थानात्, औपाधिकाकाराभिमानाहंत्वरूपकार्यावस्थाविरहितजीवविशिष्टत्वं हि परस्य कारणावस्थत्वं, विकृतिविरहितजीवविशिष्टत्वमिति यावत्, तन्महाप्रलये मुक्तौ च समानम् । ननु "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तर"मिति सुषुप्तौ प्राज्ञत्वाज्ञत्वरूपवैषम्यावगमात् मोक्षे चेश्वरत्वेशितव्यत्वादिवैषम्यस्थित्यभ्युपगमात्, भवदभिमतप्रलयप्रकारोऽनुपपन्न इति, नैवं कारणत्वावस्था-

सू० तदाह वृत्तिकारः "सता सोम्य तदासम्पन्नो भवतीति सम्पत्त्यसम्पत्तिभ्यामेतदध्यवसीयते प्राज्ञेनात्मना सम्परिष्वक्त इति चाहेति ।

मपेत्य विसदृशावस्थाया विवक्षितत्वात्, नामरूपाद्यौपाधिकाराभिमानविरहितजीवविशिष्टता कारणावस्था तदपेतया विसदृशावस्थां च तादृगभिमानवज्जीवविशिष्टता, तत्प्रहाणस्य चात्र विद्यमानत्वात् सुषुप्तौ लय उपपन्नः, मोक्षे चेशितव्यत्वादिवैषम्याचात्यन्तिकप्रलयविरोधि ईशितव्यताया अवस्थारूपत्वाभावात्, कादाचित्कधर्मो ह्यवस्था, ईशितव्यत्वादि तु नित्यं, "सईशो ऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यतईशनाय" "यस्यात्मा शरीरं य आत्मानमन्तरो यमयती"त्यादि श्रुतेः, अतो नेशितव्यत्वादिकमवस्थेति वैधर्म्यरूपस्यापि तस्याप्रहाणं न दोषः, अतो यथोक्त एव स्वाप्ययः । सोत्रं हेतुं परमसाध्येन सङ्गमयति "तस्मादि"ति अप्ययस्थानस्य परमकारणत्वायाह "परं ब्रह्मे"ति, जीवव्यावृत्त्यर्थं सर्वज्ञ-शब्दः, प्राज्ञेनात्मनेति

ह्नि श्रुतिः तदैक्षतेत्येतत्संवादिनी अप्ययेऽपि जीवनियन्तृत्वज्ञापनार्थमीश्वरोत्तीर्णतत्त्वव्युदासार्थं च परमेश्वर-शब्दः, सुषुप्तपुरुषवैलक्षण्यपरो देवताविशेषपरश्च पुरुषोत्तम-शब्दः, व्याख्यानान्तरव्यावृत्त्यर्थमाह "तदाहे"-ति, सम्पत्त्यसम्पत्तिभ्यामिति सति सम्पद्य न विदुः सति सम्प[1]त्स्यामह इति सत आगम्य नविदुः सत आगच्छामह इत्युक्ताभ्यां सम्पत्तिविगमाभ्यामित्यर्थः। यद्वा परमात्मनि सम्पत्त्या अन्यत्र असम्पत्त्या चेत्यर्थः, स्वाप्यय-शब्देनासम्पत्तिरप्यभिप्रेतेति वृत्तिकारस्य भावः । एतत्परब्रह्मकारणत्वमित्यर्थः ॥

इतश्च न प्रधानम्

सू॰ गतिसामान्यात् ॥ ११ ॥

भू॰ "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किंचन मिषत् स ऐक्षत लोकान्नुसृजा स इमाँल्लोकानसृजत इति तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" "तस्य ह वा एतस्य महतोभूतस्य निश्वसितमेतदृग्वेद इत्यादिसृष्टिवाक्यानां या गतिः-प्रवृत्तिः, तत्सामान्यात्-तत्समानार्थत्वादस्य तेषु सर्वेषु सर्वेश्वरः कारणमवगम्यते, तस्माद्चापि सर्वेश्वर एव कारणमिति निश्चीयते ।

इतश्च न प्रधानम् ।

सू॰ श्रुतत्वाच्च ॥ १२ ॥

भू॰ श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपयोर्व्याकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चानेन जी-

१ संपद्यामह इति पा॰ ।

येनात्मनाऽनुप्रविश्य नामरूपे व्याकरणवाणि" "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितं तस्मिन्कामाः समाहिताः ।

टी० पूर्वसूत्रे यन्नेनात्मनेत्यादेस्सुषुप्तिविषयस्य श्रुत्यन्तरस्य प्रकृतार्थोपपादकतया बुद्धिस्थत्वात् कारणस्य परमात्मत्वमपि कारणविषयैः श्रुत्यन्तरैरुपपाद्यते, सू· गतिसामान्यात् पूर्वं गौणश्चेन्नात्म-शब्दादित्युक्त्वात्म-शब्दवतीः श्रुतीरुदाहरति "आत्मा वा" इत्यादिना, तस्य ह वा एतस्येत्यत्राप्यात्म-शब्दः श्रूयते आत्मा वा अरे द्रष्टव्यः आत्मनि खल्वरे दृष्टे योऽन्यत्रात्मनस्सर्वं वेदेति च, गति-शब्दं व्याचष्टे "प्रवृत्ति"रिति, बोधनव्यापारपरः प्रवृत्ति-शब्दः भिन्नप्रवृत्तिनिमित्तानामित्यत्र प्रवृत्तिशब्दवत्, समानत्वमर्थद्वारकमित्याह "तत्समाने"ति, ततः किमि? त्यत्राह "तेषु चे"ति, ततोऽपि किं? मित्यत्राह "तस्मादि"ति, न केवलमुपनिषदन्तरेषु अत्रैव सर्वेश्वरकारणत्वं स्फुटमित्याह सू· "श्रुतत्वाच्च, आत्मत्वेन नामरूपव्याकर्तृत्वं दर्शयति "अनेन जीवेने"ति, सर्वज्ञत्वसर्वशक्तित्वे तदैक्षत बहु स्यामित्यादिवाक्येन पूर्वमेव दर्शिते, सन्मूला इति सूचिते च आधारत्वं दर्शयति "सदायतना" इति, यच्चास्येति च धारकत्वं चात्मत्वेनेति दर्शयति 'ऐतदात्म्य"मिति, न ह्यत्र कारणतया कार्याधारत्वमात्रं विवक्षितमिति भावः । यच्चेत्यादिकं सत्यकामत्वप्रतिपादनोपयुक्तं च । अपहतपाप्मत्वादिगुणान् दर्शयति-

मू० एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासस्सत्यकामः सत्यसङ्कल्प" इति, तथा च श्रुत्यन्तराणि "न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गं स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" "सर्वाणि रूपाणि विचित्य

धीरो नामानि कृत्वाऽभिवदन् यदास्ते अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा विश्वात्मानं परायणं पतिं विश्वस्यात्मेश्वरं यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण"इत्यादीनि तस्माज्जगत्कारणवादिवाक्यानि न प्रधानप्रतिपादनयोग्यानि, अतः सर्वज्ञस्सर्वशक्तिस्सर्वेश्वरो निरस्तसमस्तदोषगन्धोऽनवधिकातिशयासंख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति च स्थितम् ।

टी० "एष आत्मे"ति, उक्तगुणवैशद्यार्थमनुक्तगुणदर्शनार्थं तद्गत ईश्वरत्वदेवताविशेषत्वस्फुटीकरणार्थं च पूर्वसूत्राभिप्रेतान्यनुदाहृतानि श्रुत्यन्तराणि उदाहरति "तथा चे"ति, नन्वेतत्सूत्रविषयवाक्यत्वेनास्य सूत्रस्य छान्दोग्योपनिषन्मात्रविषयत्वं दीपसारयोरप्युक्तं "श्रुतमेव छान्दोग्योपनिषदी"ति नात्र क्रमविवक्षा लिङ्गं शरीरं नाशब्दमित्युपक्रमसूत्रानुरोधेन प्रधानस्याप्रतिपाद्यत्वं निगमयति "तस्मादि"ति, तेन फलितं ब्रह्मणः प्रतिपाद्यत्वं निगमयति "अत"इति, सर्वज्ञत्वादयस्सर्गादिकारणत्वापयोगिगुणाः शोधकवाक्योक्तगुणा निरस्तनिखिलेत्यादिनोक्ताः अनवधिकेत्यादिना पुरुषार्थत्वञ्च सूचितम्, ओघ-शब्दोऽस्ति चेत् गुणानामन्यत्रापर्य्यवसायित्वं दर्शयति, महार्णव-शब्दो गुणेभ्योऽपि तदाश्रयस्य महत्त्वं दर्शयति, पुरुषोत्तम-नारायण-शब्दौ पुरुषसूक्तनारायणानुवाकसिद्धविशेषपर्य्यवसायित्वं कारणशोधकवाक्यानां दर्शयन्तौ चिदचिद्विलक्षणत्वं तच्छरीरकत्वं च दर्शयतः, निखिलजगदेककारणमिति निखिल-शब्देन गगनादिकमपि कवलीकृतम्, एक-शब्देन निमित्तोपादानत्व अभिप्रेते, एषां सूत्राणां ब्रह्माज्ञानवादितोऽननुगुणत्वं पूर्वमुक्तं विस्तरेणाह "अत एवे"ति, सूत्रकारे-

योति न्यायनिबन्धनकृतेत्यभिप्रायः, आभिरित्यर्थप्रत्यायकत्वं विवक्षितम् न्यायानुगृहीताभिर्विशदार्थाभिः श्रुतिभिरिति भावः । किञ्च प्रामाणिकस्याप्रामाणिकत्वाभिमानादपसिद्धान्तता सिद्धान्तस्यापि भ्रान्तिमूलत्वादप्रामाणिकता च लोके दृष्टेति तदुभयव्यवच्छेदार्थंसूत्रकारश्रुत्योर्निर्देशो निरस्तो वेदितव्य इति निरासः फलित इत्यर्थः । अत एवेत्युक्तं विवृणोति "पारमार्थिके"ति, ईक्षणस्यापारमार्थिकत्वे साङ्ख्याभिमतं प्रधानमेव ब्रह्म स्याच्छुक्तित्वापारमार्थ्ये हि रजतमेव परमार्थः स्यादिति साङ्ख्यनिरासोऽनुपपन्नः स्यादिति पारमार्थिक–शब्दाभिप्रायः, शच्छब्दोक्तस्वरूपस्य संशयसहत्वात्, अतिरिक्तेन व्यावर्त्तकेन भाव्यमिति गुण–शब्दस्य भावः अतस्सदादिशब्दानां साङ्ख्याभिमतप्रधानपरत्वव्यवच्छेदसिद्ध्यर्थमीक्षणादिगुणतत्पारमार्थिकत्वविवक्षाश्रद्धिस्सूत्रैर्निर्विशेषनिरासः फलित इत्यर्थः । तदैक्षतेत्यादिवाक्यानि साक्षित्वमात्रपराणि न तु गुणविशेषपराणि । साक्षित्वमात्रेणापि सूत्राभिमता प्रधानव्यावृत्तिः सिध्यतीत्यत्राह "निर्विशेषे"ति, सच्छब्दोपस्थापितविमतिपदस्वरूपातिरेकेण साक्षित्वमप्यपारमार्थिकं त्वन्मत इत्यर्थः, ज्ञातृत्वाभावे साक्षित्वमपि न सिध्यतीति प्रागेवोक्तमित्यपि–शब्दाभिप्रायः । अपारमार्थिकत्वे किं स्यादित्यत्राह "वेदान्ते"ति, न ह्यारोपिताकारस्तत्त्वावेदकप्रमाणविषयः न चार्वाचीनं ब्रह्म जिज्ञास्यतया

भू० अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेणाऽऽभिः श्रुतिभिर्निरस्तो वेदितव्यः, पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात्, निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकं, वेदान्तवेद्यं ब्रह्म जिज्ञास्यतया प्रतिज्ञातम् ।

प्रतिज्ञातमिति भावः । ततः किमित्यत्राह "तत्त्वे"ति, ततोऽपि किं न ह्यस्माभिरचेतनमुच्यत इत्यत्राह "चेतनत्वञ्चाम चैतन्यगुणयोग"इति, ईक्षितृत्वं हि न चिद्रूपतामात्रमित्यभिप्रायः । निर्विशेषनिरासस्य फलितत्वं निगमयति "अत"इति, न ह्यत्र चिद्रूपतामात्रेण प्रधानव्यावृत्तिः सूचिता

ऽपि त्वीक्षणयोगेन तदनभ्युपगच्छतोऽव्यावर्तकाभावे व्यावृत्तिरेव न स्यादित्यर्थः पारमार्थिकेत्यादिना एतदधिकरणविरोध उक्तः, वेदान्तेत्यादिना पूर्वाधिकरणैर्विरोध उक्तः । यद्वा स्वरूपमेव साक्षित्वं न धर्म्मः अतो नापारमार्थिकमित्यत्राह—

सू० तच्च चेतनमिनीक्षतेर्नाशब्दमित्यादिभिः सूत्रैः प्रतिपाद्यते, चेतनत्वं नाम चैतन्यगुणयोगः, अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव । किञ्च निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य स्वप्रकाशत्वमपि दुरुपपादं, प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः, निर्विशेषस्य वस्तुनस्तदुभयरूपत्वाभावाद्घटादिवदचित्त्वमेव तदुभयरूपत्वाभावेऽपि तत्समत्वमस्तीति चेत्तन्न तत्समत्वं हि तत्सामर्थ्यमेव, सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तः स्यात् । अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यते इति चेत्, हन्त तर्हि तत एव सर्वज्ञता, सर्वशक्तित्वम्, सर्वेश्वरेश्वरत्वं, सर्वकल्याणगुणाकरत्वम्, सकलहेयप्रत्यनीकतेत्यादयः सर्वेऽभ्युपगन्तव्याः, शक्तिमत्त्वं च कार्य्यविशेषानुगुणत्वं, तच्च कार्य्यविशेषैकनिरूपणीयम्, कार्य्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिमत्त्वमपि निष्प्रमाणकं स्यात् । किञ्च निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणम् ।

टी० "वेदान्ते"ति, । स्वरूपमेव चेत् पूर्वसूत्रैः सिद्धमिति प्रतिपाद्याधिक्याभावादीक्षतेरित्यादिसूत्रवैयर्थ्यमित्यभिप्रायः । स्वरूपविशेषोऽप्रतिपन्न इति चेत् किं स्वरूपमेव विशेषः? उत स्वरूपस्य विशेषः? प्रथमे

प्रागुक्तदोषः, द्वितीये सविशेषत्वम् । पूर्वसूत्रेषु ब्रह्म कारणात्मना सिद्धं न तु चेतनरूपेण अतः ईक्षतेरित्यादिसूत्राणामारम्भणीयत्वमिति शङ्कायां चेतनरूपेण प्रतिपाद्यत्वमभ्युपगच्छन्नाह "तच्चे"ति, चेतनतया प्रधानव्यावृत्तिश्चैतन्यगुणविरहे न सिध्यतीति वक्तुं चेतनत्वं शोधयति "चेतनत्वं नामे"ति.गुण-शब्दो धर्मपरः । ततः किमित्यत्राह"अत"इति,व्यावर्तकाभावाद्व्यावृत्त्यसिद्धिरित्यर्थः । चेतन-शब्दस्य स्वरूपमात्रपरत्वेऽधिकरणारम्भवैयर्थ्यमर्थसिद्धं न प्रधानतुल्यत्वं प्रकाशत्वाभ्युपगमात् यथाऽऽत्मधर्मभूतज्ञानस्यज्ञानान्तरायोगेऽप्यचिद्व्यावृत्तिस्त्वन्मतेतद्वदित्यत्राह"किञ्चे"ति,कथं दुरुपपादत्व ? मित्यत्राह "प्रकाशो ही"ति, व्यवहारयोग्यता-व्यवहारप्रतिसम्बन्धिता तदुभयरूपत्वाभावात्स्वव्यवहारहेतुत्वपरव्यवहारहेतुत्वाभावादित्यर्थः । अथ तदुभयवत्त्वं शङ्कते "तदुभये"ति, तद्वत्त्वमभ्युपगम्य दूषणमाह "तचे"ति, परस्य अगतित्वं दर्शयितुमाह "अथे"ति, परिहरति "हन्त तर्ही"ति, तद्वत्त्वमेव नास्तीत्याह "शक्तिमत्त्वं चे"ति, कार्य्यविशेषस्य निरूपणात्मकत्वे स्वपरव्यवहारयोग्यतापादनाभावे निरूपकाभावे निरूप्याभाव इत्यर्थः, वस्तुत्वे सम्भवत्यपि प्रधानतुल्यत्वमुक्तम् । अथ वस्तुत्वमेव न सिध्यतीत्याह "किञ्चे"ति, वस्तुत्व-तुच्छव्यावृत्तत्वं, कुत ? इत्यत्राह "प्रत्यक्षे"ति, प्रत्यक्षान्तर्भूतस्यापि स्वानुभवस्य पृथक्प्रमाणत्वं परमताभ्युपगमेनोक्तं, सविशेषगोचराः-वस्तुतः सविशेषभूतार्थगोचरा इत्यर्थः, वस्तुत्वं चिदचित्साधारणम् तच्च तुच्छव्यावृत्तत्वं तन्न सिध्यतीत्यर्थः । परपक्षदूषणानन्तरं स्वपक्षं निगमयति "तस्मादि"ति, परैस्त्वेवं सूत्रयोजना कृता-प्रधानं न प्रतिपाद्यम् अशब्दं हि तत् शब्देन प्रतिपादयितुमशक्यं हि तत्, अशक्यत्वं चेक्षतिश्रवणादिति

सू० प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगोचरा इति पूर्वमेवोक्तम्, तस्मादिचिच्चेतनाचेतनात्मकजगद्रूपेण बहु स्यामितीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्यं ब्रह्मेति सिद्धम् ।

टी० नैवोचिता प्रतिज्ञावाक्ये धर्म्युपस्थापकशब्दस्याध्याहार्य्यत्वात् अशब्दं हि तदित्युक्तेऽपि हेत्वन्तरसाकाङ्क्षत्वाच्च "नानुमानमतच्छब्दात्" "आनुमानिकमप्येकेषा" मित्यादिसूत्रेष्वानुमानिकादिशब्दवदशब्द-शब्दस्याप्यवयवार्थमुखेन धर्म्युपस्थापनक्षमतयाऽध्याहारनिरपेक्षत्वादवयवशक्त्यैवानुमानाकारतावगमरूपपूर्वपक्षबीजस्य सूत्रेणैव द्योतमानत्वसिद्धेश्च भाष्यकाराभिमता योजना साधीयसी गौणश्चेचात्म-शब्दादित्यत्रात्म-शब्दस्य स्वरूपपरत्वमाश्रित्य जीवं निर्द्दिश्य सच्छब्दवाच्यस्य स्वरूपपरत्वेन व्यपदेशाद्गौणमीक्षणमित्यप्ययुक्तम्, तस्यामभोघेक्षणत्वायोगात् सूत्रास्वारस्याच्च, न हि गौणश्चेच जीवशब्दादित्युक्तं स्वरूपपर आत्म-शब्दस्सापेक्षः जीववाचिपदसमभिव्याहारेण विना तस्याविद्धावर्त्तनासामर्थ्यात् चेतनपरः स्वात्म—शब्दः एतदात्म्यमिदं सर्वमिति चिदचिदात्मकसमस्तप्रपञ्चं प्रत्यात्मत्वं दर्शयच्चिद्धावर्त्तनेऽतीव निराकाङ्क्षः, अतः साकाङ्क्षहेतुनिर्देशादपि निराकाङ्क्षहेतुनिर्द्देशो वरमिति तस्यापि सूत्रस्य-यथोक्त एवार्थः, चिदचिदात्मकसमस्तजगदन्तरात्मवाचिन आत्मशब्दस्य ममात्मा भद्रसेन इतिवन्मुख्यार्थानुपपत्त्यभावेन गौणत्वशङ्कानुदयादात्म-शब्देन गौण इति प्रतिज्ञावाक्यान्तरनिरपेक्षत्वाच्च तृतीयसूत्रमपि परमसाध्यहेतुवाचीति युक्तम् । सर्ववेदान्तानामेककण्ठत्वन्दर्शयता गतिसामान्यसूत्रेणैव श्वेताश्वतरवाक्यस्यापि क्रोडीकृतत्वात् श्वेताश्वतरवाक्यस्य श्रुतत्वादिति सूत्रविषयत्वाश्रयणमयुक्तम् । यत्तूक्तं यादवप्रकाशीये सता सम्पन्न इति सत्प्राप्तिमात्रमुक्तम् न त्वैक्यं सच्छब्दस्य प्रधानपरत्वेऽपि सति सम्पत्तिर्घटते स्वाप्ययश्च सर्वेषां जीवानां पृथक् पृथक् स्वस्मिन्नप्ययो भवतीति शङ्कापरिहाराय सुषुप्तौ जीवानां गन्तव्यस्य वस्तुन एकत्वं तत्र सति तेषामैक्यापत्तिश्च गतिसामान्यादिति सूत्रे-

सू० एवं जिज्ञासितस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानाद् व्यावृत्तिरुक्ता, इदानीं कर्मवश्यात्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःख-

सागरनिमज्जनेनाशुद्धात् शुद्धाच्च प्रत्यगात्मनोऽन्यन्नि-खिलहेयप्रत्यनीकं निरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते-

यदुच्यते विषयश्च "यथा सोम्य मधुनि मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसङ्गमयन्ति ते यथा यत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदु"रिति वाक्यं तदप्ययुक्तम् तथा हि दृष्टान्तानुगृहीतमेकताङ्गमयत्सति सम्पद्य न विदुरिति वाक्यं किं कारणत्वमुपजीव्य सतः प्रधानत्वव्युदासकम्? उत कारणत्वमनुपजीव्य प्रथमे गतिसामान्यसूत्रवैयर्थ्यं स्यात् स्वाप्ययस्य कारणत्वापत्तिरूपतया स्वाप्ययसूत्रेणैव प्रधानत्वव्युदाससिद्धेः दृष्टान्तवैघट्यञ्च । बहूनां रसानामेकस्मिन्कारणे लयस्य निदर्शितत्वाभावात् रसवतामवयवानां मधुरत्वरूपेण समानरसतापत्तिरेव हि तत्र दृश्यते, द्वितीये च जीवानां कीदृशमेकत्वं? सतः प्रधानत्वव्युदासकम् न तावज्जीवत्वप्रहाणेन सतैकत्वं जीवत्वप्रहाणस्य भवतामनभ्युपगमात् जीवनित्यत्वश्रुतिविरोधात्, प्राज्ञेनात्मना सम्परिष्वक्तोन बाह्यं किञ्चन वेद नान्तरम् इति अज्ञस्य जीवस्य तदा प्राज्ञाऽधिष्ठितत्वश्रवणविरोधात् पुनरपि व्यवस्थितकर्मफलभोगाद्यनुपपत्तेश्च न च सद्रूपेणैकत्वम् तज्जाग्रद्दशायामप्यस्तीति तदानीमिव जीवानां स्वापे स्वस्वरूपावस्थानप्रकृतिसंसर्गयोरविरोधाद्भिमनासिद्धेः । न च देवमनुष्यत्वरागद्वेषादिबाह्याभ्यन्तरविकल्पाभिमानविरहेणैकत्वं तस्यापि स्वरूपावस्थानप्रधानसंसर्गयोरविरोधित्वेन सम्पत्त्ययर्याधिकरणस्य स्वस्वरूपप्रधानव्यतिरेकासिद्धेः, अतः सूत्रवैयर्थ्यशङ्कापरिहारासिध्यत्यत एवावश्यंभावात् परीक्षार्थपरत्वं सूत्रस्यायुक्तम् । यच्च श्रुतत्वादिति सूत्रस्य प्रतिज्ञावाक्यप्रभृति स एषोऽणिमा ऐतदात्म्यमित्यादि वाक्यजातं विषयतयोक्तं तदप्ययुक्तम् प्रतिज्ञाविरोधात् नात्मशब्दादित्यादिभिः सौत्रपदैः अस्य पुनरुक्तिप्रसङ्गात् अतः सूत्राणां यथोक्त एवार्थः ॥

( शेषमग्रे )

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपददटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

---

(*Continued from page* 168. Vol. XI.)

वैकृतयूपकर्ममात्रापकर्षाधिकरणम् । सू० असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ १४ ॥

ज्योतिष्टोमे अग्नीषोमीयप्रणयनात्परतो यूपच्छेदनं पश्वङ्गमाम्नातं तद्दीक्षासु यूपं छिनत्सोऽत्यपकृष्यमाणमग्नीषोमीयप्रणयनादीन् अपकर्षति? उत ने? ति संशये प्रयाजवदाघारादीनपकर्षतीति प्राप्ते उच्यते "सौमिकेन पदार्थेन पाशुकस्य न हि क्रमः । अङ्गं तदपकर्षेण सौमिकेनापकृष्यते" । आघारोत्तरकालत्वं प्रयाजादीनामङ्गं तन्मा बाधीति युक्तं यत्तदपकर्षे आघारोऽपकृष्यते पाशुकस्य तु यूपच्छेदनस्य न सौमिकाग्नीषोमीयप्रणयनानन्तर्यमङ्गं यत्सिद्ध्यर्थं प्रणयनमपकृष्येत भिन्नप्रयोगवचनपरिगृहीतत्वात्तयोः, एकप्रयोगान्तर्गतानां मिथः क्रमोऽङ्गं भवति तस्मात्कृतमात्रापकर्षः ।

दक्षिणाग्निकहोमानपकर्षाधिकरणम् । सू० प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ १५ ॥

सवनीयपशुतन्त्रं सवनीयपशुपुरोडाशेषु प्रसज्यते दाक्षिणाग्निकौ तुषिष्टलेपफलीकरणहोमौ पशावविद्यमानौ पशुपुरोडाशार्थं कर्तव्यौ तौ पाशुकैरनुयाजैराग्निमारुतादूर्ध्वमुत्कृष्यमाणैरुत्कृष्येते न वेति संशये प्रकृतौ तत्परत्वेन दाक्षिणाग्निकयोः क्लृप्तक्रमत्वादुत्कर्षे प्राप्ते तत्रापि प्रयोगभेदादनुत्कर्षः पाशुकैरनुयाजैर्न पौरोडाशिकयोर्होमयोः क्रमोऽङ्गं यत उत्कृष्येयातां पौरोडाशिकास्त्वनुयाजा नैव क्रियन्ते नोत्कृष्यन्ते यैर्दाक्षिणाग्निकयोर्होमयोरुत्कर्षः तस्मात्तयोः स्वस्थानमेवानुष्ठानम् ।

पुरोडाशाभिघारणान्तस्य दर्शेऽनपकर्षाधिकरणम् । सू० तथाऽपूर्वम् ॥ १६ ॥

दर्शपूर्णमासयोर्हविरभिवासनोत्तरकालावेदिराम्नाता पूर्वेद्युरमावास्यायामपकृष्यमाणा हविरभिवासनान्तान् पदार्थानपकर्षति नेति संशये एकप्रयोजनसम्बन्धित्वात्पाठतश्च क्रमक्लृप्तेरनपकर्षे क्रमलोपेन विगुणा वेदिः स्यादिति प्राप्ते ब्रूमः "सामान्येन क्रमोऽङ्गं स्यात्पाठतः प्रक्रियावशात् । विशेषतः श्रुतं वाक्यादामावास्ये क्रमान्तरम् । हविरभिवासनोत्तरकालता हि दर्शपूर्णमासयोः सामान्यप्राप्त्याऽमावास्यायां स्यात्, पाठश्च तस्य प्रमाणं प्रकरणाच्च विनियोगः पूर्वेद्युरनुष्ठानं त्वमावास्यायामेव विशेषतो विहितं, श्रौतश्चायं क्रमः वाक्येन चामावास्यायां विनियोगः तत्र यावदेव हविरभिवासनोत्तरकालतारूपः क्रमो दुर्बलप्रमाणको नैव कल्प्यते तावत्पूर्वेद्युरनुष्ठानं चोद्यमानमक्लृप्तप्रक्रमस्य वेदिमात्रस्य चोद्यते न ततः प्राचां, तस्मात्तत्रापि श्रुतमात्रापकर्षः ।

सान्तपनीयाया अग्निहोत्रानुत्कर्षकताऽधिकरणम् ।

सू० सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥ १७ ॥

"मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरु"मिति श्रुता सान्तपनीया मध्यन्दिने उपक्रान्ता दैवान्मानुषाद्वा प्रतिबलात्सायङ्कालं यावदुत्कृष्टाऽग्निहोत्रमुत्कर्षति नेति संशयः, यद्यपि चात्र भिन्नप्रयोगयोः सान्तपनीयाग्निहोत्रयोर्न मिथः क्रमोऽङ्गं तथापि सायङ्काले द्वयोः सन्निपतितयोरवश्यंभाविनि पौर्वापर्ये सान्तपनीयां कृत्वा क्रियमाणस्य चाग्निहोत्रस्य कालातिपत्तिप्रसङ्गे सति किं न्याय्यमिति युक्ता चिन्ता, तत्र सान्तपनीया तावत्स्वकालं मध्यन्दिनमतिपन्नैव तस्याः कश्चिदुभयथाऽपि न विशेषः, अग्निहोत्रस्य तस्मिन्काले क्रियमाणस्य प्रणयनलोपः स्यात् उत्कर्षे तु काललोपः, तत्र कस्यानुग्रहः? कस्य लोप इति चिन्त्यते तत्र मुख्यत्वात्प्रणयनानुग्रहे साङ्गप्रयोगावधारणोत्तरकालप्राप्तेः कालस्य जघन्यत्वेन बाध इति प्राप्ते उच्यते कालस्यानुपादेयत्वेन निमित्तविशेषणत्वात्तस्मिन्प्राप्तमग्निहोत्रं किञ्चिदङ्गमपहायापि कर्तव्यं तस्मादग्निहोत्रं हुत्वा सान्तपनीया समापनीया ॥

उक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम् ।

सू० षोडशी चोक्थसंयोगात् ॥ १८ ॥

ज्योतिष्टोमे षोडशिनं प्रकृत्याऽऽमनन्ति तं पराञ्चमुक्थ्येभ्यो निर्गृह्णाति-षोडशिनमिति तद्यदा दैवादुक्थ्यानामुत्कर्षो भवति किं तदा षोडश्युत्कृष्यते नेति संशयः, "तच्च नोत्कर्षणं युक्तं स्तोत्रकालोपसङ्ग्रहात् । उत्कर्षपक्षे हीयेत स्वकालात्स्तोत्रमस्य हि । यदि हि षोडशिग्रहयागाभ्यास उत्कृष्येत ततः प्रधानकालत्वादङ्गानां ग्रहं वा गृहीत्वा चमसं वा उन्नीय स्तोत्रमुपाकुर्यादिति वचनात् तदङ्गभूतं स्तोत्रमप्युत्कृष्येत तत्र "समयाध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकरोतीति विहितः कालो बाध्येत । नन्वनुत्कर्षपक्षे ऽप्युक्थ्यपरभावो बाध्येत, बाध्यतां क्रममात्रं हि तत्कालस्तु बलीयानित्युक्तं तस्मादनुत्कर्षः उच्यते–"क्रमो ऽपि तु प्रधानाङ्गभूत * स्याद्बलवानसौ । कालस्तोत्राङ्गभूतत्वाद्दुर्बलो बाधमर्हती"ति । तं पराञ्चमुक्थेभ्य इति वचनात् षोडशियागाभ्यासस्योक्थ्यपरभावोऽङ्गं सोऽनुत्कृष्यमाणे प्रधानाङ्गं सद् बाध्येत, न चैतद्युक्तमतोवरमङ्गभूतस्तोत्राङ्गस्यैव कालस्य बाध इत्युत्कर्षः ॥

इति शास्त्रदीपिकायां पञ्चमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अथ पञ्चमाऽध्याये द्वितीयः पाद आरभ्यते ।

पदार्थानुसमयन्यायः । वाजपेयपशूनां सर्वेषामेकैकोपाकरणादिधर्मानुष्ठानाधिकरणम् ।

सू० संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥

वाजपेये प्राजापत्याः पशवो वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्येतस्मिन्काले विहिताः सह प्रयोक्तव्याः तेषामारादुपकारकाणां तन्त्रं द्रव्यसंस्कारास्तूपाकरणनियोजनादयः प्रति पशुभेदेन कर्त्तव्याः ते किमेकैकस्य कार्त्स्न्येन कृत्वा ततोऽपरस्य कर्त्तव्याः ? किं वोपाकरणं सर्वेषां कृत्वा

---

* विहितकालस्तु बलीयानिति पाठान्तरम् ।

ततो नियोजन-मिति तत्र एकैको हि पशुः स्वाङ्गान्यवेतान्यपेक्षते। "चोदकोऽप्येवमेवातः काण्डानुसमयो भवेत्। प्रयोगवचनावगतसाहित्यबलेन ह्येकैकस्य पशोर्धर्माः संश्लिष्टाः कर्त्तव्याः प्रकृतौ चोपाकरणादीनामानन्तर्यं कृतम् इहापि प्रतिकर्मावसायिना चोदकेन प्रतिपशु प्राप्यते अत एकस्योपाकरणादिकं सर्वं गुणकाण्डं कृत्वा ततोऽपरस्य कर्त्तव्यं, वाचनिकं तु साहित्यमारादुपकारकतन्त्रत्वादप्युपपन्नम् उच्यते–"वचनेनैककालत्वं पशूनामिह चोदितम्। न तत्प्रयोगवचनात् चोदकाद्वापि बाध्यते। काल्पनिकं प्रयोगवचननिबन्धनं साहित्यं चोदकं चानुमानतः प्रत्यक्षवचनेन तु वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्येककालप्रयोगः पशूनामवगम्यते अतो यस्मिन्नेव क्षणे एकस्योपाकरणं कर्त्तव्यमापतति तस्मिन्नेवापरस्योपाकरणं कर्तव्यं सदशक्यतया केवलं न क्रियते द्वितीयक्षणे न कश्चिद्धेतुर्येन पश्वन्तरं नोपाक्रियेत,अतः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिः कर्त्तव्यः एवं दर्शपूर्णमासादिषु अनेकप्रधानसमवाये पदार्थानुसमय एव न्याय्यो न काण्डानुसमय इति स्थितं, यत्र प्रधानविरोधो भवति पदार्थानुसमये तत्र काण्डानुसमय एवेति यथाऽश्वप्रतिग्रहेष्ट्यां शते सहस्रे वा पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषामधिश्रयणं कृत्वा ऽऽद्यस्योद्वासनं क्रियेत ततः स दह्येत तस्माच्च तत्र प्रधानविरोधे पदार्थानुसमयः।

मुष्टिकपालादीनां समुदायानुसमयाधिकरणम्। २ सू० मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ २ ॥

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः पदार्थानुसमये स्थिते संशयः किमेकैकेन मुष्टिनाऽनुसमयः? उत चतुर्भिर्मुष्टिभिरिति, यद्येकैको मुष्टिः पृथक् पदार्थस्तत एकैकेनाऽनुसमयः। अथ चतुर्मुष्टिनिर्वाप एकः पदार्थस्तश्चतुर्मुष्टिभिरिति, "प्रतिमुष्टि यतीभावः पर्यवस्यन् हि दृश्यते मुष्टिना मुष्टिरेवातोऽनुसमयो न संघशः उच्यते–"अङ्गत्वं चोदनागम्यं पदार्थश्चाङ्गमेव नः। चतुर्णां चेह मुष्टीनां निर्वापः शास्त्रचोदितः अङ्गपर्यायो हि पदार्थशब्दस्तेन ययोः प्रधानयोः सहानुष्ठानं तयोर्यदङ्गं तदेकस्य कृत्वाऽपरस्य कर्त्तव्यं चतुरो मुष्टीन्निर्वपतीति शास्त्राच्चतुर्मुष्टिनिर्वापोऽ-

द्रुम् एकैकस्तु मुष्टिस्तदवयवो न पदार्थस्तस्या विधानात् पदार्थेन चानुसमयो न तदवयवैस्तैश्चतुर्भिरनुसमयः. एवं कपालोपधानेऽपि नैकैकेनानुसमयः किन्तु आग्नेयस्य कपालानि सर्वाण्युपधायाग्नीषोमीयस्योपधानम् : एवं द्विर्हविषोऽवद्यतीत्यत्रापि नैकावधानेनानुसमयः एवमञ्जनादिष्वपि योज्यम् ॥

अवदानस्य प्रदानान्तानुसमयाधिकरणम् ।

सू० संयुक्ते तु प्रक्रमात्तदन्तः स्यादितरस्य तदर्थत्वात् ॥ ३ ॥

दर्शपूर्णमासयोर्द्विर्हविषोऽवद्यतीति श्रुतं तत्र नैकैकेऽवदानेनानुसमय इति स्थितमिदानीं तु किं द्वाभ्यामवदानाभ्यामनुसमयो ? ऽथवाऽवदानादि प्रदानान्तेनेति चिन्त्यते तत्र "वचनेन द्विसंख्याक्रमवदानं विधीयते । तावानेकः पदार्थोऽतस्तावताऽनुसमीयते नैवं होमविधेरर्थात् खण्डने प्रापिते सति विशेषमात्रं हविषो द्विरित्यत्र विधीयते । चतुरवत्तं जुहोतीत्यवत्तस्य होमो विधीयते, न चाकृत्वाऽवदानमवत्तहोमसम्भव इत्यर्थप्राप्तमवदानं न विधातव्यं द्विर्हविषोऽवद्यतीत्यर्थप्राप्तस्यावदानस्य विशेषमात्रस्य विधानं हविषो द्विरिति यद्यपि विधीयते तथाऽपि दृष्टार्थत्वाच्चतुरवत्तं जुहोतीत्यस्यावयवत्वेनैव विधेयं न स्वातन्त्र्येण अतोऽवदानादिप्रदानान्तेनानुसमयः ॥

अञ्जनादेः परिव्याणान्तानुसमयाधिकरणम् ।

सू० वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ४ ॥

अग्नीषोमीये पशौ यूपधर्माः अञ्जनमुच्छ्रयणं संमानं परिव्याणमिति यूपगणे चोदकप्राप्ताः किमेकैकशोऽनुसमेतव्या ? उताञ्जनादिना परिव्याणान्तेनानुसमय इति संशये पूर्वेण न्यायेन पदार्थानुसमयः । नन्वञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेदिति प्रकृतावनवसर्गश्चोदकेनेह प्राप्तः कथमेकैकशो ऽनुसमीयमाने शक्यते कर्तुम् एवं मन्यते प्रकृतावार्थिकोऽनवसर्गः यजमानेनाध्वर्योः साहाय्यमाचरताऽनुष्ठितस्तदनुवादमात्रं वचनं, न चार्थिकं चोदकः प्रतिदिशति अतः पदार्थानुसमयः

नैवं "नियोगतोऽप्राप्तेरनुत्सर्गो विधीयते वाक्यं चार्थवदेवं स्याद्वादमात्रं त्वनर्थकं गणेऽपि चोदकेनातः प्राप्यते ऽनवसर्जनम् । तेनाऽञ्जनादिसंघोऽच संघेनानुसमीयते ॥

देवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ।

सू० पशुगणे तस्य तस्यापवर्जयेत्पश्वेकत्वात् ॥ ५ ॥

अग्नीषोमीये पशावेवदानानन्तरं प्रदाने प्राप्ते वचनमिदमाम्नायते "दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यति सौविष्टकृतान्यवदाय न तावत्येव होतव्यम् ऐडान्यवद्यतीति तदेकतेषु पशुगणेषु विचार्यते किमेकस्य पशोर्दैवतसौविष्टकृतैडान्यवदायापरस्यापि त्रयमवदातव्यम्? उत सर्वेषां दैवतानि अवदाय ततः सौविष्टकृतानि तत ऐडानीति, तत्र "प्रकृतौ दैवतादीनामानन्तर्यमिहापि तत् । एकैकस्य पशोः कार्यः काण्डानुसमयस्ततः । यद्येकैकस्य पशोर्दैवतान्यवदीयेरन् ततः प्रथमस्य पशोर्यद्दैवतसौविष्टकृतानन्तर्यं चोदकप्राप्तं तद्बाध्येत, तस्मात्काण्डानुसमयः, नैवं पश्वैक्यात्प्रकृतावर्थादानन्तर्यमनुष्ठितम् इह त्वनेकसाहित्यात्स जात्यानुसमीयते यावन्तः पदार्थाः कर्त्तव्यास्ते मिथः संश्लिष्टाः कर्त्तव्याः इत्येतावत्प्रकृतौ विवक्षितं तत्रैकत्वात्पशोर्दैवतसौविष्टकृतानन्तर्यमर्थात्संजातं न तु तदिह प्राप्यते, क्रतुसाहित्यसम्पत्तये समानजातीयैः समानजातीयानामनुसमयो दैवतैर्दैवतानामित्येवं कर्त्तव्यः ॥

नानाबीजेष्टौ उलूखलादीनां तन्त्रताऽधिकरणम् ।

सू० नानाबीजेष्वेकमुलूखलं विभवात् ॥ ६ ॥

राजसूये नानाबीजेष्टिः अग्नये गृहपतये ऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुमित्यादि तत्र प्रकृतितः प्राप्तमुलूखलं किं तन्त्रमुत भिन्नमिति विचारः, फलविचारश्चायम् अधिकरणशरीरं तु किं कृष्णाजिनास्तरणोलूखलाधिवर्त्तनबीजावापाऽवघातपरावपनविवेचनफलीकरणानि पृथक् पदार्थत्वादेकैकशोऽनुसमेतव्यानि? उत कृष्णाजिनास्तरणादिफलीकरणान्त एकः पदार्थस्तावता चानुसमय इति

"तत्र नानापदार्थत्वं विधिभेदेन मन्यते । तण्डुलीकरणांशत्वादपृथक्त्वं तु गम्यते" यद्यपि कृष्णाजिनमधस्तादवस्तृणाति शूर्पेण विविनक्तीति विधिभेदस्तथाऽपि तण्डुलभावनावयवत्वेन तद्विधानं न स्वातन्त्र्येणादृष्टार्थत्वप्रसङ्गादेका चासौ तण्डुलभावना कृष्णाजिनास्तरणादिफलीकरणपर्यन्तव्यतता इति तावानेकः पदार्थ इति तावताऽनुसमयः, संयुक्ते तु सूत्रप्रक्रमादित्यत्र चतुरवत्तचोदनयाऽर्थप्राप्ताववदाने संख्यामात्रं द्विर्हविष इति विधीयते न तु द्वित्वविशिष्टमवदानमित्येवं पदार्थत्वं निराकृतम्, इह तु सत्यपि विधिभेदेऽवयवत्वेन विधानादनन्यत्वमुच्यते । यत्तु यत्र सत्यपि विधिभेदेऽन्यत्वं नास्तीत्युक्तं तदिह सिद्धमेवोक्तमित्यनवद्यम् ॥

अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम् ।

सू० विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात्स्यात् ॥ ७ ॥

दर्शपूर्णमासयोरष्टावुपभृति गृह्णातीति प्रयाजानुयाजार्थं चतुर्गृहीतद्वयमेकस्यामुपभृति युगपद्गृहीतं तथैव पशौ प्राप्तं तत्रानुयाजानां द्रव्यविकारः श्रूयते "पृषदाज्येनानुयाजान् यजतीति प्रयाजाज्यन्त्वविकृतमेव तत्र द्वयोः सङ्करेऽवश्यं भाविनि चिन्त्यते किं कालभेदेन तस्यामेवोपभृति द्वयं ग्रहीतव्यम् ? उत तस्मिन्नेव काले पात्रभेदेनेऽति तत्र "पदार्थत्वाकृतत्वाच्च पात्रैकत्वस्य संग्रहः । गुणत्वात्पात्रकल्पत्वात् क्रममात्रं तु बाध्यते" अष्टावुपभृति गृह्णातीति श्रुतमेकत्वं पदार्थश्च क्रमश्च पदार्थानाङ्गाः पाठकल्प्यश्च, तत एकस्मिन्नेव पात्रे प्रयाजाज्यं गृहीत्वा प्रयाजेषु हुतेषु पश्चात्पृषदाज्यं ग्रहीतव्यमित्येवं प्राप्ते उच्यते उभयोर्ग्रहणाङ्गत्वात्पात्रैक्यस्य क्रमस्य च । विकृतौ चानुमानेन प्राप्तेस्तुल्यं बलाबलम् एवं चाविशेषे सति प्रयाजाज्यग्रहणेनोपस्थितस्यानुयाज्यपृषदाज्यग्रहणस्याकरणे न किञ्चित् कारणमस्तीति तदैव पात्रान्तरमुपादाय ग्रहीतव्यम् ॥

नारिष्टहोमस्योपहोमपूर्वताधिकरणम् ।

सू० प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्नत्वचोदितस्य शेषाम्नानम् ॥ ८ ॥

आग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदिति नक्षत्रेष्टिं विधायोपहोमा विहिताः "सोऽत्र जुहोति आग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति प्रकृतौ च प्रधानानन्तरं नारिष्टहोमास्ते चोदकेनात्र प्राप्तास्तत्र संशयः किमुपहोमान् हुत्वा ततो नारिष्टहोमा विपरीतं वेति "तत्र प्रत्यक्षपाठेन प्रधानानन्तरश्रुतान् । उपहोमाननुष्ठाय नारिष्ठानामनुष्ठितिः" उच्यते कृप्तोपकारसाकाङ्क्षा विकृतिः प्राकृतं पुरः । गृह्णाति वैकृतिं पश्चात्तदाकाङ्क्षा वशीकृता । प्रकारापेक्षा हि विकृतिभावना प्रत्यक्षश्रुतमपि संनिहितमकृप्तोपकारं परित्यज्य प्राकृतं प्रकारमुत्पादकपदार्थविशिष्टं प्रथमं गृहीत्वा पश्चात्सविध्याऽम्नानात्प्रयोजनापेक्षावशेन वैकृतं गृह्णाति, तेन यत्र प्राकृतवैकृतयोरेकस्थानपतितयोः क्रमापेक्षा तत्रावगतिक्रमानुसारेण प्राकृतं कृत्वा वैकृतं कर्त्तव्यम् । न च प्रत्यक्षपाठविरोधः प्रधानवाक्यशेषेण प्रकृतिवच्छब्देन प्रापितात् प्राकृतात्पश्चादेव वैकृतं पठितं भवति, तस्मान्नारिष्ठान्कृत्वा पश्चादुपहोमाः कार्याः

विदेवनादीनामभिषेकपूर्वताऽधिकरणम् ।

सू० कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगान् न्यायमात्रमितरत् ॥ ९ ॥

राजसूयेऽभिषेचनीयं सोमयागं विधायानन्तरं विदेवनादयोऽभिषेकान्ताः पदार्था विहितास्तत्राभिषेकोऽभिषेचनीयप्राकृताङ्गमध्येऽपकृष्टो माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यत इति सोऽपकृष्यमाणः प्राचो विदेवनादीनपकर्षति ने? ति संशयः, तत्र अपूर्वोह्यभिषेकोऽतो न तदन्तापकर्षणं करोति । वेदिवत्तस्मात्तन्मात्रमपकृष्यते तथाऽपूर्वमित्यत्र ह्येतदवस्थितम्, अपूर्वः पदार्थोऽपकृष्यमाणो न प्राचामपकर्षाय कल्पत इति तेन यथा पूर्वेद्युरमावास्यायां वेदिं करोतीति वेदिमात्रापकर्षोऽकृप्तक्रमत्वाच पूर्वेषां तथाऽत्राप्यभिषेकस्यैवापकर्षोऽन्येत्वन्ते तु वादरायण इति न्यायादभिषेचनीयसकलप्राकृताङ्गोत्तरकाले कर्त्तव्या इति प्राप्तेऽभिधीयते "अभिषेकेण पूर्वेषाङ्क्रमः प्रत्यक्षपाठतः। परत्वं प्राकृताङ्गेभ्यस्त्वनुमानेन गम्यते । य-

ऽप्यत्राप्रकृतिपूर्वत्वेन प्रयाजादिवैलक्षण्यादपकर्षावस्थायां वेदिवत् क्लृप्तः क्रमस्तथाऽप्यत्रैव क्रमकल्पनायामभिषेकपूर्वभावित्वं विदेवनादीनां प्रत्यक्षपाठनिमित्तमभिषेचनीयप्राकृताङ्गात्तत्कालता तु तेषामनुमानात्, तच्च दुर्लभमतः प्रत्यक्षपाठाद्विदेवनादीनामभिषेकात्पूर्वानुष्ठानात्तदन्तापकर्षः ॥

सावित्रहोमादीनां दीक्षणीयपूर्वप्रयोगाधिकरणम् । सू० प्राकृताच्च पुरस्ताद्यत् ॥ १० ॥

अग्नौ सावित्रहोमोखासम्भरणाद्यपूर्वपदार्थान् विधाय पश्चाद्दीक्षणीयादयः प्राकृताः सगुणाः श्रुताः, तत्र दीक्षणीयादीन् कृत्वा सावित्रादयः? उत विपरीतं वे? ति संदेहः तत्र "प्रकृतेः पूर्वविज्ञानात्प्राकृतानां पुरस्क्रिया पश्चात्तु वैकृतानां स्याद्बादरायणदर्शनात् । दीक्षणीयादिपुनःश्रवणान्तु गुणार्थत्वाच्च पश्चादनुष्ठानन्दीक्षणीयादीनाङ्गमयति गुणानां परतन्त्रत्वात् यत्र गुणी तत्र तेषां विधानम् अतः प्रकृताम्पूर्वानुष्ठानम् उच्यते "गुणार्थे श्रूयमाणानामपि प्रत्यक्षपाठतः । पश्चादवगतस्तेषां युक्ता पश्चादनुष्ठितिः, गुणवाक्येपि कीर्त्यमानानां दीक्षणीयादीनां तत्र तावदवगतिर्जायते, सा च प्रत्यक्षपाठनिमित्ता गुणगुणिनोः समानस्थानत्वात्तत्रैव गुणिनामनुष्ठानं गमयतीत्यानुमानिकपाठनिमित्तं पूर्वानुष्ठानमनादरणीयम् ।

याजमानसंस्काराणां रुक्मप्रतिमोकात्पूर्वभावितार्ऽधिकरणम् । सू० सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥ ११ ॥

तत्रैव दीक्षणीयाद्यनन्तरं रुक्मप्रतिमोचनाद्याम्नातं, प्रकृतौ च दीक्षणीयानन्तरं दीक्षितसंस्काराः, तदिह रुक्मप्रतिमोचनादि कृत्वा दीक्षितसंस्काराः कार्याः? विपरीतं वेति तत्र प्रत्यक्षपाठेन दीक्षणीयाद्यनन्तरं रुक्मादिकमनुष्ठेयं पश्चाद्दीक्षितसंस्कृतिः उच्यते दीक्षादीक्षितसंस्कारानुपस्थापयति क्रमात् । तेषामुपस्थितानां च नाऽक्रियाहेतुरस्ति नः । प्रकृतिक्लृप्तक्रमवशेनानन्तरमुपस्थितान् दीक्षितसंस्कारान् कृत्वा पश्चात्क्रियमाणस्य रुक्मप्रतिमोचनादेः पश्चात्पाठोपपत्तौ नावश्यमन्तरानुष्ठानमनन्तरपाठो ह्यवश्यं पठितयाऽप्युपपन्नो नानन्तर्यं गमति सावित्रहोमादेः पश्चादनुष्ठाने पूर्वं न पाठः स्यादिति विशेषः ॥

इति शास्त्रदीपिकायां पञ्चमाध्यायस्य द्वितीयः पादः ॥ २ ॥

## ॥ अथ पञ्चमाध्यायस्य तृतीयः पाद आरभ्यते ॥

प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपादकताऽधिकरणम् ।

सू० विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥

"एकादश प्रयाजान् यजति षडुपसद इति प्रकृता संख्याविवृद्धिर्विकृतौ श्रूयते, सा किं प्रत्येकं भवति? उत सर्वसम्पादिनी? ति चिन्त्यते तत्रोद्दिश्य प्रयाजादि संख्या तस्योपदिश्यते । उद्देश्यानां च साहित्यं शक्यते न विवक्षितुं तस्मात्प्रतिप्रयाजं प्रत्युपसदं च संख्या स्यादिति प्राप्त उच्यते "प्रयाजादिस्वरूपे हि नेयं संख्या विधीयते । अशक्यत्वात्प्रयोगे तु लक्षिते सोपदिश्यते । न ह्येकैकशः समुदितानां वा स्वरूपेण संख्यान्वयः सम्भवत्येकस्य पञ्चानां चैकादशत्वासम्भवात्, अतः संख्यान्वयसिद्धये प्रयाजाः स्वप्रयोगं लक्षयन्ति, ते च तं लक्षयन्तस्तत्राभिधानात्सदावगतास्तथैव लक्षयन्ति, संख्या चेयमनेकवृत्तिस्वभावा समस्तलक्षितप्रयोगगतापि शक्नोति सर्वेषां प्रयाजानामुपकर्त्तुम्, अतः सर्वसाम्पादनी स्यात् ।

प्रथमादीनां तिसृणामुपसदां स्वस्थानावृत्त्यधिकरणम् ।

सू० स्वस्थानात्तु विवृध्येरन्कृतानुपूर्वत्वात् ॥ २ ॥

षडुपसद इत्यत्र सैवसम्पादनी संख्येत्युक्तम्, अतस्तिसृणामुपसदां द्विरभ्यासः, तत्र किं दण्डकलितवदावृत्तिरुत स्वस्थानविवृद्धिरिति चिन्तायाम् आवृत्तिन्यायानां लोके त्रिरनुवाकः पठ्यतामित्यादौ दण्डकलितवदावृत्तिदर्शनादिहापि तथा स्यात्, अतः सर्वाः सकृत्कृत्वा पुनः स्यादावृत्तिः क्रिया न स्वस्थानात्तु विवृद्धेरन् क्रमबाधोऽन्यथा भवेत् तृतीयां कृत्वा प्रथमां क्रियमाणायां प्राकृतक्रमबाधः स्यात्, अतस्तदबाधाय स्वे स्वे स्थाने द्विर्द्विरभ्यसितव्याः ॥

सामिधेनीषु आगन्तुकानामन्ते निवेशाधिकरणम् ।

सू० समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ३ ॥

एकविंशतिमनुब्रूयादिति सामिधेनीविवृद्धिश्रुतावागमे कर्त्तव्ये सति आगम्यमानानामृचां देशश्चिन्त्यते, किमन्ते निवेशः? अथवा सामिध्यमानवतीं समिद्धवन्तीं चान्तरा? उत धाय्याशब्दोक्तास्तास्तयोर्मध्ये अन्यास्तु आगन्तवोऽन्ते इति तत्रान्ते बादरायण इति न्यायात्सर्वाः प्राकृतीनामन्ते स्युरित्युपक्रममात्रेण प्रथमः पक्षः, इयं वै समिध्यमानवती असौ समिद्धवती तदन्तरा तद्धाय्या इति धाय्यानामाकाशत्वेन स्तवनं द्यावापृथिवीसंस्कृतयोः समिध्यमानसमिद्धवत्योर्मध्ये तासां विधानमनुमापयति सर्वाश्चागन्तवोऽधीतमानतया धाय्या इति सर्वासान्तन्मध्ये निवेश इति द्वितीयः पक्षः। सिद्धान्तस्तु न धीयमानमात्रवबोधाय्या—शब्दः स्तुतशस्त्रार्थतया धीयमानास्वपि तच्छब्दाभावात्, अतो यत्रैव धाय्याशब्दप्रयोगो वेदे दृष्टः पृथुपाजवत्यौ धाय्ये इत्यादिस्ता एव धाय्या न त्वागन्तुकमात्रं, यतस्तासामेव तन्मध्ये अन्यासां त्वागन्तूनामन्त एव निवेशः एवं च त्रैधातव्याया अधार्य्याशब्दिकाया अग्नेत्रीतिर्वाजिनेत्येतस्यास्त्रिष्टुभोऽन्ते निवेशात् त्रिष्टुभा परिदधातीत्यादिदर्शनमुपपन्नं भवति, तस्माद् धाय्याशब्दिकानामन्त एव निवेशः ।

बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताऽधिकरणम् ।

सू० स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ४ ॥

ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचास्तोत्रियोनुरूपः पर्यासश्च ते विवृद्धस्तोमकेषु क्रतुषु प्राप्तास्तत्रागमेन संख्यापूरणं वक्ष्यते तत्रागम्यमानानामृचामन्ते निवेशः प्राग्वा प्राकृतात् पर्यासादिति संशयः तत्र प्रत्यक्षपाठेन द्वादशाहे वृषण्वती । प्राक्पर्यासान्निविष्टत्वादन्यत्राप्यनुमीयते । द्वादशाहे षाडहिके द्वितीयेऽहनि विवृद्धस्तोमके प्राकृतौ स्तोत्रीयानुरूपौ पठित्वा तत आगन्तयोवृषण्वत्य ऋचः पठिताः ततः पश्चात्प्राकृतः पर्यासः पठितः तदनेन पाठेन प्राक्पर्यासादागन्तूनां निवेशदर्शनात् अन्यत्रापि सर्वत्र सर्वेषामागन्तूनां तत्रैव निवेश इति सामान्यतो दृष्टमात्रेण पूर्वप-

त्प्रतिभा पर्यास-शब्दश्चान्तवचनो लोके वेदे च प्रसिद्धः सेत्रपर्यास इत्येवमादि तद्वच्चागन्तवोऽन्ते स्युः पर्यासमाख्याप्राकृतस्य तृचस्य बाध्येत अतोऽपि प्राक्पर्यासान्निवेशः, उच्यते नेदृशेनानुमानेन शास्त्रार्थोऽध्यवसीयते । समाख्याप्रकृतावेव चरितार्थेति साध्यतः । अन्ते निवेशमागन्तोन्यायप्राप्तं न बाधतेद्वादशा द्विकारेऽपि केवलानां तृचवतां प्राक्पर्यासान्निवेशः स्यादतिदेशविधेर्बलात् ॥ अन्ये त्वागन्तवोऽन्ते स्युर्वादरायणदर्शनात् ॥

तत्रैवागन्तूनां साम्नामन्ते निवेशाधिकरणम् ।

**सू० अन्ते तूत्तरयोर्दध्यात् ॥ ५ ॥**

त्रिवृत्स्तोमकेष्वेव क्रतुषूत्तरयोर्माध्यन्दिनार्भवपवमानयोः समागमो वक्ष्यते तत्रागम्यमानानां साम्नां किमन्त्ये तृचे निवेशोऽथवा गायत्रीबृहत्यनुष्टुप्स्विति, तत्रागन्तुत्वादन्त्ये निवेशः । यत्तु "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् चात्र ह्येवावपन्तीत एवोद्धरन्तीति तत्त्वविधिरूपत्वाद्यथाक्रमन्निवेशयमिति न अपूर्वत्वात्तु वचनमेवेदमनारभ्याधीतं सर्वयज्ञविषयमतो गायत्र्यादिष्वेव निवेशः । अथवा नैवात्र विचारः पूर्वोक्तबहिष्पवमानग्रहणमत्युदाहरणमात्रमिदं बहिष्पवमान एवान्ते निवेशः उत्तरयोस्तु गायत्र्यादिष्वेव निवेशो वचनादिति ॥

ग्रहेष्टकादीनां क्रत्वङ्गनिशेषताऽधिकरणम् ।

**सू० ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ ६ ॥**

"अंशुं गृह्णाति अदाभ्यं गृह्णाति विरचिणिरुपदधाति वज्रीणीरुपधातीत्यनारभ्याधीतं ग्रहेष्टकं किं सवनचितिशेषः, अतश्च प्रतिसवनं प्रतिचिति आवर्त्तनीय ? मुत यागाङ्गत्वं सकृदेव कर्त्तव्यमिति प्रत्यक्षेण ग्रहैरिष्टकाभिश्च सवनानां चितीनां चारम्भदर्शनात् तादर्थ्यं मन्यते पूर्वपक्षवादी न निष्फलत्वात्सवनचितीनां फलवज्ज्योतिष्टोमाङ्गत्वं ग्रहाणामिष्टकादीनाञ्च फलवद्धन्यङ्गत्वं युक्तम् । 'इष्टकाभिरग्निं चिनुत इति वाचनिकमेवाग्न्यङ्गत्वम् ॥ (शेषमग्रे)

## खण्डनखण्डखाद्यम् ॥

(*Continued from page* 56. Vol. XI.)

टी० ॥ किञ्च यदि प्रतिहेतूपन्यासकाले दोषवत्तयानुद्भावितं विवक्षितं तदा तदुपन्यासानन्तरं दोषोद्भावनेऽपि सत्प्रतिपक्षता स्यादेव प्रतिहेतूपन्यासकालीनानुद्भावनस्य तत्रापि सत्त्वादित्याह—। [a] "किञ्चे"ति ॥ [b] "प्रतीकार" इति । त्वदुक्तलक्षणाक्रान्तत्वेन दुष्टेनापि सत्प्रतिपक्षता स्यादित्यर्थः ॥ [c] "गतमि"ति । अतिस्फुटदोषेणापि सत्प्रतिपक्षश्चेत्तदा सदनुमानानामपि सत्प्रतिपक्षत्वमित्यनुमानमात्रोच्छेद इत्यर्थः ननु प्रतिहेतूपन्यासानन्तरकालीनं यत्र दोषवत्तयानुद्भावनं तेन बोधितसाध्यविपर्ययत्वं विवक्षितं तथाच नातिप्रसङ्ग इति शङ्कते—। "अथे"ति । अनध्यवसायात्तर्हि प्रतिहेतूपन्यास एव न स्यात् को हि जानात्यसौ मदीयहेतौ दोषं नोद्भावयिष्यति भवतु वा कथञ्चित्प्रतिहेतूपन्यासस्तथापीदमसाधकं सत्प्रतिपक्षितत्वादिति नोद्भावयेत् सत्प्रतिपक्षत्वं ह्युत्तरकालानुद्भाव्यमानविशेषत्वं तच्च प्रथमं निर्णेतुमशक्यमिति परिहरति—। [e] "तर्ही"ति ॥

मू० [a] दोषशून्यत्वात्स्वकीयस्य प्रतिहेतोः समर्थस्तथावधारयितुमिति चे[b] दुक्तमत्र प्रतीतदोषेणापि सत्प्रतिपक्षताकरणं सम्भवति [c] नच परेण दोषेनुद्भाविते विजयश्च भवतीति [d] किञ्च विशेषदोषशून्यत्वमपि स्वकीयहेतोः कथमयमवधारयेत् [e] विरुद्धार्थयोस्तावद्धेत्वोरेकस्यावश्यं दोषेण भाव्यं [f] तत्र यथा तेन स्वहेतौ दोषो न दृश्यते तथा परहेतावपि तद्दर्शने तमेवोद्भावयेत् [g] को हि सचेताः ।

टी० ॥ ननु स्वहेतोर्दोषशून्यत्वं निश्चित्य प्रतिहेतूपन्यासाध्यवसाया(१)ऽसाधकतानुमानप्रयोगौ स्यातामिति शङ्कते—। [a] "दोषे"ति । तर्हि पूर्वोक्ताभिप्रायेण स्वयं प्रतीतदोषं प्रतिहेतुं क्वापि न प्रयुञ्जीत वादीत्य-

(१) 'प्रतिहेतुमुपन्यस्येयम्'—इत्याकारकः प्रतिहेतूपन्यासाध्यवसायः ।

निष्टमिति परिहरति–। [b] "उक्तमत्रे"ति । ननु तादृशप्रतिहेतुप्रयोगो भङ्गभयादनर्ह एवेत्यत आह–। [c] "तत्रे"ति । किञ्च दोषशून्यत्वावष्टम्भेनापि प्रतिहेतूपन्यासाध्यवसायासाधकतासाधनानुमानप्रयोगौ न स्यातां पश्चात्तत्र दोषसन्देहध्रौव्यस्य प्रतिपादनादित्याह–। [d] "किञ्चे"ति । सन्देहध्रौव्यमेवाह–। [e] "विरुद्धार्थयोरि"ति ननु विपक्ष(१)हेतुदोषनिश्चयादेव स्वहेतौ न दोषसन्देह इत्यत आह–। [f] "तत्र यथे"ति । ननु कथमयं नियमो यत्परहेतुदोषदर्शने तदुद्भावनमावश्यकं न तु प्रतिहेतूपन्यासावसर इत्यत आह–। [g] "को ही"ति । स्थापनावादिप्रयुक्ते हेतौ दोषान्तरमसिद्ध्यादि दृष्ट्वा सत्प्रतिपक्षावसरो नास्तीति कथमयं नियमो यावता दोषत्वाविशेषात्सत्प्रतिपक्षतामेव कथं नोद्भावयेन्मैवं दोषान्तरे पक्षधर्मतामात्रमुपदर्शनीयं सत्प्रतिपक्षे तु व्याप्तिरपीति गौरवमित्यर्थः यद्वा अस्फुरत्प्रतीकारेणापि (२)दोषेण सत्प्रतिपक्षस्य हीनबलत्वं चेत्कुर्यां तदा ममैव भङ्गः स्यादित्यभिप्रायाद्दोषान्तरमेवोद्भावयेत् यद्वा प्रतिहेतुप्रयोगानन्तरं तेनासाधकतानुमानप्रयोगानन्तरं तदनु स्वपक्षस्थापनाप्रयोग इति प्रयासगौरवमित्यभिसन्धिरित्यर्थः ॥

मू० निश्चितं दोषमुपेक्ष्य सदोषस्य निर्दोषसाम्येन प्रत्यवतिष्ठते [a] तस्मात्सदोषेपि दोषमपश्यन्नयं न स्वेनादर्शनं दोषाभावे प्रमाणयितुमर्हतीति * [b] अथोच्यते व्याप्तिपक्षधर्मताभङ्गाभङ्गरूपप्रकृतहेत्वपेक्षविशेषत्वेनानुद्भाव्यतया संभाव्यमानेन बाधितो यदीयसाध्यस्य विपर्ययः स प्रकृतः प्रकरणसम * इति(३)नैतदपि सुस्थं, [c] यद्युद्भावनकालात्पूर्वकालिकी संभाव–

(१) विपक्षहेतौ=विपरीतहेतौ, दोषस्य निश्चयादित्यर्थः ।

(२) न स्फुरति स्वहेतावपि प्रतीकारो यस्य सत्प्रतिपक्षदोषस्य तेन सत्प्रतिपक्षस्य हेत्वन्तरस्येत्यर्थः ।

(३) विकल्पासहत्वेनैतद्दूषयति–नैतदपीति–वादिनोर्योदोषोद्भावनकालस्तस्मात्पूर्वकालिकीसम्भावना विवक्षिता?–१ किंस्वित्तत्कालीना?–२ यद्वा कालमात्रसम्बन्धिनी?–३ इति विकल्पत्रयमनुवदति–यदीति–इति विद्यासागराः ।

टी० ॥ तस्मात् स्थापनाहेतौ दोषान्तरमपश्यत एव प्रतिहेतूपन्यास इति स्थिते यथा तत्र(१)स्वयं दोषादर्शनमदोषवत्तां व्यभिचरति तथा मयापि दोषशून्यत्वेनापाततोऽपि गृह्यमाणोऽप्ययं हेतुर्दोषवान् स्यादिति संशयानेन दोषशून्यत्वावष्टम्भेन प्रतिहेतूपन्यासः समाहितो न भवतीत्युपसंहरति—। [a]"तस्मादि"ति । तथाचैतल्लक्षणानुसारेण प्रतिहेतूपन्यासाध्यवसायो न स्यादिति भावः ननु दोषवत्तयानुद्भावनं यद्यपि न निश्चितं तथापि सम्भावनास्त्येव तथाच दोषवत्तया सम्भावितानुद्भावनेन प्रतिहेतुना बोधितसाध्यविपर्ययत्वं लक्षणमस्तु तथाच प्रतिहेतूपन्यासाध्यवसायाऽसाधकतासाधनं च द्वयमप्युपपन्नमेवेति शङ्कते—। [b]"अथे"ति । प्रतिहेतूपन्यासात्पूर्वमनुद्भावनसम्भावना चेद्विवक्षिता तदा प्रतिहेतूपन्यासानन्तरं स्थापनावादिदूषितेनापि प्रतिहेतुना सत्प्रतिपक्षता स्यादेव तल्लक्षणस्य तदानीमपि सत्त्वादित्याह—। [c]"यदी"ति ।

मू० ना विवक्षिता(२) [a]तदा तात्कालिकानुद्भावनपक्षोक्त एव दोषोऽतिदेष्टव्यः *(३)अथोद्भावनस्य योऽवसरो भविष्यति तात्कालिकतया * तदा सत्प्रतिपक्षतात्युत्पादनकाले सा नास्तीति विशेषणाभावात्तल्लक्षणाभावः (४) * [b]अथोच्यते यावत्सम्भावनानुवर्त्तते तावत्सत्प्रतिपक्षता(५)किं सम्भावनायाः कालनियमगवेषणेन(६)? *—मैवम् ॥

(१) तत्र=स्थापनानुमानवादिहेतौ, स्वयं=स्थापनावादिना ।

(२) प्रागुक्तातिव्याप्तिपरिहारानुसन्धेयेति परिहरति—तदेति पूर्वकालिकानुद्भावनासम्भावनानुद्भाव्यमानदोषो हेतावप्यस्तीति तेनापि सत्प्रतिपक्षता स्यादित्यर्थः ।

(३) अस्तु तर्हि द्वितीयोऽनिरवद्यादिति शङ्कते—अथेति—तात्कालिकतयानुद्भाव्यमानत्वविशेषणाभावाद्दुष्टलक्षणस्य तात्कालिके सत्प्रतिपक्षेऽव्याप्तिरित्यर्थः ।

(४) कालमात्रसम्बन्धिनीसम्भवनाश्रिवक्षितेति तृतीय कल्पं शङ्कते—अथेति—प्रतिहेतौ दोषे निश्चिते सत्प्रतिपक्षता निवर्त्तत इति न्यायनियमः । किन्तु तच्चिष्ठतया दोषमुद्भावयतीति यावत्सम्भावनानुवृत्तिस्तावत्सत्प्रतिपक्षतानुवर्त्तत इति नोक्तदोष इत्यर्थः । इतिविद्यासागराचार्य्याः ।

(५) अतः पूर्वोक्तविकल्पदूषणमनवकाशदुष्टमित्याह—किमिति ।

(६) अतिप्रसङ्गेनैतन्निरस्यति—मैवमिति ।

टी० ॥ ननु प्रतिहेतूपन्यासानन्तरकालीनानुद्भावनसम्भावना विवक्षिता तत्राह—। [a]"तदे"ति । यत्र स्थापनावादिना प्रतिहेतौ दूषिते प्रतिवादी तदुद्धृत्य सत्प्रतिपक्षत्वमेव पुनरुद्भावयति तत्र दोषोद्भावनादेवानुद्भावनसम्भावनारूपविशेषणाभावात्सत्प्रतिपक्षलक्षणमव्यापकं स्यादित्यर्थः यत्तु प्रतिहेतूपन्यासकाले तदुत्तरकालीनानुद्भावनसम्भावनारूपविशेषणाभावाल्लक्षणमव्यापकं स्यादिति केनचिद्व्याकृतं तच्चिन्त्यं ननु सत्प्रतिपक्षत्वदृढीकरणदशायां सत्प्रतिपक्षतैव न विवक्षिता येनाव्याप्तिः स्यात् किन्तु वादिदत्तदोषोद्धारेण निरनुयोज्यानुयोगनिग्रहाद्वादिनोभङ्ग एव किं तदा सत्प्रतिपक्षता दृढीकरणेनेत्याह—। [b]"अथोच्यते"इति ॥

मू० [a]एवं हि प्रतिहेतोर्दोषेनुद्भाविते प्रत्युत निर्दोषतयैव स्वीकृते दोषोद्भावनसम्भावनाया निवृत्तेः सत्प्रतिपक्षता व्यावर्त्तेत तथाचेत्यङ्कारमेव वादी सत्प्रतिपक्षतां परिहरेत् इति साधु स्यात्सत्प्रतिहेतोः प्रतिक्षेपमकृत्वा स्वीकृत्यैव (१)तत्सत्प्रतिपक्षता प्रतिक्षेप्तव्येति [c]* नच स्वीकारादेव प्रतिहेतोः (२)पराजयः स्यात् * सत्प्रतिपक्षतापरिहारोपायतया स्वीकारस्य करणात् [d]स्वीकारे सति, सम्भावनानिवृत्त्या तल्लक्षणकस्य सत्प्रतिपक्षत्वस्यापि निवृत्तेः तथा-(३)स्वीकारोप्ययं परस्यानिष्टार्थं [e]सिद्धसाधने परकीयसाध्यस्वीकारवद्गुणाय स्वीकर्त्तुर्नदोषायेति ॥

( शेषमग्रे )

(१). तदिति सामान्ये नपुंसकनिर्देशः, प्रतिहेतुस्वीकृत्यैवेत्यर्थः । यद्वा तन्निष्ठा सत्प्रतिपक्षता तत्सत्प्रतिपक्षतेत्यर्थः । केषु चित्पुस्तकेषु तु"स्वीकृत्यैव तम्"—इत्येव पाठः ।

(२) प्रतिहेतोः स्वीकारादेव—इत्यन्वयः ।

(३) तथा स्वीकारः=तेन रूपेण स्वीकारः, बहुषु पुस्तकेषु तु "तस्मात् स्वीकारः"—इति पाठः, सच पूर्वपाठापेक्षयोत्तमतरः ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 194. Vol. XI.)

कानि पुनः पञ्चमीसमासप्रयोजनानि । इदं तावत्प्रयोजनं तन्वन्तीति । किञ्च बेभिदिता माथितिकः अपीपचन्, बेभिद्यतेर्यङन्तात्तृचि अल्लोपयलोपयोः कृतयोः 'एकाच उपदेशेऽनुदात्ता'दिति इट्प्रतिषेधः स्याद् अल्लोपस्य स्थानिवत्त्वाच्च भवति, नैतदस्ति । बेभिद्यतृ इति स्थिते ऽल्लोपश्च प्राप्नोति इट् च, परत्वादिट्, नित्योऽल्लोपः,' कृतेऽपीटि प्राप्नोति, इट् पुनरनित्यः नहि कृते ऽल्लोपे प्राप्नोति नित्येनाल्लोपेन बाध्यते । यस्य च निमित्तं लक्षणान्तरेण विहन्यते न तदनित्यम् अत उभयोर्नित्ययोः परत्वादिडेव भविष्यति । इदं तर्हि मथितं पण्यमस्य माथितिक इति ठस्येकादेशे कृते यस्येति लोपे चेकस्य स्थानिवद्भावेन ठग्रहणेन ग्रहणा 'इसुसुक्तान्तात्कः' इति कादेशः प्राप्नोति, यस्येति लोपस्य स्थानिवद्भावाच्च भवति, एतदपि सन्निपातपरिभाषया ठस्येति वर्णग्रहणेनाल्विधित्वेन स्थानिवद्भावाभावाद्वा सिद्धम् । इदं तर्हि अपीपचन् अपीपचअन्इति स्थिते ऽन्त्याकारस्य चङकारस्य चातो गुणे इति पररूपत्वे तस्य परं प्रत्यादिवद्भावाज् झिग्रहणेन ग्रहणे सति 'सिजभ्यस्तविदिभ्यश्चे'ति जुस् प्राप्नोति णिलोपस्यैकादेशस्य वा स्थानिवद्भावाच्च भवति, तदेवमनपेक्षमेव पूर्वत्वमाश्रीयते विधिशब्दश्च कर्मसाधनः शेषषष्ठ्या च समास इति न कश्चिद् दोष इति स्थितम् । 'पटयतीति' । णाविष्ठवदिति टिलोपः । 'अवधीदिति' । 'हनो वध लिङि' 'लुङि चे'ति वधादेशः । 'हलन्तलक्षणेति' । वदव्रजेत्यत्र हलन्तस्येत्यनुवृत्तेर्हलन्तलक्षणा, बहुखट्वक इत्यत्र 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिव'दिति वचनात् स्वरविधावप्यत्र स्थानिवत्त्वं भवत्येव । 'प्रश्न इति' । यज्ञयाचयतेत्यादिना नङ्, च्छ्वोः शूडिति छस्य शः[1] । तुकि न स्थानिवद्भवतीति' । तुकि कर्त्तव्ये न स्थानिवद्भवतीत्यर्थः । नन्वन्तरङ्गत्वात्

१ परनिमित्तक इत्यधिकं ञ पुस्तके ।

पूर्व्वं तुका भाव्यं यत्र चैकं निमित्तीकृत्य युगपदाङ्गवार्णयोः प्रसङ्गस्तत्र वार्णादाङ्गं बलीयः, यथा करोतेर्लिटि णलि कृत्रद्द्गति स्थिते गौरित्यत्र सावकाशा 'मचो ञ्णिती' ति वृद्धिं बाधित्वाऽन्तरङ्गत्वात्प्राप्तं यणं वृद्धिरेव बाधते, प्रश्न इत्यत्र तु शस्य नङ् निमित्तं तुकस्तुक्कः, भिन्नकाला चानयोः प्राप्तिरिति नायमस्या विषय इति तुकि सति च्छोः शूडित्यत्र सतुक्कच्छकारनिर्देशेन तस्यैवादेशः, एवं च सत्यपि स्थानिवत्त्वे सतुक्कच्छग्रहणेन शो गृह्यते न केवलं छग्रहणेनेति कुतस्तुकः प्रसङ्गो ऽत एव नङो ङित्त्वमपि विश्न इति गुणो मा भूदिति, तस्मादप्रत्युदाहरणमेतदिति प्रत्युदाहरणान्तरमाह । 'आक्राष्टामिति' । 'स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्य' इति क्सापवादः पक्षे सिच् । अनुदात्तस्येत्यम् यणि वदव्रजेतिवृद्धिः । 'पूर्वत्रासिद्धे न स्थानिवदि' ति वचनादत्राप्यनुप्रयचाह । 'आगत्येति' । 'वृा ल्यपि' । 'युवजानिरिति' । बहुव्रीहौ पुंवद्भावः, युवतिशब्दस्य वयोवचनत्वेनाजातिवाचित्वा 'ज्जातेश्चे' ति प्रतिषेधो न भवति । 'यलोपे न स्थानिवदिति' । ननु योऽत्रादेशो नासौ लोपस्य निमित्तं तस्य वल्मात्रनिमित्तत्वात्, यश्च निमित्तं नकारः नासावादेश इति स्थानिवत्त्वं न भविष्यति, न च जायाशब्दस्य जनेरौणादिके यङ्प्रत्यये 'ये विभाषे' त्यात्वे च व्युत्पादितत्वाद् निङः स्थानिवत्त्वे सत्यातो लोपप्रसङ्गः, नह्युणादिषु व्युत्पत्तिकार्यमवश्यं भवति, अत उदाहरणान्तरोपन्यासः । 'वैयाघ्रपद्यइति' । व्याघ्रस्येव पादावस्येति 'पादस्य लोपोहस्त्यादिभ्य' इत्यपरनिमित्तः, 'गर्गादिभ्यो यञ्' । ननु सत्यपि स्थानिवत्त्वे वचनात्पद्भावो भविष्यति, यद्येवं पादे इत्यत्रापि प्राप्नोति सति तु परस्मिन्नित्यस्मिन्वैयाघ्रपद्य इत्यत्र पद्भावस्य चरितार्थत्वात् पादे इत्येकादेशस्य स्थानिवत्त्वात् पद्भावाभावः । कथं पुनरेकादेशस्य स्थानिवत्त्वं, नह्ययमच आदेशः किं तर्हि अचोः, उच्यते । वर्णनिर्देशेषु जातिग्रहणाद्, अच इत्येकत्वस्याविवक्षितत्वाद् अचोरप्यादेशः स्थानिवत् । द्वयोरपि वा स्थानित्वे यदेकस्य स्थानित्वं तदाश्रयं तस्य स्थानिवत्त्वं भविष्यति, अत एव आयसौ गोमन्तौ चतुरौ आनडुहाविति, आयसादिभ्यो ऽणाकोभ्य औप-

त्ययएकादेशस्यादिवत्त्वात् प्राप्तौ नुमामौ न भवतः, उद्गं वहति' 'कर्म्मण्यण' संज्ञायामुट्‌भावः, सम्प्रसारणैकवचनएकादेशस्यादिवत्त्वादुत्वे सति प्राप्तौ वाह ऊठेन भवति उदवाहेरिति। 'आदीध्य इति'। अदादित्वाच्छपो लुक् परस्मिन्नित्युच्यमाने स्थानिवद्भावाभावात् कृते टेरेत्वे लोपो न प्राप्नोति टेरेत्वं तु कृताकृतप्रसङ्गित्वान्नित्यमिति तदेव भवति। ननु च परस्मिन्नित्यसति शब्लुकोऽपि स्थानिवत्त्वात् तद्व्यवधानादेव लोपो न भविष्यति, न। क्ङिति लुग्विधानप्रकरणे लुका लुप्तस्य स्थानिवत्त्वप्रतिषेधात्। 'हे गौरिति'। 'गोतो णित्'। 'बाभ्रवीया इति'। बभ्रोरपत्यमिति 'मधुबभ्र्वोर्ब्राह्मणकौशिकयो'रिति यञ् 'ओर्गुणः,' 'वान्तो यि प्रत्यय' इत्यवादेशः। अवादेशो न स्थानिवद्भवतीति। ननु चासत्यपि स्थानिवद्भावे संनिपातपरिभाषया न भवितव्यमेवात्र यलोपेन, नैतदस्ति। अव इत्ययं संघातो यादिसन्निपातकृतो न च स लोपस्य निमित्तं किं तर्हि वकारमात्रं, यद्येवं स्थानिवद्भावस्याप्यप्रसङ्गः। योऽत्रादेशो नासावाश्रीयते यश्चाश्रीयते नासावादेशः। 'नैधेय इति'। निपूर्वाद्धाञ 'उपसर्गे घोः किः' 'आतो लोपः'। 'द्व्यचः' 'इतश्चानिञ' इति ढक्। ननु च पूर्वस्मादपि विधौ स्थानिवत्त्वमुक्तं तत् कथमेतानि प्रत्युदाहरणानि। नैष दोषः। अत्राप्यजपेक्षस्य पूर्वस्याग्रहणाद् योऽनादिष्टादचः पूर्वस्ततः परस्येति, एवमपि हे गौरित्यत्र प्राप्नोति व्यवहितेऽपि परशब्दवृत्तेर्गकारात्परस्य सोर्लोपः, एवमितरयोरपि, नैतदेवं, पूर्वस्य विधिरिति षष्ठीसमास एवायं तत्रानुवादत्वात् स्थानषष्ठ्यभावात् सम्बन्धसामान्ये षष्ठी, पूर्वसम्बन्धिनि विधाविति। सम्बन्धश्च द्विविधः कार्यित्वेन निमित्तत्वेन वा, यत्र कार्यित्वेन स पूर्वस्य विधिः यत्र निमित्तत्वेन स पूर्वस्मात्ततश्च योऽनादिष्टादचः पूर्वस्तन्निमित्तत्वेनाश्रित्य यत्कार्यं प्राप्तं स एव पूर्वस्माद्विधिः, यथाऽपीपचन्निति। अत्र हि योऽनादिष्टो णिच् वड् वा ततः पूर्वमपीपच् इत्येवाभ्यस्तं परस्य झेर्जुसो निमित्तं, तन्वन्तीत्यत्र यो ऽनादिष्टो ऽच् उप्रत्ययस्ततः पूर्वं यत् तन्निमित्तत्वेनाश्रीयते तद्विधावद्भस्येत्यनुवृत्तेः।

१ अजादेश इति पा॰ २।

एतदेव तत्राङ्गाधिकारस्य प्रयोजनं, हे गौरित्यादौ तु यो ऽनादिष्टादचः पूर्वो गकारादिर्न तत्सम्बुद्धिलोपादेर्निमित्तं यच्च निमित्तमोकारादिर्नाऽसावनादिष्टादचः पूर्वं इति न दोषः। इह तर्हि वेतस्वानिति टिलोपस्य पूर्वविधौ स्थानिवत्त्वात् सकारात्पूर्वस्यानुपधात्वाद् मादुपधाया इति वत्वं न स्यात्। न च स्थानिवद्भावेन सान्निहितमकारमपेक्ष्याकारान्तादिति लभ्यते, तस्यानादिष्टादचः पूर्वत्वाभावात् तदपेक्षवत्त्वे स्थानिवद्भावात्, नैष दोषः 'पूर्वत्रासिद्धे न स्थानिवत्'। विधिग्रहणं किं, ननु पूर्वसूत्रादेवानुवर्त्तते समासद्वयपरिग्रहार्थम्, असति हि तस्मिन् पूर्वस्येत्युक्ते पूर्वस्माद्विधौ न स्यात्, पूर्वस्मादित्युक्ते पूर्वस्य विधौ न स्यात्, नैतदस्ति। पूर्वस्येत्युक्तेऽपि अनुवादत्वात् स्थानषष्ठ्यभावात् सर्वः पूर्वसम्बन्धी विधिः प्रतिपत्स्यते, एवं तर्हि विधिमात्रे स्थानिवत्त्वं यथा स्यात् शास्त्रीये विपरीते च, यद्वा विधिग्रहणं द्वितीयो यत्नस्तत्राचः परस्मिन्पूर्वस्येत्येको योगः, विधावित्येवं,तेन वव्रश्चेत्यादौ स्थान्यलाश्रयमतिदिश्यते, ततो विधौ, अचः परस्मिन्पूर्वस्येत्येव, नियमार्थमेतत्, अजादेशः परनिमित्तकः पूर्वविधौ स्थानिवदेव न तु स्वयं निमित्तमिति, तेन पटयतीत्यादि सिद्धं भवतीति। नन्वसत्यपि द्वितीययत्ने यथा चोलवत् काश्मीरेषु व्रीहयो, मरुभूमिवदस्मिन्प्रदेशे जलमित्यादौ दृष्टान्ते प्रसिद्धस्य भावस्याभावस्य वा यथादर्शनमतिदेशः, एवमत्रापि भविष्यति, विषम उपन्यासः। युक्तं तत्र भावस्यैवाभवस्यैव च प्रसिद्धत्वाद्, इह तूदाहरणभेदेन भावाभावयोः प्रसिद्धावपि स्थानिवदादेश इत्युक्ते ऽश्रुतक्रियापदेषु वाक्येषु भवतीत्येवाध्याहारस्य प्रसिद्धत्वाद् भावातिदेशः स्याद् इत्यलमतिप्रबन्धेन ॥

नपदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥

द्विर्वचने यलोपादौ च तावत् तदेव विधेयं न तु तस्य व्यवस्थितस्य किंचित्, कौ स्त इत्यादौ तु पदान्तस्य सतः कार्यभावादि पदान्तस्य वाऽऽवादेर्विधानमित्युभयथा सम्भवः, एवं वरे विधावपि, तथा ऽपि सर्वोपहाय भावसाधन एव विधिशब्दः। 'एतेष्विति'। पदान्तादिक्रियाभेदेन

भिचानि यानि विधानानि एतेष्वित्यर्थः । 'पूर्वविधावित्यादि' । यद्यपि व्याकरणे न पदानि संस्क्रियन्ते न वाक्यं, तथापि वाक्यगते स्त इत्यादिके पदे व्युत्पाद्यमाने काविंत्यादेः पदस्यासत्यपि निमित्तत्वे सन्निधानमविरुद्धं, ततश्चानादिष्टादचः पूर्वत्वसम्भवाद् अस्ति स्थानिवत्त्वप्रसङ्ग इति भावः । 'दध्यत्रेति' । स्थानिवद्भावप्रतिषेधसामर्थ्यादसिद्धं बहिरङ्गमित्येतदपि न प्रवर्तते, शय्यात्रि यादावपि बहिर्भूतानपेक्षत्वाद्यणो बहिरङ्ग एव, वरइतिनिपातनादलुक् । 'यायावर इति' । 'नित्यं कौटिल्ये गताविति' यङ् । 'अतो लोपः परनिमित्तक इति' । आर्द्धधातुकइति परसप्तमीपक्षइति भावः । तथा चा 'नुदात्तेतश्च हलादे' रित्यत्रादिग्रहणम्, असति हि तस्मिन् हलन्तादिति विज्ञायेत ततश्च जुगुप्सनो मीमांसन इत्यत्र युच्च स्यादिति । यदि च सा विषयसप्तमी स्यात् प्रागेव प्रत्ययोत्पत्तेरतो लोपे सति हलन्तत्वादत्रापि युच् सिद्धः स्यात् । यत्तु 'चो यदि'-त्यत्र वक्ष्यति अज्ग्रहणं किं यावता हलन्ताण्ण्यतं वक्ष्यति अजन्तभूतपूर्वादपि यथा स्याद् दित्स्यन्दित्स्यमिति तद्विषयसप्तमीपक्षइति वेदितव्यं, परसप्तमीपक्षे हि प्राक् प्रत्ययोत्पत्तेरतो लोपाभावादनुपपन्नं तत्स्यात् । 'कण्डूयतेः क्तिनि कृतइति' । क्तिन्नाबादिभ्यो वक्तव्य इत्यनेनेति भावः । 'क्तिचि इति तु युक्तः पाठः । कण्डूतिरित्यत्राल्लोपस्य स्थानिवत्त्वादुवङ् प्राप्नोति, अस्तु च्छ्वोः शूडित्यूड् भविष्यति, न चोठ्यपि स्थानिवत्त्वम्, आदिष्टादचः पूर्वत्वात्, अत एवोठः पुनरुवङ् न भवति । 'परसवर्णे न स्थानिवद्भवतीति' । ननु श्नसोरल्लोपे कृते पश्चादनुस्वारो भवन्नादिष्टादचः पूर्व इति कथमस्य परसवर्णे कर्त्तव्ये स्थानिवत्त्वप्रसङ्गः । स्यादेतत् । स्थानिनो नकारस्यानादिष्टादचः. पूर्वत्वादादेशोनुस्वारोपि स्थानिवद्भावादनादिष्टादचः पूर्व इति । तन्न । नह्यनादिष्टादचः पूर्वत्वं नाम शास्त्रीयं यदतिदिश्येत । एवं तर्ह्यनादिष्टादचः पूर्वत्वापेक्षेचः परस्मिन्नित्यतिदेशे कर्त्तव्ये स्थानिवदादेश इत्येतत् प्रवर्त्तते, अतः सवर्णग्रहणं कृतम् । 'शिंषन्तीति' । यद्यपि शिण्ढीत्येवानुस्वारविधेरप्युदाहरणं तथापि तस्मिन्नेवोदाहृते परसवर्णविधौ स्थानिवत्त्वनिषेधस्तस्य स्थानिनोनुस्वारस्यापि विधौ

स्थानिवत्त्वप्रतिषेधमन्तरेणानुपपन्न इति पृथगनुस्वारग्रहणं न कर्त्तव्यमित्या-शङ्कानिराकरणाय केवलानुस्वारोदाहरणं दर्शितम्। 'प्रतिदीव्नेति'। प्र-तिपूर्वाद्दिवेः 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव' इति कनिन्प्रत्ययः। 'भस्येत्यधिकृत्येति'। परनिमित्तकत्वोपपादनार्थः। किमिदमुक्तं हलि चोपधायां चेति, दीर्घत्वं न स्यादिति, उपधायाञ्चेत्येतल्लेखकैः प्रमादा-ल्लिखितं, तथा चोपधायाञ्चेत्यत्र वक्ष्यति प्रतिदीव्नेत्यत्र 'हलिचे'ति दीर्घत्वमिति। 'अस्माद्वनाद्व्रवीति' 'न भकुर्छुरामि' ति तु प्रति-षेधो रेफवकारान्तस्य भस्येत्यत्र न प्रवर्त्तते। 'झलो झलीति सलोप इति'। सकारे सिचो लोप इत्येतत्तु नाश्रीयते तस्मिंस्त्वाश्रिते छान्दस-त्वाद्गुणलोपः। 'बहुखट्वक इति'। अत्र स्थानिवद्भावाद् 'ह्रस्वान्तेऽन्त्या-त्पूर्व' मिति खकाराकारस्योदात्तत्वं न भवति, 'कपि पूर्व' मित्येतदेव तु भवति। 'किर्योः गिर्योरिति'। 'कृगॄरिज्ने' ति व्युत्पत्तिपक्ष एतदु-दाहृतम्[1]। उपधायाञ्चेत्यत्र त्वव्युत्पत्तिपक्षमाश्रित्य वक्ष्यति 'उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि,' तेन किर्योगिर्योरित्यादिषु दीर्घो न भव-तीति 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्वजादेशो न स्थानिवद्भवती' ति वक्तव्यम्. क्वि. क्वौ यद्विधीयते तत्र कर्त्तव्ये यत्र कुत्र चित् कृतोऽजादेशो न स्थानिवद्भवतीति, लवमाचक्षाणो लौ, अत्र णिचि यष्टिलोपः यश्च क्वौ णिलोपस्तदुभयमपि क्वौः शूडिति वकारस्य क्विनिमित्तकूठि कर्त्तव्ये न स्थानिवद्भवतीति 'एत्येधत्यूठ्स्वि' ति वृद्धिः ये तु क्वौ लुप्तं न स्थानिव-दिति पठन्ति तेषामेतच्च स्यात्, तथा पिपठिषतेः क्वौ अतो लोपे नपुंसके बहुवचने जसि झल्लक्षणे नुमि जस्निमित्तेपि कर्त्तव्ये ऽतो लोपस्य स्था-निवत्त्वनिषेधः स्यात, क्वौ कृतत्वं त. क्वौ विधिं प्रतीत्यत्र तु पक्षे प्रतिषेधो न भवति पिपठींषि ब्राह्मणकुलानि, नुम्यसति सान्तमहत इति दीर्घत्वं न भवति देवयतेर्दैयूरित्यत्रोभयथापि सिध्यति। लुक्. लुका लुप्ते न स्था-निवत्, आमलक्या विकारः फलं 'नित्यं वृद्धशरादिभ्य' इति मयटः 'फले लुक्' 'लुक्तद्धितलुकी' ति ङीपो लुक् परनिमित्तकः यस्येति लोपे न स्था-

[1] हरणमिति पा॰ २

निवद् भवति, के चित्त्वेनदर्थं सूत्रे वर ई वरे इति ईकारप्रश्लेषं वर्णयन्ति, ईविधिं प्रति न स्थानिवदिति । उपधात्वे, उपधात्वे कर्त्तव्ये न स्थानिवत् परिखाशब्दाच्चातुरर्थिके णिकृते पारिखे भवः पारिखीय इति 'वृद्धादके-कान्तखोपधा' दिति छो न स्यात्, आकारलोपस्य स्थानिवत्त्वादनुपधा-खकार इति, प्रत्ययविधिविषयं चैतत्, यत्रोपधासंज्ञानिबन्धनः प्रत्ययो विधातुमिष्यते तत्रेवेत्यर्थ, घटयतीत्यादौ तु तत्र भवति । चङ्परो यो निर्ह्रासो ह्रस्वस्तत्र न स्थानिवद्भवति । वादितवन्तं प्रयोजितवान् अवी-वदद् वीणां परिवादकेन, योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद् णौ च-ङ्युपधाया ह्रस्वो न स्यात्, यश्चङ्परो णिर्च तस्मिन्नङ्गस्योपधा यस्मिं-श्चाङ्गस्योपधा न चङ्पर इति । कुत्वम्, पाचयतेः क्विपि पाक्तिः कुत्वमु-पलक्षणं लेहयतेर्लेढिः । दोहयतेर्दोग्धिः याचयतेर्याक्तिर्वेशयतेर्वेष्टिरित्यादि ॥

द्विर्वचनेऽचि ॥ अचः परस्मिन्नित्यत्र योनादिष्टादचः पूर्व इति स्थितं, साचकस्य द्विर्वचनं न त्वचः पूर्व्वस्येत्यप्राप्तं स्थानिवत्त्वं विधीयते रूपातिदेशार्थं च, अत्र षट् पक्षाः सम्भवन्ति । अचीत्यादेशोपलक्षणम्, द्विर्वचनइतिविषयनिर्द्देशः, अचि योऽजादेशः स द्विर्वचने स्थानिवद्भवतीति प्रथमः पक्षः, अचीत्येतदपि स्थानिवद्भावेनैव सम्बध्यते द्विर्वचनइति विषयनिर्द्देशाद् द्विर्वचने कर्त्तव्ये ऽजादेशः स्थानिवद्भवत्यचि पर इति द्वितीयः । द्विर्वचननिमित्तत्वादजेव द्विर्वचनग्रहणेन विशेष्यते, द्विर्वचनम-स्मिन्नस्तीत्यर्शआद्यच्प्रत्ययान्तेन वाऽधिकरणसाधनेन वा । आदेशोप-लक्षणं, द्विर्वचननिमित्तेऽचि योऽजादेशः स स्थानिवदिति तृतीयः । एवं विशे-षितं वाज्ग्रहणं स्थानिवद्भावस्य विशेषणम्, अजादेशः स्थानिवद्भवति द्विर्व-चननिमित्ते ऽचि परत इति चतुर्थः । द्विर्वचनग्रहणमावर्त्तते, तत्रैकेनाऽचि-शेष्यते, परेण विषयो निर्दिश्यतइति स्थिते तद्विशेषितमज्ग्रहणं स्थानि-वद्भावस्य विशेषणं द्विर्वचने कर्त्तव्ये ऽजादेशः स्थानिवद्भवति द्विर्वचन-निमित्ते ऽचि परत इति पञ्चमः । एवमेव स्थितेऽज्ग्रहणमादेशोपलक्षणं, द्विर्वचननिमित्ते ऽचि योऽजादेशः स द्विर्वचने कर्त्तव्ये स्थानिवद्भवतीति षष्ठः । अत्राद्ये पक्षे ऽचो द्विर्वचनेनाविशेषितत्वाद् द्विर्वचननिमित्तेप्यचि

आदेशः स्थानिवत्स्यात्, ततश्चाचिकीर्त्तद् इत्यत्र णिचि 'उपधायाश्च' तीत्वस्य 'चङी' ति द्विर्वचने स्थानिवद्भावादचकीर्त्तदिति स्यात्। दुद्यूषति ऊठि यथादेशः स्थानिवत्स्यात्, भवनमिच्छति, भवनीयतेः सन् बिभवनीयिषति ल्युटि कृतयोर्गुणावादेशयोः स्थानिवत्त्वे बुभवनीयिषतीत्यनिष्टं रूपं प्राप्नोति, द्वितीये तु अचिकीर्त्तदित्यत्र न दोषः, इत्वस्य तकारेण व्यवहितत्वात् स्थानिवद्भावभाजो ह्यादेशस्य स्थानिवत्त्वविधानवेलायामच्यनन्तरे स्थानिवत्त्वेन भवितव्यम्। एवं ह्यचि परतः स्थानिवद्भावः कृतो भवति, दुद्यूषतीत्यादौ तु स्यादेव, यथाविन्यत्रा 'त औ णल' इत्यौकारेण वृद्धौ कृतायां संप्रत्यादेशात्परोऽजस्तीति स्थानिवत्त्वं न स्यात्। जग्मतुरित्यादौ च गमहनेत्युपधालोपस्य व्यवहितत्वाच्च स्यात्। तृतीये तु कालावधारणं कर्त्तव्यम्, अन्यथा द्विर्वचनादुत्तरकालमपि स्थानिरूपमेवावतिष्ठेत, चतुर्थे तु यथा जग्मतुरित्यादौ पूर्वोक्तन्यायेन स्थानिवद्भावो न प्राप्नोति, कालावधारणं च कर्त्तव्यम्। पञ्चमे ऽपि यथा जग्मतुरित्यादौ न स्यात्, अत एतेषु पक्षेष्वेवं दोषसम्भवात् षष्ठं पक्षमाश्रित्याह। 'द्विर्वचननिमित्तेचीत्यादि'। अत्र हि पक्षे द्विर्वचनेनाचो विशेषणादचिकीर्त्तत् दुद्यूषति बिभवनीयिषतीत्यादौ न दोषः, आदेशोपलक्षणत्वाच्च यथाबित्यादावपि न दोषः, पुनश्च द्विर्वचनग्रहणात् कालावधारणमपि लभ्यते। *

ननु द्विर्वचननिमित्ते ऽचि योऽजादेश इत्युच्यमाने नुनावयिषति चुक्षावयिषति पुस्फारयिषतीत्यादौ णेरद्विर्वचननिमित्तत्वात्तन्निमित्तावादेश आकारश्च न स्थानिवत्स्यात्, ततश्चाभ्यासउकारो न श्रूयेत। नैष दोषः। पुयण्जीति ज्ञापकाद् द्वित्वनिमित्तेऽपि णौ स्थानिवत्त्वापायात्। तथाहि। नहि णौ कृतस्य स्थानिवद्भावमन्तरेण ओः पराः पुयण्ज्यो ऽवर्णपराः सम्भवन्ति, पिपविषति, यियविषतिइत्यत्र सम्भवन्तीति चेत्, किमेतावता पुयग्रहणं प्रत्याहारग्रहणं जग्रहणं चार्थवद्भवतीति ज्ञापकमुक्तार्थस्य, यद्येवमचिकीर्त्तदित्यत्रेत्वस्य स्थानिवत्त्वादचकीर्त्तदिति स्यात्, नैष दोषः। ज्ञापकस्य तुल्यजातीयापेक्षत्वात् यत्रोत्तरभागस्याचो ऽवर्णपरो भावस्तत्रैव स्थानिवत्त्वज्ञापनात्। 'नन्वेवमपि ओः पुयण्जीत्यत्र णेरित्यश्रवणात्साक्षान्न्येन द्वि-

स्वनिमित्तं स्थानित्वं विज्ञायेत ततश्च विभवनीयिषतीत्यत्रापि स्यात् । नैतदस्ति । येन नाव्यवधानमित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणात् णेरेव केवलस्य व्यवधायकस्य सम्भवात्'[1] * । नन्वचीत्युच्यमाने चक्रतुरित्यादौ न स्यात्, नह्यत्राजमात्रं द्विर्वचननिमित्तं क्व तर्हि स्यात् चकार चक्रुरित्यादौ ह्यजमात्रं प्रत्ययः, स्यादेतत् । परस्मिन्नित्यनुवृत्तमचीत्यनेन विशेष्यते तत्र यस्मिन्विधिस्तदादावल्ग्रहणमिति तदादिविधिर्भवति अजादौ परस्मिन्निति द्विर्वचननिमित्तत्वेनापि अजाद्येव विशेष्यत इति, एवमपि चक्रतुरित्यत्र स्यात्, यद् द्विर्वचननिमित्तमजादि न तदादेशस्य निमित्तमच्येव यणो विधानात्, यच्चादेशस्य निमित्तं न तद् द्विर्वचनस्य निमित्तं पपतुः चखतुरित्यादावेव तु स्यात्, किं च यस्मिन्विधिरितिवचनात् यत्र किंचिद्विधीयते तत्रैव तदादिविधिः, इह तु अचि योऽजादेश इत्यनुवादत्वात्तदादिविधेरेवासम्भवस्तस्मादजेव गृह्यते न तदादिः । उच्यते । चक्रतुरित्यादावतुसोऽद्विर्वचनं प्रति निमित्तत्वेनाश्रयणेऽप्यचि परत्रावस्थिते द्विर्वचनं दृष्टमित्येतावतात्रैव द्विर्वचननिमित्तमित्युच्यते समुदायेऽप्ययं द्विर्वचनशब्द उपचारेण प्रवर्त्तते, एवमपि पपतुरित्यत्र न स्यात्, आल्लोपस्याजादेर्निमित्तं नाज्मात्रम्, नैष दोषः । अचि योऽजादेश इति कोऽर्थः, अचि यो दृष्ट इत्यर्थः । यश्चाचि विधीयते यश्चाजादौ द्वावपि अचि दृष्टावेवेति सर्वत्र सिध्यति, अथ वा ऽजादावाल्लोपो न हलादौ तत्र प्राप्ताप्राप्तविवेकेनाच एव निमित्तत्वं द्विर्वचनएव कर्त्तव्य इति एवकारेणैतद्दर्शयति द्विर्वचनग्रहणमचं विशिनष्टि कालं चावधारयतीति, एकस्योभयसम्बन्धे हि भवति एवकारः, देवदत्तो ग्रामं गच्छतु स एव गामानयत्विति । यद्यत्रापि पूर्ववत्कार्यातिदेशः स्यात् चक्रतुरित्यादावनच्कत्वादपां तं द्विर्वचनं स्थानिवद्भावाद् भवदपि यथाऽऽदेशयुक्तस्यैव स्यादित्यभ्यासे स्थानिरूपं न श्रूयेत तदर्थमाह । 'रूपातिदेशश्चायमिति' । चशब्दोऽवधारणे, कथं पुनरवगम्यते रूपातिदेशोऽयमिति, अज्ग्रहणात्, तद्धि जेघ्रीयत इत्यत्र 'ई घ्राध्मो'रिति हलादौ विहितस्येत्वस्य स्थानिवत्त्वं मा भूदित्ये-

(१) नन्वित्यारभ्य संभवादित्यन्तो ग्रन्थो बहुषु पुस्तकेषु नास्ति

घमर्थं क्रियते, यदि च रूपं स्थानिवत् ततो ऽसत्यज्ग्रहणे घ्राघ्रीयध्माय्ध्मीय् इतिद्विर्वचनं स्यादिति तन्निवृत्त्ययेऽज्ग्रहणमर्थवद् भवति । अथ हि कार्यं स्थानिवद् भवति तस्य सत्यपि स्थानिवत्त्वे ईकारयुक्तस्यैव द्विर्वचनमिति नार्थोऽज्ग्रहणेन भसेस्तु क्सौ 'घसिभसोर्हलि' त्युपधालोपे कृते सत्यसति वा द्विर्वचने श्वानिनिवृत्तौ विशेषाभावः, छान्दसश्च क्सुः छन्दसि दृष्टानुविधानमतो ज्ञापकमेवाज्ग्रहणं, तत्र यद्यपि स्थान्येव स्वरूपमापद्यते तथाप्यातिदेशिकानातिदेशिकरूपभेदाश्रयस्तु वति,द्विर्वचनएव कर्तव्यइत्येतदेव स्पष्टयति । 'नियतकालइति' । कृते द्विर्वचनइत्यादिना नियतकालत्वमेव दर्शयति, यदि कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते यथा चक्रतुरित्यादौ द्विर्वचनादूर्ध्वं पूर्वं कृतो यणादेश एव श्रूयते तथा निन्यतुरित्यादावपि द्विर्वचनात्पूर्वमेकाच्त्वादि, यङादेशे कृते स्थानिवद्भावाद् द्विर्वचनेपि पूर्वप्रवृत्त इयङेव स्यात् । अस्तु, तस्यासिद्धवदत्राभादित्यसिद्धत्वाद् एरनेकाच इति यणि सति श्रवणं न भविष्यति, यद्वा पूर्वप्रवृत्तोपीयङ् द्विर्वचनकाले ऽपहृत इति पुनः प्रवर्तयितव्यस्तस्यां च दशायामनेकाच्त्वाद्यणा बाध्यते । यद्येवमियेष उवोषेति इषेरुषेश्च लिटि तिपि णलि प्रवृत्तस्यापि गुणस्य द्विर्वचनकाले ऽपहृतत्वात्कृते द्विर्वचने पुनः प्रवृत्तिस्ततश्चानादिष्टादचः पूर्वत्वेनाभ्यासो दृष्ट इति तस्याभ्यासस्य उवङि कर्तव्ये गुणस्य स्थानिवद्भावादसवर्णइति प्रतिषेधः स्यात् । असवर्णग्रहणसामर्थ्यात्स्थानिवत्त्वं न भविष्यति । अस्ति वचनस्यावकाश इयर्ति इयृतः, नह्येकमुदाहरणमसवर्णग्रहणं प्रयोजयति यद्येतावत्प्रयोजनं स्यादर्त्तावित्येव ब्रूयात्, किं तर्ह्युच्यते द्विर्वचने पुनरादेशरूपमेवावतिष्ठतइति, अत्र हि पुनःशब्दादवतिष्ठतइतिवचनाच्च पूर्वकृतस्यैवादेशस्योन्मज्जनमेवोक्तं प्रतीयतइति, नायमर्थः, अपि तु कृते द्विर्वचने स्थानिरूपं नावतिष्ठते यत्प्राप्तं तद् भवतीत्येवं परमेतत् । 'आल्लोपेत्यादि' । उपलक्षणमेतत् ततुरिः पपुरिरित्यादौ 'ऋत इद्धातो' 'रुदोष्ठ्यपूर्वस्य' बहुलं छन्दसी' ति इत्वोत्वयोरपि स्थानिवत्त्वं भवति, । 'आटिटदिति' । अटतेर्ण्यन्ताल्लुङि चङि अजादेर्द्वितीयस्येति टिशब्दस्य द्विर्वचनमाडजादीनाम् ।

'जिनायेत्यादि'। 'णलुत्तमो वे' ति यदा णित्वं नास्ति तदा गुणः णित्व-पक्षे वृद्धिः। 'नेनैलोलादिति द्विर्वचनमिति'। गुणवृद्ध्योस्तु स्थानिवद्भावे विशे-षाभावादोक्तः। 'जग्ले मम्लइति'। भावे लिट्, अनैमित्तिकमात्वं शिति तु प्रतिषेधवत्यात्वस्य स्थानिवत्त्वं न भवति। 'इवर्णमित्यादि'। यदि कालो नावधार्येत तदोत्तरकालमपि स्थानिरूपं प्रसज्येत 'ततश्चाकारस्य श्रवणे सति परेण सह वृद्धिरेचीति वृद्धिः स्यात्। इडाधिङ्गइति गाङ्लिटीति द्विलकारनिर्देशेन लकारादौ लिटि गाङादेशविधानाद-ज्निमित्तत्वाभावात् स्थानिवत्त्वाभावः॥ (शेषमग्रे)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

## विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः॥

॥ श्रीगणेशाय नमः॥

(*Continued from page* 184. VOL. XI.)

अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना न जातहार्द्देन च विद्विषा(क) दरः॥

अत्र पूर्वार्द्धे दारिद्र्यरूपापद्विघातकतया दातृत्वं विवक्षितमिति द्वितीयार्द्धे तद्विपरीत्यप्रदर्शकं जन्तुपदमदातरि प्रयुक्तं तत्र च जायत इति योगमपेक्ष्य तस्य शक्तिसत्त्वेपि न विवक्षितया दातृतया प्रकारेण से-त्यऽवाचकम्। अनपेक्षितयोगं यथा-

(क) न जातहार्देन न विद्विषेत्यन्यत्र।

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा,
तद्विश्लेषरुजान्धकारितमिदं दग्धं दिनं कल्पितम्, ।
किं कर्म्मः कुशले सदैव विधुरो धाता, न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥

अत्र दिनपदं प्रकाशमयमित्यर्थे विवक्षितम्, तामसीत्यनेन लक्ष्यस्य तमोमयत्वस्य वैपरीत्याभिधानायोपादानात्· तत्र धर्म्मिणि योगमनपेक्ष्यैव रूढ्या दिने दिनत्वेन शक्तं, न पुनः प्रकाशमयत्वेनेत्यवाचकम् । द्वितीयं यथा–

जलं जलधरे क्षारं, मयं वर्षति वारिधिः,(क) ।
इदं बृंहितमश्वानां, ककुद्मानेव हेषते ॥

अत्र जलधरशब्दस्य जलधारकत्वे प्रकारे सामर्थ्येऽपि न समुद्रे धर्म्मिणि सामर्थ्यम्· यद्यपि योगशक्तिस्तत्राप्यस्त्येव, तथापि रूढ्या प्रतिबन्धादनस्तिकल्पैव । तृतीयं तूपसर्गसंसर्गादर्थान्तरगतमन्यथा च· तयोराद्यं यथा–

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्राऽलक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी·
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥

अत्र विदधातिर्धारणे प्रयुक्तः, नच धारणे धारणत्वे वा समर्थः· उपसर्गसंसर्गेण(ख) करणे नियतशक्तिकत्वात्(ग) । अन्त्यस्तु वाक्यनिष्ठाऽवाचकतायां "प्राभ्रभ्राडि"त्यादावुदाहरिष्यते· तदेवं "निर्दूषणे प्रकाशे यदसमर्थं धर्म्मधर्म्मिणोर्द्वयोरपि शक्तिविरहः· अवाचके तु धर्म्ममात्रे सः· विदधदित्युदाहरणं त्ववाचकप्रकरणमध्येऽसमर्थस्यैवे"ति प्रलपितं, तद्वाक्या·

(क) "वारिदः"–इति सर्वत्रैव जागरत्यपि इतरचरणत्रयवदत्रापि न्यायतौल्यादर्थान्तरकाढ़दुष्टस्यैव प्रयोक्तुमुचितत्वाद्वारिदस्थाने वारिधिं निदध्मो ऽनुसंदधश्चेत्थमेव शेमुषीमुज्ज्वलाम् ।

(ख) 'वि' संसर्गेणेत्येकत्र· नार्थे विशेषः ।

(ग) नियमितशक्तित्वादित्यपरत्र· तुल्यार्थम् ।

ऽवाचकस्योदाहरणानवलोकननिबन्धनं सन्दर्भविरुद्धं चेत्यनादेयम्· दूषकताबीजं तु विवक्षितार्थानुपस्थितिरिति नित्य एवायम् ॥ (८)

त्रिधा ऽश्लीलमिति· अश्रीरस्यास्तीत्यर्थे सिध्मादित्वाल्लप्रत्ययः, कपिलकादित्वाद्रेफस्य लत्वम्· तथाच कान्त्यभाववदिति पर्य्यवसन्नम्· कान्त्यभावश्चातिप्रसक्त इति व्रीडाजुगुप्साऽमङ्गलव्यक्तिहेतुकस्तद्विशेषो वक्तव्यः· नचैतत्त्रये ऽनतिप्रसक्तमनुगतं रूपमस्तीति व्रीडादिहेतुकाऽकान्तिमत्सु नानार्थोऽयमश्लीलशब्द इत्यर्थः· तच्च प्रत्येकं त्रिविधम्, क्वचिद्विवक्षितस्यैवार्थस्य व्रीडाद्यालम्बनत्वात्, क्वचिदविवक्षितार्थस्य निर्वाहिणस्तथात्वात्, क्वचिदविवक्षितस्यानिर्वाहिणोपि स्मृतिमात्रहेतुत्वात्· एषु त्रिषु क्वचित्किञ्चिदुदाह्रियते· तत्र व्रीडाव्यञ्जकार्थान्तरस्य तथाभावो यथा–

साधनं सुमहद्यस्य, यन्नान्यस्य विलोक्यते, ।
तस्य धीशालिनः कोऽन्यः सहेताऽरालितां भ्रुवम् ॥

अत्र सैन्यार्थकस्य साधनशब्दस्य पुंव्यञ्जनमर्थान्तरम् । जुगुप्साव्यक्तौ तथाभूतार्थस्मृतिमात्रहेतुत्वं यथा–

लीलातामरसाहतो ऽन्यदयितानिःशङ्कादष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः, ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्त्ततयाऽथवा नतिमृते तेनानिशं चुम्बिता ॥

अत्र वायुशब्दो ऽपानवायुं स्मारयति, नतु तदर्थतया वाक्यमुपपद्यते । अमङ्गलव्यक्तौ विवक्षितस्यैवार्थस्य तथात्वं यथा–

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नो ऽद्य जातः, ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्ही (क) ॥

अत्र विनाशशब्दस्य विवक्षित एवार्थो ऽमङ्गल्यः । एवं त्रिषु भिन्नभिन्नप्रकारोदाहरणेन प्रत्येकं त्रिप्रकारत्वमूहनीयं, न्यायसाम्यात्· दूष-

(क) बर्ह इति पाठान्तरम् ।

कताबीजं त्वनुभवसिद्धरसापकर्षकताद्दृशार्थोपस्थितिः· नीरसे तु चमत्कारापकर्षकत्वं तस्याः· अथ वा तादृशार्थोपस्थित्या श्रोतुर्वैमुख्यं तद्बीजम्· अतः शमकथायां दोषत्वाभाव,स्तादृशोपस्थितेः शमपोषकत्वात्· भाव्यऽमङ्गलादिसूचने कामशास्त्रस्थितौ च न दोषत्वम्, वैमुख्याभावात्, शिवलिङ्गभगिनीब्रह्माण्डादिशब्देषु च समुचीतगुप्तलक्षितेष्व,ऽसभ्यार्थानुपस्थितेः ॥ (९)

संदिग्धं विवक्षिताविवक्षितोभयार्थोपस्थापनानुकूलस्वरूपद्वयसंदेहविषयः यथा—

आलिङ्गितस्तत्र भवान् संपराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

अत्र वन्द्यामितिपदं वन्दीशब्दे सप्तम्यन्तं, वन्द्याशब्दे द्वितीयान्तं वेति संदेहः· प्रथमे हठगृहीतमहिलायां कृपां कुर्विति, द्वितीये नमस्यामाशीःपरम्परामित्यर्थोपपत्तौ साधकबाधकप्रमाणाभावात्संशयः· दूषकताबीजमुद्देश्यानिश्चयाभावः· अतो यत्र संदेह एवोद्देश्यस्तत्र, यत्र वाच्यादिमहिम्ना प्रकरणादिवशेन वा निश्चयस्तत्र वा ऽदोषत्वम् ॥·(१०)

अप्रतीतमिति नञो ऽल्पार्थतया शब्दानुशासनातिरिक्तशास्त्रमात्रप्रसिद्धमित्यर्थः· अत एवाऽप्रयुक्ताद्भेद,स्तस्यान्यत्रापि प्रसिद्धेः· उदाहरणं—

सम्यग्ज्ञानमहाज्योतिर्गलिता (क) शयताजुषः ।
विधीयमानमप्येतच भवेत्कर्म्म बन्धनम् ॥

अत्राशयशब्दो मिथ्याज्ञानजन्यवासनार्थः· स चैवंभूतो योगशास्त्र एव प्रसिद्धः· एवं शास्त्रान्तरप्रसिद्धमप्यूह्यम्· दूषकताबीजं तच्छास्त्रानभिज्ञस्यार्थानुपस्थितिः· अत एव यत्र तच्छास्त्राभिज्ञ एव प्रतिपाद्यः, स्वयमेव वा परामर्श,स्तत्र न दोषत्वं, प्रत्युत व्युत्पत्तिसूचकतया गुणत्वम् (११)

"ग्राम्यं ग्रामे केवले लोके प्रसिद्धं, नतु शास्त्रेपि· अत एवाप्रयुक्ताद्भेद"इत्येके· अपरे "तद्देश्यमनेन संगृह्यते· कटिशब्दादयस्तु नोदा·

(क) लितेवत्यन्यत्र ।

हर्तव्याः, किंतु गल्लभल्लादय" इत्याहुः तदुभयमप्यसत्, कटिशब्दस्य शास्त्रेपि प्रसिद्धस्य व्युत्पन्नस्य चोदाहरणत्वेन दर्शितत्वात् तस्मात्समस्तलोकप्रसिद्धं तस्मिन् देशे मर्वैर्लौकैर्यदाख्यया यद्वस्तु व्यवह्रियते, तदित्यर्थः एतेन देश्यमपि संगृहीतम् अत एवात्र खादनपानगल्लादय उदाहरणीयाः कलममहिषीदध्यादयश्च प्रत्युदाहर्त्तव्याः उदा०–

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥

अत्र कटिशब्दः लोकानभिज्ञं प्रति तदर्थानुपस्थितिर्दूषकताबीजमिति ऋजवः वस्तुतस्तु, नागरोपनागरौ विहाय ग्राम्यशब्दप्रयोगाद्वक्तुरवैदग्ध्योन्नयनेन श्रोतुर्वैमुख्यं तदित्यालोच्यते अत एव विदूषकादावधमे वक्तरि न दोषत्वं, तस्य तथैवौचित्येन वैरस्याभावात् कटिशब्दे च ग्राम्यताप्रयोजकं नाश्लीलत्वमिति न तत्सङ्करः ॥ (१२)

नेयार्थं, नेयो ऽर्थो यस्य तत् नेयत्वं च

"निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते चाधुना(क) काश्चित्काश्चिन्नैव त्वशक्तितः" ॥–

इत्यनेन रूढिप्रयोजनाभ्यां विना या लक्षणा निषिद्धा, तद्विषयत्वम् यथा–

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि! चपेटापातनातिथिम् ॥

अत्र चपेटादिपदं निर्जितत्वे लक्षणया प्रयुक्तम् नच तत्रास्य रूढिर्वा प्रयोजनं, मुख्यशब्दार्थातिरेकिणोर्थस्याऽप्रतीतेः दूषकताबीजं च वृत्त्यभावनार्थानुपस्थितिरिति नित्योयं दोषः ॥ (१३)

अथ भवेत्क्लिष्टमित्यादि क्लिष्टादिकं दुष्टं पदं समासगतमेवेत्यभिसम्बन्धः तदयमर्थः–क्लिष्टत्वादिदोषत्रयं पदान्तरसाहित्येनैव सम्भवति तथाच यदि तयोः पदयोः समासस्तदैव समासेनैकपद्यात्पददो-

(क) साम्प्रतमिति क्वचित् ।

षता· असमासे तु वाक्यदोषत्वमेव· इतरेषां तु समासे ऽसमासे च पद दोषत्वं, द्वितीयपदैर्निरपेक्ष्यैरेव दुष्टत्वादिति· तत्र क्लिष्टमर्थप्रतीतौ क्लेशवत्· यतो विवक्षितस्यान्वितविशेषस्य प्रतिपत्तिर्विलम्बिता, तदित्यर्थः· निहतार्थादौ तु पदार्थोपस्थितिरेव विलम्बितेति ततो भेदः· विलम्बश्चा· प्रत्यासत्तेर्व्वा सामान्यशक्तात् प्रकरणाद्यभावे विवक्षितविशेषस्य द्रागनुप· स्थितेर्वा· आद्ये वाक्यमात्रदोषत्वं "धम्मिल्लस्ये"त्यादौ अन्त्ये तु पद-दोषत्वमपि· तद्यथा–

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभते ऽत्यर्थं भूपाल! तव चेष्टितम् ॥

अत्रात्रिलोचनसम्भूतेत्यादौ सामान्यतो ऽन्वयबोधाविलम्बेपि अत्रि· लोचनसंभूतेत्यादिना चन्द्रादेर्न द्रागुपस्थितिः· अन्यस्यापि तथाभावात्· नियामकस्याभावाच्च· अतः कुमुदैरित्यस्य व्यवधानेनोपस्थितिः· इदमेव च 'अत्रिदृष्टेः समुद्भूतस्य द्योतेनावभासिभि'रिति पाठे द्वितीयप्रभेदवाक्यदो-षोदाहरणं द्रष्टव्यम्· दूषकताबीजं प्रतीतिविलम्बः प्रहेलिकादौ तु तस्ये-ष्टत्वाददोषत्वम्· मत्तोक्तादौ तु गुणत्वमपि, तदौचित्यात् ॥ ( १४ )

अविमृष्टविधेयांशम्, अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो, यत्र तत्· प्राधान्यं च विधिप्रतीतियोग्यता· सा चानुपसर्जनीभूतत्वे सत्युद्देश्या· नन्तर्य्यम्· अतो "न्यक्कारो ह्ययमेवमे"त्यादौ "वणमप्यमुक्त"त्यादौ वा ना ऽव्याप्तिः· प्रथमे उक्तरूपप्राधान्याभावेन, द्वितीये विधेयस्य प्रसज्यप्रतिषे· धस्याऽनिर्देशेन विशिष्टविरहसत्त्वात्· उदा०–

मूर्द्ध्नामुद्वृत्तकृत्ताऽविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णामेषां किमेतत्फलमिह, नगरीरक्षणे यत्प्रयासः ॥

अत्र नगरीरक्षणे एव यत्प्रयास,स्तन्मूर्ध्नां महिमा मिथ्येति मिथ्यात्वं विधेय,मप्राप्तत्वात्· अत एव च नानुवाद्यम्· प्राप्तत्वे तु मिथ्यामहि-

न्यामफलत्वमेवोचित,मतः किमेतत्फलमित्यादिना ऽनभिसम्बन्धः स्यात्· तच्च बहुव्रीहावन्यपदार्थे गुणीभूतं,·.विशेषणप्राधान्ये समासाननुशासनात्· किञ्च. उद्देश्यं विधेयं च यदि पृथक्पदाभ्यामुपतिष्ठेत, तदा प्राप्तमुद्दिश्या ऽप्राप्तं विधीयेत· नच समासे पृथक्पदादुपस्थितिः· अपृथगुपस्थितौ च न तथा व्युत्पत्तिरिति· एव समासान्तरेप्यविमृष्टत्वं द्रष्टव्यम्· तत्र कर्मधारये यथा

· स्रस्तां नितम्बादवरोपयन्तीं पुनः पुनः केसरदामकाञ्चीम् ।
नासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥

अत्र द्वितीयत्वं मौर्व्यामुत्प्रेक्ष्य विधेयम्· तच्च समासे गुणीभूतम्· मौर्वीं द्वितीया मिति पाठे तु निराबाधा प्रतीतिः· नन्वत्र काञ्च्यां द्वितीयमौर्वीत्वं विशिष्टमेवोत्प्रेक्ष्य,मतो नोक्तदोषावकाश इति चेच,तथापि हि विशेषणांशस्य द्वितीयत्वस्य प्राधान्यं, द्वितीयसद्भाव एकस्य न्यासीकरणौचित्यात्· मौर्वीत्वं तु तत्राप्रयोजकम्, अन्यस्यापि सद्वितीयस्य तदौचित्यादिति वस्तुविशेषपरिचायकतामात्रम्· तस्माद्विशिष्टविधावपि विशेषणमत्र प्राधान्येन वक्तव्यम्· अत एवा "ऽऽकडारादेका संज्ञे"त्यत्रैकत्वस्य प्राधान्यभङ्गभयेन समासो नाकारीति व्याख्यातारः· अन्यथा तत्राप्येकत्र संज्ञिन्युद्दिश्ये एकत्वविशिष्टसंज्ञाविधाने दोषो न स्यात् । बहुव्रीहावपि तद्धितार्थगुणीभूते ऽन्यपदार्थे गुणीभावो यथा–

वपुर्विरूपाक्ष,मलक्ष्यजन्मता, दिगम्बरत्वेन निवेदितं वसु, ।
वरेषु यद्बालमृगाक्षि! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥

अत्र वरेषु मार्गणीयानां सुन्दरत्वमहाकुलीनत्वादीनां धर्माणां वैकल्यदर्शनप्रस्तावाज्जन्मन्य ऽलक्ष्यत्वं विधित्सितम्· तच्च समासे न्यग्भूतम्·. "अलक्षिता जनि"रितिपाठे तत्पौर्वापर्य्यविपर्य्ययनिबन्धनाप्राधान्येपि समासनिबन्धनं तदप्राधान्यं निवर्त्तते । नञ्समासे यथा–

आनन्दसिन्धुरतिचापलशालिचित्त-
संदाननैकसदनं क्षणमप्यऽमुक्ता ।

या सर्वदैव भवता तदुदन्तचिन्ता

तान्तिं तनोति तव संप्रति, धिग्धिगस्मात् ॥

अत्रावान्तरवाक्ये ऽमुक्तेत्यनेन

'नवजलधरः सन्नद्धोऽयं, न दृप्तनिशाचरः,

सुरधनुरिदं, दूराकृष्टं न नाम (क) शरासनम्, ।

अयमपि पटुर्धारासारो, न बाणपरम्परा,

कनकनिकषस्निग्धा विद्युत्,प्रिया न ममोर्वशी' ॥—

इत्यत्रेव प्रसज्यप्रतिषेध एव विवक्षितः· ननु

'जुगोपात्मानमत्रस्तो, भेजे धर्म्ममनातुरः, ।

अगृध्नुरादद सोऽर्था,नऽसक्तः सुखमन्वभूत्' ॥—

इत्यत्रेवात्रस्तत्वाद्यनुवादेनात्मगोपनादिवदमुक्तानुवादेनान्यत् किञ्चिद्विधेयमस्ति· नच समासे नञः प्रसज्यप्रतिषेधो ऽर्थः, किन्तु पर्य्युदास एव· यदुक्तं—

"विधेयंत्र प्रधानत्वं, प्रतिषेधे ऽप्रधानता, ।

पर्युदासः स विज्ञेयो, यत्रोत्तरपदे न नञ्" ॥

इति· कथं तर्हि, 'अश्राद्धभोजी त्यादौ प्रसज्यप्रतिषेधलाभः, पर्युदासेनाक्षेपात्· ननु पर्य्युदासार्थे अमुक्तत्वमेव विधीयताम्, फलाऽविशेषादिति चेद्,भवेदप्येवं, यदि तथा सति तृणमपीत्यनेन सम्बन्धः स्यात्· स हि मुक्तत्वेन प्रतियोगिनैव विवक्षितो, नच पर्युदासे तथा सम्भवः· नन्वेवमपि नाविमृष्टविधेयांशता विधेयानुपस्थितेः, किंतु धारणे विदधदितिवदवाचकत्वमेव स्यात्· समासे ऽर्थान्तरनिरूढत्वादिति चेन्न, प्राधान्येनानिर्द्दिशस्य तथाप्यचतेः· अत एव "प्राधान्येनानिर्दिष्टो विधेयांशो यत्रे"त्याह वृत्तिकृत्,नत्वप्राधान्येन निर्दिष्ट इति· तर्हि विदधदित्यस्याप्यत्रैवान्तर्भाव इति चेन्न, तदर्थस्यानिर्दिष्टत्वेऽप्यविधेयत्वात्· अमुक्तेत्यस्या ऽविमृष्टविधेयांशस्या ऽवाचकप्रवेश इति चेद्, उभयोरसङ्कीर्णस्थलसम्भवे क्वचित्सङ्करेऽप्यदोषात्· दूषकताबीजं त्वविवक्षितार्थाऽप्रत्ययः· तस्मान्नित्यदोषो ऽयम् ॥ (१५) (शेषमग्रे)

(क) न तस्येति क्वचित् ।

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

( *Continued from page* 139. Vol. X. )

१२ मृदादीनां कारणत्वं न चेदिष्टं घटं प्रति ।

अविद्यायाः कारणत्वं कथं सिद्ध्येत्प्रमां विना ॥ १५ ॥

नन्वविद्यायोनित्वं भावानां कार्य्यकारणभावमङ्गीकृत्य न वा । न चेदविद्यायोनित्वमपि कथम् । अस्ति चेत्कार्य्यकारणभावस्तदा यथायथमन्वयव्यतिरेकादिरेव प्रमाणं तत्र प्रकारान्तरासम्भवात् । तथाचान्वयव्यतिरेकादिसिद्धं मृदादिकारणत्वमपहाय अविद्याकारणत्वभिधानमनुचितमेव । किञ्च अविद्यायोनित्वं भावानां

12. If you do not admit that clay &c. are causes of a pot, how, in the absence of a correct confirmatory instance, is the causality of Nescience to be proved?...XV.

Common Sense again urges that the sceptic too must start from certain assumptions: thus he must assume that the causal relation is itself real, in order to prove that Nescience is the cause of the world.

It may be asked whether, in maintaining Nescience as the source of existing things, the causal relation is assumed as real. If not, then the causality of Nescience also cannot be affirmed. If the causal relation be admitted as real, then the inductive methods of argument from conjoint presence and absence &c.,* as may be demanded in each case, are trustworthy sources of knowledge; for no other methods of proof can apply to the causal relation (tatra). And so it is manifestly improper to maintain the causality of Nescience, while rejecting the causality of clay, threads &c. (in the case of pots and yarn, cf. supra) which has been proved by inductive methods.

Moreover, he who holds that Nescience is the source of things should be asked, whether Nescience is the sole cause,

* The *etcetera* is glossed in Nānādīkshita's Siddhāntadīpikā by धर्मिग्राहकमानपरम् sc all cases in which existence of substrate is inferred from existence of attributes; as subtile ether (substrate) is inferred from sound (attribute).

वदन् प्रष्टव्यः । किमितरनिरपेक्षा अविद्यैव कारणमुतादृष्टेश्वरादिकारणान्तरसापेक्षा । नाद्यः कारणवैचित्र्याभावेन कार्यवैचित्र्यानुपपत्तेः चेतनाधिष्ठानमन्तरेण जडशक्तेः कार्य्यकारित्वानुपपत्तेश्च । नापरः अविद्याकारणवादिनाप्यदृष्टेश्वरादेः कारणत्वस्यावश्यं वक्तव्यत्वाल्लाघवात्तत एव विचित्रकार्योपपत्तौ किमज्ञानेन कारणत्वभिमतेन कल्पितेन । तथाच प्रत्यक्षादेर्लौकिकस्य प्रमाणस्य पूर्वकाण्डस्य च पुत्रपशुस्वर्गादिकं प्रति यागादेः साधनताबोधकस्य प्रामाण्यं समर्थितं

independent of any others, or as conjoined with the retributive power of actions, God and the other *general* causes.* Nescience cannot be the sole cause; for variety in the effects is impossible if the cause is a unity (as Nescience is); and because an unintelligent force (like Nescience) cannot be a cause without the aid of an intelligent substrate (to will that force). Nor will the other alternative stand, for he who holds to the causality of Nescience is bound also to admit the conjoint causality of the retributive power of actions, God, &c.; and since it is easier to account for the production of a variety of effects from these various causes (tataḥ eva), what necessity is there to assume Nescience as the cause?

And so (continues the objector) there is established the trustworthiness of perception and the other sources of human knowledge, and of the earlier (or ritual portion) of the Veda which declares that sacrifices &c. are the means of obtaining sons, cattle, paradise &c. If the trustworthiness of both human knowledge and Revelation be denied (anyathā), pray what view can he adopt who thus places himself in opposition to human experience and to the Veda? Therefore (concludes the objector), that the world has Nescience as its only cause is a downright rash statement.

* To those mentioned in the text are usually added—God's knowledge, desire and volition; time, space, antecedent non-existence (of the effect); and, sometimes, absence of an obstructive. cf. Nyāyakośa. ed. Bhimāchārya, *sādhāraṇakāraṇatva*.

भवति । अन्यथा लोकवेदविरुद्धः कं पक्षमवलम्बेत । तस्मादविद्यामात्रकारणकं जगदिति साहसमात्रम् । अत्र वदामः

यथा सतो जनिर्नैवमसतोऽपि जनिर्न च ।

जन्यत्वमेव जन्यस्य मायिकत्वसमर्पकम् ॥ १६ ॥

किमिदं कार्य्यं सत्यमसत्यं वा । नाद्यः एकमेवाद्वितीयमित्यद्वैतमात्रपर्यवसितागमविरोधात् अनुपपत्तेश्च । तथाहि किमुत्पत्तेः पूर्वं कार्यं सदसद्वा । असच्चेत् तर्हि शशविषाणमपि कारणव्यापाराज्जायेत असत्त्वाविशेषात् । सच्चेत् किं कारणव्यापारेण पूर्वमपि

To the above we reply :—

Just as production cannot be (explained as proceeding) from something previously existing, so also production from something previously non-existent cannot be explained. The bare fact of production proves that the product is the work of Māyā....XVI.

The philospher replies: So far from the causal relation being *real* the very notion of it is *inexplicable*, and leads us back to Nescience. Máyá, or the Inexplicable, as the source of this inexplicable world.

Is an effect something real or unreal? Not something real; for this is opposed to the purely monistic teaching of Śruti in such passages as 'one only without a second.' Nor can an effect be proved to be something real. To explain :—Previous to its production, is an effect existent or non-existent? If non-existent, then a nonsensical effect such as the horn of a hare ought to be produced through the agency of the cause, sc. the non-existent in this case; for the non-existent is a unity without difference (and if the non-existent can be a cause, why should it not endow the hare, as well as the ox, with horns?) If the effect was something previously existent, then causal agency is unnecessary; for the effect existed previous to the exercise of this function; and the nature of the effect (as a *consequent*) is thus overthrown. If you urge that it is merely the manifestation of the thing that is brought about through causal agency, we reply that even on this supposition there is no getting rid of the evil fate which awaits you, which-

तस्य सत्वात् कार्य्यत्वव्याघाताच्च । अभिव्यक्तिमात्रं कारणव्यापाराज्जायत इति चेत् न तथापि सत्त्वासत्त्वविकल्पग्रासग्रासानपायात् । अस्तु तर्हि सदसद्विलक्षणमनिर्वचनीयमेव कार्यम् । एवं चेत्तर्हि कार्यानुरूपानाद्यनिर्वचनीयाज्ञानमेव कारणमुचितं सत्यस्यासत्यहेतुत्वानुपपत्तेः लोके तथा दर्शनात् । न च कार्य्यवैचित्र्यानुपपत्तिः विचित्रशक्तिकस्यैवाज्ञानस्य कल्पनादित्युक्तम् । न च पूर्वकाण्डस्य प्रमाण्यानुपपत्तिः तस्यापि साध्यसाधनभावमुखेन सत्त्वशुद्धिद्वारेण प्रवृत्तिद्वारेण वा ब्रह्मण्येव तात्पर्य्यात् तात्पर्य्यार्थे शब्दस्य प्रामा-

ever of the alternatives you assume, (for you will have to admit that the manifestation, previous to its being brought about, was either existent or non-existent). Grant then (you say) that an effect is something inexplicable either as existent or non-existent. In this case, we reply, it is fitting to maintain, as the only cause, Nescience, inexplicable, eternal *ab ante*, and of the same nature as its effects; for it is impossible that entity should be the cause of non-entity, and common experience vouches for this impossibility.

Nor may you urge that a variety of effects is impossible, (if Nescience as a unity be held to be the cause of the world); for, as we have already shown (§7) there is presumptive evidence for Nescience as a unity possessing manifold powers, (and the variety of effects would follow, consistently, from the variety of the powers of Nescience).

Nor may you urge that, on our view, the authoritativeness of the earlier or ritual portion of the Veda is impossible; for the real aim of this portion also is to teach Brahman, indirectly, by teaching that certain means, sc. sacrificial rites bring about certain results, through the performance of which the intellect* (of the sacrificer) is purified (and thus prepared for a study of

* For this technical meaning of sattva cf. Katha Up II, 6, 7. Śāṅkarabhāshya *in loco*.

यात्। तस्मादविद्यायोनित्वं भावानां सुष्ठूक्तम्। अतोऽविद्याकल्पितस्य जगतः प्रतीतिसमकालीनमेव सत्त्वमुचितं रज्जुसर्पशुक्तिरजतगन्धर्वनगरस्वप्नप्रपञ्चेषु तथा दर्शनात्।

१३ अथेदं निरूपणीयम्।

प्रतीतिमात्रं सत्त्वं चेत्सत्त्वं प्रातीतिकं मतम्।
अविरोधान्ममाप्येष्टं तद्भेदे वद का प्रमा॥ १७॥

प्रतीतिसमकालीनं सत्त्व जगत इति कोऽर्थः किं प्रतीतिरेव सत्त्वं किं वा प्रतीतिव्यतिरेकेण जगतः पृथक् सत्त्वमस्ति। अन्त्ये

Brahman), or through which he becomes possessed with the desire to practise the means of attaining a knowledge of Brahman (sc. *hearing*, &c. cf. note p. 6). And because the authoritativeness of the Veda (Śabda) depends on the *implied* (and not on the *literal*) meaning of the word.

Hence our view of Nescience as the cause of things is consistent; whence it follows that our view that the Nescience-presented world is strictly cotemporaneous with the cognition of the world is also consistent. For such is our experience of the existence of a snake imagined in rope, or of the silver imagined in mother-of-pearl, or of the mirage, or of the dream-world.

13. Here this must be explained:—

None of the commonly accepted 'means of proof,' *pramāṇas*, will prove duality, *bheda*.

If by your view that existence is cotemporaneous with perception (sattvam prātītikam cf. supra) is meant that esse is merely percipi*, I accept your view as not opposed to mine. If you hold that there is a difference (between the existence of the world and the cognition of it), pray declare the proof thereof. XVII.

What is meant by saying that the existence of the world is cotemporaneous with the cognition of it? Is it meant that the

*प्रातीतिकं सत्त्वमिति यत्तत्प्रतीतिमात्रं प्रतीतिरेव सत्त्वमिति मतं चेद्यदोत्यनुवादः।
N. D's. gloss.

तच प्रमाणमस्ति न वा । अस्ति चेत्तच किं प्रत्यक्षमनुमानमागमोऽर्थापत्तिर्वा । प्रत्यक्षमिति चेत् तच घटोऽयमिति यत्प्रत्यक्षमिदमेव स्वस्माद्घटस्य भेदं विषयीकरोति प्रत्यक्षान्तरं वा । स्वयमेव स्वविषयभेदं गृह्णाति प्रत्यक्षमिति चेत् तत्किं स्वप्रकाशं परप्रकाशं वा । तचाद्ये स्वविषयविशेषणत्वेन भेदस्य भानेपि विशिष्टज्ञानस्य विशेषण-

esse of it is percipi and nothing else? Or that the world has an existence independent of the cognition of it? If the latter meaning be adopted, it may be asked whether there is any proof (for the existence of an unperceived world) or not?

If proof exists, is it immediate preception, or inference, or Veda or presumptive evidence? If you say that immediate perception is the proof, then we ask, does the perception, expressed in—'This is an earthen pot'—, make known a difference between itself (sc. the perception of the pot) and the pot? Or does some other perception make known this difference? [This other perception taking the form—'this pot is different from the cognition of pot'—]. If you say that the very perception declares (lit. grasps) the difference between itself and the perceived object, then, we ask, is this perception self-known, or known through some other perception? If self-known, and if the view be adopted that a *determinate* knowledge * (viśishṭajṇāna) is ef-

* Viśishṭajṇāna is judgment or the knowledge of a subject, viśeshya, as qualified by an attibute, viśeshaṇa. In regard to viśishṭajṇāna two views obtain, as stated in the text:—(*a*) "विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वपक्षे," (*b*) "विशेषणविशेष्येन्द्रियसन्निकर्षमात्रं विशिष्टज्ञानकारणमिति पक्षे." The former is the Nyāya view (cf. Bhāshāparichchheda, Muktāvali śl. 58.) It holds that for the formation of a viśishṭajṇāna, e.g. ghaṭo'yam, there is necessay not only intercourse (sannikarsha) of sense-organs with the viśeshya or ghaṭa, but also a previous knowledge of the viśeshaṇa or ghaṭatva. Such previous knowledge is technically termed *indeterminate*, nirvikalpaka, and is not effected

**ज्ञानजन्यत्वपक्षे स्वेनैव भेदलक्षणविशेषणविषयेण स्वयं जन्यत इति प्राप्तं तथाचात्माश्रयः ।**

fected through a knowledge of the *attribute* portion—then, although in the present case the difference (between the pot and the perception of the pot) is known as the attribute of the object (sc. earthen pot) made known by the perception itself (sva), it follows that the perception is self-originated in that it makes known an attribute, viz the difference (between the pot and the perception of the pot: and, *ex hypothesi*, it is the knowledge of this difference as the attribute portion which brings about the determinate knowledge or judgment that the pot is different from the cognition of the pot): and this is an instance of the logical vice of self-dependence.*

---

through sense-organs, atīndriyaṃ. The latter view is that of the Mīmāṃsā and Vedānta. It denies the necessity of a previous knowledge of the viśeshaṇa: all that is necessary is intercourse of sense organs with both viśeshaṇa and viśeshya.

To follow the argumentation of the text, it should further be remembered that the difference between cognition and the thing cognised (which difference is supposed to be made known by the viśishṭajnāna in question, sc. ghaṭo'yaṃ) may be expressed in two ways:— i) **मत्तो भिन्नो घटः** Here mattaḥ = ghaṭo' yaṃiti pratyakshāt: bheda is the viśeshaṇa and is ghaṭanishṭha (sc. resides in locus ghaṭa): ghaṭa is viśeshya; pratyaksha is bhedapratiyogi.—ii) **मद्धटयोर्भेदः** Here bheda is viśeshya; both pratyaksha and ghaṭa are viśeshaṇa's: pratyaksha is bhedapratiyogi; ghaṭa is bhedadharmī. The method employed in the text is that in vogue with controversial Vedānta treatises such as the Khaṇḍana, Chitsukhī and Advaitasiddhi. Briefly stated, it consists in the attempt to show that consciousness of duality, whatever theories may be held as to its genesis and formal expression, is inexplicable (anirvachanīya), false (asat).

* स्वसिद्धौ अव्यवधानेन स्वापेक्षा आत्माश्रयः ।

विशेष्यत्वेन भाने विशेषणविशेष्येन्द्रियसन्निकर्षमात्रं विशिष्टज्ञानकारणमिति पक्षे ज्ञानोत्पत्तेः पूर्वं भेदोऽस्तीति वाच्यं तथा च तस्यैव ज्ञानस्य कथं स भेदो विषयः स्यात् स्वोत्पत्तेः पूर्वं स्वस्यैवाभावात् । ज्ञानान्तरस्य च स्वयंप्रकाशज्ञानाविषयत्वेन तत्प्रतियोगिकभेदाऽविषयत्वात् । अवर्तमानस्य ज्ञानस्य परप्रकाश्यत्वे वर्तमानकालोपाधिकं स्वप्रकाशत्वमिति स्यात् । वर्तमानकाले ज्ञानस्वरूपमेव स्वप्रकाशमिति चेत् न अतीतानागतयोरपि तथात्वापत्तेः ।

If (you say that) the difference (between the pot and the perception of the pot) is known as the subject portion—and if the view be adopted that the sole cause of a determinate perception is the intercourse of the sense-organs with both subject and attribute portions (of such determinate perception)—then you will have to admit that the difference existed previous to the perception of it, (otherwise there could be no contact of sense-organs with it, and, *ex hypothesi*, no determinate perception could follow)—and if the difference existed previously (tathā cha), that difference could not possibly be vouched for by the perception (as you first stated); for the perception did not exist before it was produced (through contract of sense-organs with the subject portion (sc. the difference between the pot and the perception of the pot). And since a second perception cannot make known a self-known perception (—and this is what you started with—), it can not make known a difference which has as its counter-entity a self-known perception (tat). If it be urged that a perception in other than present time is made known by a further perception (in present time), then the self-presentative character of cognition is made to depend on present time as its limiting condition (and is, *pro tanto*, destroyed). Again you may urge that the self-presentative character of cognition is by its very nature confined to the time of presentation,—which we deny; for self-presentative character belongs equally to the cognition of an object perceived in the past and to the cognition of an object yet to be perceived in the future (since both are cognitions

नहि घटः कदाचिदघट इति स्यात् । इन्द्रियसन्निकर्षाश्रयस्य भेदस्य प्रमाणासत्तामात्रेण स्वविषयकज्ञानजनकत्वमित्यपि प्रक्रियामात्रं भावेन सत्तामात्रस्याप्यसिद्धेः । अस्तु तर्हि परप्रकाशज्ञानपक्षे प्रत्यक्षान्तरेण ज्ञानाज्ञेयस्य भेदग्रहः । सोऽपि व्यावृत्तप्रतियोग्यादिग्रहपूर्वको न वेति विवेचनीयम् । न चेत्कथं भेदं विषयीकुर्यात् । नहि निर्द्धर्मिकं निष्प्रतियोगिकं वा भेदं कश्चित्प्रत्येति अयमस्माद्भिन्न इत्यनुभवात् ।

like cognition in the present time). (Nor can you argue for a change in the nature of cognition corresponding to a change in time), for the once perceived earthen pot ever remains a pot. Again, you may urge that, merely by the fact of its own existence (i. e. without being perceived), the difference (between the pot and the perception of the pot), with which difference the sense-organs were in contact, produced the perception in which that difference was declared. This is nothing but a bare statement on your part; for, in the absence of evidence, the mere fact of existence (of difference, to which you refer,) is unproved.

Well then, let it be granted, on the view of one cognition requiring a second to make it known, that the difference between the thing perceived and the perception of the thing is made known through a second perception. Now it must be decided whether or not the knowledge of the difference was preceded by a knowledge of the reciprocally different counterentity and locus (the counterentity, pratiyogi, is the perception of the pot; the locus, anuyogi is the pot: cf. p. 97, note). If not thus preceded, how could the second perception, we ask, make known the difference? For no one is conscious of a difference which is destitute of locus or counter-entity, as is proved by the form our consciousness invariably takes (with regard to difference), viz., '*this* is different from *that*.' If, on the other hand, you admit that the knowledge of the difference was preceded by a knowledge of the reciprocally different counter-entity and locus, you commit yourself to a regressus in infinitum in seeking for some

व्यावृत्तप्रतियोग्यादिग्रहपूर्वकत्वे तु व्यावृत्तिग्राहकप्रत्यक्षान्तरान्वेषणेऽनवस्था । तेनैव व्यावृत्तिग्रहे आत्माश्रयः । तस्माद्वस्तुमात्रावगाहि प्रत्यक्षं न भेदवार्त्तां जानातीति सिद्धम् । अस्तु तर्ह्यनुमानाज्ज्ञानज्ञेययोर्भेदग्रहः । तथाहि विमतो विषयः स्वविषयज्ञानाद्भिद्यते तद्विरुद्धधर्माश्रयत्वात् यो यद्विरुद्धधर्माश्रयः स ततो भि-

further cognition to make known this difference (—a second cognition will demand a third and so on—). And if you declare that the knowledge of the reciprocal difference (between the perception of the thing and the thing perceived) was brought about by this same (second) cognition, the logical vice of self-dependence results (—the second cognition merely restates the already perceived difference: to say then that it is the cause of the latter is to say that it is the cause of itself—) Thus we have proved that perception, which testifies merely to something existing, gives not the least evidence for a difference (between the thing perceived and the perception of the thing).

Grant then, you say, that the knowledge of a difference between the thing perceived and the cognition of the thing follows from an inference. Thus:—*

i. The thing under discussion differs from the perception which makes it known.

ii. Because this thing is the substrate of † attributes which are opposed to the attributes of the perception which makes this thing known.

* The five-membered syllogism (nyāya) consisting of i. pratijnā or proposition to be proved; ii, hetu or probans; iii, udāharaṇa or confirmatory instance; iv, upanaya or application; v, nigamana or conclusion. For the reduction of this number to three, cf. Ved. paribh. Pandit vol. V. p. 659.

† sc. the object is jaḍa, non-intelligent, whereas the perception is chetana, intelligent.

द्यते यथा घटात्पटस्तथाचायं तस्मात्तथा । मैवं विरोधस्य भेदनिरूप्यत्वेन भेदासिद्धा विरोधासिद्धेस्तद्विरुद्धधर्माश्रयत्वस्याप्यसिद्धेः । साध्याप्रसिद्धा व्याप्यसिद्धेश्च । नहि घटपटयोर्भेदः केनचिन्मानेन सिद्धो येन साध्यं प्रसिद्ध्येत् । प्रत्यक्षाभावेऽनुमानान्तरानुसरणेप्यनवस्थादिदोषस्य तादवस्थ्यात् ।

iii. Whatever is the substrate of attributes which are opposed to the attributes of some other thing is different from that other thing: as for example, a piece of cloth is different from an earthen pot.

iv. And the thing under discussion, sc. the perceived object, is similar to the piece of cloth.

v. Therefore the *perceived* object is also different from the *perception* of the object.

We reject the above argument. For since the *opposition* (of the attributes) is to be known through the *difference* (between the substrates to which the attributes severally belong), it follows that while the *difference* (between the substrates) is unproved, the *opposition* (of the attributes) is also unproved: hence (the probans, ii,) 'this thing is the substrate of attributes which are opposed to the attributes of the perception which makes this thing known' is invalid. And because as long as the probandum (sādhya, sc. difference between the perception of the object and the object perceived) is unsupported (by any confirmatory instance) so long the universal concomitance (of opposition of attributes and difference of substrates expressed in iii, or the universal major premise) is unproved. Nor can the difference between an earthen pot and a piece of cloth (which was adduced as a confirmatory instance) be proved by any evidence whatever so as to support the probandum. And if in the absence of perception (to prove the confirmatory instance), recourse is had to a second inference to prove it, the logical vices of an infinite regress, a see-saw &c. will continue to haunt the argument.

आगमस्याभेदमात्रे तात्पर्य्येण पर्यवसन्नस्य भेदबोधकत्वं शङ्कितुमप्यशक्यम् । ननु ब्रह्मणः सकाशात् सृष्टिं प्रतिपादयन्नागमः कार्यजातस्य ततो भेदमपि प्रतिपादयति । अभेदे ततो जन्मैव न स्यादिति चेत् न सृष्टिवाक्यस्य सर्वस्य प्रधानादिपरपरिकल्पितकारणान्तरनिराकरणपरस्य मृद्घटादौ कारणात् कार्य्यस्य भेदेनानिरूपणवद् ब्रह्मणः कारणात् कार्य्यजातस्य सर्वस्य भेदेनानिरूपणेनाद्वितीयब्रह्मसम्भावनामात्रे तात्पर्यात् । अन्यथा भेदपरत्वे तन्निषेधोऽनर्थकः स्यात् । किञ्च

Since the Veda finds its complete meaning in teaching non-difference only (sc. Brahman alone exists), it is perfectly impossible to suppose that it can teach difference (sc. duality or reality of the world). Here it may be objected that, in teaching the emanation the of the world from Brahman, the Veda also teaches that all products are different from Brahman: for, if not different, their emanation from Brahman could not be (spoken of). This objection must be set aside. For since every Vedic passage bearing on creation is devoted to the refutation of those other causes (of the world), sc. *matter*, *pradhāna* &c. (of the Sāṇkhyas) assumed by other thinkers (*i. e.* non-Vedāntins), by showing that just as in such cases as that of earth and the earthen pot, it is impossible to explain* what the difference is between earth, the cause, and the pot, the effect, so too it is impossible to explain what the difference is between Brahman, the cause, and the whole world which is an effect from Brahman, it follows that every such passage finds its real meaning only in teaching a knowledge of Brahman, the one without a second. Otherwise, if the Veda were devoted to teaching *difference* (duality, or a real world), the prohibition with regard to duality (contained in such passages as 'there is no diversity in Brahman') would be purposeless.

---

* If the difference is inexplicable, anirvachanīya, it is unreal, asat: this is of course the implication of the text.

सृष्टिवाक्यं न तावत्साक्षाद्भेदं प्रतिपादयति भेदवाचकपदाभावेनापदार्थस्य वाक्यार्थत्वाभावात् पदार्थस्यैव संसृष्टत्वेन वा धर्मिमात्रपरत्वेन वा वाक्यप्रतिपाद्यत्वात् कल्पनायाश्च निषेधवाक्यविरोधेनानुत्थानात् । नच ज्ञानमेव स्वातिरिक्तज्ञेयव्यतिरेकेणानुपपन्नं स्वभिन्नं ज्ञेयं विषयीकरोति न हि निर्विषयं ज्ञानं सम्भवति दृष्टं वा सविषयस्यैव भासमानत्वात् अन्यथा निष्प्रकारकमेव भासेत ज्ञाने विषयातिरिक्तस्य प्रकारस्याभावादिति वाच्यं ज्ञेयव्यतिरेकेण ज्ञानस्यानुपपत्त्यभावात् ।

Further, passages dealing with creation do not *directly* teach *difference* (between Brahman, cause, and the world, effect): for since no word bearing the sense of *difference* occurs in such passages, these cannot declare a meaning which the words composing them do not bear; because it is only what is meant by the words that a sentence can directly make known, either by showing syntactical relation between the words, or by conveying the simple notion of identity* (of subject and predicate in the sentence). And an inference (from Vedic passages bearing on creation of the world to the difference between Brahman and the world) is inadmissible as contradictory of (such) prohibitive passages (as 'Brahman is not this, not this'; and human inference must yield to the direct utterances of Revelation). Nor can the following be urged:—Cognition, which would be impossible in the absence of an object (to be cognised) different from the cognition, itself declares that the object cognised is different from the cognition; for object-less

* Nānādikshita glosses thus: अखण्डवाक्यत्वपक्षमाश्रित्य आह धर्मीति । A sentence (vākya) is (a) predicative, i. e. makes known a relation (saṃsarga) between the objects meant by the words (padārtha) in the sentence—पदार्थसंसर्गावगाहि वाक्यजन्यज्ञानम्—or (b) it expresses the bare identity of the objects meant by the words without predicating any relation between them—वाक्यस्य अखण्डार्थता धर्मिमात्रपरत्वं वा—. अखण्डार्थता=अपर्यायानेकशब्दप्रकाश्यत्वे सति अविशिष्टत्वम्, or=सजातीयविजातीयस्वगतभेदशून्यत्वम् For the stock illustrations, tat tvamasi and so'yaṃ Devadattaḥ, cf. Ved. paribh. Pandit Vol. VII. p. 463.

तथाहि तत्किं ज्ञानस्य ज्ञेयव्यतिरेकेणोत्पत्त्यनुपपत्तिः स्थित्यनुपपत्तिर्ज्ञप्त्यनुपपत्तिर्वा । नाद्यः ज्ञानस्य स्वरूपत उत्पत्त्यभावात् । भावे वा प्रमाणतदाभासाभ्यामेवतदुत्पादनसम्भवे विषयानपेक्षणात् ज्ञानस्य सर्वत्र विषयजन्यत्वे नियमाभावात् । नापि स्थित्यनुपपत्तिः विषयस्य ज्ञानानाश्रयत्वात् तथात्वे वा विषयत्वव्याघातात् । ज्ञानविषयकज्ञानस्य विषयज्ञानाधीनत्वेन ज्ञेयं विना ज्ञप्त्यनुपपत्तिरस्त्विति चेत् न ज्ञानस्य स्वयंप्रकाशमानत्वेन स्वव्यवहारार्थं स्वाति-

cognition is neither possible nor a fact of experience, since only cognition accompanied by an object is experienced : otherwise (sc. if object-less cognition were a fact) only indeterminate cognition would be experienced, for apart from an object cognised there is nothing to determine the cognition. (The above is to be rejected) because the impossibility of cognition, in the absence of an object to be cognised, (as held above) does not exist. To explain :—Is is meant that the *production* of cognition is impossible, or that the *persisence* of cognition is impossible or that *secondary cognition* is impossible? The first view will not hold, for cognition (sc. Brahman) in its essential nature is not a product at all. Or if it be conceded that cognition is a product, an object is not necessary to produce it, since cognition (whether true or false,) can be effected through (trustworthy) organs of knowledge (sc. perception, inference &c.) or through their counterfeits—there being no restrictive rule that cognition is in all all cases produced by an object, (thus, in knowledge through inference no cognised object is necessary).

Nor is it that the *persistence* of cognition is impossible, for the object cognised is not the locus of the cognition. Or if it be held that the cognised object is the locus of cognition * then the object has lost its character as an object (and has become a substrate of cognition, *i. e.* a cogniser).

* The special point of this argument is against the Naiyāyikas, with whom knowledge is an attribute (dharma) residing in Self (ātman) the substrate (āśraya).

रिक्ताऽनपेक्षणात् । परप्रकाशत्वेन ज्ञानान्तरापेक्षायां तस्याप्यन्यतस्त-स्याप्यन्यत इत्यनवस्थित्या ज्ञानासिद्धौ जगदान्ध्यप्रसङ्गात् । अज्ञायमानस्यैव ज्ञानस्य स्वविषयसाधकत्वे प्रमाणाभावेन नरशृङ्गतुल्यत्व-स्वरूपसत्त्वासिद्धेः । अस्तु वा ज्ञानस्य स्वज्ञानार्थं ज्ञानान्तरापेक्षा तथापि विषयापेक्षणं कुतः विषयज्ञानस्यैवापेक्षणात् ।* ज्ञानसामान्य-स्यानपेक्षणे स्वविषयव्यावृत्तज्ञानापेक्षायां विषयापेक्षाप्यवश्यम्भाविनीति तन्तुच्छं ज्ञानस्य स्वत एव व्यावृत्तत्वात् परसिद्धजात्यादिवत् ।

Suppose then that it is impossibility of *secondary* cognition, in the absence of an object to be cognised; since secondary cognition is dependent on the cognition of an object. This cannot be; for cognition being self-presentative does not require anything besides itself to make itself known. Adopting the view that cognition is not self-presented, a second cognition will be needed (to make known the first), the second will demand a third cognition and so on ad infinitum; hence, cognition being left baseless, the world becomes blank darkness (sc. nothing could ever be known). On the view that it is an *unknown* cognition that testifies to the object cognised, it follows that the very existence of this cognition is a chimera like the horns of a man, for there is no means of proving its existence, (the cognition being *unknown*, ex hypothesi). Or granting that a cognition needs a second cognition to make it known, yet why, it may be asked, is a cognised object needed? For only cognition of the object is necessary. Against this it may be urged (by the opponent) as follows:—Since the necessity of cognition in general (sc. apart from some object cognised) is not here postulated, it follows that there is a necessity for a cognition as *differenced* (determined) by some cognised object; and hence the demand for an object is inevitable. But the above objection is idle; for cognition is self-differenced, as are the categories of generality (sāmānya) &c. maintained by the other (schools of philosophy).

---

The etcetera includes akhaṇḍopādhi and viśesha. cf. Muktāvalī Śl. 10 and 58. विशेषस्तु स्वतएव व्यावृत्तस्तेन तत्र विशेषान्तरापेक्षा नास्तीत्यर्थः ॥ and जात्यखण्डोपाध्यतिरिक्तपदार्थस्य किञ्चिद्धर्मप्रकारत्वनियमात् ॥

तथापि ज्ञानस्य ज्ञेयव्याप्तत्वाज्ज्ञेयं बोधयतीति चेत् न व्याप्त्यसिद्धेः ज्ञानज्ञेययोर्विभिन्नदेशत्वेन सामानाधिकरण्याभावात् । अतीतानागतार्थज्ञानदर्शनेनैककालत्वस्याप्यसिद्धेः । तस्मात्

प्रत्येतव्यप्रतीत्योश्च भेदः प्रामाणिकः कुतः ।
प्रतीतिमात्रमेवैतद्भाति विश्वं चराचरम् ॥ १८ ॥

ज्ञानज्ञेयप्रभेदेन यथा स्वाप्नं प्रतीयते ।
विज्ञानमात्रमेवैतत् तथा जाग्रच्चराचरम् ॥ १९ ॥

Nevertheless (continues the opponent) the very fact of cognition* leads us to infer the existence of some object, because of the universally established concomitance of cognition and cognised object (sc. wherever there is cognition, there is also cognised object). Not so, is the reply. For this universal concomitance cannot be proved: because cognition and cognised object cannot exist together in the same locus (adhikaraṇa), since their spatial positions are distinct (sc. cognition is in the mind, and the cognised object is external to the mind; whereas smoke and fire are found together in one place): and, further, because the temporal co-existence (of cognition and cognised object)cannot be proved, since cognition of a past or future object is a matter of common experience.

Therefore, to sum up:—

There is no proof that cognition and cognised object are different. This universe, animate and inanimate, which appears in consciousness, is nothing but cognition....XVIII.

As the world of dreams, which is really nothing but cognition (Brahman), appears in consciousness under diverse forms of cognitions and cognised objects; so too the world of waking consciousness, of things animate and inanimate (is nothing apart from Brahman)...XIX.

* तथापि इति बोधयति ज्ञानमिति शेषः । N. D's gloss.

तन्तोर्भेदे पटो यद्वच्छून्य एव स्वरूपतः ।
आत्मनोपि तथैवेदं भानमात्रं चराचरम् ॥ २० ॥
रज्जुर्यथा भ्रान्तदृष्ट्या सर्परूपा प्रकाशते ।
आत्मा तथा मूढबुद्ध्या जगद्रूपः प्रकाशते ॥ २१ ॥
आत्मन्येव जगत्सर्वं दृष्टिमात्र सतत्त्वकम् * ।
उद्भूय स्थितिमास्थाय विनश्यति मुहुर्मुहुः ॥ २२ ॥
पूर्णानन्दाऽद्वये शुद्धे पाप्मदोषादिवर्जिते ।
प्रतिबिम्बमिवाभाति दृष्टिमात्रं जगत्त्रयम् ॥ २३ ॥

तदुक्तं भगवता वसिष्ठेन तस्मिंश्चिद्दर्पणे स्फारे समस्त वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ तथा— यस्य चित्तमयी लीला जगदेतच्चराचरम् । यस्य विश्वात्मकत्वेपि

Just as a piece of cloth really turns out to be mere non-entity, in the absence of its component threads (*i.e.* if we attempt to think of the cloth as existing independently of the threads); so too this world, whose esse is percipi, (is reduced to non-entity) in the absence of Self (Brahman, Intelligence)...XX.

As rope (in the darkness), when vision is deceived, appears to be a snake; so, when the mind is deluded, the Self appears to be this world....XXI.

In the Self alone (as locus), all this world, whose esse is percipi takes ist rise and persists and perishes ever and again....XXII.

In the One without a second, which is absolute Bliss and pure, free from sin and all defects, appear, as if reflected, the three worlds † whose esse is percipi....XXIII.

His reverence Vasishṭha has declared the same view :—

'In that pure mirror (Brahman) are reflected all these things whose esse is percipi. as trees on it banks are reflected in a stream. Again, 'All this world is the

Yogavāsishṭha Upasama prakaraṇa śl. 13
" " Utpatti " śl. 3, 4

* var lec. दृष्टिमात्रमतत्त्वकम् ॥ † स्वर्गमर्त्यपातालाख्यानि त्रीणि जगन्ति ।

खण्ड्यते नैकपिण्डता । तदेवं दृष्टिमात्रात्मकं जगदात्माश्रयविषये- णाज्ञानेन कृतमित्यात्मनोऽज्ञानविषयत्वं साधु विकल्पितम् । तथा- चात्मनि लौकिकवैदिकप्रमाणासम्भवेन शशविषाणादिवदसत्त्वे प्राप्ते कुतस्तत्साक्षात्काराय शास्त्राभ्यर्थना कुतस्तरां युक्त्यपेक्षेति सङ्क्षेपः ।

( शेषमग्रे )

mental sport of that one (sc. Brahman as Hiraṇyagarbha),' and 'That one, although it constitutes the universe, does not lose its character as a unity.'

Thus, therefore, the world whose esse is percipi is produced through Nescience, which has the Self both as locus and as object, and the assumption, therefore, of the Self being an object for Nescience (cf. § 6.) was *excellent!* In accordance with this assumption (tathā cha), there can be no evidence, human or divine (sc. Veda), for the existence of the Self; whence it follows that the Self is non-entity like the horns of a hare, further, that there can be no desire to study Veda in order to gain intuition of the Self, much less can there be any necessity of argument (to support the teaching of Veda as to the Self)!

The opponent of § 6, acquiescing in our author's sensationalism, now pushes it to its farthest limit: reduces the Self also to non-entity, and dispenses with both Veda and Vedānta philosophy.

The above is a summary of the opponent's view.

*(To be continued).* A. V.

---

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम्

## श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम्

तत्र प्रथमाध्यायस्यावशेषः ।

*(Continued from page 208. Vol. XI.)*

आनन्दमयाधिकरणम् । अथोत्तराधिकरणस्य पूर्वाधिकरणेन सह सङ्गतिमाह "एवं जिज्ञासितव्ये"ति, जगत्कारणस्य निरूपणीयत्वे चतुःसूत्र्या सिद्धे प्रत्यता-

द्धिसिद्धतया प्रसिद्धातिशयादचेतने प्रथममव तरन्ती बुद्धिः वीक्षणादिभिस्ततो व्यावर्त्य चेतनवस्त्वभिमुखीकृता ।

आनन्दमयाधिकरणम् । सू० आनन्दमयोऽभ्यासात् ॥ १३ ॥

भा० तैत्तिरीया अधीयते "स वा एष पुरुषोऽन्नरसमय इति प्रकृत्य "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय" इति तत्र सन्देहः किमयमानन्दमयो बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा? उत स एवे? ति किं युक्तं प्रत्यगात्मेति, कुतः? तस्यैष एव शारीर आत्मेत्यानन्दमयस्य शारीरत्वश्रवणात्, शारीरो हि शरीरसम्बन्धी जीवात्मा ।

टी० इदानीमचेतनापेक्षया प्रसिद्धिमान्द्येऽपि परमात्मापेक्षया प्रसिद्धतरेऽहंप्रत्ययसिद्धे प्रत्यगात्मन्यवतरन्ती बुद्धिर्व्यावर्त्यत इत्यर्थः । सू० आनन्दमयोऽभ्यासात् 'कारणविषस्य तस्माद्वा एतस्मादिति वाक्यस्योत्तरत्र चोद्यपरिहारमुखेन उदाहरिष्यमाणत्वात् प्रथममात्म–शब्दव्याख्यातोपक्रमभूतं स वा एष पुरुष इत्यादिकमुपात्तम् अत एव हि प्रबन्धान्तरे तस्माद्वा इत्यादिकमुदाहृतम्, तत्रेति शारीरत्वानन्दप्राचुर्याभ्यां संशय इत्यभिप्रायः, सद्विद्यायां जीवेनात्मनेति सामानाधिकरण्यमत्र पूर्वपक्षोत्थानबीजमिति सूचनार्थे जीव–शब्दाभिलपनीयादिति पदम्, किं कारणवादिनः सर्वे वेदान्ताः परिशुद्धप्रत्यगात्मस्वरूपपरा? उत तद्विलक्षणपरा? इति प्रथमविचारः, तदर्थमानन्दमयः किं परिशुद्धावस्थः? प्रत्यगात्मोऽत परमात्मे? ति तदर्थमिह प्रतिपक्षः शरीरसम्बन्धः किंजीवात्मासाधारणः? उत न? तदर्थं मयट् किं स्वार्थकत्वविकारार्थकत्वयोरन्यतरवान्? उत प्राचुर्यार्थः? तदर्थं किं विकाराद्यर्थानुगुणा हेतवोऽनुरोद्धव्याः? उत प्राचुर्याद्यर्थानुगुणाहेतवः? विज्ञानमय–शब्दः किं विज्ञानमात्रपरः? उत जीवपरः, तदर्थं तत्र मयट् किं स्वार्थिकः? उत न? तदर्थं विज्ञानं यज्ञं तनुत इति विज्ञान–शब्दः किं ज्ञानमात्रे वर्तते?

उत ज्ञानगुणके प्रत्यगात्मनी? ति पूर्वकल्पाः पूर्वपक्षाः इतरे तु सिद्धान्ताः यदा विकारार्थत्वाद्यननुगुणहेतोरनुरोद्धव्यत्वेन मयट् स्वार्थिको विकारार्थो वा भवति? तदा निरतिशयप्राचुर्य्याप्रतिपत्तेरानन्दमात्रस्य जीवेऽपि सम्भवात्स्वतो जीवाननुगुणतया प्रतिपन्नस्य शरीरसम्बन्धस्य जीवासाधारणत्वे विरोधाभावादानन्दमयो जीवः, यदा च श्लोकस्थविज्ञान-शब्दो विज्ञानमात्रपरः तदा विज्ञानमय-शब्दस्यापि स्वार्थिकमयडन्तत्वेन विज्ञानमात्रपरत्वाद्विज्ञान-शब्दस्य बुद्धिपरत्वसम्भवात् तदन्तर आनन्दमयः प्रत्यगात्मेति पूर्वपक्षे फलफलिभावः, राद्धान्ते तु यदा प्राचुर्य्यार्थानुगुणहेतोरनुरोद्धव्यत्वेनानन्दमय इत्यत्र मयट् प्राचुर्य्यार्थः तदानीमानन्दप्राचुर्य्यस्य निरवधिकतयाऽवगतस्य श्रुतिविरुद्धाश्रुतार्थप्रकल्पनायोगेन स्वतो निरवधिकातिशयस्य जीवात्मन्यसम्भवात्तद्विरोधेन शरीरसम्बन्धस्य जीवासाधारणकर्ममूलत्वाभावाच्च नानन्दमयः प्रत्यगात्मा, यदा च श्लोकस्थविज्ञान-शब्दो विज्ञानगुणके प्रत्यगात्मनि वर्त्तते तदा विज्ञानमय-शब्दस्यापि प्राचुर्य्यार्थमयडन्ततया प्रत्यगात्मवाचित्वाच्च तदन्तर आनन्दमयो न प्र[1]त्यगात्मेति फलफलिभावः। पूर्वपक्षोत्थानमाक्षिपति—

मू० ननु च जगत्कारणतया प्रतिपादितस्य परस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्य तदेव जगत्कारणमानन्दमय इत्युपदिशति, जगत्कारणं च तदैक्षतेतीक्षणश्रवणात्सर्वज्ञः सर्वेश्वर इत्युक्तं, सत्यमुक्तं तत्तु जीवान्नातिरिच्यते "अनेन जीवेनात्मनाऽनुप्रविश्य" "तत्त्वमसि श्वेतकेतो" इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात्, सामानाधिकरण्यं हि एकत्वप्रतिपादनपरं यथा सोऽयं देवदत्त इत्यादौ, इच्छापूर्विका सृष्टिश्चेतनस्य जीवस्योप-

१ आनन्दमयः परमात्मेति पा०।

पद्यत एव अतो ब्रह्मविदाप्नोति परमिति जीवस्याचित्सं-
सर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते

टी० "ननु चे"ति, सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्येत्यनेन जग-त्कारणप्रकरणस्य अविच्छिन्नत्वोक्तितया तदेव जगत्कारणमिति वक्ष्य-माणपर्यालोचनतया विभूतिप्रकर्षाधीनातिशयितानन्दस्यैश्वर्यत्वोपपादकं सकलजगत्कारणत्वमिति भावः । ततः किमित्यत्राह "जगत्कारणत्वे"ति, ज्ञानशक्त्युपयोगज्ञापनाय जगत्कारणमिति पुनरुपादानं, परिहरति "सत्य-मि"ति, चेतनत्वादावभ्युपगमः जीवादतिरेकेविवादः । सामानाधिकरण्यनि र्देशोऽस्तु ततः किं जीवाद्वैलक्षण्ये त्यत्राह "सामानाधिकरण्यमि"ति, ईक्षतिश्रवणाज्जीववैलक्षण्यमुक्तमित्यत्राह "ईक्षे"ति, उपपद्यत एवेत्येवका-रोऽस्वारस्यसूचकः, साक्षित्वमेव ईक्षितृत्वमेव ईक्षितृत्वमिति भावः । भेदव्य-पदेशाच्चेति भेदव्यपदेशं सिद्धान्तहेतुं वदता सूत्रकारेण ऐक्यव्यपदेशस्य पूर्वपक्षहेतुत्वं विवक्षितमित्यवगम्यते एवमुत्थानोपपत्तेः सौत्रहेतुवशाच्च ऐ-क्यव्यपदेशः पूर्वपक्षहेतुतयोपन्यस्तः । एवं पूर्वाधिकरणेन जीवव्यतिरेकासि-द्धेरधिकरणान्तरम् आरम्भणीयमिति भावः । ननु ब्रह्मविदाप्नोति परमित्यत्र ब्रह्म प्राप्यं श्रूयते अनन्तरं लक्षणं कथ्यते, तत्र सत्यत्वमानन्त्यं चान्त-र्भूतं जीवस्य नित्यप्राप्तत्वात् प्राप्यत्वमनुपपन्नं ज्ञातत्वाल्लक्षणञ्च न वाच्यं सत्यत्वानन्दत्वरूपंलक्षणविशेषश्च नैकरूपज्ञानस्य परिच्छिन्नस्य नोपपद्यते अतः परमात्मैव प्रतिपाद्य इति शङ्कां परिहरन् पूर्वपक्षमाह "अतो ब्रह्मवि-दि"ति, अतश्शारीरत्वश्रवणात्सामानाधिकरण्येनैकस्य प्रतिपन्नत्वाच्च अचिद्वियुक्तस्वरूपप्राप्यतापरत्वं कल्प्यमित्यर्थः । लक्षणकथनं तत्प्रतिपत्त्यर्थं तद्विशेषोक्तिश्च अचिद्वियुक्ते स्वरूपे सम्भवतीत्याह—

सू० अचिद्वियुक्तस्य स्वरूपस्य लक्षणमिदमुच्यते—"सत्यं ज्ञान-
मनन्तं ब्रह्मेति, तद्रूपप्राप्तिरेव हि मोक्षः, "न ह वै सश-
रीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वा-
व सन्तं न प्रियाप्रिये स्पृशत इति, अतो जीवस्याविद्यावि-

युक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते, तथा हि शाखाचन्द्रन्यायेनात्मस्वरूपं दर्शयितुमन्नमयः पुरुष इति प्रथमं शरीरं निर्दिश्य तदन्तर्भूतं तस्य धारकं पञ्चवृत्तिप्राणन्तस्याप्यन्तर्भूतं मनः तदन्तर्भूतां बुद्धिं प्राणमयोमनोमयो विज्ञानमय इति,

टी० "अचिद्वियुक्ते"ति, न केवलं शारीरत्वसामानाधिकरण्यबलादचिद्वियुक्तस्वरूपस्य प्राप्यत्वं किन्तुतत्कण्ठोक्तं चेत्याह "तद्रूपे"ति, हि शब्दः श्रुतिप्रसिद्धिद्योतकः । यद्वा स्वरूपस्यैवोपाधिकाकारनिवृत्तिमात्रपरमोक्ष-शब्दस्वारस्यसूचकः । श्रुतिमेव दर्शयति "न ह वा"इति, इति-श्रवणादिति शेषः प्राप्यत्वानुगुणपुरुषार्थतां दर्शयन् निगमयति "अत"इति, ननु नात्राचिद्वियुक्तस्वरूपमुपदिश्यते स वा एष पुरुषोऽन्नरसमय इति शरीरसम्बन्धश्रवणादपरिच्छिन्नानन्दत्वश्रवणाच्चेत्यत्राह "तथा ही"ति, शरीरमुपलक्षणमात्रं न तु विशेषणमिति तद्वियोगेनापरिच्छिन्नानन्दत्वादिकमुपदिश्यत इत्यर्थः । तदन्तरभूतां च बुद्धिमिति प्राणमयमनोमययोमयट्प्रत्ययस्य स्वार्थिकत्वाद्विज्ञानमय इत्यत्रापि मयट् स्वार्थिकः, विज्ञानं यज्ञं तनुत इति मयडन्तत्वं विनाऽपि वक्ष्यमाणत्वात्, "विज्ञानसारथिर्यस्तु" "बुद्धिं तु सारथिं विद्धी"ति, बुद्धिविज्ञान-शब्दयोरेकार्थत्वेन प्रयोगाच्च, विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानं बुद्धिरिति भावः । किमर्थमन्नमयादिनिर्देश ? इत्यत्राह-

मू० तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तर्भूतं जीवात्मानमन्योऽन्तर आत्मा आनन्दमय इत्युपदिश्य अन्तरात्मपरम्परां समापयति, अतो जीवात्मस्वरूपमेव ब्रह्मविदाप्नोति प्रक्रान्तं ब्रह्म तदेवानन्दमय इत्युपदिष्टमिति निश्चीयते । ननु च ब्रह्म पुच्छं प्रतिष्ठेत्यानन्दमयादन्यद्

ब्रह्मेति प्रतीयते । नैवम् ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितम् शिरःपक्षपुच्छरूपेण व्यपदिश्यते यथाऽन्नमयो देहावयवी स्वस्मादनतिरिक्तैः स्वावयवैरेव तस्येदमेव शिर इत्यादिना, शिरःपक्षपुच्छवत्तया निदर्शितः तथानन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितं तत्रावयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतयाऽखण्डरूपमानन्दमयं ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते ।

टी० "तत्र तत्र बुद्ध्यवतरणे"ति, अपरिच्छिन्नानन्दत्वमपि परिशुद्धात्मस्वरूपस्य सम्भवतीत्यर्थसिद्धम् । शारीरत्वश्रवणात् जीवसामानाधिकरण्याद्विज्ञानमयशब्दस्यान्तःकरणपरत्वात्प्राप्यत्वादेः परिशुद्धात्मस्वरूपेऽप्युपपन्नत्वाच्छरीरस्योपलक्षणत्वेन तद्वियुक्तस्वरूपेण प्राप्यत्वादिसम्भवान्मयट्प्रत्ययस्य स्वार्थिकत्वेन विकारपरत्वाभावाच्च परिशुद्धात्मप्रत्यगात्मस्वरूपविषयमिदं वाक्यमिति पूर्वपक्षसंग्रहः । तत्र द्वौ हेतू साधकौ अन्ये तु शङ्कितदूषणान्यथासिद्धिरूपाः, एवमानन्दमय-शब्दस्य प्रत्यगात्मपरत्ववादिनं पूर्वपक्षिणं सांख्यं मृषावादिपक्षस्थश्चोदयति "ननु चे"ति, तस्य पुच्छमिति षष्ठ्यावयविसम्बन्धप्रतीतेस्सम्बन्धस्य द्विष्ठतया प्रतिष्ठा तद्भावेन च व्यतिरेकावगमादन्यत्वमित्यर्थः । परिहरति "नैवमि"ति, अन्वयं पुरुषविध इति श्रुतिवाक्यस्मरणार्थं पुरुषविधत्वरूपितमित्युक्तम्, पुरुषविधत्वेन रूपितमनतिरिक्तत्वमुपपादयति "यथे"ति, प्रकरणे स्वस्मादनतिरिक्तैस्स्वावयवैः पुच्छप्रतिष्ठात्वरूपेणादर्शनादत्रापि पुच्छप्रतिष्ठात्वेन रूपितम् ब्रह्मानन्दमयादनतिरिक्तमित्यर्थः । षष्ठीनिर्देशः समुदायतदेकदेशत्वनिबन्धनतयोपपन्न इति भावः । नन्वानन्द आत्मा इत्यानन्दोऽवयवित्वेन रूपितः न त्ववयवत्वेन तत्कथमुच्यते? अवयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामिति, नैष दोषः आत्म-शब्दस्य स्ववाचित्वाभावात्, कार्यस्य मध्यभागो ह्यात्म-शब्दवाच्य दशहस्त्या अङ्गुलयो दश पाद्याः द्वावूरू द्वौ बाहू पञ्चविंश आत्मेत्यादौ तथाप्रयोगदर्शनात् ।

सू० यदि चानन्दमयादन्यद्ब्रह्माभविष्यत तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यपि निरदेक्ष्यत, न त्वेवं निर्दिश्यते, एतदुक्तं भवति ब्रह्मविदाप्नोति परमिति प्रक्रान्तं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणतः सकलेतरव्यावृत्ताकारं प्रतिपाद्य तदेव तस्माद्वा एतस्मादात्मन इत्यात्म-शब्देन निर्दिश्य तस्य सर्वान्तरात्मत्वेनात्मत्वं व्यञ्जयद्वाक्यमन्नमयादिषुतदन्तरात्मतयाऽऽत्मत्वेन निर्दिष्टान् प्राणमयादीनतिक्रम्यान्योऽन्तर आत्माऽऽनन्दमय इत्यात्मशब्देननिर्देशमानन्दमये समापयति, अत आत्म-शब्देन प्रक्रान्तब्रह्मानन्दमयमिति निश्चीयते इति ।

टी० अत एव तस्यानन्द आत्मेति षष्ठ्या व्यतिरेकनिर्देशस्वारस्यं सिध्यति, तस्मादानन्दो मध्यभागत्वेन रूपितः । नन्वेव पुच्छतया निर्दिष्टं ब्रह्मेत्यङ्गीकृतं स्यात् । ततः किं, तर्हि किं निरसनीयम् ? आनन्दमयस्याब्रह्मत्वम् अतस्तन्निरसनमुखेन पुच्छस्य तदन्तर्भावो ऽभिधीयते । हेत्वन्तरमाह "यदि चे" ति, ननु तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यन्तरात्मतयैव भेदो वक्तव्य इति न ह्यस्ति नियमः "पृथगात्मानं प्रेरितारं" पतिं विश्वस्येत्यादिवत् व्यावर्तकान्तरेणाप्यन्यत्वप्रतिपादनसम्भवादित्याशङ्क्याह "एतदुक्तमि"ति, प्रकरणस्य तत्तदन्तरतयैव भेदप्रतिपादनपरत्वात् तत्प्रकरणस्यैतद्वाक्येन तादृशेन भवितव्यमित्यर्थः । आत्म-शब्दस्य श्रुत्यैव व्याख्यानं कृतमिति कथमवगम्यत ? इति शङ्कायां स्वोक्तस्य स्वयमेव व्याख्यानं प्रकरणसिद्धमिति दर्शयितुमात्म-शब्दनिर्दिष्टस्यैव ब्रह्मत्वोपपादनोपयोगितया च ब्रह्मविदाप्नोतीत्याद्युक्तम्, तत्र ब्रह्म-शब्दव्याख्यानं सत्यज्ञानादिवाक्यमात्म-शब्दव्याख्यानमानन्दमये समाप्तमस्तु ततः किमानन्दमयस्यैव ब्रह्मत्वे इति शङ्कायां ब्रह्म-शब्देन प्रकृतस्यैवात्मशब्देन निर्दिष्टत्वं दर्शयति "तदेवे"ति, तस्माद्वा एतस्मादात्मन"इति, तदेतच्छब्दौ प्रकृतपरामर्शिनाविति भावः, पुनश्चोदयति । (शेषमग्रे)

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

---

(*Continued from page* 220. Vol. XI.)

चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् ।

सू° अन्ते स्युरव्यवायात् ॥ ७ ॥

स्थिते सकृदनुष्ठाने क्रमश्चिन्त्यते—किञ्चित्रिण्यादीनामुत्तमामायामुपधान ? मुत मध्यमाया ? मिति "क्लृप्तक्रमात्त्वव्यायार्थमन्तेऽनारभ्यचोदिताः । यां काञ्चिद्दिति वाक्यन्तु विधेयेन भवत्यलं सर्वासामिष्टकानां पठितेन कल्पितेन वा ब्राह्मणेन तद्युक्त्वात्सर्वासां च मध्यमायामुपधानासम्भवात् यासां मध्यमायामुपधानं प्राप्तं तदनुवादमात्रमिदं यां काञ्चिद् ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चिता"विति न तु विधायकम्, अतः क्लृप्तक्रमाणां प्राकरणिकीनामव्यवायार्थमनारभ्याधीतानामुत्तमायां निवेशः—उच्यते "वचनान्मध्यमायां स्युः प्रत्यक्षब्राह्मणोदिताः । ज्ञानातिरभिपूर्वोऽयं प्रत्यक्षे वर्त्तते यतः ॥ वाक्यं चार्थवदेवं स्यादनुवादमात्रं ह्यनर्थकं चित्रिण्यादेर्निवेशोऽतोमध्यमायां चितौ भवेत् ॥

लोकम्पृणातः पूर्वं चित्रिण्याद्युपधानाधिकरणम् ।

सू° प्राग्लोकम्पृणायास्तस्याः सम्पूरणार्थत्वात् ॥ ८ ॥

स्थितं मध्यमायां निवेशः इति, तत्रापि किं प्राकरणिकीनामन्ते चित्रिण्यादीनां निवेशः ? । अथ वा लोकम्पृणायाः प्रागि ? ति तत्राव्यवायार्थमन्ते स्युर्लोकम्पृणायास्तु यदेवास्योनं यच्छिद्रं तदेतया पूरयति,लोकम्पृणा छिद्रं पृणोति यत्पूरणार्थत्वं तच्चित्यन्तरेऽपि सावकाशं न हि सा मध्यमामात्रविषया मन्त्रमात्रस्य प्रत्यक्षविधानादिष्टकायास्तु कल्प्यं विधानम-, तश्चित्यन्तरेऽपि सावकाशत्वेन न न्यायप्राप्तः चित्रिण्यादीनामन्ते निवेशः

शक्यते बाधितुमित्यन्ते निवेशः नैवं सविशेषश्रुतस्य वचनस्य सावकाशत्वेन न्यायमात्रेण सङ्कोचासम्भवात् मध्यमायामपि चितावन्ते लोकम्पृणा भवेत् पूरणार्थेति तस्याः प्राक् विचिण्यादेर्निवेशनम् ॥

वृष्टिसंस्कृताग्न्याग्निहोत्राद्यनुष्ठानाधिकरणम् ।

सू० संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ ९ ॥

आधानप्रकरणे पवमानहवींषि विहितानि तानि तान्याधानादूर्ध्वमवक्लृप्यन्ते द्वादशसु रात्रिष्वनुनिर्वपेदित्यादिभिस्तत्राग्निहोत्रादीनि किमाधानानन्तरमेव प्रवर्त्तन्ते? उत तेषु कृतेष्वि? ति विचारे कर्त्तव्यान्याहवनीयस्य निष्पन्नत्वादाधानमात्रस्य तन्निरपेक्षस्य तदुत्पादकत्वात् पवमानहविर्भिस्तु निष्पन्नस्यैवाहवनीयस्य संस्कारमात्रं क्रियते पूर्वमेव त्वाहवनीयादयो निष्पन्नाः निष्पन्नेषु तेषु भवितव्यं कर्मभिरिति प्राप्ते उच्यते न निरपेक्षमाधानमग्नीनामुत्पादकं पवमानहविषामपि तदुत्पादकत्वात्, न च विकल्पस्तेषामाधानोत्तरकाले विधानात्, अतः समुचितानां तदुत्पादकत्वाच्च तेभ्यः प्रागाहवनीयनिर्वृत्तिः, यदाऽप्याधानाङ्गपवमानहवींषि तदाऽप्यनङ्गेन प्रधानेन साध्यानिष्पत्तेस्तदुत्तरकालमेवाग्निनिष्पत्तिः । यत्तूक्तं निष्पन्नस्यैवाग्नेः संस्कारमात्रं हविर्भिरिति तथाऽप्यस्य संस्कारस्याहवनीयकार्योपयोगित्वात्तेन विना निष्पन्नस्याप्यग्निरग्निहोत्रादिकार्याक्षमत्वाच्च तदुत्तरकाल एव कर्मणां प्रवृत्तिः ॥

अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ।

सू० सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ १० ॥

अग्निचिद्व्रतानि "वर्षति न धावे"दित्यादीनि चयनानन्तरमेव भवन्ति? क्रत्वन्ते वेति संशये"धात्वर्थश्चयनं भूतं निमित्तं तदनन्तरम् । व्रतान्यतः प्रवर्त्तेरन्नाहिताग्निव्रतादिवत् । नैवम्भावनाया निमित्तत्वं धातुस्तदुपसर्ज्जनम् । तस्याश्च फलनिर्वृत्त्या निर्वृत्तिरुपलक्ष्यते । न ह्यत्र चयनस्य रूपनिर्वृत्तिर्निमित्तं तत्कारणिका त्वग्निकर्मिका भावना भूतानिमित्तं तस्याश्चाग्न्युपकारो भाव्यः, सोऽपि च क्रतुं साधयतोऽग्नेर्धारणं, तच्च क्रतुस-

माप्तेर्वितत्तं न ततः प्राग् निर्वृत्तं भवति तद्विवृत्त्या च विना न भावना-निर्वृत्तिः फलापवर्गित्वाद्भावनानामाधानस्य त्वग्निगतमदृष्टं भाव्यं, तच्चानन्तरमेव निर्वृत्तमिति विशेषः ॥

दीक्षाया इष्टिविकृताऽधिकरणम् । सू० परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसम्बन्धात् ॥ ११ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इतीष्टिः दण्डेन दीक्षयतीत्यादि च श्रूयते तत्र किं सर्वैर्दीक्षितो भवत्युतेष्ट्यैव? दण्डादीनि तु तद्व्यञ्जनानीति सर्वेषां तादर्थ्यावगमाददृष्टार्थानां चैकप्रयोगविधिसंग्रहात्समुच्चयसिद्धेः सर्वान्ते दीक्षासंग्रह इति प्राप्तेऽभिधीयते "निरपेक्षेव वाक्येन दीक्षार्थेष्टिर्विधीयते। दण्डादि त्वक्रियारूपं तद्व्यञ्जनतयोच्यते। दीक्षिष्यमाण इति लट् क्रियार्थायां क्रियामुपपदे विधीयते तेन दीक्षार्थत्वमिष्टेर्दीक्षा च क्रत्वङ्गभूतयमनियमसंग्रहस्तं करिष्यमाणस्य पुरुषस्य दीक्षिष्यमाणशब्दनिर्दिष्टस्य संस्कारार्थेष्टिः, सा च निरपेक्षाऽवगम्यते तद्यदि दण्डादिश्रवणमन्यथा नोपपद्यते ततो नैरपेक्ष्यं बाध्येत तत्तु व्यञ्जनतयाऽप्युपपन्नं न निरपेक्षश्रुतिं बाधितुं क्षमते। किञ्च दण्डादीनि द्रव्यरूपाणि नोदासीनानि संस्कारं जनयन्ति, न चैषामाश्रयभूतेतिकर्तव्यताभूता वा काचित् क्रिया श्रूयतेऽतः कथं दण्डादिभिः संस्कारो जन्यते इति न ज्ञायते, अभिव्यक्तिस्तु दृष्टत्वात्प्रमाणान्तरदृष्टसंयोगादिवशेनैव शक्यते सम्पादयितुं तस्मादिष्ट्यन्त एव दीक्षितस्याभिव्यञ्जनमात्रार्था दण्डादय इतीष्ट्यन्त एव दीक्षितधर्माः प्रवर्त्तेरन् ॥

काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् । सू० अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ १२ ॥

क्रत्वन्तराणामैन्द्राग्नादीनां काम्यानां नैमित्तिकानां च क्रमेण पठितानामङ्गानामिव पाठवशात्क्रमनियममाशङ्क्य पाठस्य स्वयमविधायकत्वाद्विधायकस्य चैषामेकस्याभावाचानाप्रयोगवचनैरेकैकश्येन विधीयमानानां मिथोऽनपेक्षणादनियमेन कामानां निमित्तानां चोपनिपाताच्चास्ति क्रमनियम इति स्थितम् ॥

यज्ञानामग्निष्टोमपूर्वकत्वाधिकरणम् ।

**सू० य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ १३ ॥**

क्रत्वन्तराणामनियम इति स्थितं क्वचित्तु वचनवशात्पौर्वापर्यं भवति तथा हि श्रूयते "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः तस्मादेतेनेष्ट्वाऽन्येन यजेते"ति तत्र किमेतच्छब्दः सर्वसंस्थं ज्योतिष्टोमं निर्दिशति? उताग्निष्टोमसंस्थमेवे? ति "तत्र विशेषतः सर्वसंस्थोऽनेनाभिमृश्यते अग्निष्टोमस्तु नित्यत्वात्संस्था ह्यागन्तवो यतः । ज्योतिष्टोमस्य ह्यग्निष्टोमसंस्था नैजं रूपमिति तादृश एव प्रतीयते न संस्थान्तरयुक्तस्तेषामागन्तुकत्वात्, अपि च एतेनेति करणनिर्देशाज्ज्योतिष्टोमकरणिका भावना इष्ट्वेति शब्देन कथ्यते, न च संस्थासु एतस्य करणत्वमाश्रयमात्रत्वात्. न च संस्थानां क्रतुभावानान्तर्भावः फलार्थत्वात्, अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गतेति तत्संस्थैव परामर्शः ॥

ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वाधिकरणम् ।

**सू० अथान्येनेति संस्थानां सन्निधानात् ॥ १४ ॥**

एतच्छब्दार्थे निरूपिते तदपेक्षोऽन्य–शब्दः किं संस्थासु वर्त्तते? उताग्निष्टोमान्यमात्र? इति संशये "संस्था एवान्यशब्देन कथ्यन्ते प्रकृता हि ताः । न त्वेवं स्याद संस्थानामस्ति प्रकरणं यतः । ज्योतिष्टोमाधिकारोऽयं वाक्यशेषे च कीर्त्तनात् यज्ञानामिति शब्देन सर्वे सन्निहिता हि ते तस्माज्ज्योतिष्टोमान्यत्वाविशेषात्संस्थानामेकाहाहीनसत्राणां चायमन्यवाद इति सर्वेषां तेषां ज्योतिष्टोमात्पश्चाद्भावोऽनेन वाक्येनाभिधीयते ॥

सर्वेषामेकानेकस्तोमकानामग्निष्टोमपूर्वकत्वाधिकरणम् ।

**सू० एकस्तोमे वा क्रतुसंयोगात् ॥ १५ ॥**

पूर्वापेक्षेणेदमारभ्यते–न सर्वनिर्देशः किं त्वेकस्तोमानां त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यसप्तदश उक्थ्यः एकविंशः षोडशीत्यादीनामेव, कुतः वाक्यशेषात् यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते इत्यारभ्याविशेषश्रवणं वाक्यशेषेण विशेषे स्थाप्यते न त्वेवमन्य–शब्देन ह्यविशेषः प्रतीयते, वाक्यशेषस्तु संयोगमात्रेणोपपद्यते, यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीप-

यतीति विनापि व्याख्या संयोगमात्रेण त्रिवृदादीनामेकस्तोमकेष्वपि दीपकं त्वसम्भवत्यविशेषात्सर्वेषाद् इति स्थितम् ॥

इति शास्त्रदीपिकायां पञ्चमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## ॥ अथ पञ्चमाध्यायस्य चतुर्थः पादः आरभ्यते ॥

पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम् ।

सू० क्रमको योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

किं श्रुत्यर्थाभ्यां तुल्यबलः पाठ? उत दुर्बल? इति चिन्त्यते? तत्राश्विनो दशमो गृह्यते इति श्रुतं किमाश्विनस्य पाठक्रमात्? तृतीयस्थाने ग्रहणमुत श्रुतिबलाद्दशम? इति तथाऽग्निहोत्रं जुहोति यवागूं पचतीति किं पाठवशाद् हुत्वा पक्तव्यमुतार्थवशाद्विपर्यय? इति प्रामाण्याविशेषादनियमं मन्वानस्योत्तरं "क्रमे श्रुत्यैव विहिते पाठतः कोऽनुकल्पयेत् । प्रयोजनविरोधे वा कः पाठमनुरुध्यते हुत्वा हि पचमानस्य भवेद् द्वयमनर्थकम् । पाकश्चैव यवागूश्च च तां पक्त्वा जुहुयादतः ॥

मुख्यक्रमेणाऽऽग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकरणम् ।

सू० अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥

दर्शपूर्णमासयोः सान्नाय्यधर्माः पूर्वं प्रवर्तन्ते पश्चादाग्नेयधर्माः प्रदानं त्वाग्नेयस्य प्रथमं पश्चात्सान्नायस्य, ततः स्विष्टकृदवदानं प्रयाजशेषाभिघारणं वेद्यामासादनं च किं प्रवृत्तिक्रमात्सान्नाय्यस्य पूर्वं भवत्युत मुख्यक्रमादाग्नेयस्ये? ति प्रवृत्तिमुख्ययोर्बलाबलाज्ञानात्सन्देहे सत्यनियमे प्राप्ते मुख्यक्रमोबलीयानित्याह तस्मिन्किलाश्रीयमाणे प्रथम एकः पदार्थः प्रधानाद्विप्रकृष्यते अन्ये सर्वे सन्निकृष्टा भवन्ति प्रवृत्तिक्रमे पुनराश्रीयमाणे बहूनां विप्रकर्षः, तस्मान्मुख्यक्रमो बलीयान्, न चात्र प्रधानावदानमुदाहरणमित्युक्तं तन्त्ररत्ने ॥

इष्टिसोमयोः पौर्वापर्यानियमाधिकरणम् ।

सू० वचनादिष्टिपूर्वत्वम् ॥ ३ ॥

इष्टि पूर्वत्वं सोमस्याम्नातं दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेति तत्किं नियत ? मुत विपर्ययोऽपि लभ्यत ? इति वचनादिष्टिपूर्वत्वं सोमपूर्वत्वस्य तु नैवं साक्षाद्वचनमस्ति तस्मादिष्टिपूर्वत्वमेव स्यात्, सत्यं न साक्षादस्ति वचनमाधानानन्तर्यं तु सोमस्य श्रुतन्तद्वशाच्चार्थादिष्टेः सोमपूर्वत्वं संज्ञायते, न ह्याधानानन्तर्यं सोमस्येष्टिपूर्वत्वे सम्पादयितुं शक्यं, तच्च श्रुतं सोमेन यक्ष्यमाणोऽग्निमादधीतेति सर्वश्चादधानः सोमेन यक्ष्यमाण एव नित्यत्वात्सोमस्य, अतः सोमेनानन्तरं यक्ष्यमाण इत्येतदभिप्रायमिदम् । अतः सोमपूर्वत्वमपि स्यात् ।

ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिकरणम् ।

## उत्कर्षाद्ब्राह्मणस्य सोमः स्यात् ॥ ४ ॥

स्थिते कल्पद्वये चिन्त्यते किं ब्राह्मणस्य सोमपूर्वत्वमेव ? उत तस्यापीतरवद् द्वावेव कल्पा ? विति तदर्थं चिन्त्यते किमाग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत्तर्हि स उभयदेवतो भवतीति, अनेन वचनेन कृत्स्नौ दर्शपूर्णमासावूर्ध्वं सोमादुत्कृष्येते । अथवा कर्मान्तरविधिरयमुत पौर्णमासीमात्रोत्कर्षः । अथवैकहविरुत्कर्ष ? इति यदि कृत्स्नोत्कर्षो ब्राह्मणस्य सोमपूर्वत्वमेव भवति, पक्षान्तरेषु तस्याप्युभौ कल्पाविति तत्र "इष्टेरुत्कर्षणं यस्माद् ब्राह्मणस्य विधीयते । तेनास्य सोमपूर्वत्वमुभयं क्षत्रवैश्ययोः" । यद्यपि यदेवादः पौर्णमासं हविरित्येकदेशोत्कर्षः श्रूयते तथाऽपि समस्तसाध्यत्वेन श्रुतं फलं नैकदेशान्तरादुत्पत्तुमर्हति, न चाफलस्यानुष्ठानमस्तीति तस्याप्युत्कर्षः कृत्स्नोत्कर्षात्सोमपूर्वत्वमेव विप्रस्य क्षत्रियवैश्ययोरिव फलकल्पद्वयमिति पूर्वः पक्षः, अत्र सिद्धान्त्येकदेश्याह कर्मान्तरमिदं पौर्णमासीधर्मकं तन्नामकं वा विधीयते, एवं धात्वर्थविधिर्भवति, अश्रुतस्य चोत्कर्षः कल्पितो न भवति न त्वेतत्कर्मान्तरं विशिष्टविधिगौरवाचाम्नश्चानेकार्थकल्पना धर्मलक्षणा वाऽयुक्ता, प्रकरणात्तु पौर्णमास्या एवायं कालविधिस्तत्संयोगात् दर्शस्यापि उत्कर्ष एव इत्येवमपर्यवसितेऽधिकरणेऽनन्तरोक्तोपजीवनेन पूर्वपक्षं वक्तुं चिन्तान्तरं क्रियते, सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तु पृच्छेच्च नक्षत्रमिति किमयमृतुनक्षत्रातिक्रम

आधानस्य ? उत सोमस्ये ? ति प्रकरणादाधानस्येति प्राप्ते वचनान्तरेणास्या-मेव शाखायां यद्ब्रह्मवेनमित्यादिना आधानकालानादरस्योक्तत्वात्सोम-काल एवायं यद्यपि शतपथेऽपहतपाप्मानो वा ऋतवोऽसौ खलु वाव आ-दित्य उद्यन्नेषां पाप्मानमपघ्नन्ति तस्माद्यदा चैनं श्रद्धा चोपनमेत् अथा-दधीताथ यजेतेत्युक्तं तथाऽप्यस्यां शाखायामविहित इति तत्पर एवायं सोमेनाधानानन्तरं यक्ष्यमाण आदधीत तथा कुर्वन् सोमस्तु नक्षत्रं च संपदादिकं नाद्रियेत इति स्थितादुत्तरं न कृत्स्नोत्कर्षः पौर्णमासीमात्र-श्रवणात्, यत्तु नैकदेशात् फलमिति समुदायादेव विकृतात्फलमित्यदोषः तस्मात्कृत्स्नोत्कर्षाभावात् ब्राह्मणस्याप्युभौ कल्पौ । सिद्धान्तस्तु गृह्णीम यतत्कृत्स्नोत्कर्षो विप्रस्यापि द्वौ कल्पाविति । यत्तु पौर्णमास्युत्कर्ष इति तत्र ब्रूमः, न सकलपौर्णमास्युत्कर्षः किन्तु अदः—शब्दपरामृष्टमाग्नीषो-मीयमेव हि हविरुत्कृष्यते अन्यत्तु यथाप्राप्तमवस्थितं तन्मात्ररहितत्वेन विप्रस्यापि पुरा भवेत् । तेन तस्याप्युभावेव कल्पौ क्षत्रियवैश्यवत् ।

आज्यस्य सोमादनुत्कर्षाधिकरणम् ।

सू० पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ ५ ॥

स्थितमाग्नीषोमीयस्योत्कर्ष इति स किं पुरोडाशस्य ? उताज्यस्यापी ? ति चिन्तायां "तत्राग्नीषोमाभिसम्बन्धादाज्यस्यापीति मन्यते । विष्णुप्र-जापतिभ्यां तु सोमात्प्रागपि तद्भवेत्, यद्यप्याग्नीषोमौ यष्टुमनर्हो यजमा-नस्तथाऽपि नाज्यमुत्क्रष्टुमर्हति, स हि प्रागपि विष्णुं प्रजापतिं वा यक्ष्यति तस्मान्नाज्योत्कर्षः ॥

विकृतानामैन्द्राग्नादीनां सद्यस्कालताऽधिकरणम् ।

सू० विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् । ६ ॥

विकृतयो द्व्यहकालाः ? सद्यस्काला वे ? ति संशये प्रकृतिवद्व्यहकालाः न च वचनविरोधः प्रकृतिवदेव, प्रकृतौ हि पौर्णमास्यां पौर्णमास्या-यजेतेति वाचनिकं कालं वचनान्तरवशादेकदेशेन योजयित्वा द्व्यहकाल-त्वमेवाश्रितं, तथा विकृतावपि य इष्ट्या पशुनेत्यादिविहितकाल एकदेश

एव स्यात् ग्रहकालस्य प्रकृतितः प्राप्तत्वात्, वचनं त्विदं व्यवस्थानिवृत्त्यर्थं प्रकृतितो हि पौर्णमासीविकाराणाममावास्याविकाराणां च तद्वदेव कालव्यवस्थायां प्राप्तायामव्यवस्थार्थं य इष्ट्या पशुनेत्यादिवचनं सम्भवति च द्वयोरपि प्रकृतिविकृत्योर्ग्रहकालत्वमेकस्याश्चतुर्द्व्यामुपक्रमसम्भवादतो ग्रहकालाः, उच्यते "न प्रत्यक्षश्रुतः कालः सङ्गं चोदकाद्व्रजेत् । सर्वाङ्गयुक्ता विकृतिः पञ्चदश्यामतो भवेत् ॥

सोमान्तत्वाचाऽऽग्नेयाद्यानामुत्कर्षाधिकरणम् ।

सू० साम्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत् ॥ ७ ॥

"नासोमयाजी सन्नयेदाग्नेयो वै ब्राह्मणः" इति वचनाभ्यां सान्नाय्याग्नीषोमीययोः सोमोत्तरकालत्वं तद्विकाराणामप्यतिदेशात् तत्कालत्वमिति सुहृद्भूत्वोर्पदिष्टवान् ॥

सोमविकाराणां दर्शपूर्णमासात्पूर्वं कर्तव्यताऽधिकरणम् ।

सू० तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ ८ ॥

इष्टिपूर्वत्वं सोमपूर्वत्वं चोभयमस्तीत्युक्तम्, अतः प्रकृतिवत्सोमविकाराणामपीष्टेः प्रागूर्ध्वं च सम्भवं मन्यते, न त्वेवं, न हीष्टेः प्रागनुष्ठानं सोमस्याह त्वचोदितम् । आधानानन्तरोत्तया तु संज्ञातं प्राप्नमर्थतः आधानानन्तरत्वं च विकृतीनां न सिद्ध्यति । ज्योतिष्टोमोर्ध्वकालत्वात् द्वयोश्च तदसम्भवात् । एष वाव प्रथमो यज्ञानामित्यनेन वचनेन ज्योतिष्टोमानन्तरकालत्वाद्विकृतीनां नाधानानन्तर्यं सम्भवति एकश्चायमनन्तरकालो न द्वाभ्यां प्रकृतिविकृतिभ्यामवरोद्धुं शक्यः, प्रत्यक्षवचनात्तु प्रकृत्या संगृहीत इति न विकृतिः सम्भवति तदसम्भवाच्च न विकृतयः प्रागभावमिष्टेर्लभन्ते, न चाहत्यप्रकृतेरिष्टेः प्राप्तमुक्तं यदतिदिश्येत इष्ट्युत्तरकालत्वं तु साक्षादुक्तं प्रकृताविति तदेव विकृतिष्वतिदिश्यते । अतः सोमविकाराणां दर्शादेः परतः क्रिया एवं निरूपिता सम्यक् षट्प्रमाणा क्रमस्थितिः ॥

इति श्रीमहामहोपाध्यायश्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥ (शेषमग्रे)

## खण्डनखण्डखाद्यम् ॥

( *Continued from page* 224. Vol. X. )

टी० ॥ साधु प्रतिसाधनतया प्रयुक्तमिति वादिनाभिहिते दोषोद्भावनसम्भावना नावश्यिवर्तते एव तथाच विशेषणाभावात्तदा तल्लक्षणाभाव इत्याह—। [a] "एवमि"ति । ननु यत्र स्वानिष्टमेवं वादी स्वीकरोति तत्र मास्तु सत्प्रतिपक्षता किं नः छिन्नमित्यत आह—। [b] "तथाचेत्थमि"ति । यद्यपि यत्रैवं न स्वीकुर्यात्तत्र सावकाशः सत्प्रतिपक्षस्तथापि पूर्वदोषावष्टम्भोऽत्र एवं सत्प्रतिपक्षप्रतीकारं जानानः कथन्न प्रतिकुर्यादितिभावः नन्वेवं स्वदोषाङ्गीकारे मतानुज्ञया वादी पराजितः स्यादित्यत आह—। [c] "नचे"ति । दोषपरिजिहीर्षयायमभ्युपगमो न मतानुज्ञामापादयतीत्यर्थः स्वीकाराभिप्रायमाह—। [d] "स्वीकारे सती"ति । ननु प्रतिसाधुत्वाभ्युपगमे तत्साध्यं स्वानिष्टं सिध्येदित्यपरमनिष्टं स्यादित्यतोऽनुरूपं दृष्टान्तमाह—। [e] "सिद्धसाधन"इति ॥

मू० [a] "यदि च सत्प्रतिपक्षौ वादिनोः समानप्रतिपक्षदर्शनजनितात्स्वहेत्वाभासत्वसंशयात्तदा क्वचिदपि नास्ति सत्प्रतिपक्षता स्वहेतुपक्षपातेन परहेतावेव दोषः कश्चिदस्ति मया तु न गृह्यते इति ताभ्यां मन्यमानत्वात् यदाह निश्चितौ हि विवादं कुरुत इति [b] * अथौचित्यादावर्जितसंशयेन सत्प्रतिपक्षता स्यात् [c] * तदा सर्वत्रैव वादे सर्वानुमानानां सत्प्रतिपक्षता दुर्निवारा तद्यथा शब्दानित्यत्वानुमानेन बुद्धिमद्भिः शतशः शब्दनित्यत्ववादिजयात् शब्दनित्यत्वानुमानेन च प्राज्ञः शतशः शब्दानित्यत्ववादिजयात् ॥

टी० लक्षणं दूषयित्वा फलं दूषयति–। "यदि चे"ति, । प्रतिसाधनं दृष्ट्वा स्वसाधने हेत्वाभासत्वसंशयोऽत्र फलत्वेनाभिमतः स चाशक्यः स्वपक्षपातेन स्वसाधनस्य निर्दोषत्वेनैव निर्णीतत्वात् संशयानुपपत्तेरित्यर्थः ननु विशेषदर्शनं तिरस्कृत्यापि तुल्यबलप्रतिसाधनदर्शनरूपदोषबलादन्यान्यस्य स्वहेतौ संशयोऽवश्यं भावीत्याह–। [b]"अथे"ति । औचित्यादापादित आहार्य इति केचित्तन्न आहार्यसंशयाभ्युपगमे प्रतिसाधनोपन्यासानर्थक्यस्यावश्याभ्युपगमप्रसङ्गात्(१) अनित्यत्वसाधकानुमानस्य नित्यत्वसाधकानुमानं तदानीमनुपन्यस्यमानमपि सत्प्रतिपक्षः स्यात् संशयापादकत्वादित्याह–। [c]"तदे"ति ॥

मू० [a]द्वयोः पक्षयोरनुमानेषु कतरद्वस्तुतः सदनुमानमिति [b]अर्हतो दोषसंशयस्य दुर्वारत्वादिति [c]प्रकारभेदाभावाच्च न कालात्ययापदिष्टः पृथक् तद्यथा बाधितविषयः कालात्ययापदिष्ट इत्यलक्षणं तथाहि बाधितविषयत्वं किं विवक्षितं न तावद्बलवता बोधितो विषयविपर्ययो यस्य तत्त्वं [d]यथाश्रुतस्य सत्प्रतिपक्षेपि गतत्वात् [e]तच्च प्रत्यनुमानस्य प्रथमानुमानविषयविपर्ययबोधकस्य पक्षधर्मतादिबलसम्भवात् * अथ बलवतेत्यधिकबलेनेति विवक्षितं * [f]तदापि केवलव्यतिरेकिणोन्वयव्यतिरेकिणा सत्प्रतिपक्षे गतत्वादतिव्यापकत्वं तच्चान्वयव्यतिरेकिणः प्रतिहेतोः सपक्षसत्त्वलक्षणबलाधिक्यसंभवात् ।

टी० ॥ सन्देहमेवोपपादयति–। [a]"द्वयोरि"ति ॥ [b]"अर्हत" इति । उचितस्य प्राप्तस्येत्यर्थः साध्यविपर्ययबोधघटितसत्प्रतिपक्षान्त·

(१) अनाहार्यसंशयमुत्पाद्य निश्चयप्रतिबन्धार्थमेव प्रतिहेतुरुपन्यस्यते आहार्यसंशयश्च न निश्चयविरोध्यतः प्रतिहेतूपन्यासानर्थक्यमिति भावः ।

भाव: स्फुटः कालात्ययापदिष्टस्येति तत्खण्डनानन्तरं कालात्ययापदिष्टखण्डनमुपक्रमते–। [c] "प्रकारे"ति । हेत्वाभासान्तरभेदकस्य प्रकारभेदस्याभावादित्यर्थः ॥ [d] "यथाश्रुतस्ये"ति । अविवेचितबलवत्त्वस्य(१)त्यर्थः सत्प्रतिपक्षस्य प्रतिबन्धकत्वं नतु साध्यविपर्ययबोधकत्वं यद्यपि तथापि तुल्यबलबोधितसाध्यविपर्ययत्वं सत्प्रतिपक्षत्वमित्यभिप्रेत्यैतदुक्तं अतिव्याप्तिं स्फुटयति [e] "नन्वि"ति ॥ [f] "तद्वे"ति । यद्यपि व्यतिरेकिणा सपक्षसत्त्वाभावेऽपि व्याप्तिपक्षधर्मताख्यबलसाम्यमिति नाधिकबलत्वमन्वयव्यतिरेकिणस्तथापि सपक्षसत्त्वादिकं बलमभिप्रेत्यैतदुक्तम् ।

मू॰ [a] किञ्चैवं प्रत्यक्षेणानुमानाभासबाधो न स्यात् प्रत्यक्षस्येन्द्रियार्थसन्निकर्षोत्पन्नाभ्रान्तिज्ञानकरणत्वमात्रं बलमनुमानस्य तु पक्षधर्मत्वादि भूयिष्ठं बलमिति [b] * अथ मन्यसेऽनन्यथासिद्धत्वं बलं विवक्षित्वेदमुच्यते तेनानन्यथासिद्धेनबोधितो यदीयसाध्यस्य व्यतिरेकस्तत्त्वं बाधितविषयत्वमिति? * मैवम्, [c] तथापि हि वस्तुतोऽनन्यथासिद्धेन (२)सत्प्रतिपक्षेऽपि गतत्वादतिव्यापकत्वं [d] किञ्चान्यथेत्यन्येन प्रकारान्तरेणेत्युच्यते अनन्यथेति चानन्येन प्रकारेण [e] यस्मादन्यत्वं तेनैवेत्यर्थः सम्पद्यते तथाच वक्तव्यं किं तदन्यताप्रतियोगीति प्रामाण्यं तदिति चेत् अहो दुर्वैदग्धी भवतः प्रमाण्येनेति वक्तव्ये प्रामाण्याद्योऽन्यः स यो न भवति तेन प्रकारेण सिद्धः उत्पन्नः प्रतीतो वा तेनेति व्याख्यास्य ।

(१) अविवेचितबलवत्त्वस्य=अनिर्णीतन्यूनाधिकबलवत्त्वस्य ।

(२) अनन्यथासिद्धेन=सदनुमानेन ।

टी० ॥ "किञ्चैवमि"ति । यद्यपि रूपवत्त्वादिकं यथायथं तचापि बलमधिकं तथापि नदविवक्षयेदमुक्तं ॥ [b] "अथे"ति । सत्प्रतिपक्षस्थलेऽन्यथासिद्धेनैव साध्यविपर्ययबोधनमतो नातिव्याप्तिरिति भावः यत्रान्यथासिद्ध एव प्रतिहेतुस्तत्रातिव्याप्तिमाह–। [c] "तथापी"ति । कुटिलोक्तिकत्वं लक्षणदोषमाह–। [d] "किञ्चे"ति [e] "यस्मादन्यत्वमि"ति । अन्यत्वं सप्रतियोगिकं तेन यथाघटादन्यः पटादिः अनन्यस्तु घट एव तथा प्रामाण्यादन्यदप्रामाण्यमनन्यत्तु प्रामाण्यमेवेत्यर्थस्तथाच प्रामाण्येन सिद्ध इति वक्तव्ये प्रामाण्यप्रतियोगिकान्योन्याभाववत् प्रतियोगिकान्योन्याभाववता सिद्ध इति महत्कौटिल्यमुक्तमित्यर्थः इति सुवाणस्याहो दुर्वैदग्धी भवत इति योजना ॥

ख० [a] तथापि प्रमाणेन बोधितविपर्ययो विषयो यस्य स कालात्ययापदिष्ट इति न इदं रजतमिति शुक्तिं विषयीकुर्वति प्रत्यक्षाभासे नेदं रजतमितिप्रमाणेन बाध्यमानेपि हेत्वाभासविशेषलक्षणमिदङ्गच्छदतिव्यापकत्वमापद्यते [b] एवं बाध्यविषयिण्यामिच्छायामपि गच्छेत् * प्रमाणेन बोधितो यदीयविषयस्यान्यथा भावः [c] स हेतुः कालात्ययापदिष्ट? *–इति चेन्न, यदि [d] मुख्यार्थो हेतुशब्दः [e] तदा हेत्वाभासत्वव्याघातः [f] अथामुख्यार्थः तदा कोस्यार्थः यत्रैष व्यवस्थाप्यते इति सोभिधातव्यः * [g] प्रमाणेन बोधिते यदीय विषयस्य व्यतिरेकः स हेत्वाभासः कालात्ययापदिष्ट? *–इति चेन्न, यद्यग्रे हेत्वाभासत्वानिश्चयः तदा लक्षणस्य दुरवधारणत्वम् * अथ कालात्ययापदिष्टत्वे निरूपिते एव हेत्वाभासत्वस्य निश्चयः * तदा तत एव दुष्टत्वसिद्धेः कृतं ।

टी० ॥ ननूक्तिकौटिल्ये सत्यपि लक्षणमदुष्टमेवेत्यत आह-। [a]"तथापी"ति । प्रमाणेन बाधकज्ञानेन बोधितसाध्यविपर्यये भ्रमेऽतिव्याप्तिः भ्रमज्ञानस्य हेत्वाभासत्वायोगादिति भावः भ्रमजनितायामिच्छायामतिव्याप्तिमाह-। [b]"एवमि"ति । बाध्यं रजतत्वादिर्विषयो यस्या इच्छायाः सा तथा तस्यामित्यर्थः ॥ [c]"स हेतुरि"ति । तथाच न भ्रमे न वा तज्जनितायामिच्छायामतिव्याप्तिस्तत्र हेतुत्वाभावादिति भावः ॥ [d]"मुख्यार्थे" इति । व्याप्तपक्षधर्मवचन इत्यर्थः न्यायावयव इति नार्थः पर्यस्यैव हेतुहेत्वाभासत्वस्य विचारात् [e]"तदे"ति । व्याप्तिपक्षधर्मताविशिष्टस्य हेत्वाभासत्वं व्याहतमित्यर्थः ॥ [f]"कथे"ति । लाक्षणिकस्य हेतुशब्दस्य विविच्य विषयो वक्तव्य इत्यर्थः पूर्वोक्तव्याघातपरिहाराय हेत्वाभासत्वेन विशेषणीयमित्याह- [g]"प्रमाणेने"ति ॥

मू० [a]पश्चात्प्रतीतिकस्य कालात्ययापदेशस्योपन्यासेनेति [b]तदिदं त्वन्मते लक्षणमस्तु मा वा भूत् सामुद्रिकप्रमाणेन पुनर्मन्दैतद्लक्षणं कालात्ययापदेशस्य येनास्य ([1])नाम हेत्वाभासभेदपदभ्रंशः प्रासाधि *[c]अथ ब्रूषे हेत्वाभासत्वं हेतुसदृशतया प्रतीयमानत्वं न हेतुदोषवत्त्वम्? *—इति मैवं, [d]हेतुना तुल्यता हि अहेतुत्वावगमं विना न शक्यप्रमितिः सादृश्यस्य भेदाधिष्ठानस्य तथैव प्रतीतेः [e]अन्यथा हेतोरपि हेत्वाभासत्वापातात् [f]ततश्च हेतुरूपवैकल्यस्यावश्यं प्रत्येतव्यत्वेन प्रागुक्तदोषानिवृत्तिः *प्रमाणेन बाध्यमानो यदीय [g]पक्षव्यतिरेकः स कालात्ययापदिष्ट? *—इति चेन्न,

(१) येन=सामुद्रिकप्रमाणेन, अस्य=कालात्ययापदिष्टस्य, नाम=प्रसिद्धं, हेत्वाभासविशेषस्य पदात् स्थानात् भ्रंशः=च्युतिः, प्रासाधि । सामुद्रिकशास्त्रे कालात्ययापदेशपदस्यातिक्रान्तकालाख्यपदेश वाचित्वात् ।

टी० ॥ [a] "पश्चात्प्रतीतिकस्ये"ति । हेत्वाभासत्वगर्भलक्षणाव्यव-स्थाप्यस्येत्यर्थः अनेन लक्षणेन कालात्ययापदिष्टो हेत्वाभासादेव प्रच्या-वित इति महदिदमलक्षणमित्युपहसति—। [b] "तदिदमि"ति । ननु हेतु-सदृशत्वं हेत्वाभासत्वं नत्वनुमिति प्रतिबन्धकतावच्छेदकरूपवत्त्वं येन कालात्ययापदिष्टत्वज्ञानात्पूर्वमेवानुमिति प्रतिबन्धे किं तेनेति स्यादि-त्याह—। [c] "अपे"ति । तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वं सादृश्यं हेतुभि-न्नत्वज्ञानात्प्रत्येतव्यमिति स एव दोष इत्याह—। [d] "हेतुने"ति । [e] "अ-न्यथे"ति । यदि सादृश्यं भेदगर्भं न स्यादित्यर्थः ॥ [f] "ततश्चे"ति । हेतुभिन्नत्वं हेतुवैधर्म्यज्ञानाधीनमित्यर्थः ॥ [g] "पक्षव्यतिरेक"इति । तथाच हेत्वाभासपदप्रक्षेपदोषाभावः प्रमितज्ञन्येच्छयोश्च नातिव्याप्तिस्तत्र पक्षव्य-तिरेकाभावादित्यर्थः विपरीतप्रमायां सन्देहसिषाधयिषयोरभावाच्च पक्ष-तेति भावः यद्यपि बाधे प्रमाणेन पक्षव्यतिरेकेण बोध्यते तथापि सम्भवाभिप्रायेणोक्तम् ।

ख० [a] आश्रयासिद्धव्यापनात् * आश्रयासिद्धव्यतिरिक्त इति विशेषणीयम् ? *—इति चेन्न, [b] विशेषणासिद्ध्या आश्र-यासिद्धेन सह सङ्कीर्णकालात्ययापदिष्टोदाहरणमेवं न व्याप्येत [c] * प्रमाणेन बोध्यमानो यदीयसाध्यस्य व्यतिरेकः स कालात्ययापदिष्ट ? *—इति चेन्न, [d] प्रत्यक्षाभासव्याप-नात् नचापि हि साध्यस्य व्याप्यरूपस्य व्यतिरेको बोध्यते एवा [e] * प्रमाणेन बोध्यमानो यदीयस्य साध्यस्य व्यापकस्य व्यतिरेकः स कालात्ययापदिष्ट ? *—इति चेन्न, [f] प्रमाणेन-बोध्यमानाभावस्य प्रकृते हेतुव्यापकत्वासम्भवात् ॥

( शेषमग्रे )

॥ नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

श्रीं श्रीगणेशाय नमः ।

---

(*Continued from page* 274. VOL. XI.)

## अथ षष्ठोऽध्याय आरभ्यते ॥

अधिकारन्यायः, यागादिक्रियाणां स्वर्गफलसाधनताऽधिकरणम् ।

सू० द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥ १ ॥

"भेदादिलक्षणैरेवमनुष्ठेये निरूपिते ।
कोऽनेनाधिक्रियेतेति साम्प्रतं सम्प्रधार्यते ॥
तद्रूपोद्घातरूपेण ता[१]वदेतद्विचार्यते ।
कर्मभिः पुरुषः कर्ता किमधिक्रियते न वा" ॥

सत्यधिकारे कस्य कुत्राधिकार इति चिन्तयितुं लक्षणमारब्धव्यमिति तत्सिद्ध्यर्थमधिकारसद्भावः प्रथमं प्रतिपाद्यते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "चित्रया यजेत पशुकाम" इत्यादिषु किं पुरुषस्याधिकारः स्वाम्यं कर्मजन्यफलभोक्तृत्वमस्ति न वे?ति चिन्त्यते तदर्थमिदं विचार्यते—येयं प्रत्ययोपात्ता भावना तस्यां किं धात्वर्थ एव भाव्यः प्रधानं स्वर्गादि तु साधनतया गुणभूतम्? । उत काम्यमानत्वेनोपात्तः स्वर्गादिरेव भाव्यस्तत्साधनं च धात्वर्थ? इति ततोऽप्येतद्विवेक्तव्यं योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः सम्बन्धस्तत्र किं क्रिया प्रधानतः पुरुषो गुणतस्ततो विपरीतं वेति, यदि गुणतः पुरुषस्तस्य गुणभावं क्रियाक्षेपसिद्धमनूद्य स्वर्गादिद्रव्यं साधनत्वेन विधीयते काम-

---

(१) स्तावदेतद्विचार्यते इति पा० ।

यतिश्च साधनकामनानुवादः, तदयमर्थः स्वर्गं साधनत्वेन कामयमानो यजेत–स्वर्गाय यागं कुर्यादित्यर्थः । यद्वा स्वर्गकामनैव समुद्रमनोध्यानवत् गुणभूतकर्तृविशेषणं सती यागाङ्गमुपदिश्यत इति द्वे[1]धा पूर्वः पक्षः । अथ प्रधानतः पुरुषस्तस्यात्मार्थी स्वर्गादिगोचरा प्रवृत्तिः प्रत्ययेन विधीयते साधनतया च याग उपदिश्यते स्वर्गकामो यागेन कुर्यादात्मार्थां प्रवृत्तिमिति स्वर्गकामस्यात्मार्था प्रवृत्तिः स्वर्गविषयैवेति स्वर्गभावनैवानेन प्रकारेणोपदिष्टा, तदयमर्थः स्वर्गं यः प्राप्तुमिच्छति स यागेन कुर्यादभिलषितं स्वर्गश्च तस्याभिलषित इति स्वर्गं भावयेत् यागेनेत्युक्तं भवति, स्वर्गकामोदाहरणे तु प्रथमः पूर्वपक्षोपयिकत्वादिदमपि चिन्त्यते स्वर्गशब्दो द्रव्यवचनः प्रीतिवचनो वेति, प्रीतिवचनत्वे तु तस्याः साधनत्वासम्भवादत्यन्तानालम्बनः प्रथमः पूर्वपक्षः स्यादिति तत्र पूर्वः पक्षः ।

धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते ।
स्वर्गादेः खलु वाक्येन श्रुते वाक्यं च दुर्बलम् ॥
भूतं च स्वर्गपश्वादि द्रव्यं भाव्याय कर्मणे ।
उपदेश्यं न भूताय भा[2]व्यकर्मोपदेशनम् ॥

स्वर्गशब्दश्चन्दनादिषु प्रयोगाद् द्रव्यवचन इति न साधनत्वासम्भवः पश्वादेस्त्वसन्दिग्धमेव द्रव्यवचनत्वम् । अथवा स्वर्गादिकामनैव यागाङ्गमिति सर्वथा याग एव भाव्यो न तेनान्यत्फलमस्ति च फलेऽधिकाराभावादनारम्भणीयमधिकारलक्षणम् । न चैवमफले कर्मणि कः प्रवर्तेत, मा प्रवर्तिष्ट किं नः छिन्नं, नैतावता शक्यं फलमुपगन्तुम् अफलस्य च कर्मणो धर्मत्वं न भवतीत्येतदपि भवतु तथा च "चोदनालक्षणोऽर्थो धर्म" इत्येतदपि प्रत्यु[3]द्धृतं स्यादित्येतदपि सत्यं तदधीनं च सकलं शास्त्रमिति सकलशास्त्राक्षेपेणेदमधिकरणमारब्धं विधिरपि पुरुषं प्रवर्तयति न तु फलवत्तां गमयति, न च प्रवर्तितोऽपि कश्चिदफले प्रवर्तेत इति व्यर्थ एव विधिरिति प्राप्तेऽभिधीयते ।

(१) त्रेधेत्यपि पाठः ।
(२) भव्यकर्मोपदेशनमिति पा० ।
(३) प्रत्युक्तं स्यादिति पा० ।

"यद्श्रुतेर्बलीयस्त्वं विधिश्रुत्या हि भावना ।
अवरुद्धा न यागादिभाव्यमालम्बितुं क्षमा ॥
स्वर्गादिः कामनायोगात्फलत्वेनैव गम्यते ।
स्वारस्यात्पुरुषार्थो हि कामना फलगोचरा ॥"

लिङादयो विधिं भावनां चाभिदधति तेन प्रकृत्युपात्तयागसम्बन्धात्पूर्वमेव विधिसम्बन्धो भावनायाः प्रतीयते प्रवर्तनारूपश्च विधिः, प्रवृत्तिरूपश्च[1] व्यापारः प्रवर्तना तद्योगिना चापुरुषार्थभाव्यायां भावनायां न सम्भवतीति यागातिक्रमेण पुरुषार्थस्यैव भाव्यत्वं विधिश्रुतिबलादध्यवसीयते कस्य पुनरसौ प्रवर्तनारूपो व्यापारः? शब्दस्येति ब्रूमः तस्य सन्निहितत्वादन्यस्य चाप्रतीतेः, यद्यपि चास्याचेतनत्वादाज्ञादिव्यापारासम्भवः तथापि योऽस्य व्यापारः सम्भवति तस्यैव यथा प्रवर्तनारूपत्वं सम्पद्यते तथा यतितव्यम् अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः, तत्र यदि भाव्यांशे पुरुषार्थ उपनीयते ततस्तत्प्रतिपादनं प्रवृत्तिहेतुर्भवति नान्यथा तेन शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं सम्पादयितुं तद्विषयभूताया भावनायाः पुरुषार्थभाव्यत्वं निश्चीयते स्वर्गादिश्च कामनायोगात् भाव्यतया गम्यते, भाव्यविषया हि मुख्यरूपेण कामना साधनेषु तु तत्सम्बन्धनिमित्ता गौणी, न चात्र गौणग्रहणे प्रमाणमस्ति, तस्माद्विधिश्रुतेः कामनायोगाच्च स्वर्गपश्वादीनामेव भाव्यत्वं, यागश्च तत्र साधनं प्रीतिवचनः स्वर्गशब्दस्तामनभिधाय तद्विशिष्टद्रव्याभिधानासम्भवात् द्रव्यस्वरूपमात्रेणा[2]प्रयोगादतः स्वर्गादिकामस्य पुरुषस्य तद्भावना यागादिविशिष्टा विधीयते, यद्यपि च स्व[र्ग]कामस्यार्थान्तरविषयापि प्रवृत्तिः शेषत्वेन सम्भवति तथापि पुरुषान्तरशेषत्वस्यापि सम्भवात्स्वर्गकामस्य कदाचित्फलान्तरमनिच्छतस्तच्छेषित्वासम्भवाच्च स्वर्गकामार्थप्रवृत्तित्वेन निर्दिश्यते, सैव हि स्वर्गकामेषु शेषत्वेनानुस्यूता पुरुषान्तरेभ्यश्च व्यावृत्ता स्वर्गार्था प्रवृत्तिः सैव स्वर्गकामप्रवृत्तिरित्येवं विशेषणं

---

१ प्रवृत्तिहेतुश्च इति पा० ।
२ द्रव्यस्वरूपमात्रे चाप्रयोगादिति पा० ।

सहते, अतः स्वर्गकामाद्यधिकृत्यपदेशात्तत्साधनत्वेनैव विहितो यागः स्वर्गसाधनत्वेनैव विहितो भवति फलसाधने च कर्मणि फलभागिनः पुरुषस्य सिद्धोऽधिकार इति लक्षणमारब्धव्यम् ॥

यागादिषु मनुष्यस्यैवाधिकाराधिकरणम् ।१

सू० फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ २ ॥

सिद्धेऽधिकारे स किमनुष्ठानसमर्थानामसमर्थानाम् अन्धबधिरपङ्गुमूकदेवतिरश्चामपि? किं वा समर्थानां मनुष्याणामेवे? ति संशयः; तत्र यदि यथाधिकारमङ्गविनियोगस्ततः सर्वेषामपि, अथ यथाविनियोगमधिकारस्तदा समग्रानुष्ठानसमर्थानामेवेति "तत्र प्रधानवाक्येन सर्वेषामधिकारधीर्जायते । तद्वशेनाङ्गवाक्यानामुपवर्णनम्, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति प्रधानवाक्येन सर्वेषां स्वर्गकामाधिकारं कर्मावगतं तदनुसारीणि चाङ्गवाक्यानि न तत्सङ्कोचयालम्, अतश्चक्षुष्मत्तत्प्रत्याज्यावेक्षणविधिरचक्षुष्मतस्तु विध्यभावात्तद्रहितमेव फलसाधनम्, एवं बधिरस्य वाचनहीनं, मूकस्य मन्त्रोच्चारणरहितं पङ्गोश्च विष्णुक्रमणरहितमिति सर्वेषामर्थिनामशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकारः, स्याद्देवमर्थिनां तिरश्चां तु साम्परायिकफलकामनाऽभावात्कथमधिकाराशङ्का तेषामपि चतुर्दश्युपवासादिदर्शनादस्त्येवादृष्टार्थितेति मन्यते । अत्रोच्यते "नैवाज्यावेक्षणहीनं पुरुषं प्रति चोदना । यतोऽसमर्थस्तच्छून्यं कर्म कृत्वाऽधिकारभाक् ॥ पुरुषम्प्रति विधीयमानमसमर्थं प्रत्यविहितत्वादनङ्गमेवेति तद्रहितमेव कर्माविगुणं समग्रं फलं साधयेत् "क्रतुं प्रति विधिस्त्वेषां तादृशं तस्य शक्नुवत् । कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया" न हि स्वातन्त्र्येणाङ्गवाक्यानि पुरुषैः सम्बध्यन्ते प्रधानवाक्यशेषत्वात्तेषां, तत्प्रयुक्तेन तु प्रधान वाक्येन तदङ्गेन युक्तः क्रतुपुरुषैः संयुज्यमानोऽसमर्थानपहाय समर्थान् प्रति विज्ञा१यते, अतोऽन्धस्य क्रतुरेव अविहितोऽन त्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यं, न च प्रधानवाक्यविरोधात्सर्वाधि-

१ विज्ञाप्यते इति पा० ।

कारनिश्चयः विशेषाभावाद्धि सर्वाधिकारः स्यादस्ति चात्र विशेषोऽङ्गो-पसंहारसामर्थ्यम्, अत समर्थानामेवाधिकारः । यत्र तु प्रधानवाक्यविरोधो यावज्जीवादौ तत्र मा भूत्स्यैव यथाशक्ति प्रयोगादपि फलमिति वक्ष्यते, तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलं, तिरश्चां तु प्रधानमात्रे ऽप्यसामर्थ्यान्न क्वचिदधिकारः, ऋषीणां त्वनादौ संसारे पूर्वपूर्वभृग्वादिवरणसम्भवात् अस्त्येवाधिकार इति, ऋष्युदाहरणमनादेयं, देवतानां त्वात्मोद्देशेन त्यागासम्भवाद्विग्रहाभावाच्चाशक्तेरनधिकारः ॥

यागादिषु स्त्रीपुंसयोरुभयोरधिकाराधिकरणम् ।

सू० लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ३ ॥

इदानीं किं पुंस एवाधिकारः ? उत स्त्रिया अपी ? ति संशयः, "तत्र पुँल्लिङ्गनिर्देशात्पुंस एवाधिकारिता ॥ प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम्" विभक्त्यर्थस्य हि संख्याया यद्यधिकरणे ऽविवक्षितत्वमुक्तं, लिङ्गं तु प्रातिपदिकार्थो यद्वत् विवक्षितम्" उद्देश्योऽपि फलकामो विवक्षितलिङ्गः पुमानेव स्यात् अद्रव्यत्वाच्च स्त्रिया द्रव्यत्यागात्मकयागानुष्ठानासम्भवादननुष्ठाने चाधिकारासम्भवादनधिकारः, तथा भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः इति स्मरणादतः पुंस एवाधिकारः, उच्यते "प्रकृत्यर्थो ऽपि खल्वेतदुद्देश्यस्य विशेषणं संख्यया तुल्यमीतित्वात्र विवक्षां प्रपद्यते" यद्यप्युद्देश्यत्वाद्धि विवक्षितो न प्रातिपदिकार्थत्वाल्लिङ्गं तु प्रातिपदिकार्थोऽप्युद्देश्यविशेषणत्वादविवक्षितं वाक्यभेदप्रसङ्गात् अनपेक्षितपरिच्छेदत्वाच्चोद्दिश्यमानस्य, न चायं प्रातिपदिकार्थो विभक्तिविकाराणां टाबादीनां चान्वयव्यतिरेकाभ्यां लिङ्गाभिधायित्वात् अतः संख्यावदविवक्षितमिति स्त्रिया अप्यधिकारः, न चाद्रव्यत्वमस्याः, अर्जनादिभिरर्जनसम्भवात्, पित्रादि दत्तसम्भवाच्च दायादिसम्भवात् पुत्राभावे दुहितेत्यादिस्मरणात् पत्याऽर्जितस्य चोभयसाधारणत्वात् "धर्मे चार्थे च कामे च नातिचरितव्या पाणिग्रहणात्तु सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहे चेत्यादिवचनात् ये यज्ञपत्नी वर्ङ्गानित्यादिमन्त्रवर्णाभ्याच स्पष्टः

स्त्रिया अधिकारः पत्नीशब्दस्य स्वामिवचनत्वात्, भार्या पुत्रश्चेति वचनं तु श्रुतिस्मृतिविरुद्धत्वाद्स्वातन्त्र्यपरं व्याख्येयम् ॥

याने दम्पत्योः सहाधिकाराधिकरणम् ।

सू० स्ववतोऽस्तु वचनादैककर्म्यं स्यात् ॥ ४ ॥

सिद्धे द्वयोरधिकारे किं दम्पती पृथग् यजेयाताम् ? उत सहेति चिन्तायामाख्यातोपात्तायाः सङ्ख्यायाः गुणभूतोपादेयकर्तृगामित्वेन विवक्षितत्वादेकैकशः प्रयोगे प्राप्ते सहेति ब्रूमः, तथा हि कर्मसमयं भवतीतरथा वैगुण्यं स्यात् यजमानप्रयोगे पत्न्यवेक्षणान्वारम्भादिलोपात्तत्प्रयोगे च यजमानावेक्षणादिलोपात्, न चार्त्विज्यपरिक्रयेण यजमानः पत्नीं, सा च तमुपादातुं शक्नुतः स्वामिवचनत्वात् पत्नीयजमानशब्दयोः स्वामिनश्च परिक्रयेणासम्बन्धात्तोऽन्तुसाकल्यालोचनया सह प्रयोगमध्यवस्यामः संसृष्टद्रव्यत्वाच्च तयोर्विभागप्रतिषेधाच्च न पृथग् यष्टृत्वसम्भवः परस्परसापेक्षयोरेवाग्नीषोमयोरिव देवतात्वं दम्पत्योः कर्तृत्वं कर्तृरूपैक्याच्चाख्यातोपात्तैकसङ्ख्याऽग्नीषोमौ देवतेतिवत्सहप्रयोगेऽप्यविरुद्धा, तस्मात्सहप्रयोगः ॥

एकस्यैव पुंस आधानाधिकरणम् ।

सू० द्व्याधानं च द्वियज्ञवत् ॥ ५ ॥

आधानं प्रकृत्य "क्षौमे वसानावग्निमादधीयाताम्" इति श्रुतं तत्र संशयः किमाधानं द्वौ पुमांसौ स्त्रीकौ सह कुर्याताम् ? उतैकः ? इति तत्र "पूर्वत्राख्यातसंख्यायाः कर्तृरूपान्वयः स्थितः । तेनेह कर्तृरूपस्य भेदो द्विवचनाद्भवेत् ॥ वसानाविति चौकारात् पुंद्वयं सम्प्रतीयते । द्वित्वपुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः ॥ यद्यपि पुंद्वयवत् स्त्रीपुंसयोरपि द्विवचनमौकारान्तं दृष्टं कुक्कुटश्च कुक्कुटी च कुक्कुटाविति तथाऽप्युभयाव्यभिचारात्पुंस्त्वं द्वित्वं चाभ्यामभिधेयं तयोश्चाभिहितयोरसति स्त्रीसद्वितीयप्रमाणे परस्परनियमात् पुमांसावेव द्वौ गम्येते तयोश्चोत्पत्तावप्राप्तेस्तद्विधानार्थमेवेदं वचनम् उत्पत्तिवाक्यस्य त्वाधानविधिपरत्वेनार्थवत्त्वादेकवचनं निर्देशमात्रार्थं भविष्यति, क्षौमशब्दश्च दुकूलशब्द इत्यस्मात्तुल्यः शब्दत्वादनुवादः, मलिनत्वेन क्षौमसादृश्याद्वा गौणस्तस्मात् द्वौ पुमांसावेव स्यात्यन्तमविकृष्टार्थविधात् श्रुत्यनुग्रहः क्षौमवसनसम्बन्धविधाव-

त्यन्नमनुपपन्नं स्याद् वाक्यं स्यादिति प्राप्तेऽभिधीयते एक एव कुतः "क्षौम-शब्दो न मुख्यस्सन् मुख्यमर्थं परित्यजेत् । नापि धात्वर्थयोगेन वर्तते रूढि-सम्भवात् ॥ वसनक्षामशब्दौ च न[१] च स्यातामनर्थकौ द्वित्वमात्रविधायि-त्वात्तस्मात् क्षौमं विधीयते ॥ तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते । उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः ॥ सन्निकर्षश्च शब्दस्य धर्मो न तदनुग्रहात् । प्रधानभूतशब्दार्थपरित्यागोऽवकल्पते ॥ कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः । युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते ॥ अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते । वसानावादधीयातामित्येतावनुवादकौ ॥ अनुवादो यथाप्राप्ति सा च स्त्रीपुंसयोर्द्वयोः । तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः ॥ एक एव पुमांस्तस्मादादधीत सह स्त्रिया । उत्पत्ति-वाक्ये ह्येकत्वमुपादेयं विवक्षितम् ॥

षष्ठ्यायावदुक्ताशीर्ब्रह्मच-र्यादावेवाधिकाराधिकरणम् । सू० तस्या यावदुक्तमाशीर्ब्रह्मचर्यम-तुल्यत्वात् ॥ ६ ॥

दम्पत्योः सहप्रयोगः स्थितः तत्र पत्न्यवेक्षत इत्यादिषु पत्न्येव कर्त्री यजमानोऽन्वारभत इत्यादिषु चोपादेयस्य यजमानस्य विवक्षित-लिङ्गत्वात्पुमानेव कर्ता, ये तु फलिसंस्कारावचनेनापि न व्यवस्थापितास्ते द्वयोरपि फलित्वादावर्तन्ते, अतो न तेषु चिन्ता, यानि तु परार्थान्युपस्थाना नुमन्त्रणादीनि याजमानसमाख्यया यजमानकर्तृकाणि तेषु किं दम्पत्योरन्य-तरः कर्ता? उत पुमानेवे? ति चिन्त्यते तत्र "याजमान[२]समाख्यानं यजमानप-दाद्यथा । निष्पद्यते तथैवैतद् यजमानपदादपि ॥ तेन समाख्यानाविशेषा-दविशिष्टं द्वयोरपि कर्तृत्वं, विद्वत्त्वाद्वा पुमानेव कुर्यादविदुषीतरा वेदा-ध्ययनशून्यत्वात् । प्रतिषिद्धं हि तत्स्त्रियाः । यद्यप्युपनयनमष्टवर्षस्य संस्का-र्यत्वेनाविवक्षितलिङ्गत्वात् स्त्रिया अपि भासते अत एवाध्ययनमप्यनिर्दि-ष्टकर्तृकत्वात्प्रकृतमुपनीतं कर्तारमाश्रयत् स्त्रिया अपि स्यादित्यधिकारः

१ तव स्यातामिति पा० ।
२ याजमानपदाख्यानमिति पा० ।

बुद्धिर्भवति तथाऽप्याहत्य स्त्रीणामध्ययनप्रतिषेधादविदुषी स्त्री न शक्ता मन्त्रोच्चारणं कर्त्तुं, न च तदन्यथाऽनुपपत्त्या तस्या अपि विदुत्ता सम्पादयितुं शक्यते संपन्नविद्येन पुंसा तेषामनुष्ठानसिद्धेरतः पुमानेव कर्त्ता ॥

यागे शूद्रस्यानधिकाराधिकरणम् ।

सू० चातुर्वर्ण्यमविशेषात् ॥ ७ ॥

किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः ? उतापशूद्राणां त्रयाणा ? मिति तदर्थमिदं विचार्यते किं कामश्रुतिप्रयुक्तं विद्यार्जनम् ? उत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतय ? इति द्विधा चात्र पूर्वः पक्षः एकस्तावत्स्वाध्यायाध्ययनं क्रत्वनुष्ठानज्ञानोपयिकतया विहितं क्रत्वङ्गं क्रतुविधिभिरेव प्रयाजादिवत्प्रयुज्यते क्रतवश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाश्चतुर्णामध्ययनं प्रयुञ्जते, तत्र त्रयाणां वसन्ते ब्राह्मणमुपनयीतेत्यादिभिरुपनयनसंस्कारोऽध्ययनाङ्गत्वेन विहितश्चतुर्थस्तु विध्यभावादनुपनीत एवाधीत्य विद्यां लब्ध्वाऽधिक्रियत इति, द्वितीयस्तु न क्रत्वङ्गमध्ययनं श्रुत्याद्यभावादक्षरग्रहणादिदृष्टकार्यपरम्परया वाक्यार्थज्ञानं यावद्गतं ज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्तेस्तत्रैवाध्ययनं स्वविधिना विनियुज्यते न तद्द्वारेण क्रतौ तेनाधानमिवाग्न्यर्थं ज्ञानाङ्गं न क्रत्वङ्गम्, अतस्तेन विनापि क्रतूनामवैगुण्यादनधीतवेद एव शूद्र उपदृष्टवचनादनुतिष्ठन्नधिक्रियते, क्रतवो ह्यविशेषेण चतुरोऽप्यधिकुर्वाणास्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनं न प्रयुञ्जते, शूद्रस्य त्वन्यतः सिद्धविद्यत्वाभावात्तदर्जनमपि प्रयुञ्जते, अतो यद्यपि स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान्किमर्थं वयमाचार्यसमीपमानीता इत्येवं प्रयोजनमपेक्षमाणान्ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वंस्तेषामेवाध्ययनं विधत्ते न शूद्रस्य, तथाऽप्यसावविहितेनैवाध्ययनेनोपायान्तरेण वा विद्यां लब्ध्वाऽधिक्रियेतेति “सत्यमध्ययनं नाङ्गं तत्क्रतोस्त्वङ्गमर्थधीः । तद्वतः क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम् ॥ क्रतुविधयोऽन्यथाऽनुपपत्त्या विद्यार्जनमाक्षिपन्ति, यदा तु स्वाध्यायविधिविहिताध्ययनोपात्तविद्यान् द्विजन्मनो लभन्ते तदा तैरेव लब्धात्मानोऽनुपपत्तिक्षयात्

न चतुर्थस्य विद्यामाचिपन्ति, यदा चैवं विहितोपायसिद्धज्ञानवत एव विधयोऽधिकुर्वन्ति तदा तदेव ज्ञानमकर्मकालोपात्तमपि अग्निवत्क्रतूनामङ्गमिति तच्छून्यस्य स्वाच्छन्द्येन विद्यामर्जयतोऽपि न सिध्यत्यधिकारः, मन्त्रवत्सु च अनधीतवेदस्य कुतोऽधिकारः कुतस्तरां चानयेरग्निसाध्येषु तस्मात्त्रयाणामधिकारः ॥

यागे निर्धनस्याप्यधिकाराधिकरणम् । **सू० त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥**

किं त्रयाणामपि मध्ये द्रव्यवत एवाधिकारः? उताद्रव्योऽपि? कर्मार्थेन द्रव्यमर्जयित्वाऽनुतिष्ठन्नधिक्रियत इति संशये पुरुषार्थोपात्तद्रव्यवतां लाभाचाद्रव्यस्य तदर्जनं क्रतुभिराचिप्यते, अतो विदुषामिव द्रव्यवतामधिकारः, नैतत्तुल्यं विद्या हि प्रत्यत्नविधिसिद्धा त्रयाणामिति तैरेवोपपन्नाः क्रतवो न शूद्रस्य ताचिपन्तीति युक्तं, द्रव्यार्जनं तु सर्वपुरुषाणां द्रव्यकार्यैरेवाक्षिप्तव्यं तत्राविशेषात् भोजनादिवत्, क्रतूनामपि तदाक्षेपकत्वं न वार्यते, अतोऽद्रव्योऽपि द्रव्यमर्जयित्वा कुर्यात् ॥

यागेऽङ्गहीनस्याप्यधिकाराधिकरणम् । **सू० अङ्गहीनस्य तद्धर्मा ॥ ९ ॥**

अङ्गहीनोऽपि द्रव्यहीनवत्तत्प्रतिसमाधानेन कुर्यात् द्रव्यहानिर्बहिरङ्गमधिकारं व्यरौत्सीत् अङ्गहानिस्त्वन्तरङ्गं विरुणद्धीति विशेषाशङ्का, अथवा द्रव्यहीनवदङ्गहीनस्य सिद्धमेवाधिकारमुत्तरविवक्षयाऽनुवदतीत्यपौनरुक्त्यम् ॥

अचिकित्स्याङ्गवैकल्यस्य यागानधिकाराधिकरणम् । **सू० उत्पत्तौ नित्यसंयोगात् ॥ १० ॥**

यस्य त्वप्रतिसमाधेयमङ्गवैकल्यं स न कथंचिच्छक्नोति कर्तुमिति न काम्येष्वधिक्रियते, नित्येषु त्वाहिताग्निश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एव ॥

दर्शपूर्णमासयोः अनार्षेयस्यैवाधिकाराधिकरणम् । **सू० अनार्षेयस्य दानं स्यात् ॥ ११ ॥**

दर्शपूर्णमासयोरार्षेयं वृणीत इति विधाय पुनः श्रुतम् "एकं वृणीते

द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिवृणीते" इति तत्र विचारः किं दर्शपूर्णमासयोरेकार्षेयद्व्यार्षेययोरप्यधिकार? उत त्र्यार्षेयस्यैवे? ति तत्रार्षेयं वृणीत इति वरणमात्रे विहिते चतुर्णां पञ्चादीनां च प्रतिषेधे कृते ऽर्थादेकद्वित्रिपञ्चानां प्राप्तं वरणमिति तत्कृवचनमनुवादः। अथवाऽर्षेयं वृणीत इति सामान्यं यथा त्रीन्वृणीत इत्यनेन त्वत्पदे विशेष्यते तथैकं वृणीते द्वौ वृणीत इत्याभ्यामपि विशेषाभावादुभयथा द्वित्वैकत्वयोस्त्रित्वेनाविशेषादेकं द्वौ त्रीन् पञ्च वा वृणानोऽधिक्रियेतेति प्राप्ते ब्रूमः "असङ्ख्याकविधौ तावत्प्रतिषेधद्वयाश्रयात्। वाक्यद्वयं प्रसज्येत त्रीनित्येतच्च पाक्षिकम्॥ एकद्वित्रिविधानं चेत्ततो वाक्यत्रयं भवेत्। विकल्पश्च भवेत्तस्मात् त्रित्वमेव विधीयते"॥ एकं वृणीत इत्यादौ विध्यश्रवणादर्थवादेन विधिः कल्प्यते, तत्र यदि वरणमात्रे विहिते चतुर्णां पञ्चादीनां च प्रतिषेधः ततः प्रतिषेधद्वयश्रवणाद्वाक्यद्वयं कल्प्यं स्यात्तदेकादिपदे च त्रयाणामपि[1] भावात् त्रीनिति नित्यश्रवणमुपरुध्येत, अथैकादिभिः सर्वैर्विशेष्येत तथाऽपि सङ्ख्यात्रयविधानाय वाक्यत्रयं कल्प्यं त्रित्वस्य च पाक्षिकत्वं तदवश्यमेव त्रित्वमात्रविधौ त्वेकार्थविधानादेकवाक्यत्वं तदन्तर्गतत्वाच्च द्वित्वैकत्वश्रवणं नित्यानुवादः, चतुरादिप्रतिषेधश्चानुवाद एव, तस्मात्त्रित्वविशिष्टवरणविधानादेकवाक्यत्वं तदुपसंहारसमर्थस्यैवाधिकारः॥

रथकारस्याधानस्यैव एवेति चतुर्वर्णातिरिक्तस्य रथकारस्याधानाधिकरणम्।

सू० वचनाद्रथकारस्याधानेऽस्य सर्वशेषत्वात्॥ १२॥

"वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्य" इति विधाय श्रूयते "वर्षासु रथकारोऽग्निमादधीते"ति किं ब्राह्मणादीनामेव रथकारणे निमित्ते वर्षाभिधान? मुत रथकारसंज्ञस्यावान्तरवर्णस्याधानान्तरविधान? मिति संशये द्विजानां विद्वत्त्वात्कालमात्रविधानेन लाघवात्तेषामेव कालविधिर्नाविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधानमिति प्राप्ते "रूढिबलेन योगबाधाद्वचनबलाच्चाविदुषोऽप्यधिकारप्रतीतेरविधा-

१ त्रयाणामभावादिति पा०।

नात् ऋभूणां त्वेति च मन्त्रवर्णात् ऋभुसौधन्वानपर्यायस्याथान्तरवर्णस्य रथकारस्येदमाधानं विधीयते ॥

निषादस्थपतिन्यायः । त्रैवर्णिकभिन्नस्य निषादस्य रौद्रयागेऽधिकाराधिकरणम् ।

सू० स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ १३ ॥

"ऐन्द्रं वास्तुमयं चरुं निर्वपे"दिति प्रकृत्य श्रुतम् ' एतया निषादस्थपतिं याजये"दिति तत्र संशयः किं द्विजातिरेव यो निषादानामाधिपत्यं करोति तस्यात्राधिकारः षष्ठीसमास एवायम्? उत निषाद एव स्थपतिस्तस्य, कर्मधारयश्चायमिति तत्र "पदद्वयेऽपि शब्दोऽयं योगादेव प्रवर्तते। तत्र षष्ठीसमासत्वेऽपि विद्वुषः स्यादधिक्रिया । आहिताग्नेश्च यदि तु कर्मधारय इष्यते । अनाहिताग्नेरज्ञस्य प्रसज्येताधिकारिता । तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते । निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् । न हि षष्ठी श्रुता येन न तत्सम्बन्धी विधिर्भवेत् । · निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम् । कर्मधारयपक्षे तु न काचिदपि लक्षणा । निषाद एव स्थपतिरतः श्रुत्या प्रतीयते तेन श्रुतिबलादज्ञोऽनाहिताग्निश्च सन्नपि निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ॥

इति शास्त्रदीपिकायां षष्ठाध्यायस्य प्रथमः पादः ॥ १ ॥

(शेषमग्रे)

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम्

## श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम्

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page* 266. VOL. XI.)

भू० ननु च ब्रह्म पुच्छम्प्रतिष्ठेत्युक्त्वा "असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततो

विदु"रिति ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ दर्शयति नानन्दमयज्ञानाज्ञानाभ्यां, न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाशङ्का युक्ता अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतस्तस्मादानन्दमयादन्यद्ब्रह्म। नैवम् इदं पुच्छं प्रतिष्ठा पृथिवी पुच्छं प्रतिष्ठा अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा महः पुच्छं प्रतिष्ठेत्येवमुक्त्वा तत्र तत्रोदाहृताः अन्नाद्वै प्रजाः प्रजायन्त इत्यादयः श्लोका यथान पुच्छमात्रप्रतिपादनपरा अपि त्वन्नमयादिपुरुषमात्रप्रतिपादनपराः एवमत्राप्यानन्दमयस्यायमसन्नेवेति श्लोको नानन्दमयव्यतिरिक्तस्य पुच्छस्य आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपितस्यापरिच्छिन्नानन्दमयस्य सद्भावज्ञानाज्ञानशङ्का युक्तैव।

टी० "ननु चे"ति, पूर्वं प्राधान्येनोक्तानामन्नमयादीनां श्लोकेषु तच्छब्देनैव निर्देशो दृष्टः, एवमत्राप्यानन्दमयः प्रधानश्चेत्तद्विषयश्लोकेऽपि तत्तच्छब्देनैव निर्देष्टव्यम्। यद्वा यथानन्दमये आत्म-शब्दव्याख्यानपरिसमाप्तिः तथात्म-शब्देन निर्देष्टव्यं तथा च न कृतमपि तु ब्रह्मशब्देन निर्दिष्टं तस्मादानन्दमयस्य न प्राधान्यमतः पुच्छब्रह्मैव प्रधानप्रतिपाद्यमित्यर्थः ब्रह्म-शब्दस्यानन्दमयविषयत्वे सिद्धे ब्रह्म-शब्देन निर्देशो न दोष इति शङ्कामर्थात्परिहरन् युक्त्यन्तरमाह "न चानन्दमयस्ये"ति, आशङ्काशब्देनोदाहृतश्रुतिवाक्यद्वयस्थः चेदर्थो व्याख्यातः। सर्वलोकप्रसिद्धस्य दुःखद्वत्वेनासद्भाव इव सद्भावेऽप्याशङ्कावादो न युक्त इत्यर्थः। परिहरति "नैवमि"ति, ब्रह्मात्मानन्दमयशब्दानामैकार्थ्ये निश्चिते आनन्दमयशब्दनिर्देशसमो ब्रह्मशब्दनिर्देश इति स्फुटम् इति बुद्ध्वा आनन्दमयप्राधान्ये युक्तिमाह "इदं पुच्छ"मिति, प्रकरणस्थपूर्वपूर्वश्लोकानां पुच्छमात्रप्रतिपादनपरत्वाभावाद्-

यमपि श्लोको न पुच्छमात्रप्रतिपादनपर इत्यर्थः । प्रसिद्धानन्दस्य सद्भावासद्भावशङ्कानुपपत्तिं परिहरति "आनन्दमयस्ये"ति, प्रतिबन्दीमभिप्रेत्याह—

सू० पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्दतयैव ह्यसिद्धता शिरःप्रभृत्यवयवित्वाभावाद्ब्रह्मणो नानन्दमयं ब्रह्मेति चेत् ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात्पुच्छमपि ब्रह्म न भवेत् । अथाविद्यापरिकल्पितस्य वस्तुनस्तस्याश्रयभूतत्वाद्ब्रह्मणः पुच्छं प्रतिष्ठेति रूपणमात्रमित्युच्येत हन्त तर्ह्यसुखाद्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति, एवं च सत्यं ज्ञानमनन्तं ब्रह्मेति विकारास्पदजडपरिच्छिन्नवस्त्वन्तराद्यावृत्तस्यासुखाद्यावृत्तिरानन्दमय इत्युपदिश्यते अतश्चाखण्डैकरसानन्दरूपे ब्रह्मणि आनन्दमय इति मयट् प्राणमय इव स्वार्थिको द्रष्टव्यः ॥

टी० "पुच्छब्रह्मणोऽपी"ति, विज्ञानमानन्दं ब्रह्म आनन्दो ब्रह्मेत्यादिवाक्येन ब्रह्मण आनन्दरूपत्वस्य उक्तत्वात् आनन्दस्य च प्रसिद्धत्वात् न तत्र सद्भावासद्भावज्ञानाशङ्का युक्तेति चोदिते तस्यानन्दरूपस्य ब्रह्मणोऽविदितत्वमपरिच्छिन्नानन्दत्वादेव हि त्वयोपपादनीयम् तदत्रापि तुल्यमित्यर्थः शङ्कते "शिरःप्रभृती"ति, परिहरति "ब्रह्मण" इति, पुच्छत्वमवयवविशेषत्वं प्रतिष्ठात्वमाधारत्वम्, ब्रह्मणोऽवयवित्वमनुपपन्नमिति चेन्न अवयवत्वमप्युपपन्नमित्यर्थः । अवयवत्वं रूपणमात्रमितिशङ्कते "अथे"ति, परिहरति "हन्त तर्ही"ति, असुखादित्यसुखव्यावृत्तिविशेषाः शिरःप्रभृतित्वेन रूपिता इत्यर्थः सत्यज्ञानादिवाक्येन सकलेतरव्यावृत्तत्वे सिद्धे किमत्र क्रियते इत्यत्राह ".एवं चे"ति, सत्य—शब्दनिर्दिष्टस्य ब्रह्मणः कस्यचिद्विकारत्वाभावादानन्दमय—शब्दवाच्यत्वमयुक्तमित्यत्राह "ततश्चे"ति, तत उक्तानुपपत्तीनां परिहृतत्वादुप-

पत्त्यन्तरसद्भावाच्चेत्यर्थः । किञ्च सोऽकामयतेतिवाक्ये स इति पुँल्लिङ्गतच्छब्देन कारणवस्तुनिर्देशाच्च आनन्दमयः परं ब्रह्म तस्माद्वा एतस्मादात्मनं इत्यात्म-शब्दनिर्दिष्टात्माभिप्रायोऽयं पुँल्लिङ्गनिर्देश इति चेन्न व्यवहितादव्यवहितस्य ग्राह्यत्वेनानन्दमयस्य ग्राह्यत्वात् ब्रह्मपुच्छं प्रतिष्ठेति वाक्यात्पश्चात्पठितस्य तस्यैव एव शारीर आत्मेति वाक्यस्यस्यात्म-शब्दस्य व्यवधानाभावात्तदभिप्रायः स इति पुँल्लिङ्गनिर्देशः शङ्कते "शिरःप्रभृती"ति, परिहरति "ब्रह्मण" इति, पुच्छत्वमवयवविशेषत्वं, प्रतिष्ठात्वमाधारत्वं. ब्रह्मणोऽवयवित्वमनुपपन्नमिति चेत् अवयवत्वमप्यनुपपन्नमित्यर्थः । अवयवत्वं रूपणामात्रमिति शङ्कते "अथे"ति, परिहरति "हन्त तर्ही"ति, । असुखादिति । असुखव्यावृत्तिविशेषाः शिरःप्रभृतित्वेन रूपिता इत्यर्थः सत्यज्ञानादिवाक्येन सकलेतरव्यावृत्तत्वे सिद्धे किमत्र क्रियते ? इत्यत्राह "एवञ्चे"ति, सत्य-शब्दनिर्दिष्टस्य ब्रह्मणः कस्यचिद्विकारस्याभावादानन्दमय-शब्दवाच्यत्वमपि अयुक्तमित्यत्राह "सतश्चे"ति, ततः-उक्तानुपपत्तीनां परिहृतत्वात् उपपत्त्यन्तरसद्भावाच्चेत्यर्थः किञ्च सोऽकामयतेति वाक्ये स इति पुँल्लिङ्गतच्छब्देन कारणवस्तुनिर्देशाच्चानन्दमयः परं ब्रह्म । तस्माद्वा एतस्मादात्मन इत्यात्म-शब्दनिर्दिष्टात्माभिप्रायोऽयं पुँल्लिङ्गनिर्देश इति चेन्न । व्यवहितादव्यवहितस्य ग्राह्यत्वेनानन्दमयस्यै ग्राह्यत्वात् । ब्रह्मपुच्छं प्रतिष्ठेति वाक्यात्पश्चात्पठितस्य तस्यैव एव शारीर आत्मेति वाक्यस्यस्यात्म-शब्दस्य व्यवधानाभावात्तदभिप्रायस्स इति पुँल्लिङ्गनिर्देशः आनन्दमयस्त्वेतद्वाक्यापेक्षया व्यवहितत्वान्न स परामृश्यत इति चेत् तस्यैव एव शारीर आत्मेति वाक्यस्यस्यात्मनः सर्वपर्य्यायसाधारणत्वेन एतत्पर्य्यायत्वस्य प्रधानप्रतिपाद्यत्वाभावात् सर्वनामशब्दस्य प्रधानपरामर्शित्वस्वारस्याच्च स इत्यानन्दमय एवोच्यते विज्ञानं ब्रह्मेति व्यजानात् आनन्दो ब्रह्मेति व्यजानादित्यत्र विज्ञानमयमात्मानमुपसंक्रम्यानन्दमयमात्मानमुपसंक्रम्य इत्यत्र च स्थानप्रमाणेनानन्दानन्दमय-शब्दयोरेकार्थत्वावगमात् आनन्दमय-शब्दस्य परब्रह्मविषयत्वप्रसिद्धेश्चानन्दमयः परं ब्रह्म, न चानन्दो

ब्रह्मेत्यत्रानन्द-शब्दोऽप्यानन्दमयशब्दवत् बाह्मकोशपर इति वाच्यम् अन्नं ब्रह्म प्राणो ब्रह्मेत्यादिविज्ञानानन्तरमिवानन्दो ब्रह्मेति विज्ञानानन्तरं भृगोर्वरुणोपसत्त्यभावात्, न हि तद्विज्ञाय पुनरेव वरुणं पित-

सू० तस्मादविद्या परिकल्पितविविधविचित्रदेवादिभेदभिन्न-स्य जीवात्मनः स्वाभाविकं स्वरूपमखण्डैकरसं सुखैक-तानमानन्दमय इत्युच्यते इत्यानन्दमयः प्रत्यगात्मा इत्येवं

रमुपससारेति पुनः श्रूयते, एतदुक्तम्भवति—अन्नं ब्रह्मेति व्यजानादित्यत्र किमन्नाद्युपलक्षितब्रह्मवेदनमुक्तं? उत अन्नमयादौ ब्रह्मबुद्ध्यवतरणम्? आद्ये अन्नं ब्रह्मेति विज्ञानानन्तरं वरुणोपसत्तिर्न स्यात् उपलक्षणभूतेन तेन ब्रह्मणः प्रतिपन्नत्वात्, द्वितीये ह्यानन्दविषयब्रह्मबुद्धेर्यथार्थत्वं स्यात् पुनर्वरुणोपसत्त्यभावादिति । किञ्चानन्दो ब्रह्मेत्यत्रानन्द-शब्दस्य ब्रह्मपरत्वं युष्माभिरेव व्याख्यातम्, उक्तं हि या तु भार्गवी वारुणी विद्याऽऽनन्दो ब्रह्मेति व्यजानादिति तस्यां मयटोऽश्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वमिति, अतश्चानन्दो ब्रह्मेत्यस्य वाक्यस्य परमात्मपरत्वात् स्थानप्रमाणेनानन्दमयमात्मानमित्यत्र आनन्दमय-शब्दोऽपि परमात्मपरः आनन्दमयस्य शोध्यत्वञ्च तदनुगुणसंसारनिर्हरणादिरूपमिति चानुसन्धेयम् । प्रत्यगात्मस्वरूपमेवापरिच्छिन्नानन्दस्वरूपञ्चेत्कथं जीवानां दुःखित्वसुखित्वतारतम्यञ्चोपलभ्यते? इति शङ्कां च परिहरन् पूर्वपक्षमुपसंहरति "तस्मादि"ति, तस्य प्रियमिति सम्बन्धवाचिन्या षष्ठ्या व्यतिरेकप्रतीतेर्ब्रह्म विषयस्योपरितनश्लोकस्यानन्दमयविषयत्वाभावेन पुच्छतयोक्तब्रह्मण एव प्रधानत्वावगमात्, प्रियमोदादिरूपेण लोकविदितस्यानन्दमयस्य सद्भावासद्भावज्ञानशङ्काऽनुपपत्तेर्निरवयवस्य परमात्मनोऽवयवित्वानुपपत्तेर्विकारस्य विकारित्वानुपपत्तेस्तस्यैव एव शारीर आत्मा इत्यानन्दमयवाक्यावगतस्यात्मान्तरस्य परमात्मतयाऽऽनन्दमयस्य परमात्मत्वानुपपत्तेः अन्नमयाप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्तामिति श्रुतस्य शोध्यत्वस्य नित्य-

सू० प्राप्ते प्रपक्ष्महे आनन्दमयोऽभ्यासात् आनन्दमयः शुद्धे परमात्मन्यनुपपत्तेश्च नानन्दमयः परमात्मा अपि तु पुच्छतया निर्दिष्टमेव ब्रह्म परमात्मेति पुच्छब्रह्मवादहेतुसंग्रहः, प्रकरणस्य स्वस्मादनतिरिक्तैः स्वावयवैः शिरःपक्षादिरूपणपरत्वात्तदन्तरतयाऽऽत्म-शब्दव्याख्यानस्यानन्दमये पर्य्यवसितत्वादन्नमयादिविषयाणां प्रकरणस्थश्लोकानां पुच्छवद्विषयत्वात्कारणत्वप्रतिपादके सोऽकामयतेत्यनन्तरवाक्ये स इति पुंल्लिङ्गान्तेन प्रधानप्रकृतार्थपरामर्शितच्छब्देनाव्यवहितस्यानन्दमयस्य वक्तुं युक्तत्वात् आनन्दो ब्रह्मेत्यानन्द-शब्दस्यापि परब्रह्मपरत्वाभ्युपगमात् आनन्दो ब्रह्मेति व्यजानात् आनन्दमयात्मानमुपसंक्रम्येत्यानन्दानन्दमय-शब्दयोरेकार्थत्वेनानन्दमय-शब्दस्यापि परब्रह्मपरत्वादानन्दमय-शब्दतुल्यार्थानन्दशब्दवाच्यब्रह्मज्ञानानन्तरं वरुणोपसत्त्यश्रवणात्स्वरसस्वारस्यात्स्वस्मादनतिरिक्तस्वावयवैरेव शिरःपक्षपुच्छादिरूपणपरप्रकरणानुगुण्येन षष्ठीनिर्देशस्य समुदायसमुदायिभावनिबन्धनत्वोपपत्तेरानन्दमयात्मब्रह्मशब्दानामैकार्थ्येन तेष्वन्यतमेन तद्विषयश्लोकनिर्देशस्य युक्तत्वादपरिच्छिन्नानन्दस्याप्रसिद्धत्वेनानन्दो ब्रह्मेत्युक्ततयाऽभ्युपेतपुच्छब्रह्मण इव सद्भावासद्भावशङ्कासम्भवादवयवत्ववत् अवयवित्वेन रूपणसम्भवादानन्दमय इत्यत्र मयट्प्रत्ययस्य स्वार्थिकत्वेन प्राचुर्य्यार्थत्वेन वा विकारपरत्वाभावेन ब्रह्मणो निर्विकारत्वाविरोधात् तस्यैष एव शारीर आत्मेति वाक्यस्यानन्यात्मत्वप्रतिपादनपरत्वात्, अन्नमयप्राणमयमनोविज्ञानमयानन्दमया मे शुद्ध्यन्ताम् इत्यत्र शोधनं तत्तद्वस्त्वनुगुणं कार्य्यमिति प्रत्यगात्मत्वपक्षे संसारनिर्हरणेन शोध्यत्वात्तद्रिक्तपक्षे भगवतः कालुष्यशान्तिरूपशोध्यत्वस्य प्रपदनसाध्यस्योपपन्नत्वाच्चानन्दमयानतिरिक्तं पुच्छब्रह्मेत्यानन्दमय एव परमात्मेति पुच्छब्रह्मवादनिराकरणयुक्तिसंग्रहः, अत्राग्रहेतुषट्कं सिद्धान्तसाधकम् उत्तरहेतुगणश्शङ्कितविप्रतिपत्तियुक्तिपरिहारपरः, तस्मादित्यधिकरणपूर्वपक्षोपसंहारः, अस्मिन्पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमवतारयति "एवमि"ति, आनन्दमयोऽभ्यासात् तत्र प्रतिज्ञांशं साध्यसमर्पकपदेन पूरयन् व्याचष्टे "आनन्दमय" इति, उत्तराधिकरणे भेदव्यपदेशाच्चान्य इत्यन्य-शब्दः प्रयुक्तः इह

तदाकर्षणलभ्योऽर्थ उक्तः परमात्मेति । यद्वा पूर्वाधिकरणसूत्रस्थयोर्नाश-ब्दमिति पदयोरनुषङ्गलभ्यार्थमाह— :

सू० परमात्मा कुतः? अभ्यासात् "सैषाऽऽनन्दस्य मीमांसा भवती"त्यारभ्य "यतो वाचो निवर्तन्ते" इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण ।

टी० 'परमात्मे"ति, यस्मिन् शब्द एव प्रमाणं न भवति स ह्यशब्दः स्वयं प्रकाशप्रत्यक्षानुमानादिभिः सिध्यतो जीवस्यापि तदशब्दत्वमुपपद्यते यथाऽऽत्मसिद्धौ "एवमात्मा स्वतः सिध्यन्नागमेनानुमानतः । योगाभ्यासभुवां स्पष्टं प्रत्यक्षेण प्रकाशत इ"ति । यद्वा एतदधिकरणसूत्रस्थ एव नेतर इति साध्यांशोऽत्रापि विवक्षित इत्यभिप्रायेणोक्तं 'परमात्मे"ति, अन्तरात्मपरम्परासमाप्तिद्योतनाय अत्र परमात्म-शब्देन धर्मिनिर्देशः अभ्यासादानन्दमयत्वं श्रुतौ प्रतीतम्, अत आनन्दमयत्वापेक्षया हेतुनिर्देशशङ्काव्युदासाय साध्यांशे हेत्वाकाङ्क्षां दर्शयति "कुत"इति, ननु भेदव्यपदेशस्य जीवादन्यत्वे स्फुटतरतया निरपेक्षहेतुत्वात्स्ववाक्यस्थत्वाच्च स एव प्रथमं वक्तव्यः न तु वाक्यान्तरस्थोऽनुग्राहकयुक्त्यपेक्षोऽभ्यासः, नैवं स्ववाक्यस्थाद् भेदव्यपदेशादपि स्वपदैकदेशमयड्वाच्यस्य प्राचुर्य्यस्योपपादनसापेक्षस्याभ्यासवतरत्वात् तद्विवरणरूपनिरतिशयदशाशिरस्कस्याभ्यासस्यैव प्रथमं हेतुतया वक्तुं युक्तत्वात् । कस्याभ्यासा? दित्याकाङ्क्षां पूरयन् हेतुपदं व्याचष्टे "सैषाऽऽनन्दस्ये"-ति अभ्यासो गुणनमावृत्तिः, यतो वाचो निवर्तन्ते इत्यस्यार्थमभिप्रेत्य निरतिशयदशाशिरस्क इत्युक्तम्, स एको ब्रह्मण आनन्द इति वाक्यस्यार्थमभिप्रेत्य अभ्यस्यमान इत्युक्तम्, शतगुणितोत्तरक्रमेण गुणितत्वादित्यर्थः स एको ब्रह्मण आनन्द इति वाक्यस्य चतुर्मुखानन्दविषयत्वेन यतोवाच-इत्यादि वाक्यस्यैव ब्रह्मानन्दविषयत्वाङ्गीकारेऽभ्यासादिति हेतोर्व्यधिकरणता स्यात् । किञ्चायं ब्रह्म-शब्दः परमात्मवाचकः, ब्रह्मशब्दस्य भगवत्येव मुख्यत्वात् ब्रह्मविदाप्नोति अस्ति ब्रह्मेत्यादिषु वाक्येषु परब्रह्मपरतयैव ब्रह्म-शब्दस्य प्रयोगप्रकरणात् यतो वाचो निवर्तन्त इति पूर्वोत्तरवाक्य-

योरानन्दप्रतिसम्बन्धिवाचिषु ब्रह्म–शब्दस्य परब्रह्मपरत्वदर्शनात् से-वानन्दस्य मीमांसेति प्रकृतब्रह्मानन्दस्य निगमनस्यापेक्षितत्वात् स यश्चायं पुरुष इति प्रकृतपरामर्शिनाऽनन्तरवाक्यस्थेन कारणपरतच्छब्देन पूर्ववाक्यस्थस्यास्य ब्रह्म–शब्दस्य परब्रह्मपरत्वनिश्चयात्, अन्यथा चतुर्मुखस्य सर्वान्तरात्मत्वपरमकारणत्वप्रसङ्गात्, तदप्येष श्लोको भवतीति भगवदानन्दविषयश्लोकोत्थानस्य भगवदानन्दप्रसङ्गापेक्षत्वात्, निरुपपदप्रजापतिशब्दस्य चतुर्मुखे स्वरसत्वात्, इन्द्रादिपरत्वे एकवचनस्वारस्याभावात् देवानां देवगन्धर्वाणामिन्द्रस्य बृहस्पतेरिति बहुव्यक्तिषु बहुवचनस्यैकव्यक्तिषु च एकवचनस्य प्रकारेण प्रयुज्यमानत्वात्, तथा स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ते ये शतं प्रजापतिलोक आनन्दास्स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियो वृजिनोऽकामहतोऽथ एष एव पर आनन्द एष ब्रह्मलोकस्सम्राडिति होवाचे 'ति बृहदारण्यकवाक्यैकार्थ्याच्च, स एको ब्रह्मण आनन्द इति वाक्यस्य परमात्मानन्दपरत्वं सिद्धम् । न च स एक इति निर्देशात् ब्रह्मानन्दस्य परिच्छिन्नत्वम्, आधिक्यमात्रे वाक्यतात्पर्यात्, यथा क्षिप्तेषुरिव गच्छतीति वाक्यं सूर्यगतिमान्द्यनिवृत्तिपरं न क्षिप्रसाम्यपरं सूर्यस्य निमिषमात्रे बहुयोजनातिलङ्घनस्य प्रमाणसिद्धत्वात्, तथात्रापि पूर्वापरवाक्यादिभिरपरिच्छिन्नानन्दत्वसिद्धेः स एक इति वाक्यस्य चतुर्मुखानन्दाधिक्ये तात्पर्यमित्यवगम्यते । यद्वा 'रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते । अण्डानान्तु सहस्राणां सहस्राण्ययुतानि च ईदृशानां तथा तत्र कोटिकोटिशतानि च । गङ्गायाः सिकता धारा यथा वर्षति वासवे शक्या गणयितुं लोके न व्यतीताः पितामहाः । इत्यादिभिरण्डानां तत्र तत्र चतुर्मुखानां चासङ्ख्येयत्वावगमाद्विद्यास्थानियन्तुः शतगुणानन्दत्वे कथिते चतुर्मुखेभ्योऽसङ्ख्यातेभ्यः शतगुणानन्दतयाऽवगतस्य भगवतोऽपरिच्छिन्नानन्दत्वमर्थसिद्धमित्यतोऽयथोक्त एवार्थः अभ्यस्यमान इति, अभ्यास–शब्दः कर्मार्थकप्रत्ययान्त इत्यभिप्रायः । यद्वा भावा-

श्रु॰ निरतिशयदशगुणितरूपो ऽभ्यस्यमान आनन्दो ऽनन्तदुःख-

मिश्रपरिमितसुखलवभागिनि जीवात्मन्यसम्भवन्निखिल-थैत्वेऽप्यानन्दस्याभ्यस्तत्वं फलितमिति, तथोक्तं, तच्च हेतोर्वैयधिकरण्यमुद्रासार्थम् । ननु गुणानं वर्द्धनम् प्राजापत्यानन्दो हि शतगुणत्वेन वर्धते न तु ब्रह्मानन्दः, सत्यं, तथा ऽपि गुणितः प्राजापत्यानन्द एव ब्रह्मानन्द इत्युपचारेणोक्तिः व्रीहिचतुष्टयं गुञ्जैतिवत् गुणितैतत्तदानन्दसदृशस्यैकदेशतया प्रतिपाद्यमानो ब्रह्मानन्द इत्यर्थः । यद्वा मुहुर्मुहुरुक्तिरभ्यासः, तेन तात्पर्यलिङ्गसत्त्वं सूचितम् । अहत्वानन्दस्यापरिच्छिन्नत्वन्ततः किमित्यत्राह 'अनन्तदुःखे'ति, अनेन निरतिशयानन्दविरुद्धधर्मयोग उक्तः । परिमितेति निरतिशयानन्दाभाव उक्तः, विरुद्धधर्मोपलम्भादभावोपलम्भाच्चासम्भव इत्यर्थः । कथमसम्भवः? मुक्तस्यापरिच्छिन्नानन्दत्वं श्रुतमित्यत्राह—

( शेषमग्रे )

॥ श्रीः ॥

साहित्यशास्त्रम्,

**काव्यप्रकाशस्य**

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

---

॥ श्रीगणेशाय नमः ॥

*(Continued from page 242. Vol. XI.)*

विरुद्धमतिकृत्, पदान्तरसंविधानेन प्रकृतप्रतीतिप्रत्यक्षारकप्रतीतिजनकम्· तच्चेदमनेकधा प्रवर्त्तते, क्वचित्समासान्तरविग्रहेण, यथा—

सुधाकरकराकारविशारदविचेष्टितः ।
अकार्य्यमित्रमेको ऽसौ, तस्य किं वर्णयामहे ॥

अत्र कार्य्यमन्तरेण मित्रमिति विवक्षितम्, अकार्य्ये मित्रमिति तु प्रतीयते । क्वचिन्नामपदयोः समासे विरुद्धार्थनिरूढपदघटनया, यथा–

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥

अत्र कण्ठग्रहार्थतया विवक्षितो गलग्रहशब्दो रोगविशेषे निरूढः । क्वचिद्विवक्षितविशेषपरत्वे पदवैयर्थ्यप्रसङ्गेनाविवक्षितविशेषपरत्वग्रहात्, यथा–

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनो
ऽनेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः, ।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः, स्कन्द इव प्रियो ऽहमथवा शिष्यः कथं विस्मृतः ॥

अत्र भवस्य पत्नीत्यर्थे भवानीति सिद्धम्, तथाच भवपत्नीपतौ प्रतीयमाने भवातिरिक्त एव द्राक् प्रतीयते, न हि भव एवाभिधेये भव-पत्नीपतिरिति प्रयोगो योग्यः सचेतसाम् । क्वचित्समासैक्येपि समस्य-मानपदयोर्व्यर्थतया, यथा–

गौरपि यद्वाहनतां प्राप्तवतः सोपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः, पायाद्वः सोऽम्बिकारमणः ॥

अत्राम्बिकारमणपदयोर्गौरीप्रीतिकरत्वजन्मातृस्वामित्वमप्यर्थः, दूषकताबीजं विवक्षितार्थतिरस्कारकार्थोपस्थितिः, अतो यत्र विरुद्धार्थो विवक्षित एव, तत्रा ऽदोषत्वम् ॥ (१६)

क्लिष्टादिदोषविशेषेषु समासगतत्वनियमविधानाच्छ्रुतिकटुप्रभृति-ष्वनियमो ऽभ्यनुज्ञातः, तत्रा ऽसमासगतमुदाहृतमेव, समासगतेषु श्रुतिकटु यथा–

सा दूरे च सुधासान्द्रतरङ्गितविलोचना, ।
बर्हिनिर्ह्रादनार्हो ऽयं कालश्च समुपागतः ॥

समासादेकपदत्वम्, एवं च्युतसंस्कृत्यादयो द्रष्टव्याः ॥ ५१ ॥

उक्तान् पददोषान् पदैकदेशे वाक्ये चातिदिशति–

अप्राप्य च्युतसंस्कारमसमर्थं निरर्थकम् ।

वाक्ये ऽपि दोषाः सन्त्येते, पदस्यांशेपि केचन ॥ ५२ ॥

च्युतसंस्कारेत्यादिर्भावप्रधानो निर्द्देशः· एते इति श्रुतिकट्वादिपदप्रवृत्तिनिमित्तभूताः श्रुतिकटुत्वादय इत्यर्थः· अत्र यत्र पदान्तरसाहित्येन पदानां दुष्टत्वं, स वाक्यदोषः· नचाऽसाध्वसमर्थनिरर्थकानां दुष्टत्वे पदान्तरसाहित्यापेक्षेति तन्नितयापासनमिति संप्रदायः· तदसत्, "सोध्येष्ट"त्यादौ श्रुतिकटोर्दुष्टत्वे पदान्तरसाहित्यस्यानपेक्षणीयतया तदुदाहरणविरोधात्· नच तत्रापि तथैवेति वाच्यम्, परुषवर्णारब्धत्वस्य स्वत एव सत्त्वात्· तथात्वेपि वा 'स पातु वो दुश्च्यवन' इत्याद्यप्रयुक्ताद्युदाहरणाव्याप्तिः· नहि तत्रापि दुष्टत्वे पदान्तरपेक्षेति वक्तुमपि शक्यते· किञ्चा ऽवाचकमसमर्थसमानशीलं किमिति नापास्तमिति सर्वव्याख्यानेषु विनिगमकं वक्तव्यमिति· अत्रोच्यते[क]–विवक्षितधर्म्मिप्रत्यायक[ख]शब्दवृत्तित्वे सति नानापदवृत्तित्वमेवात्र वाक्यवृत्तित्वमभिप्रेतम्, "न्यक्कारो ह्यय"मित्यत्रापि ना ऽव्याप्तिः, उद्देश्यविधेयाभिधायकयोर्द्वयोरपि दुष्टत्वात्· अत एवा ऽविमृष्टविधेयांशमित्यत्रांशपदोपादानम्· "योसौ सुभगे! तवागत" इत्युदाहरणे प्रकाशेपि स्फुटमेतत्· एवं च युक्तं च्युतसंस्कृत्यादिव्युदसनम्· नचा ऽसमर्थसहोदरस्या ऽवाचकस्यापि व्युदासो युक्तः, तेनापि केनचिद्विवक्षितधर्मिज्ञापनात्· यथोदाहृतेन 'जन्तु' पदेन· व्युदस्तेषु पुनर्न कोपि प्रभेदो विवक्षितधर्मिप्रतिपादक इति । तत्र श्रुतिकटु वाक्यगतं यथा—

सो ऽध्येष्ट वेदां, स्त्रिदशानयष्ट, पितॄनतार्प्सी[ग]त्सममंस्त बन्धून्, ।
व्यजेष्ट षड्वर्ग,मरंस्त नीतौ, समूलघातं न्यवधीदरींश्च ॥ (१)

व्यक्तम् । अप्रयुक्तं यथा–

(क) अत्र ब्रूमः–इति पु· ।
(ख) ज्ञापकेति पा· ।
(ग) पितॄनपारीत्–इति पा· ।

स रातु[क] वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताद्यैस्तु[ख] द्युतु दोषैरसम्मताम् ॥

अत्र दुश्च्यवनशब्द इन्द्रे, अनेडमूकशब्दश्च मूकमूके ऽप्रयुक्तः ॥ (२)

निहतार्थं यथा—

सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः[ग] ।
अब्जरुचिभास्वरस्ते[घ] भातितरामवनिप ! श्लोकः ॥

अत्र सायकशब्दः खड्गे, मकरध्वजशब्दः समुद्रे, क्षमाशब्दो भूमौ, अब्जशब्दश्चन्द्रे, श्लोकशब्दो यशसि चाप्रयुक्तः· तच्चैषामेतेषु प्रसिद्ध्यभावस्त्वम्, अतः प्रसिद्धैः शरमदनक्षान्तिपयोजपद्यैरर्थैर्निहतार्थः ॥ (३)

अनुचितार्थं यथा—

कुविन्दस्त्वं[ङ] तावत्पटयसि गुणग्राममभितो,
यशो गायन्त्येते दिशि च नग्नास्तव विभो ! ।
शरज्ज्योत्स्नाकान्तस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥

अत्र 'कुविन्द' इति तन्तुवायं, 'पटयसी'ति च टंकरोषीति, 'गुणे'ति तन्तुं, 'नग्ने'ति वस्त्रहीनं, 'यश' इत्यकारप्रश्लेषादयशः, विगताच्छादनमित्यवसनमित्यर्थां[च]नुपश्लेषयमाना पकर्षद्योतकतयाऽनुचितार्थं प्रकाशयन्ति ॥ (४)

अवाचकं यथा—

(क) स पातु—इति सर्वत्रसत्त्वे ऽपि अश्लीलतया दोषानुगुणतया च "स रातु"—इति प्रकाशस्थमेवात्र स्थाप्यते ।

(ख) द्यैश्चेति पा० ।

(ग) "सायकसहायबाहो ! मकरध्वजनियमितक्षमाधिपते !" इत्येवमामन्त्रणपाठः प्रायः प्रकाशे उपलभ्यते ।

(घ) भास्वरस्ते इति क्वचित् ।

(ङ) कुविन्द ! त्वमिति पाठस्तु "कुविन्द इति"ति प्रदीपानभिमतः ।

(च) विगताच्छादनमित्यर्थानित्येकपुस्तकस्थपाठस्तु न खलु युक्तः ।

प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥

अत्राभ्रे भ्राजत इत्यभ्रभ्राड् जलदः, प्रगतोऽभ्रभ्राड् यत्र तद्विष्णुधामेत्यस्य विशेषणम्. अत्र 'प्राभ्रभ्रा'डिति प्रकृष्टजलदे, 'विष्णुधामे'ति विष्णुपदे, 'विषमाश्व' इति सप्ताश्वे, 'निद्रे'ति संकोचे, 'सहस्रपर्णे'ति सहस्रदले, प्रकृष्टजलदत्वादिना प्रकारेणाऽवाचकानि, कानिचिच्च धर्मिणि शक्तान्येवेति यथोक्तवाच्यदोषत्वम् ॥ (५)

अश्लीलेषु व्रीडादायि यथा—

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधे ॥

अत्रो'पसर्पन्ती'ति सुरतारम्भं, 'प्रहरणे'ति ताडनविशेषं, 'मोहन'-मिति निधुवनं चार्थान्तरं प्रतिपादयद्व्रीडादायि । जुगुप्सादायि यथा—

तेऽन्यैर्वान्तं समश्नन्ति, परोत्सर्गं च भुञ्जते, ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्त्तनम् ॥

अत्र 'वान्तो,त्सर्ग'शब्दौ छर्दितपुरीषार्थतया, 'प्रवर्त्तन'मिति कृत्यर्थकं पुरीषत्यागार्थान्तरतया(क) जुगुप्सां प्रयच्छन्ति । अमङ्गलं यथा—

पितृवसतिमहं व्रजामि तां, सहपरिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥

अत्र पितृगृहं, पावनो वंश इति च विवक्षिते पितृवसतिपावकान्वयशब्दौ स्मशानवह्निसम्बन्धरूपामङ्गलार्थान्तरौ ॥ (६)

सन्दिग्धं यथा—

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम्(ख) ॥

(क) प्रवर्त्तनमिति पुरीषार्थान्तरतयेति प्रदीपोद्द्योतसंमतः पाठः ।
(ख) विलोक्यते इति क्वचित् ।

अत्र सुरालयेति देवगृहमदिरामन्दिरयोः, प्राप्तपर्य्याप्तकम्पन इति प्राप्तसैन्यत्वप्राप्तकम्पत्वयोरुपस्थापकम्. एवमग्रेपि ॥ (७)

अप्रतीतं यथा—

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नः सफलितः सखे! (क) ॥

अधिमात्रो दृढज्ञानवानुपायो यमादिर्य्यस्य,तीव्रः परमः संवेगो वैराग्यं यस्य, तत्तायुक्तस्य. दृढभूमिर्दृढसंस्कारः. मदूपायो मध्योपायो ऽधिमात्रोपायश्चेति त्रिविधा अपि योगिनः प्रत्येकं मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेगश्चेति त्रिविधा . अत्राधिमात्रादयः शब्दा योगशास्त्रमात्रप्रसिद्धाः॥ (८)

ग्राम्यं यथा—

ताम्बूलभृतगल्लोयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु (ख) यथा तथा ॥

अत्र गल्लभल्लमानुषखादनपानशब्दा ग्राम्याः ॥ (९)

नेयार्थं यथा—

वस्त्रवैदूर्य्य (ग) चरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता, नेत्रयुद्धं वेदय सांप्रतम् ॥

अत्र वस्त्रवैदूर्य्यशब्देनाम्बरमणोर्विवक्षितत्वाद्वस्त्रशब्देन गगनं विवक्षितम्. नचास्य तत्र शक्तिरिति वाचकत्वलक्षणेन शक्यसम्बन्धेनाम्बरपदं लक्षयति. तस्माच्च गगनप्रतीतिः. यद्वा,स्ववाचकवाच्यत्वलक्षणशक्यसम्बन्धेन गगनमेव लक्षयतीति लक्षितलक्षणा, लक्षणा वेति वस्तुगतिः. एवं वैदूर्य्येत्यस्य मणौ, चरणेत्यस्य पादे, सत्त्वरजःपरेत्यस्य तमसि, निष्कम्पेत्यस्या ऽचलायां भूमौ, युद्धमित्यस्य द्वन्द्वे, वेदयेत्यस्य बोधने लक्षणैव । न च तद्बीजं रूढिः प्रयोजनं वेति नेयार्थत्वम् ॥ (१०)

क्लिष्टं यथा—

(क) प्रभो—इति क्वचित् ।
(ख) सर्वदैवेति पा. ।
(ग) वैडूर्य्यत्यवं मूर्द्धन्यमध्यपाठस्तु केषां चिद् "विदूराञ्ञ्य" इतिसूत्रस्यभाष्याद्यज्ञानमूलकः सर्वथा हेय एव ।

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम्॥

अत्र कुरङ्गशावाक्ष्या धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे प्रतीतिव्यवधानम्॥ (११)

अविमृष्टविधेयांशं यथा—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः,
सोऽप्यत्रैव निहन्ति राक्षसभटान्, (क)जीवत्यहो रावणः,।
धिग्धिक्शक्रजितं, (ख)प्रबोधितवता किं कुम्भकर्णेन वा,
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः॥

अत्र प्राप्तमरिसत्त्वमय'मित्यनूद्य ऽप्राप्तं न्यक्कारवत्त्वं विधेयम्। अतो 'ऽयमेव न्यक्कार' इति वाच्यम्। "अनुवाद्यमनुक्त्वैव नाभिधेयमुदीरये"दिति वृद्धवचनात्। अन्यथा तु वैपरीत्येन विलम्बेन वा तथाभावः प्रतीयेत। 'अयं न्यक्कार' इत्युभयोः पदयोर्दुष्टत्वाद्वाक्यदोषत्वम्। अत एव समासगतमेव दुष्टं पदमित्युक्तम्। अपि च, अत्र 'वृथोच्छूनै'रित्यसङ्गतम्, उच्छूनत्वमात्रस्यैवानुवादौचित्यात्, नतु वृथात्वविशेषितस्य, 'किमेभि'रित्यनेन वृथात्वस्यैव विधेयत्वात्। अर्थभेदापगमेऽपि किमेभिरितिवैफल्याभिधानविरोधात्। वृथोच्छूनस्य तदौचित्यात्। ननु न्यक्कारोऽयमित्यत्र वैपरीत्येन विधेयत्वप्रत्ययादर्थदोष एवायं स्यादिति चेत्, न खल्वत्र विवक्षितोऽर्थो दुष्टः, किन्तु क्रमविशेषादविवक्षितप्रत्ययो विवक्षितप्रत्यय एव वेति शब्दविशेष एवापराध्यति। शब्दान्तरेण तत्प्रतीतेरवैकल्यात्, यथा विरुद्धमतिकृति। न केवलं विधेयस्योपसर्जनत्वव्युत्क्रमाभ्यामेवायं वाक्यदोषः, किन्तु विधेयानुपस्थित्यापि। यथा—

अपाङ्गसंसर्गितरङ्गितं दृशो, र्भ्रुवोररालान्तविलासि वेल्लितम्,।
विसारिरोमाञ्चन(ग)कञ्चुकं तनोस्तनोति योऽसौ सुभगे! तवागतः॥

(क) राक्षसकुलमिति तु प्रचुरप्रचारः पाठः।
(ख) धिग्धिक्छक्रजितमिति प्रायिकः पाठः श्लक्ष्णः।
(ग) रोमाञ्चितेति पाठोऽपि नार्थातिशायी।

अत्र 'योसा'विति पदद्वयमुद्देश्यविधेयार्थकतया विवक्षितम्· उद्देश्यवाचिनो यच्छब्दस्य स्वार्थपरामर्शकतच्छब्दापेक्षत्वात्· नचैतत्सम्प्रतिपादकं, यच्छब्दसाचिव्येनाऽदसादीनां प्रसिद्धपरामर्शकत्वात्· ननु केवलयोरपि यत्तदोः प्रयोगदर्शनात्सापेक्षत्वमेवानयोरसिद्धम्· उच्यते-अनयोः परस्परार्थापेक्षार्थकत्वं नियतमेव· एतदेवोच्यते "यत्तदोर्नित्यसम्बन्ध" इति· सचाभिसम्बन्धः शाब्द आर्थो वा· तत्र द्वयोरुपादाने शाब्दः· यथा "स दुर्म्मतिः, श्रेयसि यस्य नादर" इति· एकस्य द्वयोरपि वाऽनुपादाने त्वार्थः, अनुपात्तस्यापि सामर्थ्यादेवाक्षेपात्· तत्र तच्छब्देन यच्छब्दाक्षेपः प्रक्रान्तप्रसिद्धानुभूतार्थकेन· यथा-

कातर्य्यं केवला नीतिः, शौर्य्यं श्वापदचेष्टितम्,[क] ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ [प्रक्रा०]

अत्र 'स' इति प्रक्रान्तं राजानमाह ।

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः, ।
कला च सा कान्तिमती कलावत,-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ [प्रसि०]

अत्र 'से'ति प्रसिद्धा ।

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि ॥ [अनु०]

अत्र 'ते' इत्यनुभूते· त्रिष्वप्येषु यच्छब्दस्योपादानं नावश्यापेक्षणीयम्, तदभावेप्याक्षेपादेव 'यः पूर्वोक्तगुणवान्', 'या प्रसिद्धा', 'ये अनुभूते' इतिप्रत्ययाऽविघातात् । यच्छब्दस्तूत्तरवाक्यगत एव सर्वत्र तच्छब्दाक्षेपसमर्थः; यथा-

साधु चन्द्रमसि पुष्करैः कृतं, मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ (शोवमये)

(क) शौर्यं श्वापदचेष्टितमिति प्रायः सर्वत्राधुनिकेषु पठितपु पाठेषु चोपलभ्यते।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 285. Vol. XI.)

अदर्शनं लोपः ॥ इह दर्शनं ज्ञानमुपलब्धिस्तच्च शब्दानुशासनप्रस्तावाच्छब्दविषयं सञ्जवणं भवतीत्याह । 'अश्रवणमिति' । श्रवणं च श्रोतृव्यापारस्तन्निषेधे 'लोपो व्योर्वली' त्यस्य वकारयकारौ वल्परौ न श्रोतव्यावित्यर्थः स्यात्, ततश्च प्रयोक्तृव्यापार उच्चारण[1]मनिषिद्धं स्यात् असति श्रवणे उच्चारणमनर्थकमेव स्यादिति श्रवणनिषेधेन[2] तद्धेतुभूतमुच्चारणमेव निषिद्धं भवतीत्याह । 'अनुच्चारणमिति' । 'लोपो व्योर्वली'त्यस्य कोऽर्थः वकारयकारौ वल्परौ नोच्चारयितव्याविति, अनेनापि प्रकारेणास्मिन्विषये तयोरभाव एव व्याख्यापितो[3] भवति, नहि विद्यमानयोरनुच्चारणमुपपद्यतइत्याह । 'अभाव इति' । स्वाभाविक एवाभाव इत्यर्थः । 'विनाश इति' । कार्यशब्ददर्शनएतत् । 'अनर्थान्तरमिति' । शब्दविषयाणामेषामर्थो न भिद्यतइत्यर्थः, स्वं रूपमिति वचनाद् अदर्शनशब्दस्यैव संज्ञायां लोपप्रदेशेषु अदर्शनशब्दएवादेशः स्यादित्यत आह । 'एतैः शब्दैरिति' । एतच्च 'न वेति विभाषे' त्यत इतिकरणानुवृत्तेर्लभ्यते, अथ वा महती संज्ञा क्रियते, ऽन्वर्थो यथा विज्ञायेत लोपनं लोप इति, न चादर्शनशब्दो लोपनक्रिया भवति । यद्येवं प्रदेशेष्वेवार्थग्रहणमस्तु किं संज्ञया, नच । असति संज्ञाकरणे स्वं रूपमिति वचनात् प्रदेशेषु लोपशब्द एवादेशः स्यात् सति त्वशब्दसंज्ञेति निषेधान्न स्वरूपग्रहणं भवति । 'न शब्दस्येति' । अर्थसिद्धमप्येतद्विस्पष्टार्थं पुनरुक्तम् । ननु विधिप्रदेशेष्वितरेतराश्रयः प्राप्नोति, सतोऽदर्शनस्य संज्ञा संज्ञया चादर्शनं भाव्यतइति, नच । नहि लोपविधानात्प्रागसदेवादर्शनं वचनेन भाव्यते ऽनित्यत्वप्रसङ्गात्,

(१) न निषिद्धमिति २ पुस्तके पाठान्तरम् ।

(२) श्रवणनिषेधे इति २ पुस्तके पाठः ।

(३) व्याख्यातो भवतीति पुस्तकान्तरे पाठः ।

किं तर्हि सदेवादर्शनं साधुत्वेनान्वाख्यायते। यद्येवं सर्वस्य स्वविषयादन्यत्र स्वभावतोऽदर्शनमस्तीति लोपसंज्ञा स्यात् ततश्च दधिमध्विति णिचो ऽदर्शनस्य लोपसंज्ञायां प्रत्ययलक्षणेन वृद्धिः स्यात्, अङ्गस्य वृद्धिरङ्गसंज्ञा च विधानप्रतिबद्धा, क्विपस्तर्ह्यदर्शनस्य लोपसंज्ञायां तुक् प्राप्नोति तत्राह। 'प्रसक्तस्येति'। एवं मन्यते स्थानइति वर्त्तते स्थानं च प्रसङ्गः तेन प्रसङ्गे यददर्शनं तस्य लोपसंज्ञा, न च दध्यौत्यत्र क्विपः केन चित्प्रसङ्गोऽस्ति, एवमपि ग्रामणीरित्यत्र कर्म्मण्यातुकर्तृसन्निधानादस्ति अणः प्रसङ्ग इति तददर्शनस्य संज्ञायां वृद्धिः स्यात्, योऽत्राणः प्रसङ्गः क्विपा सोपह्नियते सामान्यशास्त्रं हि विशेषसन्निधौ तद्व्यतिरिक्तएव विषये प्रतीतिं जनयति, तेन सत्सूद्विषेत्यस्य सन्निधौ कर्म्मण्यणित्यनेन नयतेरण् भवतीति वृद्धिरेव न जन्यते॥

प्रत्ययस्य लुक्श्लुलुपः॥ अदर्शनमिति सम्बन्धात् प्रत्ययस्येति कर्मणि षष्ठी, यदि प्रत्ययादर्शनस्य लुगादिसंज्ञामङ्कुरः प्राप्नोति विधानदशायां यया कया चन संज्ञया भावितस्य प्रत्ययादर्शनस्यानुवादप्रदेशेषु यत्किञ्चन संज्ञोच्चारणेऽपि ग्रहणप्रसङ्गस्ततश्चास्तीति लुक्संज्ञया भावितस्यापि शपोऽदर्शनस्य श्लावित्यत्र ग्रहणाद् द्विर्वचनं स्यात्, जुहोतीत्यु 'तो वृद्धिर्लुकि हलि' ति वृद्धिः स्यात्, हरीतक्याः फलानि 'लुक्तद्धितलुकि' ति ङीपो लुक् स्यात् 'लवणाल्लुक्' लवणस्सूपः, युक्तवद्भावः स्यात्, तथा लोपसंज्ञया भावितस्यापि लुक्संज्ञाया अगोमती गोमती सम्पन्ना गोमतीभूता ब्राह्मणीति च्वेर्ल्लोपे 'लुक् तद्धितलुकि' ति लुक् स्यादित्यत आह। 'अनेकसंज्ञाविधानाच्चेत्यादि'। यद्यतद्भावितस्याप्येताः संज्ञाः स्युरनेकसंज्ञाकरणमनर्थकं स्यात्, एकामेव संज्ञां कृत्वा तयैव सर्वाणि कार्याणि विधीयेरन्, तस्मादनेकसंज्ञाविधानाद्यया संज्ञया यद्दर्शनं भावितं तस्यैव सा संज्ञेति सञ्ज्ञानां सङ्करो न भवति, यद्येवं विधिप्रदेशेष्वितरेतराश्रयः प्राप्नोति, न चात्र नित्यतया परिहारः सम्भवति, अदर्शनमेव हि नित्यं न पुनर्लुगादिसंज्ञया भावितं तत्र यदि तया संज्ञया भावितस्यादर्शनस्य सा संज्ञेति व्यक्तमितरेतराश्रयो भवति, तत्राह। 'विधिप्रदेशेषु चेति'। अदि-

प्रभृतिभ्यः परस्य शपस्तद्‌भवति यस्य भूतस्य लुक् संज्ञा भविष्यतीत्येवं भाविन्याः संज्ञाया विज्ञानाच्च भवतीतरेतराश्रयत्वदोषः, लोपसंज्ञात्वदर्शनमात्रस्य विधीयतइति लुगादिसंज्ञाविषये ऽपि भवत्येव । न च लुगादिसंज्ञाभिर्बाधः, एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशात्, अत एव 'न लुमताङ्गस्ये'ति निषेधः । 'वरणा इति' । 'अदूरभवश्चे'त्यणो 'वरणादिभ्यश्चे'ति लुप् । 'प्रत्ययग्रहणं किमिति' । न तावदप्रत्ययनिवृत्त्यर्थं लुग, णिजोः तद्राजस्य यञञोश्च शपः यङः सिचः लेः सुप इति सर्वत्र प्रत्ययस्यैव निर्देशाद् अनुवादेषु च तद्भावितस्यैव तस्य संप्रत्ययात्, 'गोस्त्रियोरुपसर्जनस्ये'त्यत्र योगो विभज्यते, गोरुपसर्जनस्य स्त्रिया इति, 'लुकद्धितलुकी'ति स्त्रिया इत्येव, गोरिति निवृत्तम् इतरथा कृते ऽपि प्रत्ययग्रहणे गमेर्डो लुक् स्यात् 'कंसीयपरशव्ययोर्यञञौ लुक् चे'त्यत्र ङ्याप्प्रातिपदिकाधिकारात् कंसीयपरशव्ययोः प्रातिपदिकात्मकस्य भागस्य लुग्विज्ञास्यते न प्रकृतिभागस्य अन्यथा कृते ऽपि प्रत्ययग्रहणे कमेः सः परान् शृणाति परशुरिति उकारसकारयोर्लुक् स्यादतो ऽप्रत्ययनिवृत्त्यर्थं तावत्प्रत्ययग्रहणं न कर्त्तव्यं, यत्र तर्हि न कश्चिन्निर्दिश्यते 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चे'ति अत्र प्रत्ययप्रतिपत्त्यर्थं प्रत्ययग्रहणं भविष्यति, नैवं, तत्रापि 'यस्कादिभ्यो गोत्रे' इत्यतो गोत्रग्रहणानुवृत्तेरत्र्यादिभ्यो गोत्रे यो विहितस्तस्य लुक्, तथा 'जनपदे लुबि'त्यत्र ङ्याप्प्रातिपदिकात्प्रत्यय इत्यनुवृत्तेः जनपदे विहितस्य चातुरर्थिकप्रत्ययस्यैव लुप् लवणात् लुगित्यादिष्वपि प्रकृतस्यातः प्रत्ययस्य प्रतिपत्त्यर्थमपि न कर्त्तव्यं भवति, सर्वत्र चात्र्यादिभ्यः प्रातिपदिकाल्लवणादिति पञ्चम्यधिकारेण सन्निहितस्य षष्ठीं प्रकल्पयिष्यति सा चानियतयोगत्वान् स्थानषष्ठी भविष्यतीति स्थानषष्ठीप्रतिपत्त्यर्थमपि प्रत्ययग्रहणं न कर्त्तव्यं भवति, इदं तर्हि सर्वादेशार्थं प्रत्ययग्रहणमसति तस्मिन् 'यञञोश्च' 'सुपोधातुप्रातिपदिकयो'रित्यादिषु यत्रानेकाल् प्रत्ययस्तत्रालोन्त्यस्य स्यात् लवणाल्लुगित्यादौ तु आदेः स्यात् सति तु प्रत्ययग्रहणे तत्सामर्थ्यात् सर्वादेशो लुगादिर्भवति, ज्ञापकात्सिद्धं, यदयं 'घोर्लोपो लेटि वे'ति लोपे प्रकृते लुग्वादु-

प्रदिश्येति लुकं शास्ति तज्ज्ञापयति लुगादयः सर्वादेशा इति । अलोन्त्यस्य त्वदर्शनं प्रकृतेन लोपेनापि सिद्धं विपर्ययस्तु न भवति यतो लोप इत्यत्र तावदसंजातविरोधित्वाद् अलोन्त्यस्येति प्रवर्तते पश्चाल्लुग्ग्रहणं तस्यैव सर्वादेशतां गमयति सामान्येन च ज्ञापकं समर्थयिष्यते लोपस्यातिरिक्तम- दर्शनं सर्वादेश इति, अतः सर्वादेशार्थमपि प्रत्ययग्रहणं न कर्तव्यमिति प्रश्नः । इतरो ऽपि विदिताभिप्रायः परिहरति । 'अगस्तयः कुण्डिना इति' : असति प्रत्ययग्रहणे आगस्त्यकौण्डिन्ययोरित्यत्र लुगणिञोरित्यतो लुग्ग्रहणमनुवर्तते वा न वा, ऽनुवृत्तौ स्थानिनौ द्वौ लुका सह त्रय आदेशा इति वैषम्यादसति यथासङ्ख्ये एकैकस्य त्रय आदेशाः पर्यायेण स्युस्ततश्चागस्तयोपि कुण्डिनाः स्युः कौण्डिनाश्चागस्तयः स्युः लुक् च क्रियमाणो यदि ज्ञापकात्सर्वादेशस्तत उभयत्रापि विभक्तिमात्रश्रवणप- सङ्गः, अथ निवृत्तं ततो ऽगस्तयः कुण्डिना इत्यत्र न कश्चिद्दोषः । अगस्तीनां छात्रा आगस्तीया इत्यत्र तु प्राग्दीव्यतीये ऽजादौ प्रत्यये विवक्षिते ऽप्यगस्त्यादेशस्य निषेधाभावात् प्रवृत्तावृद्धत्वाच्छो न स्यात्, प्रत्ययग्रहणे तु सति लुग्ग्रहणानुवृत्त्यागस्त्यकौण्डिन्ययोः प्रत्ययांशस्य लुग् भवति परिशिष्टयोर्भागयोर्यथासंख्यमगस्तिकुण्डिनचावित्यर्थः सम्पद्यते, तेनागस्तयः कुण्डिना इति च सिद्ध्यति, प्राग्दीव्यतीये च विवक्षिते गोत्रे लुगचीति लुकि प्रतिषिद्धे ऽनस्यान्तियोगशिष्टत्वादगस्त्यादेशे ऽपि निवृत्ते आगस्त्यशब्दस्य वृद्धत्वाच्छे कृते सूर्यतिष्यागस्त्येति यलोपे चागस्तीया इति सिद्ध्यति । कौण्डिन्ये च नास्ति विशेषो निवृत्ते ऽपि कुण्डिनजादेशे कौण्डिन्यशब्दादपि 'कण्वादिभ्यो गोत्रे' इति अणि कृते आपत्यस्येति यलोपे कौण्डिना इत्येव भवितव्यमत आगस्त्यकौण्डिन्ययोरित्यत्रावश्य- मनुवर्त्यं लुग्ग्रहणं ततश्च पूर्वोक्तदोषपरिहाराय प्रत्ययग्रहणमपि कर्तव्यम् । वयन्तु ब्रूमः । सर्वादेशार्थमपि प्रत्ययग्रहणं सामान्येन ज्ञापकमगतिकगति रिति । प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रारम्भस्य प्रयोजनमाह । 'प्रत्यय- निमित्तमित्यादि' । लक्षणशब्दो ऽयमस्ति भावसाधनः प्रादुर्भाववचनः, अस्ति च करणसाधनो निमित्तवचनस्तत्राद्यस्य ग्रहणे प्रत्ययलोपे सति

प्रत्ययस्य प्रादुर्भावो भवतीत्यर्थः स्यात् तत्र लुप्तस्यैव प्रत्ययस्य पुनः प्रादुर्भावविधौ लोपविधिर्व्यर्थः स्यात् । ननु च यः प्रत्ययस्यैव लोपो यथारनिठी-त्यादि तस्य वैयर्थ्यं नामास्तु यस्तु डेरित्यादिना सामान्येन विहितः स यदा प्रत्ययस्य भवति भित्तुमाचष्टे भित्तयतीति तदा तस्य पुनः प्रादुर्भावे ऽपि न तस्य वैयर्थ्यमप्रत्यये चरितार्थत्वात् । एवं तर्हि लुप्तस्यैव प्रत्ययस्य पुनः प्रादुर्भावइष्टे न प्रत्ययस्य लोप इति वक्तव्यम् । सामान्यविहितो लोपः प्रत्ययस्य न भवतीति । अथ प्रत्ययान्तरस्य लुप्तप्रत्ययनिमित्तकस्य प्रादुर्भावो विधीयते यथा ग्रामणीरिति क्विपो लोपे तन्निमित्तकस्य सोर्विधिः, एवमपि प्रत्ययलोपे प्रत्ययइत्येव वक्तव्यं प्रत्ययस्य लोपे न तन्निमित्तकः प्रत्ययो भवतीति अतो निमित्तपर्यायेण लक्षणशब्देन बहुव्रीहिः, कार्यं चान्यपदार्थ इत्याह । 'प्रत्ययहेतुकं कार्यमिति' । प्रत्यासत्तेश्च यः प्रत्ययो यस्य कार्यस्य निमित्तं तस्य लोपे ऽपि तद्भवतीत्यर्थः । 'पदसंज्ञा भवतीति' । ननु च स्थानिवद्भावेनापि सिद्धा पदसंज्ञा इह तर्हि ताता पिण्डानामिति तच्छब्दात्परस्य जसः शिः 'शेश्छन्दसि बहुलमिति लोपे 'नपुंसकस्य झलचः' इति नुम् सर्वनामस्थानइति दीर्घश्च भवति, अनड्वान् सोर्लोपे नुम्भवति. अधोक् अडुगुणौ भवतः, न्यमाट् मृजेर्वृद्धिः, उन्वल्लङि तिलोपे श्नमाटौ भवतः । श्नाच्चलोपः चौनत्. अग्निचित् क्विपो लोपे तुग्भवति, एतान्यपि स्थानिवद्भावेनैव सिध्यन्ति, न सिध्यन्ति, अल्विधित्वात्, सर्वत्रैवाल्मात्रप्रत्ययः तदाश्रयो विधिरल्विधिरिति, नैतत्सुष्ठूच्यते, उक्तं हि कार्यापेक्षमल्विधित्वं नोदाहरणापेक्षमिति नुमादिविधौ च सर्वत्र शास्त्रे यद्रूपमाश्रीयते सर्वनामस्थाने सार्वधातुके पिति कृति सुप्तिङन्तमिति साधारणं तदलश्चानलश्च, केवलं ताता पिण्डानामित्याद्युदाहरणेऽर्थादलात्मकं तदित्येतावत्, इह तर्हि अतृणेट् तृहि हिंसायां लङ् तिप् श्नम् इमश्च्नोकारलोपः तकारस्य हल्ङ्यादिलोपे हलादौ पिति सार्वधातुके विधीयमानो ऽल्विधिः तृणह इम् अस्माद्भवति, तथा आशीरित्यत्र 'शासइदङ्हलोः' रितीत्वं लुप्ते ऽपि क्विपि भवति । ननु च 'वर्णाश्रये नास्ति

प्रत्ययलक्षणं.' नैवं विधं वचनमस्ति द्वितीयस्य प्रत्ययग्रहणस्य प्रयोजनमिदं पठ्यते ऽत्र हि प्रत्ययलोपे तल्लक्षणमित्येव सिद्धे पुनः प्रत्ययग्रहणाद्यत्र प्रत्ययस्यैवासाधारणं रूपं निमित्तत्वेनाश्रीयते सुपि सार्वधातुके कृति सुप्तिङन्तमिति तदेव यथा स्यात् तेन गोहितमित्यवादेशो न भवति, तद्धेतो यवार्थाव इत्यत्र प्रत्ययस्यासाधारणं किञ्चिद्रूपमुपात्तं किन्त्व चीति यदुपात्तं तद्गवे हितमित्यस्मिन्नुदाहरणे अर्थात्प्रत्ययात्मकमित्येतावत्, इत्वेमागमयोस्तु हलादौ क्ङिति हलादौ पिति सार्वधातुकइति प्रत्ययएव प्राधान्येन निमित्तं हल् तु तद्विशेषणमिति नेमौ वर्णाश्रयौ तस्माद्वल्विध्यर्थमिदमारब्धव्यं, यद्येवं भसंज्ञाङ्गपुष्केषु दोषः, भसंज्ञायां तावद्राज्ञः पुरुषो राजपुरुष इति श्रूयमाणे प्रत्यये यथा संज्ञा भवति एवं लुप्ते ऽपि स्यात् ततश्च तया पदसंज्ञाया बाधितत्वाद् नलोपो न स्यात् । ननु च द्वे अत्र पदसंज्ञे स्वादाविति च सुप्तिङन्तमिति च, तत्र या स्वादौ पदमिति पदसंज्ञा सा ऽपवादभूतया भसंज्ञया बाध्यते या तु 'सुप्तिङन्त' मिति पदसंज्ञा सा न बाधनीया यथा श्रूयमाणे प्रत्यये राज्ञ इति समुदायस्य । नैतदेवं, श्रूयमाणे प्रत्यये ततः पूर्वस्य भागस्य भसंज्ञा समुदायस्य तु विसर्जनीयान्तस्य पदसंज्ञेति युक्तं विभिन्नावधिकया भसंज्ञया पदसंज्ञा न बाध्यतइति, लुप्ते तु प्रत्यये यस्यैवावधेः स्वादौ पदमिति पदसंज्ञा सुबन्तं पदमित्यपि तस्यैवावधेः पदसंज्ञा तत्रैवावधौ भसंज्ञा भवन्ती यथा ऽपवादत्वात् स्वादिलक्षणां पदसंज्ञां बाधते तथा सुबन्तलक्षणामपि परत्वाद् बाधेत, एवं तर्हि 'न लुमताङ्गस्ये' ति प्रतिषेधाद् भसंज्ञा न भविष्यति यचीति सप्तमीनिर्देशात् ततः पूर्वस्य भागस्य वस्तुतो ऽस्य प्रवर्तमाना भसंज्ञाप्यङ्गकार्यमेव, एवं च बुद्धा 'न ङिसंबुद्ध्यो' रित्यत्र ङौ नलोपः प्रतिषिध्यते, यदि प्रत्ययलक्षणेन भसंज्ञा स्याद् अपवादत्वादेवार्द्रे चर्म्मणीति नलोपो न भविष्यतीति किं तेन प्रतिषेधेन, इह तर्हि चित्रायां जाता 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यान' मित्यणो लुकि लुक्तद्धितलुकी' ति टापि लुप्ते चित्र इति स्थिते प्रत्ययलक्षणेनाणन्तत्वात् ङीप् प्राप्नोति, नैष दोषः । टिड्ढाणञित्यत्रात इत्यनुवर्तते तत्र श्रूयमाणाकारो

विशेष्यते अर्थ्योकार इति ततश्चाकार एव ङीपो निमित्तम् अण् तु तद्विशेषणमिति प्रत्ययलक्षणत्वाभावाद् ङीबभावः । इह तर्हि वतण्ड स्यापत्यं स्त्री वतण्डाच्चेत्यञो 'लुक्स्त्रिया' मिति लुकि वतण्डी शार्ङ्गर-वादिलक्षणं ङीनं बाधित्वा प्राचां ष्फस्तद्धितः सर्वत्रेति सर्वत्रग्रहणस्य पूर्व-त्रापकर्षात्प्राचां मतेन यञन्तलक्षणः ष्फः प्राप्नोति यथा आवट्याच्चापं वा बाधित्वा ष्फ एव भवतीति । नैव दोषः । अत्रापि यञाकारो विशेष्यते यञोकारइति यञवयवो योकारस्तदन्तादिति तेनात्राप्यकार एव निमित्तं तद्विशेषणन्तु यञिति ष्फो न भवति । अयं तर्हि दोषः परिवीरिति, परि-पूर्वाद्व्येञः क्विपो लोपे यजादित्वात् संप्रसारणे पूर्वत्वे च तुक् प्राप्नोति 'हल' इति दीर्घश्च तत्र विप्रतिषेधेन दीर्घ इष्यते स विप्रतिषेधो न सिद्ध्यति, किङ्कारणम्, इह प्रत्ययलोपे सर्वाणि प्रत्ययाश्रयाणि कार्य्याणि पर्यवसन्नानि तान्यनेन प्रत्युत्थाप्यन्ते, अनेनैव तुगनेनैव दीर्घस्तदेकयोगलक्षणयोरयुक्तो विप्रतिषेधः, नैव दोषः । अवस्थिते प्रत्यये तन्निबन्धनं यत्कार्यं भवत्येव तदे-वानेन लुप्ते तस्मिन् प्रत्युत्थाप्यते, न तु यस्य प्राप्तिमात्रं तदपि परिवीये-त्यादौ श्रूयमाणे प्रत्यये दीर्घ एव परत्वाद् भवति न तुक् ततश्चात्रापि यदि क्विबेवास्यास्यद् दीर्घ एवाभविष्यदिति स एवानेन प्रत्युत्थाप्यते तदेवमार-ब्धव्यं सूत्रं न कश्चिद्दोष इति स्थितम् । अत्रोच्यते । यदुक्तं तृणह इम् हलाश्रय इति नायं हलाश्रयः, हलीति तत्र निवर्तिष्यते, यदि निवर्तते तृणहानि अत्रापि प्राप्नोति नाभ्यस्तस्याचीत्यतो नाचीत्यनुवर्त्तते ततश्चानल्वि-धित्वात् स्थानिवद्भावेनैव सिद्ध इमागमः, आशीरित्यत्रापि 'आशा-सः क्वाउपसंख्यान' मित्यस्माद् वचनात्सिद्धमित्वम्, आरब्धे ऽपि खल्वस्मि-स्तदवश्यं वक्तव्यं, यदि ताव 'च्छास इदङ्हलो' रित्यत्र शासिमात्रस्य ग्रहणं ततो नियमार्थमाशासः क्वावेव यथा स्याद् आशास्तइत्यादौ माभूदिति, अथ यस्माच्छासेरङ् विहितस्तस्य ग्रहणं ततो यथाऽऽशास्तइत्यादौ न भवति तथा क्विप्यपि न स्यादिति विध्यर्थमिदम् । इह तर्हि बिदस्याप-त्यानि बहूनि 'अनृष्यानन्तर्ये बिदादिभ्यो ञ' बिदाः बिदानामपत्यं युवा, ऽत इञ्' तस्य ण्यक्षत्रियार्षे ञित इति लुकि कृते अञो गोत्रबहुत्वउत्पन्नस्य

लुकि प्राप्ते 'गोत्रे ऽलुगचौ' ति प्रतिषेध इष्यते सोऽजादाविति लुप्तेप्य-स्माद्वचनाद्भवति, एतदपि नास्ति प्रयोजनम् अचीति विषयसप्तमी तेन गोत्रेऽजि विवक्षिते ऽनुत्पन्नएव लुकि प्रतिषिद्धे पश्चादिञो लुगिति सिद्धमिष्टं तदेवमल्विधेः कस्य चिद् दर्शनात् स्थानिवद्भावेनैव सिद्धमिति नार्थो ऽनेन । एवं तर्हि नियमार्थमिदं प्रत्ययलोपे प्रत्ययलक्षणमेव यथा स्यात् प्रत्ययाप्रत्ययलक्षणं मा भूदिति, एतदुक्तं भवति । यस्मिन्कार्ये विधीयमाने प्रत्ययस्यैवासाधारणं किञ्चिद्रूपं निमित्तत्वेनाश्रीयते तदेव प्रत्ययलोपे ऽपि भवति न पुनः प्रत्ययाप्रत्ययसाधारणं रूपमाश्रित्य यद्विधीयते तदिति, तेन शोभना दृषदो यस्य सुदृषदिति 'सोमनसो अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वं न भवति । अन्यथा लुप्ते ऽपि जसि स्थानिवद्भावेनासन्तमुत्तरपदमिति स्यात्प्रसङ्गः । प्रत्ययलक्षणं तु न भवति । 'अनिनस्मिन् ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ती' त्यस्मात्तस्य ग्रहणात्, वृत्तिकारेण तु नियमार्थमप्येतत् प्रत्ययलोपे सर्वत्र प्रवर्त्ततइति मत्वोक्तं पदसंज्ञा भवतीति । 'आघ्नीयेति' । 'अङ्गा यमहनः' । 'संग्मीयेति' । समो गमृच्छीत्यात्मनेपदम् 'इटोत्' 'बहुलं छन्दसी' ति शपो लुक्, उभयत्र गमहनेत्युपधा लोपः ॥

न लुमताङ्गस्य ॥ लुमतेति लुशब्दो यस्मिन्नस्ति स लुमान् लुगादिः संज्ञाशब्दः, करणे च तृतीया लोपे च करणत्वं, प्रत्ययलोपइत्यनुवृत्तेः लुमता शब्देन प्रत्ययलोपे सति अङ्गस्य प्रत्ययलक्षणं कार्य्यं न भवति तत्र च प्रत्यासत्तेः लुप्तप्रत्ययापेक्षया येनाङ्गसंज्ञा प्रतिलब्धा तस्य तन्निमित्तं कार्यं न भवतीत्यर्थः । एतदेव वस्तुतो दर्शयति । 'लुमता लुप्ते प्रत्यये यदङ्गमिति' । तेनात्क्रामित्यत्रातो हेरिति लुकि कृते परस्मैपदापेक्षया यदङ्गं शबन्तं न तस्य दीर्घत्वं यस्य च दीर्घत्वं न तत्परस्मैपदापेक्षयाङ्गं किं तर्हि शबपेक्षयेति निषेधाभावात् प्रत्यक्षेण 'क्रमः परस्मैपदेष्वि' ति दीर्घो भवति, तथा 'गमेरिट् परस्मैपदेषु' 'न वृद्भ्यश्चतुर्भ्यः' इटो विधिप्रतिषेधो जिगमिष विवृत्सेति परस्मैपदलुक्यपि भवतः, लुमता लुप्ते परस्मैपदे यदङ्गं सनन्तं न

तस्येटो विधिनिषेधौ किं तर्हि सकारादेः प्रत्ययस्येति, इदं चान्यदस्मिन् ग्रन्थे दर्शितं नाङ्गस्येत्यनेनाङ्गाधिकारः प्रतिनिर्दिश्यते न लुमता लुप्ते प्रत्यये आङ्गं भवतीति किं तर्हि लुमता लुप्ते प्रत्यये यदङ्गं तस्याङ्गमनाङ्गं च सर्वं प्रतिषिध्यतइति, तेन गर्गाः विदाः यञञोर्लुक्, उष्ट्रग्रीवः 'इवे प्रतिकृतावि'ति कनो 'देवपथादिभ्यश्चे'ति लुप्, पन्थाः प्रियोऽस्य पथिप्रियः, सुपो धात्विति सर्वनामस्थानस्य लुक् अत्र 'ङिनत्यादिर्नित्यं' 'पथिमथोः सर्वनामस्थान' इति चाद्युदात्तस्यानाङ्गस्यापि निषेधो भवति सप्तमीनिर्देशाद्धोतदङ्गस्तुनो ऽङ्गस्य कार्यं, तथा ऽहर्ददाति 'रोः सुपी'ति रत्वप्रतिषेधो न भवति । यदनाङ्गमपि प्रतिषिध्यते अंवधि भवता दस्युः, अगायि भवता ग्रामः, अध्यगायि भवताऽनुवाकः लुङि परतोऽङ्गस्य विधीयमाना ह्ननिणिङादेशाश्चिणो लुगिति लुङो लुकि न स्युः, न लुङि ह्ननिणिङादेशा विधीयन्ते किं तर्हि लुङि यदार्धधातुकं तत्र । ततश्च लुङि यदङ्गं चिणन्तं न तस्य ह्ननिणिङादेशाः यस्य च ते न तल्लुक्यदङ्गमिति निषेधाभावः । इह तर्हि 'मा हि दातां सर्पिरागच्छेदिति सिजामन्त्रितयोर्लुकि सति 'आदिः सिचोन्यतरस्या'-'मामन्त्रितस्य चे'ति आद्युदात्तत्वं न स्याद्, नैतदङ्गस्य चिणन्तं कार्यं किं तर्हि तदन्तस्य षष्ठीनिर्देशात् तेन पयः सामेत्यादौ पदसंज्ञा च भविष्यति । ननु यद्यपि तदन्तस्याद्युदात्तत्वं पदसंज्ञा ऽपि तथा लुप्ते इदानीं प्रत्यये वस्तुतोऽङ्गस्य प्राप्नुत इति भवितव्यं निषेधेन, नात्र लुप्ते प्रत्यये यदङ्गस्य प्राप्तं तन्निषिध्यते किं तर्हि अवस्थिते ऽपि प्रत्यये यत्ततः पूर्वस्याङ्गस्य कार्यं तन्निषिध्यते वृत्ताः मा हि लाविष्टामित्यादौ च श्रूयमाणे प्रत्यये तदन्तस्यैव पदसंज्ञा स्वाश्चेति लुप्ते ऽपि भविष्यतः, एवं च राज्ञः पुरुष इति श्रूयमाणे ङसि ततः पूर्वस्य भसंज्ञा न तदन्तस्येति अङ्गकार्यत्वात् लुप्ते ऽपि तस्मिन् प्रत्ययलक्षणेन प्राप्ता ऽनेन निषिध्यते ॥

(शेषमग्रे)

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 260. VOL. XI.)

एवं प्राप्ते ऽभिधीयते ।

१४ यत्तत्त्वं वेदगुप्तं परमसुखतमं नित्यमुक्तस्वभावं सत्यं सूक्ष्मात्सुसूक्ष्मं महदिदममृतं मुक्तमात्रैकगम्यम् । यस्यांशे लेशमात्रं जगदिदमखिलं भ्रान्तिमात्रैकदेहं प्रत्यग्ज्योतिःस्वरूपं शिवमिदमधुना कथ्यते युक्तितो ऽत्र ॥ २४ ॥

किं तत्र प्रमाणाभावेनात्मनः स्वरूपानुपपत्तिः प्रतीत्यनुपपत्तिर्वा । नाद्यः आत्मस्वरूपस्य नित्यतयेतरनिरपेक्षत्वात् प्रमाणस्य स्वप्रमेयानुत्पादकत्वाच्च । द्वितीये प्रमाणेपि तर्हि प्रमाणान्तरं वाच्यं

14. To the view thus laid down it is replied:—

Now, in this place, we declare and support by argument that Reality which lies hidden in the Veda, absolute Bliss, in its own nature eternal and unrelated to aught else, the existent, smaller than the small and infinite; this is emancipation and is to be apprehended only by the emancipated, a small part of a part of it is all this false world, it is in its essence the light within, it is blessed...XXIV.

Self, the knower, cannot be *proved*, not because it is non-entity, but because it is self-proved, *i. e.*, superior to all proof, as being that by virtue of which proof, pramāṇa, can be said to exist at all.

In the above argument (tatra), is it meant that because there is no evidence (for the Self), the very existence of the Self is impossible, or that knowledge of the Self is impossible? Not the first; for the Self being in its essence eternal is independent of aught else (from which it should originate); and because evidence cannot originate that of which it is evidentiary. As regards the

तदभावे नरशृङ्गवदसत्त्वेन स्वप्रमेयसाधकत्वासम्भवात् । तथा च प्रमाणे प्रमाणान्तरानुसरणे ऽनवस्थितेः प्रमाणेनैव वस्तुसिद्धिरित्यभिमानमात्रम् । अथ प्रमाणं प्रमाणान्तरनिरपेक्षमेव स्वं स्वप्रमेयं च साधयति स्वप्रकाशस्वभावस्य तस्य स्वपरव्यवहारे प्रकाशान्तरनिरपेक्षत्वात् प्रदीपप्रकाशवत् । न हि सर्वस्य साधकं प्रमाणं स्वसिद्ध्यर्थमन्यदपेक्षत इति युक्तिमत् । हन्त तर्हि सर्वस्य प्रमाणप्रमेयभेदभिन्नस्य जगतः साधक आत्मा कथं स्वाधीनसिद्धिकेन प्रमाणेन सिद्धः स्यात् प्रमाणात्पूर्वमेव सिद्धत्वात् । अन्यथा ऽसिद्धप्रमातृकं

second alternative, even if evidence for the Self be granted, a a second evidence must be premised to support the first evidence; for, if this second evidence be wanting, the first evidence is non-entity, like the horns of a man, and cannot therefore be evidentiary of its object. And so, in postulating a second evidence to support the first evidence, the logical vice of an *infinite regress* results: hence the view (underlying the second alternative) that the existence of an object can be proved only through one of the (recognised) sources of evidence (sc. perception, inference &c.) is merely a bold assumption.

Now (the opponent interposes) an evidence is indeed independent of any second evidence and proves its own existence as well as that of the object (to which it testifies); for being by nature *self-luminous* the evidence requires no further *illumination* to make itself and its object (para) known, just as the light of a lamp (needs no other light to illumine it). Nor is it logical to hold (continues the opponent) that what is evidence for all things needs to be proved by something else. Sad conclusion this!—we reply—for how in the face of it can it be held that the Self, which is evidence for the varied universe of things known and instruments of knowledge, can be proved by evidence which, in its turn, has to be vouched for by the Self (sva)! For the Self must have existed prior to any source of evidence. Otherwise a source of evidence

प्रमाणमेवात्मानं न लभेत । कथं वा सर्वस्य प्रमातारमात्मानं विषयीकुर्यात् प्रमाणं कर्मकर्तृविरोधप्रसङ्गात् तदन्यस्य च सर्वस्यानात्मत्वेनाप्रमातृत्वात् । तथा च श्रुतिः विज्ञातारमरे केन विजानीयादिति । तथा च प्रमातुरात्मनः स्वत एव सिद्धत्वात् प्रमाणाभावान्नासत्त्वप्राप्तिः । किञ्चेदमात्मनोऽसत्त्वमापाद्यमानं प्रमाणसिद्धमसिद्धस्वभावं स्वतो वा सिद्धम् । आद्येऽसत्त्वग्राहकप्रमाणस्य प्रतियोगिविषयत्वनियमेनात्मनोऽपि प्रमाणसिद्धत्वेनासत्त्वानुपपत्तिः । न द्वितीयः असिद्धस्यापादनानुपपत्तेः ।

could not take on its character* as evidence while no cogniser of it existed. Or how could a source of evidence make known the Self which is the cogniser of all things; for this would be subversive of the distinction between agent, sc. knower, and object, sc. thing known (—the Self, in this case, being both knower and thing known)? Nor can anything other than Self be a cogniser, because it is not Self. And thus Śruti declares:—"By what should one know the knower." And thus, since Self, the knower, is self-proved, its non-existence is not proved by the fact that there is no source of evidence applicable to the Self.

Brihad : Up : IV. 5. 15.

Further, we ask, is this non-existence of Self, as urged above, something proved by one of the recognised sources of evidence, or is it by nature something unknown, or is it self-proved? In regard to the first alternative—since the restrictive rule is that any source of evidence that makes known a non-existence must also make known the counterentity to that non-existence, the Self also must be proved by that source of evidence which declared for the non-existence of the Self, and therefore the non-existence of the Self cannot possibly be proved. Nor will the second alternative hold good, because no affirmation † is possible in regard

* आत्मानं स्वरूपम् N. D's gloss.

† परं प्रति शब्देनानिष्टप्रसञ्जनमापादनमत्रापादनशब्दार्थः N. D's gloss.

न हि बुद्धावनारूढस्वभावमापादयितुं शक्यम् । तृतीये त्वात्मैव स्वतःसिद्धो ऽस्तु असत्त्वस्य च स्वतःसिद्ध्यनुपपत्तेः । अन्यथात्मनो नामान्तरकरणप्रसङ्गात् । किञ्चात्मनो ऽसत्त्वं किमात्मना ज्ञायते ऽनात्मना वा । नान्त्यः अनात्मनो ज्ञातृत्वाभावात् । नाद्यः व्याघातात् । तथा हि किमात्मास्वसत्ताकाले स्वासत्तां जानाति स्वासत्ताकाले वा । आद्ये स्वसत्ताकाले स्वासत्ता कुतः । तथा च किं जानीयात् विषयस्यैवाभावात् । द्वितीये कथं जानीयात् स्वस्यैवाभवात् । स्वसत्ताकाले आत्मैव कालान्तरभाविनीं स्वासत्तां जानातीति चेत् तर्हि सन्नेवा ऽऽत्मा ऽनित्यः परं तच्च कृतहान्यकृताभ्यागमप्रसङ्गेन परिहृ-

to anything wholly unknown; for that which has not entered into the mind cannot be affirmed. But if the third alternative be adopted, then grant that it is the Self alone that is self-proved; and (grant this) because non-existence (being *jada, non-intelligent*, like *material* things) cannot be self-proved. If this be denied (sc. if you regard non-existence as *chetana*, intelligent.), it follows that you have given to Self another name (and called it *non-existence*). Moreover is the non-existence of Self cognised by the Self or by not-Self? Not by the latter, for the not-Self is not a knower. Nor by the former—which is a contradiction in terms. To explain our meaning, we ask, Does the Self cognise its own non-existence while it is itself existent or non-existent? On the first alternative, the non-existence of the Self is impossible while the Self exists. Further, what should the Self cognise, since the very object to be cognised (sc. non-existence of Self) does not exist at that time? On the second alternative, the Self could not possibly cognize, because it is itself non-existent at that time. If it be argued that the Self, while existent, cognises its own future non-existence, then we reply that (according to this view) the Self, existent now, perishes later on. And this view of a non-eternal Self (tachcha) we have already refuted (cf. § 2), because it logically implies the destroyal of the retributive power of actions, and the fruition of actions never performed by the individual.

यमेव प्रोषितेऽन्यत्र व्यापृते वा यजमाने ये तावत्परार्था आज्यावेक्षणादयः तेषु यथासमाख्यमध्वर्य्वादय एव कर्त्तार इति न प्रतिनिधिना कार्यं, फलसंस्कारास्तु अन्येन क्रियमाणा न यजमानस्य योग्यतां जनयन्तीत्यनर्थकः प्रतिनिधिः ॥

सत्रन्यायः । सत्रे कस्यचित्स्वामिनोऽपचारे प्रतिनिध्यादानाधिकरणम् ।

सू० बहूनां तु प्रवृत्तेऽन्यमागमयेद्वैगुण्यात् ॥ ८ ॥

सप्तदशावराः सत्रमासीरन्निति सप्तदशसु प्रवृत्तेषु यदा कश्चिन्म्रियते तदा तत्स्थानेऽन्यः प्रतिनिधेयः ? उत नेति न स्वामिनः प्रतिनिधिरित्युक्तम् एवं प्राप्तेऽस्ति प्रतिनिधिरित्याह काम्यमपि कर्म यदा प्रवृत्तं भवति तदाऽवश्यं समापनीयमित्युक्तम्, आवश्यकत्वाच्च यथाशक्ति प्रयोक्तव्यम् अतो यद्यपि ये यजमानास्ते ऋत्विज इति यजमानशब्दस्य स्वामिभूतकर्तृवचनत्वादेकवचनोपात्तयोः स्वामित्वकर्तृत्वयोरार्त्विज्योद्देशेन विधिसम्भवात्स्वामिभिरेवार्त्विज्यं कर्त्तव्यम् आनीयमानश्चोपरितनाधिकरणन्यायेन स्वामी न भवति तथाऽपि तन्मात्रं हित्वा कत्रंशे साप्तदश्यं समापयितुमागमयितव्यं पुरुषान्तरम् ॥

सत्रे प्रतिनिहितस्यास्वामित्वाधिकरणम् ।

सू० स स्वामी स्यात्तत्संयोगात् ॥ ९ ॥

योऽसावानीतः स किं स्वामी फलभागी स्यात्? उत कर्त्तैव ? इति संशये स्वामिस्थानोपनिपातात्स्वामित्वं मन्यमानस्योत्तरं यो ह्यारभ्य समापयति तस्य फलम् अयं पुनर्मध्ये प्रविष्टो न फलं प्राप्तुमर्हति, न चासौ विधिवशात्प्रवृत्तो येन विधिप्रामाण्यात्फलं लभेत इतरैस्तु स्वामिभिरसौ सामार्द्धिभिः संख्यासम्पत्त्यर्थमानीतः तस्मान्नास्य स्वामित्वम् ॥

सत्रे प्रतिनिहितस्य यजमानधर्मग्राहित्वाधिकरणम् ।

सू० स तद्धर्मा स्यात् त[२]त्कर्मसंयोगात् ॥ १० ॥

(१) एक पदोपात्तयोरिति पा० ।

(२) कर्मसंयोगादिति पाठान्तरम् ।

किमानीतस्य फलिसंस्काराः कर्त्तव्या नेति विचारः फलप्रतिग्रहणयोग्यतासंजननार्थो हि ते न चानीतस्य फलमित्युक्तम्, अतो नास्य फलिसंस्कारा इति, सत्यं नास्य फलम् इतरेषां तु सप्तदशकर्त्तृकैः संस्कारैर्योग्यता जन्यते सर्वत्र कर्त्रंशे साप्तदश्यनिवेशादतस्तत्सिद्ध्यर्थं प्रतिनिधेरपि संस्कारान्कुर्यात् ॥

अतद्द्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वाधिकरणम् ।

सू० सामान्यन्तच्चिकीर्षा हि ॥ ११ ॥

अतापचारे प्रतिनिध्युपादानं स्थितं तत्र यत्किञ्चित्प्रतिनिधातव्यम्? उत सदृशमेवे? ति संशयः, तत्र आग्नेयचोदना तावद्यत्किञ्चिद् द्रव्यमाक्षिपेत् व्रीहिशास्त्रं पुनर्व्रीहिविषयं नान्यगोचरम् अतः केन प्रमाणेन सदृशस्योपसंग्रहः "व्रीहिचोदनया सत्यं व्रीहिजातिर्विधीयते । सा च द्रव्यपरिच्छेदद्वारेणाङ्गत्वमृच्छति । तच्च द्रव्यं परिच्छिन्नमनेकावयवात्मकम् अवयवा एव ह्येकद्रव्यतामापन्ना अवयविशब्दाभिधेया जात्या परिच्छिद्यन्ते न त्वत्यन्तमर्थान्तरम्, अतस्तैरेवावयवैर्जात्याश्रयभूतैः कर्म साधनीयं तत्र यदि सदृशमुपादीयते ततस्तेषामवयवानां कतिपया लभ्यन्ते जातिमात्रमवयवान्तरमात्रं च परित्यक्तं भवति, विसदृशोपादाने पुनः समस्तपरित्यागः स्यादतो व्रीहिशास्त्रमपि यथासम्भवमुपपादयितुं सदृशोपादानम्, एवं सुसदृशलाभे मन्दसदृशत्रोपादेयं सुसदृशे बह्ववयवानुग्रहात् ॥

द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् ।

निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ १२ ॥

वैकल्पिकेषु व्रीहियवादिषु एकेन व्रीहिणा प्रक्रान्ते प्रयोगे यदि तस्यापचारो भवति तदा किं वैकल्पिकान्तरमुपादेयम्? उत व्रीहिसदृश? मिति संशये मुख्ये सति प्रतिनिध्ययोगाद्यवोपादाने प्राप्ते ब्रूमः "वैकल्पिकेषु यावदेकमनुपक्रान्तं तावदितरेषां प्राप्तिरुपक्रान्ते तु तस्मिंस्तदेवाङ्गमितरदनङ्गमेव व्रीहिभिश्च सङ्कल्प्य यवैः कुर्वाणो नानृतं वदेदिति कल्प्यङ्गभूतं प्रतिषेधमतिक्रामेदतो व्रीहीणामेवाङ्गत्वात्तत्सदृशमेवोपादेयम्' ॥

पूतीकस्य सोमप्रतिनिधित्वाधिकरणम् ।

सू० वचनाद्वान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ १३ ॥

"यदि सोमं न विन्देत पूतीकानभिषुणुया"दिति किमयमयमभावे विधिः सोमाभावे पूतीकैर्यागं कुर्यादिति सोमजातिरिव पूतीकजातिर्यागसाधनपरिच्छेदकत्वेन विधीयते? उत प्रतिनिधिनियमः - यः सोमजातिपरिच्छिन्नात्सकलानवयवानुपादातुमशक्तो विकलानुपादित्सते स पूतीकगतानिति पूतीकत्वं सोमावयवोपलक्षणं न साधनोपलक्षणमिति तत्राभावे विधिरिति प्राप्ते नियम इत्याह "साधनत्वं हि पूतीकानामत्यन्ताप्राप्तं विधातव्यं प्रतिनिधिनियमे तु पाक्षिकप्राप्तानां नियममात्रं विधीयत इति लाघवं भवति । ननु सुसदृशानामन्येषां सम्भवादीषत्सदृशाः पूतीकाः पक्षे नैव प्राप्नुवन्तीति कथं नियम्यन्ते उच्यते सौसादृश्यं हि न प्रतिनिधेः प्रापकं किं तर्हि नियामकं मुख्याभावात्तु प्रतिनिधिप्राप्तिस्तस्यां चावस्थायां यावन्न्यायेन सदृशं नियन्तुमुपक्रम्यते तावद्वचनेनासुसदृशाः पूतीका नियम्यन्ते अतः प्रतिनिधिनियमोऽयम् ॥

प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य पुनःप्रतिनिधित्वाधिकरणम् ।

सू० न प्रतिनिधौ समत्वात् ॥ १४ ॥

यदा प्रतिनिधिना प्रयोगे प्रक्रान्ते तस्यापचारो भवति तदा किं प्रतिनिधिसदृशमुपादातव्यम्? उत मुख्यसदृशमिति संशये वैकल्पिकन्यायेन प्रक्रान्तस्यैव तत्र प्रयोगाङ्गत्वात्तत्सदृशमेवोपादातव्यं न मुख्यसदृशं नैवं, न हि नीवाराणामङ्गत्वमस्ति प्रमाणाभावात्, व्रीह्यवयवांस्तु तद्गतानुपाददानो नान्तरीयकतया नीवारानुपादत्ते नाङ्गतया अतस्तदपचारे पुनरपि श्रुतावयवलाभाय व्रीहिसदृशमेवोपादेयं ॥

श्रुतस्यापि प्रतिनिधेरपचारे उपात्तसदृशस्य पुनः प्रतिनिधित्वाधिकरणम् ।

सू० स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ १५ ॥

यद्यपि प्रमाणाभावान्नीवाराणामनङ्गत्वं श्रुतिलक्षणस्य पूतीकादेरङ्गत्वात्तस्य प्रक्रान्तस्यापचारे तत्सदृशमेवोपादेयं न सोमसदृशं नैवं न हि

श्रुतिः पूतीकानामङ्गत्वमाह तदङ्गतानां सोमावयवानां प्रतिनिधिनियमो ह्ययं नाभावे विधिरित्युक्तम्, अतस्तदपचारेऽपि सोमसदृशदृशमेवोपादेयम् ॥

मुख्यापचारे तत्प्राप्तौ तस्यैवोपादानाधिकरणम् ।

सू० मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ १६ ॥

यदा मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रस्थितो यद्यन्तरा मुख्यं लभते तदा किं मुख्यमेवोपाददीताथ वा प्रतिनिधि? मिति प्रतिनिधेः सङ्कल्पितत्वाल्लब्धमुख्यमनादृत्य प्रतिनिधिमेवोपाददीतान्यथा मिथ्यासङ्कल्पापत्तेः । उच्यते यथाशक्ति शास्त्रार्थं सम्पादयामीत्येवं सङ्कल्पयितव्यं न प्रतिनिधिस्वरूपं, न च मुख्ये सति प्रतिनिधिः शास्त्रार्थो भवति अतो मुख्याधिगमे तदेव स्यात् ॥

प्रतिनिधिना प्रारब्धे कर्मणि पुनद्रव्यलाभेऽपि प्रतिनिधिनैव समापनाधिकरणम् ।

सू० प्रवृत्तेऽपीति चेत् ॥ १७ ॥

यदा पुनर्मुख्यं खदिरमलब्ध्वा प्रतिनिधिं कदरमुपादाय तक्षणादिषु कतिपयेषु संस्कारेषु कृतेषु प्राक् पशुनियोजनात् खदिरं लभते तदा किमुपात्तेन प्रतिनिधिना कार्यं कुर्यात्? उत तत्त्यागेन मुख्यमुपादाय संस्कारांश्च पुनः कृत्वा तत्रैव पशुं नियुञ्जीते? ति संशयस्तत्रोपात्ते प्रतिनिधौ निवृत्तव्यापारं शास्त्रं नान्यदुपादापयति तस्माच्च मुख्यसंग्रह इति प्राप्तेऽभिधीयते नोपादानपरं शास्त्रं येन तस्मिन् कृते निवृत्तव्यापारं स्यात् प्रधानानुष्ठानार्थं शास्त्रं तच्च प्रधानं सति मुख्ये प्रतिनिधिना क्रियमाणं विगुणं स्यात् अतः संस्कृतमपि कदरं हित्वा खदिरे एव पशुर्नियोज्य, एवं व्रीह्यादिषु द्रष्टव्यम् ॥

सू० नानर्थकत्वात् ॥ १८ ॥

कृते प्रतिनिधिना नियोजने यदा मुख्यमुपलब्धं तदा कृतमपि नियोजनं साद्गुण्याय पुनः खदिरे कर्तव्यमिति हि मन्वानस्योत्तरं कृते नियोजने लब्धोऽपि खदिरोऽनर्थक एव नियोजनार्थं हि तदुपादानं तच्च कृतं न

गुणानुरोधेनावर्त्तयितव्यम् अतो नादर्तव्यः खदिरः अथवा सूत्रद्वयमिदमेकाधिकरणं प्रवृत्तेऽपि प्रधाने मुख्योपादानमिति चेदार्थकत्वादिति ॥

सत्यपि संस्कारयोग्येऽमुख्ये मुख्यस्यैवोपादानाधिकरणम् ।

सू० द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ १९ ॥

यदा पुनस्तनुत्वात्तक्षणादिसंस्काराणामयोग्यः खदिरो नियोजनमात्रे योग्यः कदरश्च महान्संस्कारयोग्यस्तदा कस्योपादानमिति खदिरोपादाने संस्काराणां बहूनामत्यन्तहानिः, कदरे तु तेषामनुग्रहः खदिरशास्त्रमपि किञ्चिन्न्यूनं सम्पादितं भवति ततस्तस्योपादानं, नैतदेवं बहवोऽपि हि द्रव्यार्था एव संस्कारास्तेषां नान्यत्प्रयोजनं तद्वशेन ततो द्रव्यपरित्यागो न युज्यते । "ततः संस्कारहीनेऽपि खदिरे स्यान्नियोजनं तक्षणादीनि लुप्येरन् प्रधानेन विरोधतः" ॥

प्रयोजनायोग्यस्य मुख्यस्य सत्त्वेऽपि प्रतिनिध्यादानाधिकरणम् ।

सू० अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥ २० ॥

यदा पुनरपि[1] तनुत्वान्नियोजनस्याप्ययोग्या खदिरलता भवति तदाऽपि किं मुख्यत्वात्सैवोपादेया नेत्याह न हि तयोपात्तयाऽपि कश्चिदर्थः कार्याक्षमत्वात् अतस्तादृशे लब्धेऽपि तदनादरेण प्रतिनिधिरेव कदरः कार्यक्षम उपादातव्यः ॥

प्रधाननिर्वाहकत्वेऽङ्गनिर्वाहापर्याप्तस्यापि मुख्यस्योपादानाधिकरणम् ।

सू० विधिरप्येकदेशे स्यात् ॥ २१ ॥

दर्शपूर्णमासयोर्यदा स्वशफपरिमाणाय शेषकार्येभ्यश्चापर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्था व्रीहयोऽल्पा लभ्यन्ते तदा किं तैरेव पुरोडाशः कर्तव्य ? उत नीवारैः ? रिति संशयः तत्र "भूयसां शेषकार्याणां माभूदत्यन्तबाधनम् । एकस्य व्रीहिशास्त्रस्य किञ्चिद्बाधस्तु युज्यते" । नीवारोपादाने व्रीहिशास्त्रमेकं विफलं भवति व्रीह्युपादाने पुनर्भूयसामत्यन्तबाधः, न च व्रीहीणां प्रधानाङ्गत्वं येन द्रव्याङ्गभूतेभ्यः शेषकार्येभ्यः अङ्गगुणवि-

[1] यदा पुनरति तनुत्वादिति पा० ।

रोधन्यायेन बलीयस्त्वं स्यात् व्रीहीणामपि पुरोडाशप्रकृतितया तदङ्गत्वात्, उच्यते "व्रीहयोऽपि पुरोडाशभूता यागस्य साधनम् । तद्वैकल्ये प्रधानस्य गुणहानिः प्रसज्यते" व्रीह्यवयवा एव पुरोडाशभावापन्ना यागं साधयन्ति ते च नीवारोपादाने विकलाः स्युस्ततश्च प्रधानवैगुण्यं स्यात्, तस्मात्क्षेपकार्याण्यनादृत्य व्रीहिभिरेव पुरोडाशः कर्त्तव्यः ॥

इति शास्त्रदीपिकायां षष्ठाऽध्यायस्य तृतीयः पादः ॥ ३ ॥

(शेषमग्रे)

---

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

## श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

### तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page 299. Vol. XI.*)

मू० हेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति, यथाह—तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमय" इति, विज्ञानमयो हि जीवः न बुद्धिमात्रम्,

टी० "निखिलहेये' ति, प्रत्यनीकत्वमत्र निवर्तकत्वं विवक्षितं मुक्तस्यापि परमात्मप्रसादादेव हि हेयनिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिः, इह च स्वत एवापरिच्छिन्नानन्दत्वम् अवगम्यते, हेत्वश्रवणात् निरतिशयत्वश्रवणविरोधेन हेतुकल्पनायोगाच्च । न च मुक्तस्य स्वतोऽपरिच्छिन्नानन्दत्वम् अथ सोऽभयं गतो भवति एष ह्येवानन्दयाति रसं ह्येवायं लब्ध्वाऽऽनन्दीभवतीति परमात्मायत्तत्वश्रुतेः, न ह्येवं परमात्मानन्दस्यान्याधीनत्वं श्रुतं श्रोत्रियस्य चाकामहतस्येति मुक्तः पृथङ् निर्दिश्यते, श्रोत्रियः—श्रुतवेदान्तः, अकामहतः—उपासनानिवृत्तसमस्तक्लेशः, यश्च श्रोत्रियो वृजिनोऽकामहत इति

अत्यन्तरं मुक्तस्य जगद्व्यापाराभावाच्च परस्यैव स्वतो निरतिशयानन्दयोगः । एवं निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपतर्कानुगृहीत आनन्दमय-शब्दः परमात्मविषय इत्युक्तं भवति । न केवलं निरतिशयानन्दत्वरूपवस्तुसामर्थ्यानुगृहीतत्वाद्वैलक्षण्यमवगतं तत् कण्ठोक्तं चेत्याह "यथाहे"ति, ननु भेदव्यपदेशाद्दिति सूत्रस्य विषयवाक्यं ह्येदं तत्र व्याख्यास्यमानस्यास्य कथमिहोपादानमर्थोपपादनं च? उच्यते निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपस्तर्को ह्यानन्दमय-शब्दस्य परमात्मविषयत्वव्यवस्थापक उक्तः, अस्य तर्कस्य अनेन वाक्येन गर्भितत्वात्तत्सूचकत्वेनेदं वाक्यमत्रोपन्यस्तम्, अत्र ह्येतस्मादिति पदेन विज्ञानं यज्ञं तनुते कर्माणि "तनुते ऽपि चे"ति पूर्ववाक्यप्रकृतकर्मवश्यत्वादिवैशिष्ट्यं जीवस्याभिप्रेतं धर्मिवाचिनाऽपि मयडन्तेन विज्ञानमय-शब्देन सर्वोपाधिनिर्विमुक्तं स्वाभाविकं रूपमसङ्कुचितज्ञानमित्यवयवशक्त्या दर्शितम् । अनेन वाक्येन स्वाभावपरिशुद्धस्यापि जीवस्य कर्मकृतानन्तदुःखभाजनस्य निरतिशयानन्दासम्भवात् ततः परमात्मनो विलक्षणत्वं प्रतिपादितमित्यत्रेदम् उपात्तम्, अस्मिन्वाक्ये विज्ञानमय-शब्दस्य बुद्धिमात्रपरत्वं व्युदस्यति "विज्ञानमयो ही"ति, "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इति श्रुतिप्रसिद्धिद्योतको हि-शब्दः, शब्दस्वारस्यानुग्राहकप्रत्यक्षप्रसिद्धिद्योतको वा, अहं विजानामीति विज्ञातृत्वं ह्यात्मनः प्रतीयते ज्ञातृत्व[1]वाचिनो विज्ञानमय-शब्दस्य ज्ञायतेऽनेनेति व्युत्पत्त्याऽन्तःकरणपरत्वमस्वरसमित्यभिप्रयन्नाह "न बुद्धिमात्र"मिति, मात्रचा चाभिप्रेतं प्रत्ययवैयर्थ्यं विशदयति—

भू० मयट्प्रत्ययेन व्यतिरेकप्रतीतेः, प्राणमये त्वगत्या स्वार्थिक आश्रीयते, इह तु तद्वतो जीवस्य सम्भवान्नानर्थकत्वं न्याय्यं, बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्याधस्तात् प्राणमयादौ तु मयडर्थसम्भवोऽनन्तरमेव वक्ष्यते, कथं तर्हि

१ ज्ञप्तिवाचिन इति तु पा० ।

विज्ञानमयविषयश्लोके "विज्ञानं यज्ञं तनुत" इति केवलवि-ज्ञान-शब्दोपादानमुपपद्यते? ज्ञातुरेवात्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः, ज्ञानैक-निरूपणीयत्वाच्च ज्ञातुः स्वरूपस्य स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति गवादि-शब्दवत् "कृत्यल्युटोबहुल"मिति वा कर्त्तरि ल्युडाश्रीयते नन्द्यादित्वं वाऽऽश्रित्य नन्दिग्रहीत्यादिना कर्त्तरि ल्युः ॥

टी० "मयट् प्रत्ययेने"ति, प्रकरणवशात्स्वार्थिकत्वमाशङ्क्याह "प्राणमये त्वि"ति, अगत्या विकारप्राचुर्याद्यर्थान्तरासम्भवात् पक्षे तद्वैष-म्यमाह "इह त्विति", तद्रुत इति प्राचुर्यार्थत्वं सम्भवतीत्यर्थः । नात्र मय-डर्थस्सम्भवति ज्ञप्तिमात्रस्वरूपो ह्यात्मा, ज्ञातृत्वं हि काल्पनिकं मुक्ताव-स्थायां तदपि नास्तीत्याह "बद्ध इति" प्राणमयादौ स्वार्थिकत्वमभ्युप-गम्य परिहार उक्तः । अथ तदेव नास्तीत्याह "प्राणमयादाविति" विज्ञा-नमय-शब्दस्य तद्विषयश्लोकस्थविज्ञानशब्दसमानार्थत्वात् मयट् स्वार्थिक इत्यभिप्रायेण पृच्छति "कथं तर्ही"ति, उपपद्यते-न हि विज्ञानस्य विज्ञा-नान्तराश्रयत्वसम्भवइति भावः । विज्ञानमय-शब्दस्य ज्ञातरि प्रवृत्तौ निमित्तं दर्शयति "ज्ञातुरेवेति" एवकारश्शङ्कितविरोधाभावद्योतकः, अपि-शब्दः स्वरूपधर्मयोर्निमित्तसाधारण्यपरः, ज्ञातृशब्दतुल्यार्थतयाऽपि निर्वाहं दर्श-यति "ज्ञानैके"ति ततः किमित्यत्राह "स्वरूपेति" स्वरूपनिरूपणधर्मशब्दा अयुतसिद्धधर्मवाचिशब्दाः आकृतिनयविषयतया सम्प्रतिपन्नं शब्दनिदर्श-यति "गवादी"ति, एवं सूत्रन्यायाभ्यां द्विधा निर्वाह उक्तः । अथ शब्दमर्या-दया द्विधा निर्वाहमाह "कृत्ये"ति, प्रथमे पक्षे कर्तृपरत्वं कल्पनीयं, द्वितीये गणान्तर्भावः कल्पनीय इत्युभयत्राश्रयण-शब्दप्रयोगः, प्रत्यक्षानुगुण्यात् श्रुत्यन्तरप्रत्यभिज्ञानात् प्रथमश्रुतत्वात्प्रकृतिस्वारस्यात् प्रत्ययानर्थक्यानुप-पत्तेश्च प्रबलविज्ञानमय-शब्दानुरोधेन विज्ञान-शब्दो निर्वाह्य इति भावः । स्ववाक्यस्ययुक्त्यन्तरमाह-

भू० अत एव "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते, बुद्धिमात्रस्य हि न कर्तृत्वं सम्भवति, अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्प्राचीनेष्वन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते, अत एव चेतनमचेतनं च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मैर्विशेषैर्विभज्य निर्दिशद्वाक्यं "विज्ञानं चाविज्ञानं चेति विज्ञान-शब्देन तद्गुणं चेतनं वदति,

टी० "अत एवे"ति, अत एव-विज्ञानशब्दस्य चेतनपरत्वादेवेत्यर्थः यज्ञादिकर्तृत्वे श्रुते कथं विज्ञान-शब्दवाच्यस्य चेतनत्व? मित्यत्राह "बुद्धिमात्रस्ये"ति, बोद्धुरेव हि कर्तृत्वं प्रत्यक्षश्रुतिभिस्सूत्रैश्च सिद्धमिति भावः ननु सर्वेषां स्वव्यापारकर्तृत्वमस्ति सत्यं, नात्र तावन्मात्रं विवक्षितं, किं तु चेतनासाधारणः कर्तृत्वविशेषः प्रयत्नाद्याधारत्वलक्षणः यज्ञादिकर्तृत्वमिति ह्युक्तम्, अत्र विज्ञानशब्दास्वारस्यमुभयोरप्यविशिष्टं, यज्ञादिकर्तृत्वास्वारस्यं तु परस्याधिकम् । ननु अद्यतेऽत्ति च भूतानीत्यन्नमय इव प्राकरणिकमौपचारिककर्तृत्वमुपकरणत्वाविशेषात् बुद्धेरपि स्यादित्यत्राह "अचेतनेषु ही"-ति", बाधकाभावे सति उपचार एव दोषः, स च प्रकरणानुवृत्तश्चेत् सोढव्यः स्यात्, न च तदनुवृत्तिः प्राणमये मनोमये च तस्य विच्छिन्नत्वादित्यभिप्रायः। विज्ञान-शब्दस्य चेतनपरत्वे प्रयोगान्तरं दर्शयति 'अत एव चेतन"मिति, अत एव-विज्ञान-शब्दस्य चेतनपरत्वादेवेत्यर्थः । "चेतनमचेतनं चे"ति, न ह्यन्तःकरणानन्तःकरणविभागोऽत्र क्रियते किन्तु चिदचिद्विभाग एवेति भावः । कुत इत्यत्राह "निलनयत्वेति", कचिद्विकारविशेषस्यान्तःकरणस्य च "जीवभूतां महाबाहो ययेदं धार्यते जगदिति" प्रकारेण चेतनधार्यस्य विश्वनिलयनत्वायोगात् परेण तस्य सत्यत्वानभ्युपगमाच्चेति भावः । विज्ञान-शब्दस्य संवित्परत्वमप्ययुक्तम् अनुप्रविश्ये-

त्यनेनानुप्रवेशश्रवणात्, न हि संविद्रूप आत्मा आत्मान्तरव्याप्यतयाऽभिमतः परस्य विज्ञान-शब्दस्य चेतनपरत्वेन प्रयोगान्तरं दर्शयति-

सू० तथाऽन्तर्य्यामिब्राह्मणे "यो विज्ञाने तिष्ठन्नित्यस्य काण्वपाठगतस्य पर्य्यायस्य स्थाने "य आत्मनि तिष्ठन्निति पर्य्यायमधीयाना माध्यन्दिनाः काण्वपाठगतं विज्ञान-शब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति, विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायं, तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तरः परमात्माऽऽनन्दमयः। यद्यपि विज्ञानं यज्ञं तनुत इति श्लोकेन ज्ञानमात्रमेवोपादीयते न ज्ञाता, तथाऽप्यन्योऽन्तर आत्मा विज्ञानमय इति तद्वान् ज्ञातैवोपदिश्यते, यथा "अन्नाद्व प्रजाः प्रजायन्त" इत्यत्र श्लोके केवलान्नोपादानेऽपि "स वा एष पुरुषोऽन्नरसमय"इत्यत्र नान्नमात्रन्निर्दिष्टम् अपि तु तन्मयस्तद्विकारः

टी० "तथे"ति, विज्ञानस्यात्म-शब्दस्थाने श्रुतत्वादन्तःकरणपरत्वमनुपपन्नं, न चात्म-शब्दोऽप्यन्तःकरणपरः, विज्ञानशब्दवत्तस्यापि तत्रास्वरसत्वात्, यथा ज्ञायते ऽनेनेति व्युत्पत्त्याऽऽश्रयणं विज्ञान-शब्दस्य क्लिष्टं तद्वच्चेतनव्यतिरिक्तेष्वात्म-शब्दोऽपि ह्यस्वरसः अन्तःकरणपरत्वे विज्ञानात्म-शब्दयोर्द्वयोरप्यस्वारस्यञ्चेतनपरत्वे तुवि ज्ञान-शब्दमात्रास्वारस्यं न तु द्वयोरिति विशेषः। अत्रात्म-शब्दस्य परमात्मतया स्वाभिमतसंवित्परत्वञ्च परेण दुर्वचं, य आत्मनि तिष्ठन्नित्यत्रात्मान्तरस्थितिश्रवणात् आत्मान्तरव्याप्यस्य परमात्मत्वा[१]नुपपत्तेः, सर्वत्र प्रयुक्तस्य विज्ञान-शब्दस्य ल्युट्प्रत्ययान्तत्वे विशेष्यानुगुणलिङ्गत्वादात्मविषयस्य तस्य कथं नपुंसकत्वमित्यत्राह "विज्ञानमिति चे"ति, उपपादितमर्थं परमभाष्येन घटयति "तदेवमि"ति,

१ परमात्मत्वासिद्धेरिति तु पा० ।

तत् उक्तोपपत्तिभिरेवं विज्ञान-शब्दस्य चेतनपरत्वसिद्धिरित्यर्थः । श्लोकस्य-विज्ञान-शब्दस्य ज्ञातृपरत्वोपपादने च विज्ञानमय-शब्दस्य ज्ञातृपरत्वमुक्तम् । अथ श्लोकस्य ज्ञातृपरत्वाभावेऽपि विज्ञानमय-शब्दस्य ज्ञातृपरत्वमाह "यद्यपी"ति, मयड्रहितवाक्ये तदर्थः परित्यक्त इति तद्वत्यपि वाक्ये स न त्याज इत्यर्थः । तर्हि ब्राह्मणस्य श्लोकस्य च कथमैकार्थ्यं ? मित्यत्राह "यथे"ति, पूर्ववाक्योक्तार्थैकदेशविषयत्वात् श्लोकस्य तदैकार्थ्यं, यथाऽन्नमयविषयश्लोकस्येत्यर्थः, तन्मय इति श्रुतिवाक्यगतमयडर्थानुवादः । तद्विकार इति तद्व्याख्यानम् । उक्तस्यार्थस्य उत्सूत्रत्वशङ्कां परिहरन् व्याख्यास्यमानसूत्रोपयोगित्वञ्च दर्शयितुमाह–

मू० एतत्सर्वं हृदि निधाय सूत्रकारः स्वयमेव भेदव्यपदेशादित्यनन्तरमेव वदति, यदुक्तं जगत्कारणतया निर्दिष्टस्य अनेन जीवेनात्मना ऽनुप्रविश्य तत्त्वमसीति च जीवसामानाधिकरण्यनिर्देशाज्जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरूपं ब्रह्मविदाप्नोति परमिति प्रक्रान्तम्, असुखाद्व्यावृत्तत्वेनानन्दमय इत्युपदिश्यत इति, तदयुक्तं, जीवस्य चेतनत्वे सत्यपि तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजतेति स्वसङ्कल्पपूर्वकानन्तविचित्रसृष्टियोगानुपपत्तेः, शुद्धावस्थस्यापि हि तस्य सर्गादिजगद्व्यापारासम्भवो "जगद्व्यापारवर्ज्जं" "भोगमात्रसाम्यलिङ्गादि"त्यत्रोपपादयिष्यते, कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे "अनेन जीवेनात्मना तत्त्वमसीति सामानाधिकरण्यनिर्देशः कथमुपपद्यत ? इति चेत्

टी० "एतत्सर्वमि"ति, "तस्माद्वा एतस्माद्विज्ञानमयादि"ति, वाक्यं जीवपरयोर्भेदप्रतिपादकं वदन् सूत्रकारो विज्ञान-शब्दस्य ज्ञातृपरत्वं

तदुपपत्तिं च हृदि निदधदेव वदतीत्यर्थः । पूर्वपक्षे जीवसामानाधिकरण्यं शारीरत्वश्रवणं च हेतुद्वयमुक्तं, तत्र सामानाधिकरण्यस्य भेदावहत्वमुपपादयितुं यदुक्तमित्यादिनोपदिश्यत इत्यन्तेनानूदितम्पूर्वपक्षहेतुं दूषयति "तदयुक्तमि"ति, प्राकरणिकवाक्यैस्समानाधिकरणपदप्रातिपदिकांशेन च विरुद्धधर्माध्यासप्रतिपत्त्या भेदसिद्धेः, कालात्ययापदिष्टहेतुरिव परोक्तहेतुर्न साध्यसाधक इति दूषणं वक्तुं तस्य तत्पदोपस्थाप्यविशेषसमर्पकैः प्राकरणिकवाक्यैः पराभिमतैक्यविरुद्धभेदसिद्धिं दर्शयति "जीवस्ये"ति, प्रलयदशायामुपसंहृतकरणकलेवरस्य कर्मवश्यस्य सङ्कल्पमात्रेण विचित्रजगत्सर्गायोगात् बद्धस्य स्रष्टृत्वमनुपपन्नमित्यर्थः । शुद्धावस्थस्य सम्भवतीत्यत्राह "शुद्धे"ति, उक्तविपरीतं शङ्कते "कारणे"ति, समानविभक्त्यवगतैक्योपपत्तिः कथ?मित्यर्थः

मू० कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासंख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणो नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम्? अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत् कस्य भोः? किं वा हेयसंबन्धस्य? किं वा हेयप्रत्यनीककल्याणैकतानस्वरूपस्य? हेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धप्रतिभासो मिथ्यारूप इति चेत्

टी० "कथं वे"ति प्रातिपदिकावगतविशेषणान्वयः कथमित्यर्थः निरस्तेत्यादिपदैस्तत्पदप्रातिपदिकावगतविशेषणान्वयो दर्शितः "तदैक्षत" "असृजतेति" यथा सङ्कल्पं जगत्सृष्टिश्रवणेन सत्यसङ्कल्पत्वादिगुणानामतिरोहितत्वावगमात् तिरोधायकहेयसम्बन्धानर्हत्वमर्थसिद्धमित्यभिप्रायेण निरस्तनिखिलदोषगन्धत्वमुक्तं जगद्व्यापारौपयिकगुणान्तराणामन्यत्र कण्ठोक्तानां सद्विद्यायाङ्कृतिसामान्यनयादर्थसिद्धत्वमभिप्रेत्योक्तमनवधि-

केति, त्वंपदप्रातिपदिकावगतविशेषणान्वयो दर्शितो "नानाविधे" ति, जीव-स्वरूपत्वं जीवेन सह स्वरूपैक्यं जीवत्वमित्युक्ते जीवशरीरकत्वप्रतिपत्तिश्च सम्भवतीति तद्व्यावृत्त्यर्थं जीवस्वरूपत्वमित्युक्तं, साक्षात्पराभिमतं पदद्वयावगतविशेषणपरित्यागपक्षं दूषयिष्यन्सम्भावितं पक्षद्वयं शङ्कते "अन्यतरस्ये" ति, तत्त्वम्पदप्रतिपन्नविशेषणयोरन्यतरस्येत्यर्थः । विकल्पयति "कस्ये" ति," प्रत्यक्षसिद्धागमसिद्ध–त्वन्तत्पदावगतविशेषणजातं दुस्त्यजमिति भावः । सहेतुकमविरुद्धं परेण प्रथमशिरः परिग्रहं शङ्कते "हेयप्रत्यनीके" ति, हेयन्दुःखमिथ्याप्रतिभासः—भ्रान्तिज्ञानं स्वतश्शुद्धस्य पटस्य वैषम्योपाधिकमालिन्यवत् परमार्थतो निर्मलस्य स्फटिकस्याध्यासादर्शाणमवच्च ब्रह्मणो निर्दोषकल्याणगुणैकतानत्वं हेयसम्बन्धश्च स्वाभाविकौपाधिकविभागेन परमार्थापरमार्थविभागेन वा अविरुद्धम्, उभयोरपि स्वाभाविकत्वसत्यत्वाभ्युपगमे हि विरोध इति शङ्काऽभिप्रेता । दूषयति—

मू० विप्रतिषिद्धमिदमभिधीयते—ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वमनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वञ्चेति, अविद्याश्रयत्वं तत्कार्य्यदुःखप्रतिभासाश्रयत्वञ्चैव हि हेयसम्बन्धः, तत्सम्बन्धित्वन्तत्प्रत्यनीकत्वञ्च विरुद्धमेव, तथाऽपि तस्य मिथ्यात्वान्न विरोध इति मा वोचः, मिथ्याभूतमपि अपुरुषार्थ एव यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते । किं कुर्मो येनाश्रुतं 'श्रुतम्भवतीत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'सदेव सोम्येदमग्र आसीदित्यादिना निखिलजगदेककारणतां तदैक्षत बहु स्यामिति सत्यसङ्कल्पताञ्च ब्रह्मणः प्रतिपाद्य तस्यैव ब्रह्मणः तत्त्वमसीति सामा-

नाधिकरणेनानन्तदुःखाश्रयजीवैक्यं प्रतिपादितं तदन्यथाऽनुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीयमिति चेत् ।

टी० "विप्रतिसिद्ध"मिति, विप्रतिषेधमुपपादयति "अविद्याश्रयत्वमिति," न केवलं दुःखमेव हेयम् अपि तु तद्धेतुतत्प्रतिभासावपि हेयावित्यर्थः। ततः किमित्यत्राह "तत्सम्बन्धित्व" मिति, अविद्या तत्कार्यदुःखतत्प्रतिभासरूपहेयानामाश्रयत्वन्तत्प्रत्यनीकत्वञ्च विरुद्धमित्यर्थः। सम्बन्धमिथ्यात्वादविरोधं शङ्कते "तथाऽपी"ति, तथाऽपि—अविद्यादीनां हेयत्वेऽपि तस्याश्रयत्वरूपसम्बन्धस्येत्यर्थः। दूषयति "मिथ्याभूतमपी"ति, आश्रयत्वम्मिथ्याभूतमप्यपुरुषार्थः इत्यर्थः, अपुरुषार्थत्वमुपपादयति "यन्निरासायेति", ततः किमित्यत्राह "निरसनीये"ति, एतदुक्तम्भवति मिथ्यात्वङ्किमत्यन्ताभाव? उत ज्ञानबाध्यत्वं? प्रथमे निरसनीयाभावात्तन्निरासाय शास्त्रारम्भो न स्यात्, द्वितीये च मिथ्याभूतस्यापुरुषार्थत्वमस्ति न वा? न चेन्निरसनीयत्वाभावाच्छास्त्रारम्भवैयर्थ्यम्, अपुरुषार्थत्वमस्ति चेद्धेयप्रत्यनीकत्वव्याघातो दुष्परिहर इति तद्विरोधेऽपि हेयसम्बन्धस्य श्रुतिबलादभ्युपगन्तव्यत्वं शङ्कते "किं कुर्म" इति, परिहरति—

भू० अतोपपत्तयेऽप्यनुपपन्नं विरुद्धञ्च न कल्पनीयम्। अथ हेयसम्बन्ध एव पारमार्थिकः कल्याणैकतानता तु मिथ्याभूता हन्तैवन्तापचयाभिहतचेतनोज्जिजीविषया प्रवृत्तं शास्त्रन्तापचयाभिहतिरेव तस्य पारमार्थिकी कल्याणैकतानस्वभावस्तु भ्रान्तिकल्पित इति बोधयत्सम्यगुज्जीवयति। अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपातिरिक्तजीवत्वदुःखित्वादिकं सत्यसङ्कल्पत्वकल्याणगुणाकरत्वजगत्कारणत्वकल्याणगुणाद्यपि मिथ्याभूतमिति

कल्पनीयमिति चेत् अहो भवतां वाक्यार्थपर्य्यालोचनकुशलता? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सम्पत्स्यते, यथैकविज्ञानं परमार्थविषयं तथैव सर्वविज्ञानमपि यदि परमार्थविषयं तदन्तर्गतञ्च तदा तज्ज्ञानेन सर्वं विज्ञानमिति शक्यते वक्तुम् ।

टी० "श्रुतोपपत्तय" इति, अनुपपन्नतर्कपराहतं, विरुद्धं—प्रमाणविरुद्धम्, अहतपाप्मा विशोको विजिघत्सः एष हि सर्वेभ्यः पाप्मभ्य उदितः" अनश्नन्नन्यः अनीशया शोचति मुह्यमानः जुष्टं यदा पश्यत्यन्यमीशम् अस्मान्मायी सृजते तस्मिंश्चान्यो मायया सन्निरुद्धः तमक्रतुम्पश्यति अनातां देवतां प्रपद्ये इत्यादिश्रुतिविरोधः, एकस्मिन्हेयप्रत्यनीकत्वहेयास्पदत्वादिविरुद्धधर्म्मान्वयानुपपत्तिस्तर्कविरोधः । शिरोऽन्तरं शङ्कते "अथे"ति, दूषयति "हन्तैव"मिति, शास्त्रस्य प्रयोजनपर्यवसायित्वाभावादप्रामाण्यं प्रसज्जेदित्यर्थः । परस्य सिद्धान्तभूतमुभयपक्षाणां शङ्कते "अथैतदि"ति, परिहरति "अहो भवतामिति," अर्थनिष्कर्षोपयुक्तपदद्वयवाक्यैतत्प्रकरणप्रकरणान्तरोपनिषदन्तरप्रमाणान्तरतर्कसामानाधिकरण्यनिरूपणं पर्यालोचनं प्रथममेतत्प्रकरणोपक्रमविरोधं दर्शयति "एके"ति, सर्वसत्यत्वेऽपि कथं सेत्स्यती? त्यत्राह "यथैके"ति परमार्थविषयत्वमिथ्याविषयत्वे ज्ञानयोर्वैरूप्यं स्यादिति भावः । तदन्तर्गतञ्चेति परिषज्ज्ञानेन तद्गताः पुरुषा हि ज्ञाता भवन्ति न तु तद्वहिष्ठा इति भावः । ज्ञानस्य तदन्तर्गतत्वं तद्विषयान्तर्गतत्वम् । यद्वा तदन्तर्गतं सर्वमिति शेषः । परमार्थविषयन्तदन्तर्गतमित्युक्तमर्थं व्यतिरेकेणोपपादयति—

मू० न हि परमार्थशुक्तिज्ञानेन तदाश्रयमपरमार्थरजतं ज्ञातं भवति । अथोच्येतैकविज्ञानेन सर्वं विज्ञानप्रतिज्ञाया अयमर्थः निर्विशेषसन्मात्रमेव सत्यमन्यदसत्यमिति न तर्हि

येनाश्रुतं श्रुतं भवत्यमतम्मतमविज्ञातं विज्ञातमिति श्रूयेत येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत्प्रतिज्ञातः यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम् इति दृष्टान्तोऽपि न घटते तत्र मृत्पिण्डविज्ञानेन तद्विकारस्य ज्ञातता निदर्शिता, तत्रापि तद्विकारस्यासत्यताभिप्रेतेति चेत् मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय तथा सोम्येति प्रसिद्धवदुपन्यासो न युज्यते, न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राग्विकारजातस्यासत्यतामायाद्‌यत् तर्कानुगृहीतम् ।

टी० "न हि परमार्थे"ति, न हि शुक्तिरजतयोरैकधीविषयत्वमित्यर्थः, एकत्वसर्वत्वावस्थाभेदे सत्यपि धर्म्यैक्यादेकविज्ञानेन सर्वविज्ञानमुपपद्यते ज्ञातत्वसर्वत्वे ह्येकाश्रयवर्तिनी, न हि ज्ञातत्वविशिष्टाकारेण सर्वत्वं, सर्वात्मविशिष्टाकारेण ज्ञातत्वं वा, प्रागेवायं ज्ञात इत्यपि धर्मिमात्रस्यैव ज्ञातत्वञ्च त्वेतदवस्थाविशेषविशिष्टस्य देशकालादिभेदात्, न हि पूर्वमेतत्कालादिविशिष्टतया ज्ञातत्वं ब्रह्मैकमेव सत्यमिति ज्ञाते अन्यत् मिथ्यात्वेन ज्ञातं स्यादिति शङ्कते "अथोच्येते"ति, परिहरति "न तर्ही"ति", सर्वम्मिथ्यात्वेन ज्ञातं भवतीति वा सर्वं निवृत्तं भवतीति वा श्रूयेत इत्यर्थः एवञ्चार्थे सति मिथ्यात्वेनेति पदस्याध्याहारः, धर्म्यन्तरविषयतया ज्ञानशब्दयोर्वैरूप्यं स्वरसतः प्राप्तं हि ज्ञानैकरूप्यं तच्च भज्यते, ज्ञातं भवतीति ज्ञातृज्ञेयतदवच्छिन्नज्ञानाभावान्निवृत्तिलक्षणा चेति दोषत्रयमभिप्रेतं, श्रूयमाणान्वयप्रकारस्य परविरुद्धतामाह "येने"ति, एवं प्रतिज्ञावाक्यास्वारस्यमुक्तम् । अथ दृष्टान्तवाक्यानानुगुण्यत्वमाह "कारणतये"ति, अघटितत्वमुपपादयति "मृत्पिण्डे"ति, न हि शुक्तिज्ञानाद्रजतनिवृत्तिवत्मृ-

त्यिण्डज्ञानात् घटादिनिवृत्तिर्निदर्शितेति भावः । दृष्टान्ताविरोधं शङ्कते "तत्रापी"ति, प्रसिद्धवदुपन्यासानुपपत्त्या दूषयति "मृद्विकारस्ये"ति, मृद्विकारासत्यत्वमनुमानादिनाऽवगतमित्यत्राह "न चे"ति, ।

मू० अननुगृहीतं वा प्रमाणमुपलभामह इत्ययमर्थः "स्तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यत्र वक्ष्यते तथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वमित्यादिनाऽस्य जगतः सदात्मकता सृष्टेः पूर्वकाले नामरूपविभागप्रहाणं जगदुत्पत्तौ, सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वं सृष्टिकाले अहमेवानन्तस्थिरचरस्वरूपेण बहु स्यामित्यनन्यसाधारणः सङ्कल्पविशेषो यथासङ्कल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनानन्तत्तन्नामरूपव्याकरणं स्वव्यतिरिक्तसमस्तस्य स्वमूलत्वं स्वायतनत्वं स्वप्रवर्त्यत्वं स्वेनैव जीवनं स्वप्रतिष्ठितत्वमित्याद्यनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रतिपादिताः तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषतासर्वज्ञतासर्वेश्वरत्वसत्यकामत्वसत्यसङ्कल्पत्वसर्वानन्दकरणनिरतिशयानन्दयोगादयः सकलेतरप्रमाणाविषयाः सहस्रशः प्रतिपादिताः, एवमनन्यगोचरानन्तविशेषणविशिष्टप्रकृतब्रह्मपरामर्शिनच्छ-

ब्दस्यानिर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गतत्वेनोन्मत्तप्रलपितायेत ।

टी० "अननुगृहीतमिति", त्वाक्यबुद्धिवदापातप्रतीतिमात्रजनकं विवक्षितम् । उपरितनवाक्यापर्यालोचनां दर्शयति "तथे"ति, सदायतनत्वफलितं स्वप्रवृत्त्यत्वं स्वेनैव जीवनञ्च प्रशासनेन हि धारणं, धृत्या च तदुपजीवनम् निषेधाय गुणानुवाद इति शङ्काव्युदासायाह "शास्त्रे"ति, न हि विधेरनुवादित्वमिति भावः । श्रुत्यन्तरापर्यालोचनां दर्शयति "तत्सम्बन्धितया प्रकरणान्तरेष्वपीति", अपहतपाप्मत्वादिरूपा निरस्तनिखिलदोषतेत्यर्थः । अपूर्वं नालवणं गुणेषु तात्पर्यलिङ्गं दर्शयितुं सकलेतरप्रमाणाविषया इत्युक्तं, ततः किमित्याकाङ्क्षां पूरयन् पदद्वयपर्यालोचनाभावं दर्शयति "एवमि"ति, एवमनन्यगोचरानन्तविशेषणविशिष्टप्रकृतेत्यनेन प्राकरणिकवाक्यविरोधो विवक्षितः, प्रकृतब्रह्मपरामर्शितच्छब्दस्येत्यनेन यत्र क्वापि प्रकृताकारविशिष्टपरामर्शितया तच्छब्दश्रुत्युत्पत्तिविरोध उक्तः, त्वं पदस्यापि वस्तुमात्रपरत्वे मुख्यार्थप्रहाणमाह—

मू० त्वं—पदञ्च संसारित्वविशिष्टजीववाचि तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तः स्यात्, निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधानं स्वरूपनाशप्रसङ्गादिभिर्न सम्भवतीति पूर्वमेवोक्तम्, एवञ्च सति समानाधिकरणप्रवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया। अथोच्येत समानाधिकरणप्रवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्यासम्भवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनान्न लक्षणाप्रसङ्गः, यथा नीलमुत्पलमिति पदद्वयस्य विशेष्यैक्यप्रतिपादनपरत्वेन नीलत्वोत्पलत्वस्वरूपविशेषणद्वयन्न विवक्ष्यते तद्विवक्षायां हि नीलत्वविशिष्टकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्यते, तत्तु न सम्भवति । (शेषमग्रे)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

---

॥ श्रीगणेशाय नमः ॥

(*Continued from page* 306. VOL. XI.)

यथा च मम

मातर्भारति! वत्सवत्सलतया किंचाम नाचर्यते,
मित्राणि स्थिरताविवेकविनयाः! कार्यं सुहृत्प्रार्थितम्, ।
इत्यालोच्य विमुच्य मामिह मनागन्तर्हितं स्थीयतां,
यावत्त्वादृशविप्रयोगसुभगा लक्ष्मीर्मया लभ्यते ॥

पूर्ववाक्यगतं तु तदाक्षेपासमर्थतया तदुपादानमेवापेक्षते· यथात्रैव पूर्वार्द्धपादयोर्व्यत्यासे· ननु पूर्ववाक्यगतोऽप्ययं तदाक्षेपसमर्थो, यथा—"तच्चक्षुर्यदि, हारितं कुवलयै"रित्यादाविति चेत्,सत्यं, समर्थो, न तु सर्वत्र, किन्तु 'यदी'त्येतावद्रूपस्तत्पर्यायश्चे'दिति वा· उत्तरवाक्यगतस्तु सकलरूपस्तथेति विशेषः· यद्वा, यदित्यव्ययमिदं, न तु यच्छब्दः· तच्च भिन्नस्वभावमेव· एवं चेच्छब्दोऽपि । द्वयोरप्यनुपादानेऽप्यार्थो यत्तदोः सम्बन्धः· यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां,
जानन्ति ते किमपि, तान् प्रति नैष यत्नः, ।
उत्पत्स्यते ऽस्ति मम कोपि समानधर्मा,
कालो ह्ययं निरवधि,र्विपुला च पृथ्वी ॥

अत्र 'य उत्पत्स्यते, ऽस्ति वा मम समानधर्मा, तं प्रति यत्न' इति स्फुटमेवावगम्यते· यथाश्रुते हि न पूर्वार्द्धेन कथमप्यन्वयः· यत्तु प्रक्रान्तार्थकस्य तच्छब्दस्य यच्छब्दापेक्षैव नेति व्याख्यातम्, तद्व्यक्तिविवेकाद्यनालोचननिबन्धनं, प्रकाशकारानभिमतं च· यदयं "यच्छब्दोपादानं नापेक्षत' इत्याह, न तु 'यच्छब्दनापेक्षत' इत्यादि· तस्माद्यथाव्याख्यानमेवादरणीयम्· एवं च "योऽसौ सुभगे"—इत्यत्र तच्छब्दस्यानुपादानाद्वाक्षेपासम्भवाच्च यच्छब्दसाकाङ्क्षः· ननु स्यादेवैतद्, यदि तच्छब्दार्थको ऽयमदःशब्दो न स्यादिति चेत्, तत्किमदसस्तच्छब्दपर्यायता· तथा सति

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥

इत्यत्रादःशब्दस्तच्छब्दार्थमेवाभिदध्यात्,न त्विदमर्थम्· अथात्र वैयात्यादिष्टापत्तिमालम्बसे, तर्हि

करवालकरालदोः सहायो युधि योऽसौ विजयार्जनैकमल्लः, (क) ।
यदि भूपतिना स तत्र कार्य्ये विनियुज्येत, ततः कृतं कृतं स्यात् ॥

इत्यत्र 'स' इति पुनरुक्तं स्यात्, अदःशब्देन तदर्थाभिधानात्· नन्वर्थान्तरत्वमस्य न निषेधामः, किन्त्वनुजानीमस्तदर्थकत्वम्· कथमन्यथा

यो ऽविकल्पमिदमर्थमण्डलं पश्यतीश! निखिलं भवद्वपुः, ।
आत्मपक्षपरिपूरिते जगत्यऽस्य नित्यसुखिनः कुतो भयम् ॥

इत्यत्रे'दं'शब्दस्यापि तच्छब्दार्थकता, इदमदसोः समानशीलत्वादिति चेत्,सत्यमात्थ,परन्तु यच्छब्दाद्व्यवहितानन्तरवर्त्ती समानाधिकरणस्तच्छब्दोपि प्रसिद्धिमात्रनिरूढः, किं पुनरिदमादिः· यथा—

यत्तदूर्जितमत्युग्रं क्षात्त्रं तेजो ऽस्य भूपतेः, ।
दीव्यता ऽक्षैस्तदा ऽनेन नूनं तदपि हारितम् ॥

इत्यादौ· तस्मा"द्यो ऽविकल्प"मित्यत्रैव व्यवधानेनादःप्रयोगो युक्तो, नत्वव्यवधानेन· कथं तर्हि

(क) 'विजयार्जुनैकमल्ल' इति महेश्वरन्यायालङ्कारादयः ।

न केवलं यो महतो ऽपभाषते,
शृणोति तस्मादपि यः, स पापभाक् ॥

इत्यत्र तच्छब्दो न प्रसिद्धार्थं इति चेत्, 'यः'–इत्यत्र विच्छेदेन व्यवधानात्· "योऽसा"वित्यत्र तु सन्धिना यच्छब्दनिविष्टैकदेशत्वेनाविच्छेदात्· ननु भवेदेवं, यदि यत्तदोर्नित्याभिसम्बन्धः स्यात्· स एव तु नास्ति-कथमन्यथा "यद्यत्पापं, प्रतिजहि जगन्नाथ! नमस्य तन्मे" इत्यत्रैकयत्परामृष्टस्यैकेन तदा परामर्शेऽपि द्वितीययच्छब्देन निराकाङ्क्षा प्रतीतिः, द्वितीयतत्पदाभावात्· नच तत्राक्षेपोऽपि, यदः पूर्ववाक्यगतत्वादिति मैवम्, न खल्वेकेनैव रूपेण यत्तद्भ्यां परामर्शनियम इति ब्रूमः, किन्त्वेकस्य ताभ्यां परामर्श इति· तथाचात्रापि पापात्मकं वस्तु येन केन चिद्विशेषद्वयेन, यत्पदाभ्यां परामृष्टं, तत्पदेन तु पापत्वेनैकेनेति को विरोधः· वस्तुतस्तु, यद्यदिति न पदद्वयं किन्तु, "नित्यवीप्सयो"रितिसूत्रेण वीप्सायां यदो द्वित्वापवोयमादेशः· तथाचादेशिनैकेन यत्पदेन तत्पदेन च द्वाभ्यामेकेनैव रूपेण पापपरामर्शः· आदेशस्तु साकल्येन सम्बन्धपरताग्राहक इति यत्पदीयेनैव तेन तदुपपत्तौ न तत्पदेऽपि·यत्र तु तत्पदेऽपि वीप्सा, न तत्र यत्पदेप्यादेशः, किन्तूभाभ्यां रूपद्वयेन सर्वोपस्थापनमिति सारम् । असमासवत्समासेष्वनेकपदगतत्वेनास्य वाक्यदोषत्वम्· यथा–

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा, स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा, ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्य्यानुजो ऽसौ गुरु,·
माता तातकलत्रमित्य,ऽनुचितं मन्ये विधात्रा कृतम् ॥

अत्र कलत्रे तातसम्बन्धस्या,नुजे चाऽऽर्य्यसम्बन्धस्योत्कर्षाधायकत्वेन विधित्सितयोः समासाद्गुणीभावः· वाक्यदोषत्वं तु यथा, तदुक्तम्· सोयं षष्ठीतत्पुरुषः समासः । एवं समासान्तरेपि विरुद्धमतिकृत्· यथा–

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥

अत्र 'क्षान्तिमन्तो,नुरक्तभुवः, कल्याणालिङ्गिता, युद्धक्षपणेन, दुखाभाववन्तः शेरत' इति विवक्षिते 'भूमिपतिता,रुधिरस्थानानि, शिवाभिरालिङ्गिताः, शरीरक्षपणेन, गतप्राणेन्द्रियाः शेरत' इति विरुद्धं प्रतीयते· अमतपरार्थे विरुद्धोऽप्यर्थो विवक्षित इति ततो भेदः· नच प्रकाशितविरुद्धसङ्करः, तत्रार्थस्या,त्र तु शब्दस्य व्यञ्जकतया विशेषात् ॥

पदैकदेशे यथासम्भवमुदाहरणानि ।–तत्र श्रुतिकटु यथा–

अलमतिचपलत्वात्स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात् सङ्गमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम,-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥

एकत्र पदे बहुवर्णकटुत्वे पददोषत्वं, पदस्यैव कटुत्वप्रतीतेः· एकस्यैव तथात्वे पदैकदेशदोषत्वम्· नचैवं "सौध्यैष्ट्रि"त्यादौ प्रत्येकं पददोषत्वभावात् कथं वाक्यदोषतेति वाच्यम्, नहि नानापददुष्टत्वे वाक्यदोषता, किन्तु नानापदवृत्तितामात्रेण· सा च पदावच्छेदेन, तदेकदेशावच्छेदेन वेति को विशेषः । 'त्वा'दित्यस्य कटुत्वासम्मतौ

तद्गच्छ सिद्ध्यै, कुरु देवकार्य्य,मर्थोयमर्थान्तरलभ्य एव, ।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥

अत्र 'सिद्ध्यै' लब्ध्यै इत्युदाहार्य्यम् ॥ (१)

निहतार्थं यथा–

यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥

अत्र 'मता'शब्दः· स हि क्षीबायां सुप्रसिद्धः ॥ (२)

निरर्थकं यथा–

आदावञ्जनपङ्क(क)लिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्प्पद्विरहानलेन च ततः संतापितानां दृशाम् ।

(क) पङ्कस्थाने पुञ्जेति क्वचित्पठ्यते, न तु तद्युक्तम् ।

संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म्म कुरुते कामं कुरङ्गेक्षणा ॥

अत्र 'दृशा'मिति बहुवचनमविवक्षितार्थमेव वृत्तपूरणायोपात्तम्, एकस्याः कुरङ्गेक्षणाया दृग्बहुत्वाभावात्· "अलसवलिते"त्यादिवक्ष्यापारभेदाद्बहुत्वमिति चेच, तच्चेक्षणैरितिवदत्र तदनुपादानात्· नैव भावसाधनतया दृक्शब्द एव व्यापारे वर्त्तते, "अञ्जनलेपनादिविशेषणानन्वयप्रसङ्गात्·. एवं 'कुरुते' इत्यात्मनेपदमपि निरर्थकम्, प्रधानक्रियाफलसम्बन्धस्य कर्त्तर्य्यऽविवक्षणात्· ननु "आशिषि नाथ"इतिवत् कर्त्त्रभिप्रेतक्रियाफलत्वाभाव आत्मनेपदमसाध्वेव, नतु निरर्थकम्· "नाथत" इत्यपि वा निरर्थकमेवा, ऽविशेषात्· एवं द्वयोरर्थयोर्बहुवचनमसाध्वेवेति· उच्यते, "आशिषि नाथ"इत्यनेनाशिष्यात्मनेपदं नियमयता ऽनाशिषि तदभावो बोध्यते· तस्माद्याचने तस्य युक्तमसाधुत्वम्· "स्वरितञितः कर्त्त्रभिप्राये क्रियाफल"इत्यनेन तु कर्त्त्रभिप्रेतक्रियाफलविवक्षायां तन्नियमयता पराभिसम्बन्धविवक्षायां तन्निषेधः प्रतिपाद्यत इति तत्रैवासाधुत्वं, न तु कर्त्त्रभिप्रेतक्रियाफलत्वाभावमात्रे· अत एव "कर्त्त्रभिप्राय इति किम्· पराभिप्रेते क्रियाफले मा भूदि"त्यवोचन्, नतु 'कर्त्त्रभिप्रेतक्रियाफलत्वाभाव' इति· नचात्र पराभिप्रेतक्रियाफलं द्योत्यम्, किन्तु कर्त्त्रभिप्रेतक्रियाफलत्वाऽद्योतनमात्रमिति नासाधुत्वम्· एवं "बहुषु बहुवचन"मित्येतत्सूत्रं बहुषु बहुवचनं नियमयद् द्व्येकयो(क)स्तन्निषेधति, नतु बहुत्वविवक्षामात्रे· 'दृशा'मित्यत्र च न द्वित्वैकत्वे विवक्षिते, येना ऽसाधुत्वं स्यात्, किन्तु बहुत्वाविवक्षामात्रमित्यनर्थकतैवेति युक्तमुत्पश्यामः· एतेना 'वयवाभिप्रायेण निरर्थकत्वं, समुदायाभिप्रायेणत्वऽसाधुत्वमेवे"ति चण्डीदासमतमनादेयम्· ॥ (३)

अवाचकं यथा—

चापाचार्य्यस्त्रिपुरविजयी, कार्त्तिकेयो विजेयः,
शस्त्रव्यस्तः सदनमुदधि,र्भूरियं हन्तकारः; ।

(क) द्व्येकयोरुपस्थितयोरित्येकत्र पठ्यते ।

अस्त्येवैत,त्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः ॥

अत्र 'विजेय' इति यत्प्रत्ययः कृत्प्रत्ययार्थे प्रयुक्त,स्तत्र चाऽवाचकः ॥ (४)

अश्लीलेषु व्रीडादायि यथा—

अतिपेलवमतिपरिमितवर्णं लघुतर[क]मुदाहरति शठः, ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥

अत्र 'पेले'ति पेलवशब्दैकदेशो ऽयं गुह्याङ्गस्मारकतया व्रीडादायी। जुगुप्सादायि यथा—

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन, ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥

अत्र 'पूये'ति पूयव्यञ्जकतया जुगुप्सादायि । अमङ्गल्यं यथा—

विनयप्रणयैककेतनं सततं यो ऽभवदङ्ग! तादृशः,[ख] ।
कथमेष स तद्वदीक्ष्यतां [ग] तदभिप्रेतपदं समागतः ॥

अत्र 'प्रेते'तिभागो ऽमङ्गल्य[घ]स्मारकः ॥ (५)

सन्दिग्धं यथा—

कस्मिन् कर्म्मणि सामर्थ्यमस्य नोत्पद्यतेतराम्, ।
अयं साधुचर,स्तस्माद्ञ्जलिर्बध्यतामिह ॥

अत्र 'चर'भागो "भूतपूर्वे चर"डिति चरट्प्रत्ययो वा, "चरेष्ट" इति टान्तश्चरधातुर्वेति सन्देहा'त्पूर्वं साधुरि'ति वा, 'साधुषु चरती'ति वा ऽर्थ इति सन्देहः ॥ (६)

---

(क) दृढतरमिति क्वचित्कस्तु नानुरूपः ।
(ख) योऽभवदङ्गताजुष इत्यंकस्मिन्भवति· स च सर्वथाऽयुक्तः ।
(ग) 'तत्त्वदीक्षता'मिति पाठ,स्तत्त्वज्ञानित्वमिति तदर्थश्च माहेश्वरीसंमतः ।
(घ) मांङ्गल्येति पु· ।

नेयार्थं यथा–

किमुच्यते ऽस्य भूपालमौलिमालामहामणेः, ।
सुदुर्लभं वचोवाणैस्तेजो यस्य विभाव्यते ॥

अत्र 'वचोवाण'शब्दो गीर्बाणे विवक्षितः। न च तत्र समर्थः, गी,र्बाणशब्दयोरिव समस्तयोस्तदर्थे रूढेः, नतु तत्पर्यायान्तराणाम्। अत एव गीःशरादिशब्दोपि तत्रः ऽसमर्थः, पर्यायपरिवृत्त्यसहत्वात्। तस्माद्वचःशब्देन गीःशब्दो लक्ष्यते। न च तत्र रूढिः प्रयोजनं वेति नेयार्थता। एवं जलध्यादिशब्देपि पदपरिवर्त्तनं द्रष्टव्यम्, परंतु तत्रोत्तरपदमेव परिवृत्त्यसहम्, वड़वानलादौ तु पूर्वपदमेवेति तदन्यपदपरिवर्त्तनेप्यदोषः। नन्व ऽसमर्थत्वं विवक्षितार्थप्रतीतिसामर्थ्यविरह एवोच्यताम्। स च प्रसिद्ध्यभावात्समयाभावाद्वेत्यऽप्रयुक्ताऽवाचकनिहतार्थाद्वयोऽप्यसमर्थभेदा एव भवितुमर्हन्तीति किमिति पृथङ्निर्दिष्टा इति चेत्, तथ्यमात्थ, (क)परंत्वन्यैरलङ्कारकारैर्भेदेन दर्शिता इति तथैव निर्दिष्टाः। किञ्च, वैजात्याभावेपि शिष्यबुद्धिवैशद्याय तत्प्रभेदा वक्तव्या एवेत्यतोपि विभज्योक्ता इति ॥ ५२ ॥

अथ वाक्यमात्रदोषलक्षणमाह–

प्रतिकूलवर्ण,मुपहतलुप्तविसर्गं, विसन्धि, हतवृत्तम्, ।
न्यूना,धिक,कथितपदं,पतत्प्रकर्षं, समाप्तपुनरात्तम्, ॥५३॥
अर्द्धान्तरैकवाचक,मभवन्मतयोग,मनभिहितवाच्यम्, ।
अपदस्थपदसमासं,सङ्कीर्णं,गर्भितं,प्रसिद्धिहतम्(ख), ॥५४॥
भग्नप्रक्रम,मक्रम,ममतपरार्थं च, वाक्यमेव तथा ।

अत्रापि रूढियोगाभ्यामर्थद्वयोपस्थितौ लक्ष्यलक्षणवाक्यत्वोपपत्तिः। वाक्यमेव तथा, प्रतिकूलवर्णत्वादिकं वाक्य एव दोषो, न तु पदादि-

(क) सत्यमात्थेति पुस्तकान्तरम् ।
(ख) प्रसिद्धिहतमिति प्रायः प्रकाशेषूपलभ्यते ।

प्यपीत्यर्थः· तत्र प्रतिकूलवर्णं विवक्षितरसादेः प्रतिकूला अननुगुणा वर्णा यत्र तत्· अनुगुणत्वं वर्णानां गुणविवेचनावसरे वक्ष्यते । शृङ्गारे यथा—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि! माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर ॥

अत्र टवर्गः शृङ्गारप्रतिकूलः, "अटवर्गा" इत्यादिना प्रतिषेधात् । रौद्रे यथा—

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः,
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहात् । (क)
तान्येवाऽहितहेति(ख)घस्मरगुरूण्यऽस्त्राणि भास्वन्ति मे,
यद्रामेण कृतं, तदेव (ग)कुरुते द्रोणात्मजः (घ)क्रोधनः ॥

अत्र मृदवो वर्णाः प्रतिकूलाः, ओजस्विनि रसे विकटवर्णत्वस्य दीर्घसमासत्वस्य चानुगुणत्वात्· यथा—

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलं त्वत्कण्ठपीठातिथि,-(ङ)
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥

इत्यत्र· यत्र तु न क्रोध,स्तत्र चतुर्थे पादे शिथिल एव प्रयोगः· अपदस्यापि रौद्रादिविरोधितयास्य न श्रुतिकटुभेदत्वम्· नच श्रुतिकटोरेव तद्विशेषत्वं, तस्य सकृत्प्रयोगेऽप्यात्मलाभात्· अस्य तु वाक्यव्यापित्वेन· अत एवास्य न पददोषत्व,मेकत्र तादृशवर्णप्रयोगस्य रसाविरोधित्वात्· दोषत्वबीजमप्यस्य रसव्यक्तिविरोधित्वमेव·(च) अत एव नित्यदोषोऽयम्· नीरसादावात्मलाभाभावात्· श्रुतिकटोस्तु नीरसादावात्मलाभाद-

(क) केशग्रहइति पाठे तु सामानाधिकरण्यं हेतुहेतुमतोरभेदोपचारात् ।
(ख) हेतिस्थाने शस्त्रेति भवति क्वचित् ।
(ग) तदद्येति पुस्तकान्तरम् ।
(घ) द्रोणायनिरितिप्रायः कोशस्थः पाठः ।
(ङ) 'भवत्वशिथिलस्त्व'दित्यादिः क्वचित् ।
(च) रसविरोधित्वमेवेति पा· ।

नित्यत्वमिति महान् भेदः· इदं तु चिन्त्यं–रौद्रादिरसे श्लोकार्द्धपर्य्यन्तं समासेनैकपदे मृदुवर्णप्राये ऽस्य कथं पददोषत्वमिति· अथान्यसाहित्येन दोषत्वं वाक्यदोषत्वं, निरपेक्षदोषत्वं· तु पददोषत्वमिति चेत्, न, एवं क्लि· क्लिष्टादावपि पददोषत्वं न स्यादिति· किं बहुना, यादृशविवक्षया क्लिष्टत्वं पददोषत्वेनोक्तं, तयेदमपि तथेति न्यूनः पददोषविभागः[क] ॥ (१)

'उपहतलुप्तविसर्ग'मिति· उपहतविसर्गं, लुप्तविसर्गं चेति द्वयमित्यर्थः· उपहता ओत्वं प्राप्ता लुप्ता वा विसर्गा यत्रेति बहुवचनान्तो विग्रहः· एकविसर्गस्य तथात्वेऽवैरस्यात्· उपघातश्च ओत्वप्राप्तिः· उपघातान्तरस्य दोषान्तरानुप्रवेशात्· तेन नैरन्तर्य्येणौत्वप्राप्तबहुविसर्गत्वं, तथा लुप्तबहुविसर्गत्वं च लक्षणे· द्वयोरेकमुदाहरणं यथा–

धीरो विनीतो निपुणो वराकारो नृपो ऽत्र सः, ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥

दूषकताबीजं बन्धपारुष्येण सहृदयोद्वेगः· अत एवायं नित्यः· अत्रापीदं चिन्त्यं–'भूयोमहीयोतियशोविभूषित'इत्यादौ कथञ्च पददोषत्वमस्येति ॥ (२, ३)

विसन्धि, विरूपः सन्धिः सन्निकर्षो यत्र· वैरूप्यं च त्रिधा, विश्लेषो, ऽश्लीलत्वं कष्टत्वं च· विश्लेषस्तु प्राप्तस्य श्लेषस्य संहिताकार्य्यस्याभावः· "सैवान्यत्र विभाषये"ति[ख]वचनादैच्छिकः आनुशासनिकश्च·तत्रान्त्यः प्रगृह्यादित्वात्,"पूर्वत्रासिद्ध"मित्यादिना विसर्गादिलोपासिद्धेर्वा· तेष्वाद्यः सकृदपि वर्त्तमानो दोषाय, इच्छानिबन्धत्वेना ऽशक्तिसूचकतया [ग]प्रथमत एव सहृदयोद्वेजकत्वात्· अन्त्यो त्वसकृत्, आनुशासनिकत्वेना ऽशक्त्यनुन्नायकतया बन्धपारुष्येणैवहि तस्य दोषत्वम्, तच्चासकृत्प्रयोग एव· तत्रैरूप्यवतामनुगमश्चान्यतमत्वेना,ऽश्लीलव,चानार्थत्वमेव वा· एवं त्रिप्रकारकेपि विश्लेष आद्यप्रकारद्वयं यथा–

(क) पददोषत्वविभाग इत्येकैतमपुस्तकस्यपाठस्तु हासास्पदम् ।
(ख) सचान्यत्र तु विभाषयेतोति पुस्तकान्तरे, नार्थे विशेषः ।
(ग) अशक्तिमूलकतयेति पाठान्तरम् ।

राजन्! विभान्ति भवतश्चरितानि तानि,
इन्दोर्द्युतिं दधति यानि रसातले ऽन्तः, ।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसम्पदमेत्य भातः ॥

अन्त्यो यथा–

तत उदित उदारहारहारिद्युतिरुच्चै रुदयाचलादिवेन्दुः ।
निजवंश उदात्त(क)कान्तकान्तिर्भुवि मुक्तामणिवच्चकास्त्यनर्घ्यः ॥

दूषकताबीजमस्योक्तम् । अश्लीलत्वं यथा–

वेगादुड्डीय गगने चलडामरचेष्टितः, ।
अयमुत्पतते पत्री, ततोऽत्रैव रुचिं कुरु ॥

अत्र "चिङ्कु"इत्यऽश्लीलम् ॥

कष्टत्वं यथा–

उर्व्यसावत्र तर्व्वाली मर्व्वन्ते चार्व्ववस्थितिः, ।
नात्रर्जु युज्यते गन्तुं (ख)शिरो नमय तन्मनाक् ॥

अत्र दूषकताबीजं पददोषप्रस्तावे उक्तमिति· अत्रापीदं चिन्त्यं– समासेनैकपदत्वे ऽश्लीलकष्टत्वानिबन्धनविश्लेषाणामश्लीलकष्टासाधुम· ध्यप्रवेशे ऽपि लोपासिद्धिनिबन्धनविश्लेषस्य पदेपि सद्भावात् कथमस्य न पददोषत्वम्· यथा "भूयउच्चैर्म्महउदात्तयशउदार"इति· वयं तु तर्क्क· यामः,–सकलप्रभेदभिन्ना एव दोषा दूषणान्तरासङ्कीर्णा वाक्य एवेति वाक्यमेव तथेति नियमार्थः· अत एव न पददोषविभागन्यूनतापि· तादृश· स्यैव पदवृत्तेस्तत्र विभागादिति ॥ (४)

(शेषमग्रे)

(क) उदारेति पुनः क्वचित् ।

(ख) नात्रर्जुः चमत इत्येकपुस्तकस्थपाठे 'कश्चिज्जन' इति कर्तृपदमध्याहृय· ताम्· नात्रर्जु युज्यते गन्तुमिति महेश्वरादिसम्मतः प्रकाशस्थः पाठः ।

# खण्डनखण्डखाद्यम् ।

(*Continued from page* 336. Vol. XI.)

टी० ॥ विशेषणासत्त्वेपि विशेष्यस्यान्योन्याभावमात्रस्य सत्त्वाद्यदि लक्षणगमनमुपपादितं तदा विशेष्यमात्रवति प्रत्यक्षाभासादावपि लक्षणमतिव्यापकमित्याह–। [a] "विशिष्टं तावदि"ति । ननूक्तं प्रतियोग्येव स्वज्ञानद्वारा व्यावृत्तबुद्धिं जनयद्विशेषणमित्यत आह–। [b] "स च यदी"ति । तर्हि विशेषणस्य प्रतियोगिनोन्योन्याभावे(1) देशतः, संसर्गाभावे च कालतोप्यभावाद्विशिष्टस्याऽन्योन्याभावस्याभावः प्रसक्त इत्यन्योन्याभावमात्रमवशिष्यते तत्रातिप्रसक्तिरुक्तैवेत्यर्थः ननु यदि प्रत्यक्षाभासादिकालात्ययापदिष्टयोरेक एवान्योन्याभावो भवेत्तदा प्रत्यक्षाभासान्योन्याभाववत्त्वं प्रत्यक्षाभासेपि स्यादित्यतिप्रसङ्गो भवेत्किं नाम प्रतियोगिभेदादन्योन्याभावभेदोपीत्यत आह–। [c] "नचे"ति ॥

मू० [a] उभयं ह्यन्योन्याभावस्यैकात्मतया प्रतियोगि एकात्मतायाश्च भेदविरोध एव ततश्च येन रूपेण प्रतियोगित्वं तेन रूपेण भेदानवकाशाद्भिन्नप्रतियोगिता कुतोऽन्योन्याभावस्य येन रूपेण भिन्नता तेनान्योन्याभावं प्रति प्रतियोगिता नास्ति वस्तुनोः [b] * ननु वस्तुतस्तयोरेकत्वाभावात्कथमेकतया प्रतियोगित्वमन्योन्याभावं प्रति घटते वस्तुनोः * [c] यथा वस्तुनो भूतलसंसर्गाभावेपि घटस्य भूतलसंस्रष्टतया भूतलसंसर्गाभावं प्रति,

टी० ॥ अभावद्वैतं न सिद्धान्ताविरोधि नवा युक्तमित्युभयमुपपा-

(१) अन्योन्याभावे (गृह्यमाणे) विशेषणस्य प्रतियोगिनो देशतोऽभावादित्यन्वयः । अयमर्थः–यो देशो घटीयान्योन्याभावेनोपष्टब्धः स कदाचिदपि तादात्म्येन घटात्मकप्रतियोग्युपष्टब्धो न भवतीति । अन्योन्याभावस्य कालिकाव्याप्यवृत्तित्वाभावात् 'कालतोऽभावात्'–इति नोक्तम् ।

दयति–। [a]"उभय"मिति । घटपटतादात्म्यं प्रतियोगि वाच्यमन्योन्याभावे संसर्गाभावभेदकं तच्चात्यन्तासदि(१)ति तदात्मीभूतौ घटपटावेव प्रतियोगिनौ तथाच तयोरैक्यात्क्क प्रतियोगिभेदो येनाभावभेदः । स्यात् किञ्च घटपटयोर्भेदोऽन्योन्याभावः सच व्यासज्यवृत्तिरेक एव वाच्यो भेदे प्रमाणाभावात् घटपटौ भिन्नावित्येकस्यैव भेदस्यान्योन्याभावात्मन उभयविशेषणतया भानसम्भवे तद्भेदकल्पनाया प्रमाणाभाव इति भावः ननु घटपटयोर्यद्यैक्यं स्यात्तदा प्रतियोगिभेदाभावादभावभेदो न स्यात्तदेव त्वसम्भवीत्याह–। [b]"नन्वि"ति । यथा घटभूतलयोरसन्नपि संसर्गः प्रतियोगितावच्छेदकस्तथा तादात्म्यमपि घटपटयोस्तथा स्यात्तथा च तदात्म्यावच्छिन्नौ तावभिन्नाविति कथं प्रतियोगिभेद इति दृष्टान्तेनोपपादयति–। [c]"यथे"ति ॥

मू० [a]तत्र यथान्यद् भूतल(२)संसृष्टतया दृष्टं तथाचापि तावेव [b]सप्रकारभेदौ तदात्मानौ दृष्टौ [c]सोयं त्वद्दर्शनाभिप्रायो नास्माकं निर्वाह्य इत्यास्तां विस्तरः [d]अपि च घटपटयोः स्वरूपभेदेन वैधर्म्यभेदेन चोभयकोटीकृतयोरन्योन्याभावनिरूपणं भवति अत्र तु प्रत्यक्षाभासादेः प्रत्यक्षाभासत्वादिनैककोटितास्तु नाम यत्तु प्रत्यक्षाभासादिव्यतिरिक्ततया प्रतिपत्तव्यं तस्य केन रूपेणैककोटी करणं न तावत् प्रतिव्यक्तिभिन्नेन स्वरूपेण तेषामनन्ततया बुद्धिस्थीकर्तुमशक्यत्वात् [e]नापि यद्रूपतयोपात्तं विशेष्यं प्रत्यक्षाभासादिव्यतिरिक्तत्वेन विशेषणेन विशेषणीयं त-

(१) घटपटस्वरूपातिरेकेण घटपटतादात्म्यमसदित्यर्थः ।

(२) सम्बन्धितयेत्यर्थः ।

द्रूपक्रोडीकृततयै(१)वान्योन्याभावनिरूपणमिति युक्तं तस्य रूपस्य प्रत्यक्षाभासादिसङ्ग्राहकतया कोटिद्वैतभङ्गापादकत्वेनान्योन्याभावनिरूपणविरोधात्तस्मात्स्वरूपभेदं वैधर्म्यभेदं वा कोटिद्वयव्यवस्थापकमप्रतिसन्धायान्योन्याभावनिरूपणमशक्यमितिस्थिते स्वरूपभेदपक्षस्येह

टी० ॥ ननु तत्र घटान्तरं स एव वा घटो भूतलसंसृष्टो दृष्टः प्रकृते तु घटपटौ न कदापि तदात्मानाविति वैषम्यमत आह–। [a]"तत्रे"ति ॥ [b]"सप्रकारभेदावि"ति । घटपटयोरपि प्रमेयत्वसत्त्वद्रव्यत्वप्रकारभेदसहितस्त्वयापि तादात्म्यमभ्युपेयं नहि तत्तत्प्रकारकृतोप्यनयोर्भेदस्तथा-ननु भवादित्यर्थः ननु तवानिर्वचनीयवादिनः कथमयं निरुक्तिग्रह इत्यत आह–। [c]"सोयमि"ति । भवतु प्रतियोगिभेदादन्योन्याभावभेदस्तथापि प्रकृते स दुर्ग्रह इत्याह–। [d]"अपि चे"ति । यथा प्रत्यक्षाभासत्वं प्रतियोगितावच्छेदकं तथा सकलकालात्ययापदिष्टमात्रनिष्ठमधिकरणतावच्छेदकं किञ्चिन्न गृहीतमस्तीत्यर्थः ननु प्रमाणेन बाधितसाध्यविपर्ययकत्वं तादृशं रूपं निरुक्तमेव तथा स्यादित्यत आह–। [e]"नापी"ति । तस्य रूपस्य प्रत्यक्षाभासेपि सत्त्वात्कथमधिकरणतावच्छेदकत्वं स्यात्प्रतियोग्यवृत्तिधर्मस्यैव तथात्वाभ्युपगमादित्यर्थः ॥

खू० [a]दूषितत्वात् धर्मभेदः कश्चिदक्तव्यः नचासौ वक्तुं शक्यः [b]शक्यत्वे वा तमादायैव लक्षणव्यवस्थितिरस्तु कृतमन्योन्यव्यतिरिक्तत्वकुयुक्त्या तदनेनान्यत्राप्यतिप्रसक्त्युद्धरणान्यत्वेन व्यावर्त्तनं लक्षणवादिनो भग्नस्य शरणमस्त्वं निरसनीयम् अत एव भेदकान्तरं विना तद्व्यतिरिक्तत्वमेव दुर्निरूपमित्यभिप्रायेण तत्तदन्यत्वे सतीति विशेष-

(१) तद्रूपान्तर्भावेणेत्यर्थः ।

माणं वै [c] शेषिकहेतुं [d] नैतदेवं येन व्यभिचारस्तदन्यत्वे-सति प्रमेयत्वादिति सत्प्रतिपक्षहेतूपन्यासादुपहसन्ति-सन्त इति ॥

इति श्रीश्रीहर्षकृतखण्डने प्रमाणतदाभासखण्डनं नाम प्रथमः परिच्छेदः समाप्तः ॥

टी० ॥ [a] "दूषितत्वादि"ति । तस्यानन्तत्वात्सत्यत्वाभाससाधारणत्वाच्चेत्यर्थः ननु निरूपणीयः स कश्चिद्धर्मो यः सकलकालात्ययापदिष्टसाधारण इत्यत आह—। [b] "शक्यत्वे वे"ति ॥ [c] "वैशेषिकहेतुमि"ति । इतरभेदसाधकं लक्षणमित्यर्थः ॥ उपहास्यतामाह—। [d] "नैतदेवमि"ति । गुण इतरभिन्नः कर्मान्यत्वे सति सामान्यवत्त्वे च सति निर्गुणत्वात् यन्नैवं तन्नैवमित्यादि एवं वैशेषिकेन प्रयुक्ते गुणो नेतरभिन्नः प्रमेयत्वात् व्यभिचारि चेदिदं स्यात्तदा तत्तदन्यत्वेन विशेष्यमित्युपहसन्तीत्यर्थः ॥

इति प्रथमः परिच्छेदः ।

---

## अथ द्वितीयः परिच्छेदः ।

---

मू० (१) * ननु यदि दुर्लक्ष्या हेत्वाभासास्तर्हि निग्रहस्थानानि प्रतिज्ञाहान्यादीनि [a] बाधकानि भविष्यन्ति * मैवं, [b] (२) का पुनः प्रतिज्ञाहानिः स्वीकृतोक्तपरित्यागः प्रतिज्ञाहानिरित्यलक्षणं तथाहि । [c] झटिति (३) संवरणे निग्रहस्थानेपि

---

(१) प्रमाणतदाभासयोरद्वैताबाधकत्वेपि निग्रहस्थानान्यद्वैत बाधकानि भविष्यन्तीति शङ्कते—नन्विति ।

(२) { सङ्कीर्त्य खण्डनं पूर्वं प्रमाण तदाभासयोः । निग्रहाणां निकेतानि क्रमशः खण्डयतेऽधुना ॥ }

वादिप्रतिवादिनोऽसामर्थ्यबोधकत्वं निग्रहस्थानत्वमिति सामान्यलक्षणस्य दुःखादावतिव्याप्तेर्विशेषलक्षणं दूषयितुं पृच्छति—केति—

(३) आच्छादने ।

गतत्वेन परदूषितेत्यपि विशेषणीयत्वात् [d] किञ्च स्वीकृत्येत्यनेनाभीष्टमात्रं वाभिधीयते अस्तित्वेनेष्टं वा आद्ये [e] केनचिद्रूपेणेष्टस्य रूपान्तरेण परित्यागः क्व नाम नास्तीत्यतिव्याप्तिः [f] स्वीकारपूर्वकोऽस्वीकारस्त्यागः * नच रूपान्तरेण तत्र स्वीकारस्ततस्त्याग एवासौ न भवतीति नातिप्रसङ्ग * इति चेन्न, [g] स्वीकारस्यापि त्यागपदार्थान्तर्भावे स्वीकृतेति व्यर्थं [h] तत्त्यागेपि च नाद्यद्वितीयौ अस्तित्वेनेष्टस्य [i] रूपान्तरेण सर्वचैवानिष्टत्वसम्भवात् ॥

टी ॥ [a] "बाधकानी"ति । बचैत्तबाधकानीत्यर्थः यद्वा द्विग्विजयकौतुकबाधकानीत्यर्थः निग्रहस्थानेषु प्रतिज्ञाहानेः प्राथम्यात्प्रथमं तामाक्षिपति—। [b] "का पुनरि"ति । परित्यागमात्रमपसिद्धान्तेपीत्यत उक्तमुक्तपरित्याग इति तदप्यनूद्य त्यक्ते परमतेतिव्यापीत्युक्तं स्वीकृतेति स्वीकारश्च विशिष्याभिमतोन्यथा शास्त्राभ्युपगमेन सामान्यतः सिद्धान्तस्याप्युक्तत्वात्तत्परित्यागेतिव्याप्तिः स्यात् ॥ [c] "झटिती"ति । नैयायिकेनानित्यः शब्द इतिप्रतिज्ञातव्ये प्रमादान्नित्य शब्द इति प्रतिज्ञाय स्वयमेव त्यक्ते प्रतिज्ञाहानिस्तावन्न भवतीति तत्रातिव्याप्तिवारणार्थं परदूषितेति विशेष्यमित्यर्थः अस्तु तदपि विशेषणमिति चेत्तर्हि लक्षणकर्त्तुर्हेत्वन्तरनिग्रहापत्तिः प्रथममविशिष्टस्यैवोक्तत्वात् विशेषणान्तर्भावेपि दोषमाह—। [d] "किञ्चे"ति । [e] "केनचिदि"ति । गुणत्वेन स्वीकृतस्य शब्दस्य नैयायिकेन नित्यत्वेन परित्यागे प्रतिज्ञाहानिः स्यादित्यर्थः ननु नित्यत्वेन शब्दस्य तदा स्वीकार एव न जातोतस्तत्र परित्यागोपि नास्तीति नातिव्याप्तिरिति शङ्कते—। [f] "स्वीकारे"ति । परित्यागपदार्थान्तर्भूत एव चेत् पूर्वस्वीकारोपि तदा परित्याग इत्येवास्तु लक्षणं किं स्वीकारपदप्रक्षेपेणापीत्याह—। [g] "स्वीकारस्ये"ति । स्वीकृतेति पदत्यागेपि विकल्पितौ पक्षौ न सम्भवत

इत्याह—। [h] "तत्यागेपि चे"ति । आद्यपक्षस्य दूषितत्वेपि दोषान्तरदानाय पुनर्निषेध्यत्वेनोपग्रहः ॥ [i] "रूपान्तरेणे"ति । नित्यत्वादिनेत्यर्थः ॥

ख० [a] "संयोगाद्यव्याप्यवृत्तितावादिपक्षे चैकस्यैव संयोगस्यास्तित्वनास्तित्वाभ्यामभ्युपगम्यमानत्वात् [b] एवं च कालदेशादिभेदेन सत्त्वासत्त्वाभ्युपगमेतिप्रसङ्गो द्रष्टव्यः [c] तस्यैव च तदैव तत्रैव तेनैव तथैवेष्टत्वाऽनिष्टत्वे विवक्षिते अत्रेति चेत् [d] एवं तर्हि कालमभ्युपगम्यानभ्युपगच्छतः प्रतिज्ञाहानिर्न स्यात् [e] तच्च तदेत्युक्तविशेषणस्यासम्भवात् [f] नहि कालः कालान्तरं स्वात्मानमेव बाध्यास्ते [g] काले तदेति-विशेषणस्य(१) प्रतिक्षेपेन्यत्र च प्रक्षेपे लक्षणस्यैकताक्षतिः ॥

टी० ॥ स्वीकारपरित्यागयोरैकरूप्यावच्छेदेनापि विवक्षायां दोषमाह—। [a] "संयोगे"ति । देशकालभेदेनैकस्य स्वीकारपरित्यागौ चातिप्रसञ्जकावित्याह [b] "एवं चे"ति । ननु देशकालपुरुषाद्यभेदेन स्वीकारपरित्यागौ विवक्षिताविति नातिप्रसङ्ग इत्याह—। [c] "तस्यैवे"ति । असम्भवदप्येतदभ्युपगम्य दूषयति—। [d] "एवं तर्ही"ति । कालोस्तीति प्रतिज्ञाय कालो नास्तीति ब्रुवन्नपि प्रतिज्ञाहान्या न निगृह्येतेत्यर्थः अत्र हेतुमाह—। [e] "तच्चे"ति । तत्र काले तदेत्युक्तविशेषणाभावादित्यर्थः ॥ [f] "नही"ति । कालान्तरस्याभावादात्मन्यध्यासस्यात्माश्रयदुष्टत्वादित्यर्थः यद्यपि काले कालाभ्युपगमेपि न दोषः अभ्युपगमस्य भ्रमनिबन्धनत्वेनाप्युपपत्तेः किञ्च तदेतिविशेषणस्य कालाभ्युपगमपरिहाराश्रयत्वेन कालस्याधिकरणत्वे तात्पर्यं तौ च कालतोभिन्नावेवेति न विरोधः किञ्च कालेपि कालो वर्त्तते एव अन्यथा कालस्यावर्तमानत्वापत्तेः स्वावच्छिन्नकालवृत्तित्वस्यैव कालस्य

(१) अप्रक्षेपे इत्यर्थः ।

वर्तमानत्वात् तथापि तादृशमपि(१) खण्डनीयमेवेति भावः ननु काले प्रतिज्ञाहानिस्तदेतिविशेषणमपहायैव लक्षणीयेत्यत आह—। [g] "काले" इति ॥

मू० [a] कालं प्रति च प्रतिज्ञाहानेरदोषत्वे तद्वदन्यत्राप्यदोषत्वापातः [b] यदैव स्वीकारस्तदैवास्वीकारासिद्धेश्च * [c] तदेति तत्कथाकालो विवक्षित(२) ?*—इति चेन्न, [d] तच्छब्दस्यै(३)कव्यक्तिपरत्वे लक्षणाननुगमः [e] वादादित्वेन साम्ये कदाचिदपि तद्विपरीतवादान्तराकरणप्रसङ्गः [f] एवं तथैव तस्यैवेत्यादिपदस्य द्रष्टव्यम् उक्तपदस्य चापसिद्धान्तव्यवच्छेदकस्य

टी० ॥ ननु कालनास्तिताभ्युपगमे प्रतिज्ञाहानिरेव न भवतीति नाव्याप्तिरित्यत आह—। [a] "कालं प्रति चे"ति । लक्षणेऽसम्भवदोषमाह—। [b] "यदैवे"ति । ननु यदा तदेति पदे नैकक्षणपरे येनासम्भवः स्यात् किन्त्वेककथावच्छिन्नः कालस्ताभ्यामभिधीयते इत्याह—। [c] "तदेती"ति । एकमात्रकथापरत्वे तच्छब्दस्य कथान्तरप्रतिज्ञाहान्यनुपग्रह इत्याह—। [d] "तच्छब्दस्ये"ति । ननु वादे स्वीकृतस्य वादे एव परिहारे प्रतिज्ञाहानिरिति नाननुगम इत्यत आह—। [e] "वादादित्वेने"ति । वादान्तरस्वीकृतस्य वादान्तरे परिहारे प्रतिज्ञाहानिः स्यादित्यर्थः जल्पवितण्डाप्रतिज्ञाहान्यसङ्ग्रहः तत्कथाप्रक्षेपेप्येवमूह्यं कथापदप्रक्षेपेपि प्रतिज्ञाहानिदोषः स्यादिति भावः ॥ [f] "एवमि"ति । तथेति यदि प्रकारविशेषो विवक्षितस्तदा प्रकारान्तरस्वीकारत्यागयोरनुपसङ्ग्रहः प्रकारसामान्यं चेत्तदा किञ्चिद्रूपेणाभ्युपेतस्य रूपान्तरेण त्यागेपि हानिः स्यादित्यर्थः स्वीकृतपरित्यागमात्रस्यैव दोषत्वेऽपसिद्धान्तव्यावर्तनार्थमुक्तविशेषणं व्यर्थमित्यर्थः ॥

(शेषमग्रे)

(१) "यदैव स्वीकारस्तदैवास्वीकार"—इत्यनेन वा वर्तमानत्वखण्डनेन वा साधारणखण्डनकोट्या वा खण्डनीयमित्यर्थः ।

(२) विवक्षित इत्यत ऊर्ध्वं नैकक्षणकालीयेनासम्भवस्यादिति पूरणीयम् ।

(३) कथैकव्यक्तिपरत्वे—इत्यर्थः ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

*(Continued from page* 315. VOL. XI.)

इह तर्हि अत्रेरपत्यानि 'इतश्चानिञः' इति ढकोऽत्रिभृगिवति लुकि कृते अत्रय इति तद्धितस्य 'कितः' इत्यन्तोदात्तत्वं स्यात् तदन्तकार्यत्वात् । नैष दोषः । तद्धितस्यैवान्तोदात्तत्वं न तदन्तस्य । इह तर्हि सर्वः स्तोमो यस्य सर्वस्तोमः 'सर्वस्य सुपी'त्याद्युदात्तत्वं न स्यात् सुपीति सप्तमीनिर्द्देशात् । कर्त्तव्योऽत्र यत्नः, यत्नश्च सर्वस्य सुप इति षष्ठीनिर्द्देशः षष्ठीनिर्देशे तु तदन्तकार्यत्वात् सिचस्वरवत् सिध्यति । ननु द्वयोरपि पचयोरभूवन् प्रत्ययलक्षणेन जुस्प्राप्नोति, 'आत' इति नियमाच भविष्यति । इह तर्हि देवदत्तं याजयां चकार 'आम' इति लुकं बाधित्वा परत्वात्तिबादिषु कृतेषु तेषां च लुकि प्रत्ययलक्षणेन तिङन्तत्वादामन्तस्य च निघातः ततः परस्यानिघातश्च प्राप्नोति, लेरित्यनुवृत्तेर्लावस्थायामेव लुग्भविष्यति । इह च देवदत्तो युष्मत्पुत्र इति षष्ठ्यन्तस्य विधीयमानौ वांनावौ द्वितीयास्थयोरिति स्थग्रहणाच भवति षष्ठीचतुर्थीद्वितीयास्ववस्थानं श्रूयमाणस्यैव सम्भवति, इह तर्हि परमवाचा परमगोदुहा परमलिहा परमदण्डिना परमैदिवा परमकुमार्येति समासार्थो या विभक्तिस्तामाश्रित्योत्तरपदस्य पदसंज्ञायां प्राप्तायां 'चोः कुः' 'दादेर्धातोर्घः' 'हो ढः' 'न लोपः प्रातिपदिकान्तस्य' 'दिव उत्' 'इको ऽसवर्णे शाकल्यस्य ह्रस्वश्चे'ति एते विधयः प्राप्नुवन्ति, नैष दोषः । भसंज्ञाविषये तावत्सैव पदसंज्ञां बाधिष्यते । ननु च समुदायस्य या पदसंज्ञा स्वादिष्विति प्राप्ता सा तुल्यावधिकया भसंज्ञया बाध्यतां या तूत्तरपदस्य सुबन्तमिति प्राप्ता सा कथं बाध्यते भिन्नावधित्वात्, एवं तर्हि सुप्तिङन्तमित्यतः सुबन्तमित्यनुवर्त्तनीयं ततश्चायमर्थो भवति यजादावसर्वनामस्थाने परतः पूर्वस्समुदायो भसंज्ञो भवति तत्र च समुदाये यत्सुबन्तं वर्त्तते तदपि भसंज्ञं भवति यजादावनन्तरइति, तत्र च समुदायस्य भसंज्ञा प्रधानशिष्टा ऽव-

यवस्य त्वन्वाचयशिष्टा यत्र च सुबन्तं पश्यति तत्र तस्यापीति, तेन राज्ञ इत्यादौ सुबन्ताभावेपि भवति सुबन्तसद्भावे तु तस्य समुदायस्य चेति विवेक्तव्यम्, सर्वनामस्थानेपि असर्वनामस्थानइति प्रतिषेधात् पदसंज्ञा न भविष्यति । ननु स्वादिष्विति या प्राप्तिः समुदायस्य तस्या एव स प्रतिषेधः, नेत्याह, तत्रापि सुबन्तमित्यनुवर्त्तते प्रसज्यप्रतिषेधश्चाश्रीयते, तत्सामर्थ्यात् ‘इनन्तरस्य विधिर्वा भवति विप्रतिषेधो वे’ ति नाश्रीयते ततश्चायमर्थो भवति सर्वनामस्थाने परतः पूर्वस्य समुदायस्य स्वादिष्विति प्राप्ता पदसंज्ञा न भवति तत्र च यत्सुबन्तमवयवत्वेन वर्त्तते तस्य सुबन्तस्य पदसंज्ञा न भवतीति । यद्येवं सुवाक् सुराजेति सावपि समुदायस्यावयवस्य च स्वादिष्विति वा सुबन्तमिति वा पदसंज्ञाया अभावात् कुत्वादि न स्यात्, एवं तर्ह्यसर्वनामस्थानइत्यत्र उत्तरसूत्राद्यचीत्यपकृष्यते ततो यजादौ सर्वनामस्थाने या च यावती च पदसंज्ञा सा सर्वा प्रतिषिध्यते सौ तु स्वादिष्विति च सुबन्तमिति च भवत्येव; यद्येवं अयमाणो पि सौ पूर्वस्य पदसंज्ञा प्राप्नोति, तत्र को दोषः एचोप्रगृह्यस्येत्यत्र पदान्तग्रहणं चोदयिष्यति भद्रं करोषि गौरित्यत्र मा भूदिति, तत्र क्रियमाणेपि पदान्तग्रहणे पुनर्विकारः प्राप्नोति । नैष दोषः । वाक्यपदयोरन्त्यस्येत्येवमेतद्विज्ञायते. तदेवं समासेपूत्तरपदस्य पदत्वं नास्तीति स्थितम् । यद्येवं दधिसेचौ दधिसेचः ‘सात्पदाद्यो’ रिति षत्वनिषेधो न प्राप्नोति, नैवं विज्ञायते पदस्यादिः पदादिः पदादेर्नेति कथं तर्हि पदादादिः पदादिः पदादेर्नेति, कथमग्निषु वायुषु त्वक्षु, सात्प्रतिषेधो ज्ञापयति स्वादौ यत्पदं ततः परस्य नेति, अवश्यं च पदादादिरित्येवं विज्ञेयमन्यथा ‘गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते’ रिति यत्र सुबन्तमुत्तरपदं तत्र प्रतिषेधो न स्यात्, इह तर्हि बहुसेचौ बहुसेचं बहुचो ऽपदत्वात् प्रतिषेधो न प्राप्नोति, वक्तव्यमेवैतत् ‘बहुच्पूर्वस्य ने’ ति तत्रायं सूत्रन्यासः सातेः सः षत्वं न भवति, ततो बहुचः, बहुचः परस्य षत्वं न भवति, आदिग्रहणं न कर्त्तव्यम् ‘आदेः परस्ये’ त्येव सिद्धं तदिदं बहुज्ग्रहणेन निमातव्यम् । ‘कार्यते हार्यत इति’ । ण्यन्तात्कर्म्मणि लकारः यक् णिलोपः ।

ननु चात्रान्तरङ्गा वृद्धिस्त्यच्चमात्रएव णौ भवति लोपस्तु यङि भवन् बहिरङ्गः, एवं तर्हि विभज्यान्वाख्यानपक्षे एतत्प्रत्युदाहृतम् ॥

अचोऽन्त्यादि टि ॥ अन्ते भवोऽन्त्यः दिगादित्वाद्यत् अन्त्यादीति बहुव्रीहिः । यद्यप्यचामित्येतदपेक्षोन्त्यशब्दस्तथापि सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वाददविरुद्धः समासः । 'निर्द्धारणे षष्ठीति' । यद्येवं निर्द्धारणस्यानेकाश्रयत्वाद् अच इत्येकवचनमनुपपन्नं तत्राह 'जाताविति' । योन्त्योऽजिति निर्द्धारणस्य सजातीयविषयत्वादजिति लभ्य, मिच्छन्द इत्यादि रूपोदाहरणं कार्यन्त्वग्निचितमाचष्टे णिचि णाविष्ठवदिति टिलोपः, पचेते इत्यादि कार्योदाहरणम् ॥

अलोऽन्त्यात्पूर्व्व उपधा ॥ समुदाय एवान्त्यो भवतीत्याह । 'धात्वादाविति' । अल इति जसन्तं चेद् अन्त्यस्याविशेषितत्वात् समुदायादपि पूर्वस्य संज्ञायां शिष्ट इति शकारस्येत्वं स्याद् असन्देहार्थमलित्येव च ब्रूयाद् अतोन्त्यादित्यनया समानाधिकरणा पञ्चमीत्याह । 'अन्त्यादल इति' । यद्येवं पूर्व्वस्याविशेषितत्वात् समुदायस्यापि संज्ञायां शिष्ट इति शा इति समुदायस्येत्वं प्राप्नोति । अलोन्त्यस्येत्यन्त्यस्य भविष्यति । 'नानर्थकेलोन्त्यविधिरनभ्यासविकारेषु' तत्र यथा ऽऽभ्यामित्यत्र 'हलि लोप' इद्रूपस्य विधीयमानो लोपोऽन्त्यस्य न भवति तथात्रापि न स्याद् अतोलोन्त्यात्पूर्वोलिति वक्तव्यमित्यत आह । 'अलेवेति' । एवकारः पौनर्वचनिकः यथान्त्योल् एवं पूर्वोप्यलेवेति । कथं पुनर्द्वितीयमल्ग्रहणमन्तरेणायमर्थोलभ्यते लोकतः । लोके ह्यमीषां ब्राह्मणानामन्त्यात्पूर्व्व आनीयतामित्युक्ते एक एवान्त्यात्पूर्वोनन्तर आनीयते न समुदायः संयोगोपधग्रहणं कृञर्थमित्यत्रावयवधर्मेण समुदायस्य संयोगस्योपधाव्यपदेशः, अकार इत्यादीनि रूपोदाहरणानि कार्यं तु पावक इत्यादा 'वत उपधाया' इति वृद्धिः, भेदक इत्यादौ पुगन्तलघूपधस्य चेति गुणः । 'शिष्ट इति' । शासेर्निष्ठा 'शास इदङ्हलो' रितीत्वं 'शासिवसिघसीनां चे' ति षत्वम् ॥

'तस्मिन्निति निर्दिष्टे पूर्वस्य' ॥ इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात् तस्मिन्नणि चेत्यत्रोपात्त-

स्येदमनुकरणं ततश्च तत्रैवास्य प्रवृत्तिः स्याद्, अस्ति च तत्र व्यवच्छेद्यं हे यौष्माकीणा अस्मभ्यं देहि आस्माकीन युष्मभ्यं ददामीति परनिवृत्ति-स्तामिमां भ्रान्तिमपाकरोति 'तस्मिन्निति सप्तम्यर्थेनिर्देश इति'। एतेन 'तस्यापत्यं' 'तत्र भव' इत्यादिवत् स्वतन्त्रस्य सर्वनाम्नोयं निर्देशस्ततश्चैव तस्मिन्निति सामान्यविशेषणमचिहलीत्यादीनामुपलक्षणं न त्वनुकरण-मिति दर्शयति। एतच्चेतिकरणाल्लभ्यते, स हि पदार्थविपर्यासकृत् शास्त्रे च स्वरूपपदार्थस्तस्य विपर्यासोर्थपदार्थकता, यदि च तस्मिन्नणि चेत्यत्रै-तदुपास्थास्यत तत्रैव पूर्ववल्लक्षणमकरिष्यतेति भावः, किमर्थं पुनरिदमार-भ्यते इको यणचीत्यादौ सन्देह· किं सत्सप्तमी किं वा गगायां घोष इतिव-दौपश्लेषिकाधिकरणे सप्तमीति तत्र सत्वं परस्य च पूर्वस्य च सम्भवति एवमुपश्लेषोपि। तत्र पूर्वस्य परस्य च व्यवहितानन्तरस्य यण् प्राप्तः। दध्युदकादिषु तु युगपदेकस्य कार्यित्वनिमित्तत्वायोगात्पर्यायेण यण् प्राप्तः इष्यते च पूर्वस्यैव स्यादनन्तरस्यैवेति तत्र नियमार्थमिदं सप्तमीनिर्देशे पूर्वस्य भवति अनन्तरस्यैवेति। इको यणचीत्यादेश्च सकृत्प्रवृत्तिः सा चैवं विशेषितेति न क्वाप्यनिष्टशङ्का। तत्राद्यं नियमं दर्शयति। 'पूर्वस्यै-वेति'। व्यावर्त्यं दर्शयति। 'नोत्तरस्येति'। 'पचत्योदनमिति'। यद्यप्य-त्रानियमप्रसङ्गो नास्ति तथापी 'को यणची' त्यस्मिन्सूत्रे ऽनियमप्रसङ्गे नियमः क्रियतइत्येतदपि भवत्येवोदाहरणम्। द्वितीयं नियमं दर्शयति। 'निर्दि-ष्टग्रहणमिति'। दिशिरुच्चारणक्रियः निःशब्दो नैरन्तर्ये निरन्तरं दिष्टो निर्दिष्ट इत्येवमानन्तर्यमर्थो भवति, तत्रैवं वचनव्यक्तिः, अचि इलीत्यादौ पूर्वस्यैव कार्यं भवति तत्र निर्दिष्टे निरन्तर एवोच्चारित इति तत्रार्थात्पूर्व-स्यानन्तरस्येत्यर्थो भवति तदाह। 'व्यवहितस्य माभूदिति'। अन्यथा व्यव-हिते मा भूदिति वक्तव्यं पूर्वपदस्य व्यवहितेपि वृत्तेः तस्य प्रसङ्गात्॥

तस्मादित्युत्तरस्य॥ 'निर्दिष्टग्रहणमनुवर्त्तत इति'। तेनात्रापि व्यवहिते कार्यं न भवतीति भावः। अत्रापीतिपरत्वादनुकरणमिति कस्य चिद्भ्रान्तिः स्यात् 'तस्मान्नुड् द्विहल' इत्यत्रा 'तं आदे' रिति दीर्घात्पू-र्वस्यान्नुडस्यासम्भवात् प्रयोजनाभावात्, यद्यपि तस्यानुकरणं न भवति

'तस्माच्छसो नः पुंसि' 'तस्मान्नुड्‌ढचि' त्यत्र तु व्यवच्छेद्यमस्ति उच्चारितो ऽनुपलभ्यते गोरनश्व इति, पूर्वस्य माभूदिति, अतस्तयोरेवेदमनुकरणमिति तामिमां भ्रान्तिमपाकरोति 'तस्मादिति पञ्चम्यर्थनिर्देशइति' एतेन पूर्वसूत्रवत् स्वतन्त्रस्य सर्वनाम्नोयं निर्देशात् तद्वदेव च तस्मादिति सामान्यमतिङ इत्यादीनां विशेषाणामुपलक्षणं न त्वनुकरणमिति दर्शयति, एतच्चेतिकरणाल्लभ्यतइत्युक्तम् । किमर्थं पुनरिदमारभ्यते 'तिङ्ङतिङ' इत्यादौ कारकविभक्तेरसम्भवाद्विग्योगलक्षणा पञ्चमीति दिक्छब्दस्त्वध्याहार्यस्तत्र पूर्वोत्तरशब्दयोरध्याहारः सम्भवतीति नियमार्था परिभाषेयं तदाह । 'उत्तरस्यैव कार्यमिति' । तदेवं पूर्वस्य चास्य च वृत्तिकारेण नियमार्थत्वं दर्शितम् । षष्ठीप्रक्लृप्तिपक्षोपि भाष्ये प्रदर्शितः, कथं, षष्ठीति वर्तते सप्तम्यर्थनिर्द्दशे पूर्वस्यानन्तरस्य षष्ठी । पञ्चम्यर्थनिर्द्दश-उत्तरस्यानन्तरस्य षष्ठीति तत्रैकोयणचीदौ यत्र पूर्वमेव षष्ठी विद्यते तत्र पूर्वस्यानन्तरस्य नोत्तरस्यानन्तरस्य सा षष्ठीत्युच्यते 'अग्ने मुक्' 'ईदास' इत्यादौ तु यत्र षष्ठी नास्ति तत्र षष्ठ्यपि प्रकल्प्यते सा चानियतयोगत्वात् स्थानषष्ठी भवति यस्य च स्थानषष्ठी तस्यैव कार्यमिति सर्वत्र कार्यनियमोपि सिध्यति । यत्र तूभयनिर्देशस्तत्र यानवकाशा सा इतरस्याः षष्ठीं प्रकल्पयति यथाग्नेमुगिति सप्तमी निरवकाशा 'ऽतो येय' इति पञ्चम्याः पूर्वसूत्रे सावकाशायाः, एवमीदास इति पञ्चमी आनेमुगिति सप्तम्या, उभयोस्त्वनवकाशयोः परत्वात्पञ्चमी सप्तम्याः षष्ठीं प्रकल्पयति । यथा 'ऽऽमि सर्वनाम्नः सुडि' ति सर्वनाम्न इति पञ्चम्यनवकाशामीति सप्तम्या अनवकाशायाः, अथ सप्तम्युत्तरार्थो तथाप्यादित्यनुवृत्तया पञ्चम्या समानाधिकरणा सर्वनाम्न इति पञ्चम्यपि सावकाशा षष्ठीं प्रकल्पयति । एवं नियमपक्षेपि परत्वानवकाशत्वाभ्यां व्यवस्था द्रष्टव्या । दीर्घाच्छे तुग्भवतीत्यत्र षष्ठ्याः स्थाने पञ्चमी व्याख्यानाद् दीर्घस्यैव तुक् भवति न तु ह्रस्य तथा च सुराच्छायेति निर्देश उपपद्यते ॥

स्वंरूपं शब्दस्याशब्दसंज्ञा ॥ स्वरूपस्य पर्यायाणां च ग्रहणे प्राप्ते नियमार्थं परिभाषेयं, शास्त्राङ्गत्वाच्च परिभाषाणां शास्त्रएव नियमो न

लोकइत्याह । 'शास्त्रे स्वमेवेत्यादि ग्राह्यमिति' । ग्राह्यमिति णिजन्ताद् यत्, एतच्चाध्याहारेण लब्धम् । 'शब्दस्येति' 'कृत्यानां कर्त्तरि वे' ति षष्ठी. शब्दः स्वमेव रूपं ग्राहयति बोधयतीत्यर्थः । संज्ञापक्षे तु वृत्तावेव शब्दः संज्ञा[1]नुच्चारणं च नोपपद्यते सूत्रे षष्ठीनिर्द्देशोपि नातीव युक्तः स्यात् । संज्ञासंज्ञिसम्बन्धे प्रायेण सामाधिकरण्यदर्शनात् । रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकापुरुषादिभिरुद्दीरितासु भिन्नासु शब्दव्यक्तिषु समवेतं सामान्यमभिधीयते । 'अग्नेर्ढगि' ति सूत्रकारेण या व्यक्तिरुच्चारिता तस्याः सर्वोच्चारणेष्वनुगतं सामान्यं वाच्यमित्यर्थः । सामान्यस्य कार्ययोगो व्यक्तिद्वारक इति तेनतेनोच्चारितायास्तस्या व्यक्तेर्ढग् भवतीत्यर्थः सम्पद्यते । एवकारस्य व्यवच्छेद्यं दर्शयति । 'न बाह्योर्थ इति' । 'शब्दसंज्ञां वर्ज्जयित्वेति' । शब्दसंज्ञासु स्वरूपं ग्राह्यं न भवतीत्यर्थः । अनियमप्रसङ्गे नियमः कर्त्तव्यस्तं दर्शयति । 'शब्देनेत्यादि' । लोके गौरुपलभ्यतामित्युक्तेऽर्थे एव कार्ययोगो गम्यते नहि शब्दरूपमुपलभ्य कृती भवति. व्याकरणे तु प्रत्ययविधानादिकार्यमर्थे न सम्भवति तेन सह पौर्वापर्यायोगात् । तेनाग्नेर्ढगित्युक्ते लोकवदर्थे एव तावत्प्रतीयते तत्र सम्भवो नास्त्यतस्तद्वाचिनां सर्वेषां सम्प्रत्ययः स्याद् यथा आकृतिचोदनायां व्यक्तीनां, मांभूदेष दोषः, उपात्तादेव यथा स्यादिति नियमार्थमिदमारभ्यत इत्यर्थः । 'औदश्वित्कमिति' । उदश्विति संस्कृतमिति सप्तमीसमर्थाट्ठक् 'इसुसुक्तान्तात्कः' । 'घुग्रहणेष्वित्यादि' । अन्यथा 'उपसर्गे घोः किरिति किप्रत्ययो धातोरेव घोः शब्दार्थात्स्यान्न तु दाधाभ्यः 'ईहल्यघो' रित्यत्र तु घुशब्दस्यानाकारान्तत्वाद्दाधानामेव ग्रहणं सिध्यति । कुमारीघ इत्यत्र घरूपेति ह्रस्वप्रसङ्गः । ननु च प्रदेशेषु संज्ञिसम्प्रत्यायनार्थं संज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति, नैतदस्ति । उभयगतिरिह शास्त्रे सम्भवतीति सङ्ख्याकर्मकरणादिष्विव स्वरूपस्य संज्ञिनश्च प्रदेशेषु ग्रहणं स्यात् ज्ञापकात्सिद्धं, यदयं ष्णान्ताषडिति षकारान्तायाः सङ्ख्यायाः षट्संज्ञां विदधाति तज्ज्ञापयति संज्ञाशब्दो न स्वरूप-

१ शब्दानुच्चारणमिति पा॰ २ पुस्तके ।

ग्राहक इति अन्यथा 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्चे'त्यादौ स्वरूपस्यापि षडित्यस्य ग्रहणात् षकारान्तायाः सङ्ख्यायाः षट्संज्ञा न विदध्यात्। ननु च षकारान्ता संज्ञा षकारान्तस्य कार्यमिष्यते संज्ञापि षकारान्तैव, अतो नार्थोऽशब्दसंज्ञेत्यनेन, सत्यं, प्रतिपत्तिगौरवपरिहारार्थः प्रतिषेधः शब्दशब्देन चाभेदोपचारात् व्याकरणमुच्यते शब्दे संज्ञा शब्दसंज्ञैवं च कर्मकरणमित्यादिष्वर्थसंज्ञास्वपि शास्त्रीयासु स्वरूपग्रहणं न भवति। अथ रूपग्रहणं किमर्थं इह यावता प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वान्नित्यसम्बन्धित्वाच्च तदेव शब्दस्य स्वार्थो हि स्वप्रतीतौ सम्बन्धग्रहणमपेक्षते पर्यायैरपि प्रत्यायनात्साधारणश्चानित्यसम्बन्धश्चानुकरणदशायामभावात्, न चार्थो ग्राहकः शक्यते कर्तुं ग्राह्यत्वे च सूत्रमनर्थकं स्यादिति नार्थो रूपग्रहणेन, एवं तर्ह्येतज्ज्ञापयति शास्त्रे स्वरूपेण समानकल्पोऽर्थ इति, तेनार्थवद्ग्रहणेनानर्थकस्येत्युपपन्नं भवति तत्र ज्ञापकादर्थोऽपि ग्राह्यः स्वंरूपमितिवचनाद् रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणं तेन काशे कुशइत्यत्र 'शे' प्रगृह्यसंज्ञाभावः सिद्धः। सित्तद्विशेषाणामिति वार्तिकं व्याचष्टे। 'सिन्निर्देशः कर्तव्यइति'। वृक्षसइत्येवम्। 'ततो वक्तव्यमिति'। स्वंरूपमित्यस्यानन्तरम्। ननु किं प्रयोजनमित्युक्ते वृक्षादीतिवक्तव्यं किमुच्यते वृक्षाद्यर्थमिति, वृक्षादिषु प्रयोजनमस्ये युक्ते वृक्षाद्यस्य प्रयोजनमित्यर्थादुक्तं भवतीत्यदोषः। अस्यार्थस्य न्यायतः सिद्धिं विभाषेत्यत्र वक्ष्यामः। 'पित्पर्यायवचनस्य चेति'। चकारात् स्वरूपस्य विशेषाणां च। इदं वाचनिकमेव झित्पर्यायस्येत्यस्यापि न्यायतः सिद्धिं वक्ष्यामः। 'झित्तस्य चेति'। इदं वाचनिकमेव। मृगपक्षिणोस्तु पिन्निर्देशः कर्तव्य इत्याहुः। 'अथैकस्येति'। इयमिष्टिरेव॥

अणुदित्सवर्णस्य चाप्रत्ययः॥ संज्ञासूत्रमेतत् न परिभाषा, प्रसिद्धार्थविनियोगात्। 'परेण णकारेणेति'। एतच्च लण्इत्यत्र प्रतिपादितम्। 'स्वस्य च रूपस्येति'। यद्यपि प्रथमान्तं प्रकृतं तथापि सवर्णस्येति षष्ठ्यन्तस्यानन्तरं श्रूयमाणश्चशब्दोऽन्यस्य षष्ठ्यन्तस्याभावात् तस्यैव षष्ठ्यन्ततां प्रकल्पयतीति भावः। 'प्रत्ययं वर्जयित्वेति'। तेन तत्रोच्चारितमेव रूपं गृह्यते 'आद् गुण' इत्यादि यथेह भवति देवेन्द्र इति एवं खट्वेन्द्र इत्यादावपि भवति। 'अस्य च्वौ'। यथेह भवति शुक्लीभव-

तीति एवं मालीभवतीत्यादावपि भवति। 'यस्येति च' यथेह भवति दाक्षिः लाक्षिरिति एवं चौडिर्बालाकिरित्यादावपि भवति। चूडाबलाकाशब्दौ बाह्वादौ. ननु चाको ऽचीत्यादौ प्रत्याहारग्रहणे कथं मध्यवर्त्तिभिरिकारादिभिस्सवर्णग्रहणं उच्चारितो हि संज्ञाशब्दः संज्ञिनं प्रत्याययति, न च मध्यवर्त्तिनामुच्चारणमस्ति ते ह्यगादिसंज्ञाभिः संज्ञित्वेन प्रत्याय्यन्ते, क्व तर्हि स्यात् 'अस्य च्वौ' यस्येति यत्र संज्ञाया उच्चारणमस्ति प्रत्याहारे चाद्यो वर्णं उच्चारितत्वात्सवर्णग्राहकः। स्यादेतत्। अक्षरसमाम्नायउच्चारिता इकारादयः सवर्णानां ग्राहका इति अगादिचोदनासु ईकारादयोऽपि ह्रस्ववत्संज्ञित्वेनैव प्रतीयन्ते न त्विकारादिभिः प्रतीतैः प्रत्याय्यन्तइति नापरकालत्वात्, इह वर्णानामुपदेशस्तावद् उपदेशोत्तरकाला इत्संज्ञा इत्संज्ञोत्तरकालमादिरन्त्येनेत्येतत्प्रवर्त्तते ततोऽण् सवर्णस्येति, तदनेनोपदेशादिष्वङ्गेषु निष्पन्नेषु अन्यत्रास्य च्वावित्यादौ सवर्णानां ग्रहणं भवति नाङ्गेषु नापि स्वात्मन्यनिष्पन्नत्वात्। यदि त्वस्मिन्नपि सूत्रे सवर्णग्रहणं स्यात् आद्गुणमहनः 'वृद्धिरादैच्' त्यादौ आकारादयोऽपि सवर्णान् गृह्णीयुः अतोऽस्मिन् सूत्रे ऽक्षरसमाम्नाये चागृहीतसवर्णानां ग्रहणं ततश्च तत्रैव स्थितं प्रत्याहारेषु मध्यवर्त्तिभिः सवर्णग्रहणं न स्यादिति। नैष दोषः उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति नियमः बुद्ध्यारूढास्तु प्रत्यायकाः अस्ति च मध्यवर्तिनां बुद्ध्यारोहस्ततश्च संज्ञित्वेन प्रत्याय्यमानस्यापि प्रत्यायकत्वं भविष्यति। अत्र ज्ञापकं 'दीर्घाज्जसि चेति' प्रतिषेधः स हि कुमार्यावित्यादौ 'प्रथमयोः पूर्वसवर्णः' इति दीर्घो माभूदिति तत्र चाक इति वर्त्तते खट्वे इत्यादौ तु नादिचीत्येव सिद्धः प्रतिषेधः 'दीधीवेवीटां' त्वादिभ्य इत्यादयश्च निर्देशा एवमेवोपपद्यन्ते, यदि मध्यवर्तिभिरपि सवर्णग्रहणं भवति। स्वरानुनासिकेत्यादिरुदात्तः सूत्रे गृहीतः स्वरान्तरभिन्नमपि गृह्णाति एवमनुदात्तस्वरितौ च तथा सानुनासिको निरनुनासिकं सोऽपि तम्। 'दीर्घो न भवतीति'। असति त्वप्रत्ययइत्यस्मिन् प्रत्ययेनापि सवर्णग्रहणात् दीर्घोऽपि स्यात्,। अत्यल्पमिदमुच्यते ऽप्रत्यय इति 'अप्रत्ययादेशटित्किन्मितइति वक्तव्यं,' प्रत्यये प्रत्युदाहृतं तत्रादेशे 'इदम इश्' इतः इह विशेषविहितत्वात्त्यदाद्यत्वं बाधित्वा त्रिमात्रिक आदेशः प्राप्नोति, टिति 'आर्द्धधातुकस्येड्वलादेः' पठितो दीर्घोऽपि स्यात् 'ग्रहो लिटि दीर्घ' इत्येतत्तु

यद्वैर्दीर्घ एव न ह्रस्व इति नियमार्थं स्यात् 'वृतो वे'त्येतदपि अवरि-येति लिटि दीर्घो माभूदित्येवमर्थं स्यात् । किति 'भुवो वुग्लुङ्लिटो'रे-भूव अनुनासिकोऽपि स्यात्, मिति "अम् सम्बुद्धौ' हे अनड्वन् आमपि स्यात्, एवं तर्ह्य ।त्यय इति नेह संज्ञाग्रहणं किं तर्हि अन्वर्थग्रहणं प्रतीयते विधीयतइति, प्रत्ययो भाव्यमानः सवर्णान्न गृह्णातीत्यर्थः । इशादयोपि भाव्यन्ते । संज्ञाप्रत्ययस्य तु नावश्यकः प्रतिषेधः । येनार्थम्प्र[1]तियन्ति स प्रत्ययः नहि दीर्घप्लुतयोरर्थस्याभिधानमस्ति। 'कुहोः श्चु'रित्यादौ भाव्य-मानस्याप्युदित्त्वसामर्थ्यादप्रत्यय इति निषेधाभावः । तथा च .पठ्यते भाव्यमानोण् सवर्णान्न गृह्णातीति ॥

तपरस्तत्कालस्य ॥ 'तः परो यस्मादिति' 'बहुव्रीहिं दर्शयति' तादपि परस्तपर इति पञ्चमीतत्पुरुषम् ॥ स पुनरस्मादेव निपातनाद्वे-दितव्यः । एकस्यापि तपरशब्दस्य तन्त्रावृत्त्योरन्यतराश्रयणादर्थभेदो न विरुद्धः तत्र बहुव्रीहेर्लिङ्गं 'मतो भिस ऐस्' इति तपरकर[2]णं तत्पुरुषस्य लिङ्गं वृद्धिरादैजित्यैजर्थं हि तदित्युक्तम् । 'तपरो वर्ण इति' । वर्णस्यैव सवर्णसम्भवाद्वर्ण इत्युक्तं तत्कालस्येति बहुव्रीहिः स कालोऽस्येति, अयुक्तोयं निर्देशः । तदित्यनेन तपरो वर्णः परामृश्यते । प्रसिद्धपरिमाणा च क्रियां प्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका, कालो यथा दिवसमधीतइति दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते स चाध्ययनस्य परिच्छेदकत्वात् कालः, वर्णस्तु क्रियात्मको न भवतीत्ययुक्तं वर्णवाचिन-स्तच्छब्दस्य कालशब्देन सामानाधिकरण्यम् । एवं तर्ह्युत्तरपदलोपी समासो द्रष्टव्यः उष्ट्रमुखवत् गम्यमानार्थत्वाच्चाप्रयोगएव लोपः, यथा उष्ट्रा मुखम-स्येत्येव विग्रहः, न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात्सादृश्यप्रतीतिः उष्ट्रइव मुखमस्येति मुखेनैव मुखस्य सादृश्यं प्रसिद्धं न कृत्स्नेनोष्ट्रेणेति सामर्थ्यादयमर्थो भवति उष्ट्रमुखमिव मुखमस्येति, एवमिहापि वर्णः कालो न भवतीति सामर्थ्यात्तदीया क्रिया क्रियान्तरेण निमेषादिना परिच्छिन्ना सती वर्णान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक इत्युच्यते स कालो ऽस्येत्यस्य कोऽर्थः तत्कालसंबन्धिनी क्रिया परिच्छेदिका अस्येत्यर्थः। एतदेव दर्शयति । 'आत्मनेत्यादिना' ॥ (शेषमग्रे)

१ येनार्थः प्रतीयते इति पा० २ पु० ।

२ तपरकरणात् इति पा० २ पु० ।

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(*Continued from page* 354. VOL. XI.)

## अथ षष्ठाध्यायस्य चतुर्थः पाद आरभ्यते ॥

अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणम् ।

सू० शेषाद् द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥१॥

पूर्वस्मिन्पादे यथाशक्ति प्रयोगगतो विचारो वृत्तः, अतः परं पादद्वयेन प्रायश्चित्ताधिकारश्चिन्त्यते कीदृशेन निमित्तेन कस्मिन्नैमित्तिके प्रायश्चित्तेऽधिक्रियत इति, तत्र तावदिदं चिन्त्यते दर्शपूर्णमासयो"र्मध्याद-दवद्यति पूर्वार्द्धादवद्यती"ति श्रूयते यदा चावत्तस्य नाशदोषापहारादि भवति तदा किं यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसंख्याय यजेतेति हविर्विनाशादिनिमित्तेन चोदिताज्ययागेनाधिक्रियते? उत स्यामवस्थायां शेषादेव पुनरवदेयम्? आज्यं तु निःशेषनष्टे हविषि चोद्यत इति, किं प्राप्तं विनष्टे द्व्यवदाने पुनर्मध्यपूर्वार्द्धसम्भवात् तावन्मात्रस्य च शास्त्रार्थत्वात्तत एवावदेयं, न हविरन्तरापेक्षा हविरन्तरापेक्षायां चाज्यं विधीयते न स्थित एव हविषि आज्यचोदना तस्माच्छेषादवदेयम् एवं प्राप्ते ब्रूमः "कृत्स्नं खलु पुरोडाशं प्रकृत्य श्रूयते वचः । मध्यादवद्यतीत्येतद्विकलाचावगम्यते ॥ कृत्स्नस्य हि पुरोडाशस्य यो मध्यदेशस्तदपादानको यस्तस्योपरितनोऽङ्गुष्ठपर्वमात्रो ऽवयवः सोऽवदातव्यः । यस्तु तस्याधस्तनोऽवयवः सोऽवदेयस्यापादानभूतः, न त्वसाववदेयः, अतो नासौ हविः । यत्तु 'हविस्तद्विनष्टं तद्विनाशे च हविरन्तरमुत्पाद्यं यदाऽपि समस्तपुरोडाशसाध्यो यागस्तदापि द्व्यवदाननाशे तस्य वि-

फलत्वादविकलं हविरन्तरमुत्पाद्यं तत्तु न्यायतः पुरोडाशान्तरं वचनात्साज्यं भवति न च यस्य सर्वाणीति वचनात्सर्वेषां हविषां विनाशे प्राप्यमिति भ्रमितव्यं हविर्विनाशस्य निमित्तत्वात् सर्व-शब्देनाविशेषणात् ॥

स्विष्टकृदर्थस्यावत्तस्य नाशे पुनरवदानाधिकरणम् ।

सू० अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ २ ॥

स्विष्टकृदिडार्थस्य नाशः किं शेषावदानस्य निमित्त? मुत नेति तत्र तन्नाशे शेषादवदेयं यागशेषप्रतिपत्त्यर्थत्वात् विनष्टेऽपि तद् द्रव्ये पुनः शेषसद्भावात्पुनरवदाय संस्कर्तव्यं सत्यं, विद्यते शेषः स त्वागामिप्रतिपत्त्यन्तरगृहीतत्वात् न नष्टावयवपूर्वप्रतिपत्त्या सम्बध्यते, यस्त्वंशस्तस्य प्रतिपाद्यः स विनष्टः, न च द्रव्यान्तरोत्पत्त्या शङ्का शेषप्रतिपत्त्यर्थानां द्रव्यान्तरे क्रियमाणानामानर्थक्यात्, स्विष्टकृत्तु यद्यप्यपूर्वार्थस्तथाप्येकदेशद्रव्यत्वात् द्रव्यान्तरस्याप्रयोजकः, वाचनिकेन तु हविर्विनाशादिनिमित्ते चोदितेनाज्येन तदनुष्ठानमिष्टमेव, इडार्थगृहीतस्य तु हविष्ट्वाभावात्प्रतिपत्तिव्यतिरिक्तापूर्वाभावाच्च लोप एव न्याय्यः ॥

ऋत्विजामेव शेषभक्षणाधिकरणम् ।

सू० निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ३ ॥

शेषप्रसङ्गादिदमधिकरणं दर्शपूर्णमासयोः शेषभक्षास्ते किमृत्विग्भ्योऽन्यैः कर्तव्याः? उत ऋत्विग्भिरे? वेति संशयः तत्र कर्मकरत्वात् ऋत्विजां सर्वभक्षेषु प्राप्तानामिडायां पुनः श्रवणमस्ति "यजमानपञ्चमा इडां भक्षयन्ती"ति तद् भक्षान्तरपरिसंख्यार्थमिडामेव ते भक्षयन्तीति तस्मादन्येष्वन्ये भक्षयितार इत्याशङ्क्य निराक्रियते यजमानस्याकर्मकरत्वेनाप्राप्तस्य प्रापकमिदं वचनम् अतोऽपरिसंख्यातत्वात् भक्षान्तराणामन्येष्वपि प्रकृता एव कर्तारः ॥

कर्मैकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणम् ।

सू० अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥ ४ ॥

दर्शपूर्णमासयोः कपालमधिकृत्य श्रूयते "भिन्ने जुहोती"ति तत्र संशयः किं कृत्स्नभेदो निमित्तम्? उतैकदेशभेदनमुताभय? मिति "तत्रैकदेश-

भेदस्य नित्यत्वाच्च निमित्तता । कादाचित्कस्तु कृत्स्नस्य भेदो गच्छेद्विनिमित्तताम् ॥ भिदुराणां हि द्रव्याणां मिथः संघर्षणेन नित्यः केनाप्यंशेन भेद इति न निमित्तत्वं सम्भवति, अतः कृत्स्नभेद एव निमित्तं, नैवं न हि संघर्षणमात्रात् भिन्नबुद्धिर्भवति संघृष्टमिति हि तदा मतिर्भवति, न भिन्नमिति, भेदनं चेह निमित्तं तच्चैकदेशेऽप्यनित्यत्वान्निमित्तं, भवत्येव, द्वितीयपक्षवादी तु मन्यते "होमोऽयं भिन्नसंस्कारो भेददोषनिवर्हणात् । सन्निपत्योपकारित्वं तथा सति हि लभ्यते । आरादुपक्रियातश्च न्याय्या स्यात्सन्निपातिता । सन्निपातित्वपक्षे तु वाक्यं स्याद्विनियोजकम् । आरादुपक्रियात्वे तु प्रक्रिया विनियोजिका । कार्यक्षमश्च संस्कार्यः कृत्स्नभिन्नं न तत्क्षमम्" न हि सर्वथा भिन्नं कपालम् अधिश्रयणयोग्यं भवति अकार्योपयोगिश्चानर्थकः संस्कारस्तस्मात्कार्याविरोधेन यदा कियताऽप्यंशेन भेदो भवति तदैव होमो भवति इति प्राप्ते ब्रूमः "संस्कारत्वे भवेदेवं न त्वियं भिन्नसंस्क्रिया । संस्कार्यत्वे हि भिन्नस्य निमित्तत्वं न लभ्यते । निमित्ताभावतो होमो नित्यमङ्गं क्रतोर्भवेत् । नित्यश्चानित्यसंस्कार्यसम्बन्धं लभते कथम्" ॥ यदा हि भिन्नं संस्कार्यत्वेनोद्दिश्य तत्संस्कारार्थत्वेन होमो विधीयते तदा भिन्नशब्दस्य संस्कार्यप्रतिपादनोपक्षयाच्च निमित्तपरत्वं स्यात्, असति च निमित्ते होमोऽयं नित्याङ्गं स्यात्तदेवमापद्यते, नित्यं च दर्शपूर्णमासयोर्होमेनोपकुर्याद्भिन्नकपालसंस्कारद्वारेणेति, न चैतत्सम्भवति भिन्नस्य कादाचित्कत्वेन नित्यवत् क्रतावभावात्सोऽयं नित्यानित्यसंयोगविरोधः, तस्माद्भेदननिमित्ते होमो विधीयते स चाविशेषादेकदेशभेदकृत्स्नभेदेऽपि स्यात् ॥

क्षामेष्टिन्यायः । क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानाधिकरणम् ।

सू० क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ ५ ॥

"यस्य पुरोडाशः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति यदा तद्धविः संतिष्ठते । अथ तदेव हविर्निर्वपेद्यज्ञो यज्ञस्य प्रायश्चित्ति"रिति पुरोडाशक्षाणनिमित्तः पुनःप्रयोगः कृत्स्नैकदेशक्षाणयोरविशेषेण भेदनहोमवत्स्यादिति प्राप्तेऽभिधीयते क्षामे हविषि यत्प्रायश्चित्तं तत्र पूर्ववत्किन्तु सर्वदाहे स्यात्कुतः

एकदेशवर्ताणस्यावर्जनीयत्वेन नित्यत्वान्निमित्तत्वयोगात् । यथावर्जनीयदाहातिरिक्तोदाह एकदेशेऽपि वर्तमानो निमित्तं स्याद्दित्युच्यते तच्च अपरिज्ञानादिहावर्जनीयोदाहेनाधिक इति तस्मात्सर्वदाहमिह निमित्तम् ॥

एकहविरार्तावपि पञ्चशरावनिर्वापाधिकरणम् ।

सू० यथाश्रुतीति चेत् ॥ ६ ॥

दर्शपूर्णमासयोर्दोहौ प्रकृत्य श्रूयते "यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपे"दिति तत्र संशयः किमुभयार्तौ पञ्चशरावः? उत अन्यतरार्तावपी?ति षष्ठाधिकरणन्यायेनोद्देश्यस्य निमित्तस्य विशेषणमविवक्षितमिति स्थितमेव न तु निमित्तस्वरूपमप्यविवक्षितमिति, इह तु यथा नार्तिमात्रं निमित्तं न हविर्मात्रं, मिलितं तु निमित्तमेवमुभयशब्दाम्नानात् त्रयमपि मिलितं निमित्तमस्तु, तस्मादुभयार्तौ पञ्चशराव इति प्राप्ते ब्रूमः 'यच्छब्दोपक्रमं यावन्निमित्तं पर्यवस्यति । तावद्ग्राह्यं ततोऽन्यत्तु श्रुतमप्यविवक्षितम् ॥' यस्यार्तिमार्च्छेदित्येतावता यत्किञ्चिदिति गम्यते तच्च नित्यं निमित्तं न भवितुमर्हति सर्वस्य हि सर्वदा यत्किञ्चिदार्तं भवति अन्ततश्चिन्तितनिमित्तिनादि तथा यस्य हविरिति हविषोऽपि नित्यत्वादतोऽवश्यमार्त्या हविर्विशेष्यं, तावता च निमित्तप्रतीतिपर्यवसानादुभयपदं न निमित्तरूपे न प्रविष्टम् । यथोभयविशिष्टमेवं हविर्निमित्तं नार्तिविशिष्टमित्युच्येत तदपि नित्यम् । अथ यस्योभयमार्त्तमित्यार्तिविशिष्टमुभयं तद्विशिष्टा वार्तिर्निमित्तं न हविः तदयुक्तं यस्योभयमार्तमिति किं तदुभयमित्याकाङ्क्षा स्यात्, तस्माद्धविःशब्दार्तिशब्दौ तावदवश्यं विवक्षितौ भवतः हविर्विवक्षा तत्तु उभयपदसन्निधानात्तद्विशिष्टं सदार्त्या सम्बध्यते न स्वरूपेणेति चेन्न यथैव हविःशब्द आर्च्छेदित्यनेनाख्यातेन सम्बध्यते तथोभयपदमप्यसमस्तत्वात्तेनैव सम्बध्यते न हविषा नामपदानां परस्परासम्बद्धानामाख्यातेन सम्बन्धात् तत्र यदि यस्य हविरार्तं यस्योभयमार्तमिति द्वयं निमित्तीकृत्य पञ्चशरावो विधीयेत तथा सति निमित्तयोर्ग्रहादियागानामिवारुणादीनां क्रियया वशीकारासम्भवात् निमित्ताभ्यामेव वशीकृतायाः क्रियायाः प्रत्येकं सम्बन्धोनि

मित्तो वाक्यभेदः पुनरपि हविरार्तिश्चान्यतरानाविशिष्टेति तत्रापि नैमि त्तिकं स्यादिति सिद्धं नः समीहितम् । उभयार्तिमात्रमनिरूपितं न निमित्तं भवतीत्यविवक्षैवावशिष्यते, यद्यपि चोभयपदमाख्यातं हित्वा हविषा सम्बध्यते तथाऽपि यदि हविःस्वरूपमुभयपदेन सम्बध्यते हविःस्वरूपं चार्त्यो तथा सति हविरार्तिसम्बन्धस्य निमित्तत्वात्पुनरस्मैत्यर्थसिद्धिः । अथ तूभयपदानुरक्तमार्त्या सम्बध्यते तदनुरक्तं चोभयपदेन तच्च न हि पदद्वयं हविषा सम्बध्यमानमितरसम्बन्धं यावल्लभते कारणाभावाद्धविः स्वरूपेणैव संबन्धसम्भवात् । अथार्तिरेवोभाभ्यां विशिष्टा निमित्तं स्यात्तथा-प्येकैकेनेतरेतरनिरपेक्षेण विशेषणाविनिमित्तत्वेन चाविवक्षितसाहित्यत्वाद्ध-विरार्तिमात्रमुभयार्तिमात्रं च निमित्तं स्यात् अन्यतरानुरक्तायास्त्वन्यतरेण सम्बन्धे द्विरुच्चारणाद्वाक्यभेदः स्यात्, अतो नोभयं निमित्तसंनिपाति तच्च चोक्तं हविर्मात्रमुद्दिश्य पञ्चशरावे विधीयमाने यद्युभयत्वं हविषि विधीयेत ततो वाक्यभेदः परिच्छेदकत्वेन च विधीयमानं विधीयेत यावन्निमित्तं च नैमित्तिकानुष्ठानस्य निश्चितत्वाच परिच्छेदकाकाङ्क्षा निश्चिते च सर्वत्र नैमित्तिके विधीयमानमप्युभयत्वं परिसंख्यार्थं स्यात्, न चैकेन वाक्येन विधिः परिसंख्या च सम्भवतीत्यादिदूषणजातं यदाधिकरणोक्तमनुसन्धा-तव्यं, तस्माद्धविरार्तिमात्रं निमित्तम्, उभयपदं त्वेवं योज्यं न सायन्दो-हार्तिरेव निमित्तं न प्रातर्दोहार्तिरेव किंतूभयमपि परस्परानपेतनिमित्त-मिति ॥

होमाभिषवोभयकर्तुरेव भक्षणाधिकरणम् ।

**सू० होमाभिषवभक्षणं च तद्वत् ॥ ७ ॥**

ज्योतिष्टोमे श्रुतम् "अभिषुत्य हुत्वा भक्षयन्ती"ति तत्र किमभिषवो होमश्च प्रत्येकं भक्षस्य कारणम् ? उत संहत्ये ? ति "उद्देश्यत्वान्न साहित्यं तयोः शक्यं विवक्षितुम् । ततः प्रत्येकमेवाभ्यां भक्षणं प्रतिभूयते ॥ न ह्येकेनैव वाक्येनाभिषवहोमौ निमित्तत्वेनोद्दिश्य भक्षणं विदधता तत्साहित्यमपरं शक्यं विधातुं वाक्यभेदप्रसङ्गात्, अतः प्रत्येकमेव निमित्तत्वम् "उच्यते "निमित्तत्वे भवेदेवमेकैकस्य निमित्तता । होमाभिषवकर्त्ता तु भक्षाङ्गत्वेन

चोद्यते" ॥ द्वितीयानिर्दिष्टसोमसंस्कारार्थौ भवत्स्तं प्रति प्रयोजनान्तरप्रयुक्ताभिषवहोमकर्ता गुणत्वेनोपादीयमानो विवक्षितविशेषणो भवति, तत्रार्थिकं होमाभिषवयोर्निमित्तत्वं न शाब्दम् अभिषवहोमसमानकर्तृकं तु भवणं शाब्दं तेनाभिषवसमानकर्तृकत्वं होमसमानकर्तृकत्वं च द्वयं विवक्षितसाहित्यं भक्षणाङ्गम्, अतो येनोभयमनुष्ठितं स एव भक्षयेत् ॥

पुनराधानं प्रति वन्ह्यनुगमद्वयस्य निमित्तताधिकरणम् ।

**सू० पुनराधेयमोदनवत् ॥ ८ ॥**

'यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रिति किमुभयानुगमो निमित्तम्? उतान्यतरानुगमोपीति सम-स्तपञ्चशरावन्यायेनान्यतरानुगममात्रं निमित्तमिति प्राप्तेऽभिधीयते 'सत्यं निमित्तवेलायामुभावित्यविवक्षितम् । नैमित्तिकं तु नैवैतदेकस्योत्पादनक्षमम्" पुनराधेयं हि वाक्यान्तरेण यादृशमवगतं तादृशमेव गार्हपत्याहवनीययोरुद्वयाभिनिम्लोचनवेलायामनुगतयोरुत्पादकत्वेन चोद्यते, तच्च सहितयोरेव तयोरुत्पादकमवगतं नान्यतरस्य अतस्तादृशमेवात्र विधीयमानमन्यतरानुगमेन कार्यं कर्तुं क्षममिति उभयानुगमे स्यात् ॥

पञ्चशरावनिर्वापस्य कर्मान्तरताधिकरणम् ।

**सू० पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ ९ ॥**

"यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपे'दिति किमार्तदोहप्रतिनिधित्वेन पञ्चशरावो ऽमावास्याकर्मण एव साधनत्वेन विधीयते? उत कर्मान्तरं हविरार्तौ निमित्ते चोद्यत? इति "आर्तत्वाद् द्रव्ययोरन्यत्कर्मणो द्रव्यमीप्सितम् । लाघवं च विधेरेवमतो द्रव्यविधिर्भवेत्" ॥ ननु पञ्चशरावपरिमाणमोदनद्रव्यमिन्द्रश्च देवतेति बहवोऽर्थाः प्राप्ते कर्मणि[1] कथं विधीयेरन् पञ्चशरावशब्दार्थमेकं विधास्यामः तेन बहुव्रीहिणा अत्र अन्यपदार्थे ओदन एव परिमाणविशिष्टो विधीयते सान्नाय्यस्थानापन्नतया च तद्देवताप्राप्तेरैन्द्रपदं नित्यानुवादस्तस्माद् द्रव्यविधिः

1. कर्मण्येवं विधीयेरन्निति पाठान्तरम् ।

उच्यते स्थानापत्त्या हि नैकान्तात्प्राप्तिरिन्द्रस्य लभ्यते । महेन्द्रस्यापि सद्भावात्तस्मादिन्द्रो विधीयते ॥ प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते ॥

पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गताऽधिकरणम् ।

सू० स प्रत्यामनेत्स्थानात् ॥ १० ॥

तदिदं कर्मान्तरं किममावास्यां प्रत्यामनेत्? उत तस्या एवाङ्ग? मिति संशयः, तत्र पञ्चशरावः कार्यमपेक्षते दोहयोश्चानेत्वादमावास्यानिवृत्तेस्तत्कार्यं साधनमपेक्षते तयोराकाङ्क्षावशात् सम्बन्धः तस्मादामावास्ये कार्ये विधीयमानः पञ्चशरावयागस्तस्याः प्रत्याम्नायः स्यात्, "स्यादेवं यद्यमावास्या निवृत्ता, न तु सा तथा । पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य सम्भवात्" सम्भवति पयोऽन्तरे दध्यन्तरे च नामावास्यानिवृत्तिः अनिवृत्तायां च तस्यां न तत्कार्ये साधनमपेक्षते द्रव्यविनाशोपजनितवैगुण्यसमाधानं त्वपेक्षितव्यम्, अतस्तदुपकारेणामावास्याङ्गं पञ्चशरावः ॥

सत्त्रायागूर्याप्रवृत्तस्य विश्वजिदावश्यकताऽधिकरणम् ।

सू० विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥ ११ ॥

"यः सत्त्रायागुरते स विश्वजिता यजेते"ति किमागूर्य प्रवृत्तस्य विश्वजि? दुताप्रवृत्तस्यो? ताभयोरपी? ति संशयः "द्वयोरपि भवेत्कस्माद्विशेषस्याश्रुतत्वतः । प्रवृत्त एव वा कुर्यात्सत्राङ्गं हि तथा भवेत्" ॥ तत्र फलं न कल्पयितव्यं भवति निमित्तश्रुतिवैयर्थ्याच्च त्वेतदपि युज्यते "साधारण्ये च वैरूप्यं क्रत्वर्थपुरुषार्थतः ॥ यच्छब्देन ह्यागुरणं निमित्तं प्रतीयते प्रवृत्तस्य चागुरणं नित्यं निमित्तं न भवितुमर्हति तच्च निमित्तश्रुतिरूपरुध्येत साधारणपक्षे तु प्रवृत्तं प्रति क्रत्वर्थत्वादप्रवृत्तं प्रति पुरुषार्थत्वाद्वैरूप्यं स्यात् । अथोभौ प्रति पुरुषार्थत्वेन विधीयेत तथा सति फलकल्पना तावदवश्यंभाविनी तत्र प्रवृत्तस्यानपेक्षितविधानं स्यात्, न हि सत्रमागूर्य कुर्वतः किंचिदपेक्षितं यस्तु सत्रफलाय सत्रमागूर्य कुतश्चित्कारणात्तत्राप्रवृत्तस्तस्य सत्रफलप्राप्तये प्रारब्धाकरणदोषपरिहाराय च साधनमपेक्षमाणस्य विश्वजिद्विधानमपेक्षितार्थं भवति तस्मात्सत्रमागूर्याकुर्वतः प्रायश्चित्तमिदम्

बर्हिषेत्यादिश्रुतेर्व्रतकालविधानार्थताऽधिकरणम् ।

सू० वत्ससंयोगे व्रतचोदना स्यात् ॥ १२ ॥

कः प्रायश्चित्ताधिकारेऽस्य सम्बन्धः ? उच्यते विश्वजित्सत्रे प्रवृत्तस्याथाप्रवृत्तस्येति विचारिते तत्प्रसङ्गाद्वत्सापाकरणलक्षितो व्रतकालः किं सान्नाय्ये प्रवृत्तस्य ? तासान्नाय्ययाजिनोऽपी ? ति चिन्ताऽऽपतिता तदुपोद्घातत्वेन प्रथमं काललक्षणैव प्रतिपाद्यते बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामिति किमयं वत्सविशिष्टव्रतविधि ? रुत व्रतानुवादेन वत्सविधिः ? उत वत्सापाकरणं व्रतकालोपलक्षणं ? मिति संशयः, तत्र वत्सविशिष्टव्रतविधानं रागप्राप्तत्वाद्वा भोजनस्य तदनुवादेन वत्सविधिः, न वत्सस्य व्रते पाण्यादिवत्करणत्वं सम्भवति । अथ वत्समेव व्रतयेत् तदशक्यं विशसने च वत्सस्याघातः, विध्यन्तरञ्च पुरावत्सानामपाकर्त्तोर्दम्पती अश्नीयातामिति विद्यते तेनैतदेकवाक्यम् अतो व्रतोपायनस्य वत्सापाकरणेन कालो लक्ष्यते ॥

बर्हिषेत्यादिश्रुत्युक्तकालस्य सन्नयदसन्नयदुभयसाधारणताऽधिकरणम् ।

सू० कालश्चेत्सन्नयत्पक्षे तल्लिङ्गसंयोगात् ॥ १३ ॥

किमयं कालः सान्नाय्ययाजिन एव ? अथासान्नाय्ययाजिनोऽपी ? ति विचारः, तत्रासान्नाय्ययाजिनो वत्सापाकरणाभावात् न तल्लक्षितकालसम्भवः । ननु चैकपुरोडाशायामपि अनपायो हि कालस्येति वक्ष्यते तेन एव गतार्थे सत्यं तत्राग्नीषोमीयाभावेऽपि आग्नेयेन तदुपलक्षणसम्भवः, इह वत्सापाकरणमेवोपलक्षणं तदभावे केन कालो लक्ष्येतेति विशेषाऽऽशङ्का उच्यते सर्वथा तावदुपलक्षणमेव वत्सापाकरणं तच्च स्वकालद्वारेण व्रतकालं लक्षयति, तदयमर्थः योवत्सापाकरणकालस्ततः पूर्वकाले व्रतमिति, स चायमात्यन्वाधानात्पश्चात्ततः कालो ऽसान्नायिनोऽपि सम्भवति तस्मात्तस्याप्यनेन कालेनाधिकारः ॥

सह शाखयेत्यस्य कालविधानार्थताऽधिकरणम् ।

सू० प्रस्तरे शाखाश्रयणवत् ॥ १४ ॥

"सह शाखया प्रस्तरं प्रहरती"ति वचनं किं प्रस्तरप्रहरणाङ्गत्वेन शाखां विधत्ते? उत शाखाप्रतिपत्तिः प्रहरणं प्रस्तरप्रहरणकाले विधीयत? इति प्रहरणाङ्गत्वे सचयताऽपि शाखा हर्त्तव्या प्रतिपत्तित्वे तु नेति चतुर्थ इरते-यैजतिरूपत्वात्तत्र प्रस्तरस्य गुणभावात् शाखाया अपि सह-शब्देन तत्तुल्यत्वावगमाद्गुणभावमाशङ्क्य न शाखाया यज्ञो साहित्यं प्रहरणमात्रे श्रवणात् हरतौ च प्रस्तरस्य प्राधान्यात् शाखाया अपि प्राधान्यमित्युक्तम् इह पुनर्भवतु प्रहरणे सहभावस्तथाऽपि न प्राधान्यम् अयं हि वाक्यार्थः यत्प्रस्तरं प्रहरति तत्सह शाखया नान्यथेति शाखासंसर्गः प्रस्तरस्य प्रक्रियमाणस्याङ्गं मैत्रावरुणग्रहस्येव पयःसंसर्गः, यदि प्रस्तरहरणकाले शाखाप्रहरणं विधित्सितं तदा प्रस्तरेण सह शाखां प्रहरेदितीदृशं वचनं स्यात् तस्मात्प्रस्तराङ्गं शाखा ततश्चासचयताऽपि प्रस्तरार्थत्वेन शाखा हर्तव्येति पूर्वपक्षः सिद्धान्तस्तु प्रस्तरं प्रहरेदित्यर्थः प्रस्तरं प्रहरणेन प्रतिपादयेत् सह शाखयेति यदि च शखापि प्रतिपाद्यते ततः शाखया सह प्रस्तरः प्रतिपादितो भवति नान्यथा, तेन शब्दस्वारस्यात्तावच्छाखापि प्रतिपाद्येति गम्यते, न च प्रकारान्तरमस्ति येन प्रतिपत्तिर्बाध्येत । किञ्च तत्र तत्रोपयुक्ता शाखा प्रतिपत्तिमपेक्षते नोपयोगान्तरमतोऽपि प्रतिपत्तिः, प्रस्तरग्रहणं तु तत्काले प्रतिपत्तिः शाखायाः कथं स्यादित्येवमतः सचयत एव शाखाप्रहरणमिदमपि प्रासङ्गिकमेवाधिकरणं व्रताकालोऽसचयतोऽपीत्युक्तं, शाखाहरणं तु नैवं किन्तु सचयत एवेति यद्वा वत्सापाकरणं कालोपलक्षणमित्युक्तं प्रस्तरप्रहरणमपि कालोपलक्षणमित्युच्यते ॥ (शेषमग्रे)

इति शास्त्रदीपिकायां षष्ठस्य चतुर्थः पादः ॥ ४ ॥

---

॥ ॐ नमो गणेशाय ॥

## काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 376. VOL. XI.)

तपरवर्णसविधावुच्चारितोप्ययमात्मशब्दस्तत्सहचरितायामुच्चारणक्रियायां वर्तते वर्णेन क्रियायास्तुल्यत्वानुपपत्तेर्यादृशो तपरस्य वर्णस्यो॰

च्चारणक्रिया निमेषादिपरिच्छिन्ना तादृश्युच्चारणक्रियाऽस्येत्यर्थः । 'गुणान्तरयुक्तस्येति' । यद्गुणक उपात्तस्ततो गुणान्तरयुक्तस्येत्यर्थः । किं पुनरिदं नियमार्थमाहो स्विद्विध्यर्थम्, तत्राणित्यनुवृत्तौ नियमार्थे तपरो[1]वर्णस्तत्कालस्यैवेति । निवृत्तौ विध्यर्थं तत्राद्ये पक्षे 'आतो धातोः' आतां पुङ् णौ 'यस्येति च' 'विड्वनोरनुनासिकस्यादि' त्यादौ भेदका गुणा इत्यस्मिन् दर्शने यद्गुणक उपात्तस्ततो गुणान्तरयुक्तस्य ग्रहणं न स्यादिति द्वितीयं पक्षमाश्रित्याह । 'विध्यर्थमिति' । अत्र हेतुमाह । 'अणिति नानुवर्त्ततइति' । यदि विध्यर्थमिदं ततोऽस्यानण्सु चरितार्थत्वादण्सु पूर्वमेव प्रवर्त्तेत तत्राह । 'अणामन्येषां चेति' । एतदेव विशदयति । 'अतो भिस ऐसित्येवमादिष्विति' 'न प्रवर्त्तत एवेति' । परत्वानेन बाधितत्वादिति भावः । विरोधो ह्यत्र वर्तते पूर्वसूत्रेण ह्यष्टादशानां ग्रहणमनेन तु षण्णामिति । 'किमुदाहरणमिति' । अभेदकत्वात् गुणानामनण्सु सिद्धमिति प्रश्नः, अणसु भिन्नकालनिवृत्त्यर्थं तावदारब्धव्यं सूत्रं, तदेवानण्स्वपि विधिमुखेन प्रवर्तमानमिष्टं साधयतीत्युत्तरम् । 'विड्वनोरनुनासिकस्यादिति' कस्य पुनरत्र सवर्णस्य ग्रहणमिष्यतइति चिन्त्यं तस्मादुपलक्षणमेतत् । 'आतो धातोः' 'यस्येति च'-त्यादावेव प्रयोजनं, 'तत्कालस्येति किमिति' । प्रधानावयवद्वारेण सूत्रमेवाक्षिप्यते । 'षड्भिरिति' । वर्णाश्रयविधावन्तादिवद्भावो न भवति ॥

आदिरन्त्येन सहेता॥ इदमपि संज्ञासूत्रमाद्यन्तयोर्मध्यापेक्षत्वात् मध्यवर्तिनां संज्ञित्वं विज्ञायते स्वंरूपमित्यनुवृत्तेः स्वरूपस्य चेत्याह । 'मध्यवर्त्तिनामिति' । यद्यप्याद्यन्तावयवावयविनः समुदायरूपस्य सम्बन्धिनौ तथापि तस्य युगपल्लक्ष्ये प्रयोगाभावात्समुदायिनां संज्ञेति दर्शयति । 'वर्णानामिति' 'स्वस्य च रूपस्येति' । स्वरूपमादेरेव गृह्यते नान्त्यस्याप्राधान्यादिति दध्यत्रेति केवल एव यकारः प्रवर्त्तते न णकारेण सहितः सद्ग्रहणादाद्यन्तौ समुदितौ संज्ञेति समुदायादेव विभक्तिर्भवति 'इको यणची' ति नादिमात्रात् । 'टाइत्यनेन ग्रहणं माभूदिति' । तावतोव-

१ अण् इति पा० ७ पुस्तके ।

धेरविवक्षितत्वाच्चायमन्यः 'टाङसिङसामिनात्स्याः' 'द्वितीयाटौस्स्वेन' इति तृतीयैकवचनस्यासौ विशेषणार्थः ॥

येन विधिस्तदन्तस्य ॥ स्वरूपविधिपरिहारायायमारम्भः । इदमपि संज्ञासूत्रं येनेति करणे तृतीया विधीयतइति विधिः कर्म्मसाधनः किप्रत्ययः । 'विधिर्विधीयतइति' । विधिशब्देन विधानयोग्यं वस्त्वभिधीयते तस्य सांप्रतिकक्रियाविशेषद्योतनायाख्यातप्रयोगः । आसने आस्ते करणेन करोतीतिवत् । तदन्तस्येति बहुव्रीहिः । तदित्यनेन येनेति निर्दिष्टः करणभूतः शब्दो निर्दिश्यते तदाह । 'आत्मान्तस्येति' । अन्तशब्दस्यावयववाचित्वात्तदाविप्तस्य समुदायस्येयं संज्ञेत्याह । 'समुदायस्य संज्ञा भवतीति' 'अवश्यलाव्यमिति' । मयूरव्यंसकादित्वात्समासः, लुम्पेदवश्यमः कृत्यइति मलोपः । अथेह कस्मादेजन्तस्य संज्ञा न भवति 'एचोयवायाव' इति, किं स्यात् अनेकाल्त्वादयादयः सर्वादेशाः स्युस्ततश्च वयनलवनादिष्वयनमिति प्राप्नोति प्रकरणादिवशाच्चावादिवदर्थविशेषावगतिः स्यात्, नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ती' त्येवं भविष्यन्ति, अथ वा यथा एचा तदन्तविधिः एवमयादिभिरपि भविष्यति एवम 'प्याद् गुण' इत्यत्र आदित्यवर्णान्तो गृह्यते अचीति चाजादेरिति खट्वेन्द्र इत्यादावत्र-र्णान्तस्य समुदायस्याजादेश्च गुणप्रसङ्गः षष्ठीनिर्द्देशाचिर्द्दिश्यमानस्येत्यपि नास्ति एवं तर्हि नैवंविधोऽस्य विषयः । येनेति करणे तृतीयेत्युक्तम्, करणं च परतन्त्रं कर्त्रधिष्ठितस्यैव करणत्वात् न चैरसित्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं स्वरूपतोऽवभासते । 'वा स्यादिति' । वृत्तादीनामतो विवक्षानिबन्धनं तदुभयमिति विशेषणत्वेन विवक्षितं परतन्त्रमप्रधानं विशेष्यत्वेन विवक्षितं स्वतन्त्रं प्रधानं तेन विशेषणं विशेष्यस्य तदन्तस्य संज्ञेत्युक्तं सम्भवति विशेष्यसन्निधौ च विशेषणं भवति संनिधिश्च कुत्र चित्साक्षाचिर्देशेन यथेदूदेद्द्विवचनमिति द्विवचनस्य । क्व चिदधिकाराद्यथा 'एरजि' ति धातोः, क्व चिदाक्षेपाद्यथे 'ओ भलि' ति सनर धातोः । 'एचो यवायाव' इत्यादौ न कथं चिद्विशेष्यसंनिधिरिति नैतत्प्रवर्तते, यदि विशेषणं तदन्तस्य संज्ञा तत 'उदोष्ठ्यपूर्वस्ये' त्यत्र चकारस्तद-

न्तस्य धातोः संज्ञेति ओष्ठ्यपूर्वग्रहणं धातोरेव विशेषणं स्याद् न ऋकारस्य संज्ञा-
याः संज्ञिप्रत्यायनार्थत्वात् ततश्चेह स्यात् सङ्कीर्णमिति, पूर्तमित्यादौ च न
स्यात्, एव 'मुतश्च प्रत्ययादसंयोगपूर्वादि' त्यत्रासंयोगपूर्वग्रहणमङ्गस्य वि-
शेषणं स्यात् नोतः, नैष दोषः । इयं हि संज्ञा गुणप्रधानभावापेक्षा ततश्चो-
तश्च प्रत्ययादित्यादौ विशेषणसम्बन्धवेलायां गुणभावास्फुरणात्तमनुभूय
पश्चात् विशेष्येण सम्बन्धे संज्ञा भवति । 'समासेति' । अनेनैतदाह श्रिता-
दयो पश्चात् विशेष्यास्तद्विशेषणं च सुप्, एवं 'नडादिभ्यः फगि' त्यादौ
नडादिविशेष्यं प्रातिपदिकं विशेषणमिति । 'कष्टं परमश्रित इति' । श्रितान्तमे-
तत्सुबन्तं न भवतीति सम्बुध्यन्तं पठितव्यं तद्धि प्रत्ययलक्षणेन सुबन्तं भवति
श्रितान्तं च श्रूयते । 'नेत्याहेति' । कः पुनराह उत्तरवादी आचार्यो वा ।
'उगिद्वर्णेति' । उगिता वर्णेन च प्रातिपदिकं विशेष्यमित्यर्थः । यस्मि-
न्विधिरिति तदन्तविध्यपवादस्तदादिविधिः, अतो विशेषणेनैव भवति ॥

वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ समुदायस्यैवाचामादिः सम्भवतीति
स एव यस्येत्यनेनोच्यत इत्याह । 'यस्येति समुदाय उच्यत इति' ।
संज्ञिनिर्देशार्थं चेदम्, अन्यथा तच्छब्देन किं परामृश्येत तदित्यस्यानुपा-
दाने वृद्धिरेव सा वृद्धसंज्ञा स्यात् । 'अचां मध्य इत्यादि' । अत्र यस्येत्य-
स्याचामित्यनेन सम्बन्धः आदिश्च निर्धार्यते वृद्धिर्विधेयो धर्म आदि-
शब्दश्चोपक्रमवचनः उपक्रम्यत इत्युपक्रमः प्रथम उच्चार्यत इत्यर्थः । यस्य
समुदायस्य सम्बन्धिनामचां मध्ये प्रथमत उच्चार्यमाणो वृद्धिसंज्ञक
इत्यर्थः । 'अचामिति जातौ बहुवचनमिति' । तेन द्वयोरपि भवतीति
भावः । एकस्यापि व्यपदेशिवद्भावाद् भवति । 'शालीय इति' । अत्र
समुदायस्य हलादित्वेप्यजपेक्षया प्रथमोऽच् वृद्धिरिति संज्ञा भवति ।
ननु च निर्धारणस्य तुल्यजातीयविषयत्वान्निर्धार्यमाण आदिरप्यजेव प्रती-
यते न वा ऽऽकारोऽच् । अक्षरसमाम्नायेऽनुपदेशात् कथं तर्हि सोमपं
ब्राह्मणकुलमिति अच्कार्यं ह्रस्वत्वं भवति सवर्णग्रहणान्न त्वच्त्वात् ॥
इहापि तर्हि सवर्णग्रहणाद्भविष्यति । स्यादेवं यदि ह्यज्ग्रहणमुच्चारितं
स्याद् इह तु निर्धारणस्वभावात्प्रतीयते, अस्तु तथाप्रतीयमान एव सवर्णग्रही-

ष्यति यथाऽवर्हणो मध्यवर्तीकारादिः । किस्वाचामिति निर्द्धारणाश्रये तावदि-कारस्योच्चारितत्वाद् आकारोऽपि प्रतीयते तेन निर्द्धार्यमाणस्याप्याकारा-देस्तथा भूतमेवाच्त्वं प्रतीयतइति यत्किञ्चिदेतच्चोद्यम् । 'वा नामधेय-स्येति' । नामधेयशब्दः साङ्केतिकेषु रुढः । 'देवदत्तीया इति' । काश्या-दिषु देशवाची देवदत्तशब्दः पठ्यते । 'एङ् प्राचां देश' इति वृद्धसंज्ञकः काश्यादिभिः साहचर्यादित्यदेशवाचिनश्छ एव भवति, वाहीकग्रामवाचि-नोपि देवदत्तशब्दस्यानादित्वेनासाङ्केतिकत्वाद् अप्राचां देशवाचित्वाच्च वृद्धसंज्ञायाअभावात् काश्यादिलक्षणौ ठञ्ञिठौ न भवतः । 'गोत्रान्ता-दित्यादि' । गोत्रशब्देन गोत्रप्रत्ययान्तं गृह्यते तदन्तादसमस्तवत् केव-लात् गोत्रान्ताद्यः प्रत्ययो भवति स एव तदन्तादपि भवतीत्यर्थः । 'घृतरौढीया इति' । रूढस्यापत्य 'मतइञ्' शैषिकेष्वर्थेष्विञश्चेत्यणो 'न द्व्यचः प्राच्यभरतेषु' इति निषेधाद् 'वृद्धाच्छः' एवं वृद्धान्तीयाः अम्भसो-ऽपत्यं 'सम्भयोम्भसोः सलोपश्चे' ति बाह्वादिषु पाठादिञ् सलोपश्च । 'ओदनपाणिनीया इति' । पणिनोपत्यमित्यण् गाथिविदथीति प्रकृतिभावा-'ट्टे' रिति टिलोपाभावः पाणिनस्यापत्यं पणिनोयुवेति इञ् तस्य छात्रा इति विवक्षिते 'यूनि लुगि' ति इञो लुकि कृतेपि प्रत्ययलक्षणेन 'इञश्चे'-त्यण् प्राप्तो गोत्राधिकाराच भवति 'कण्वादिभ्यो गोत्र' इत्यत्र तावत् पारिभाषिकं गोत्रं गृह्यते तदेवेतश्चेत्यत्राप्यनुवर्त्तते तेन यूनीञ् न भवति कश्यपशब्दो बिदादिः, कतशब्दो गर्गादिः, जिह्वावपलो हरितभवश्च कात्यस्ततोऽणेव भवति कः पुनरत्र प्रत्ययातिदेशप्रस्तावः यावताशेषा-धिकारे प्राग्दीव्यतोऽणित्यत्र चैतद्वक्तव्यं, सत्यं,कैश्चित्तु गोत्रान्तस्य वृद्धसंज्ञा विहिता एवमपि वृद्धाभीया इति सिद्धेः वार्तिककारस्तु वृद्धसंज्ञायां सत्यां पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वा इति 'वृद्धाच्छः' स्यात् प्रत्ययाति-देशेऽपि 'कण्वादिभ्यो गोत्र' इत्यण् लभ्यतइति मन्यमानः पूर्ववाक्येन परमतमुपन्यस्यानेन वाक्येन निरस्यति स्म तदेव पठितं वृत्तिकारेण ॥

त्यदादीनि च ॥ 'उत्तरार्थमिति' । तत्र प्रयोजनवत्त्वात् यस्याचा-मादिरेङिति सम्बन्धसम्भवाच्च । 'इह तु न सम्बध्यतइति' । अयोग्य-

त्वात् निर्द्धारणस्य सजातीयविषयत्वात्, त्यदादीनां चाजात्मकत्वा भावात् नह्यस्ति सम्भवः। 'यस्याचामादयस्त्यदादय इति'। न च त्यदादिष्वेचि त्यदादिशब्दो वर्त्तत इति क्लिष्टकल्पना युक्ता, उत्तरार्थमप्यनुवृत्ति सम्भवात्। तदुक्त'मुत्तरार्थमनुवर्त्तत इति' 'त्यादायनिरिति'। 'उदीचां वृद्धादगोत्रादि'ति फिञ् 'प्रत्ययोत्तरपदयोश्च'॥

एङ् प्राचां देशे॥ 'प्राचां देशाभिधानइति'। प्राचि देशे ये वसन्ति ते प्राचः पुरुषास्तेषां सम्बन्धी यो देशस्तदभिधानइत्यर्थः। एतेन श्रुतस्य विशेषणं प्राचां ग्रहणं नाचार्याणामिति दर्शयति, तथाहि सति मतेनेत्यध्याहार्यं स्यादिति भावः। 'एणीपचनीय इत्यादि'। एणीपचनादिभ्यश्छः। 'देवदत्ता इति'। 'वाहिकग्रामेभ्यश्चे'ति वृद्धादिति विहितौ ठञ्ञिठौ न भवतः। काश्यादिपाठादपि न भवतस्तत्रापि वृद्धाधिकारात्। एवं क्रोडो नाम ग्रामस्तत्र भवः क्रोड इत्यणेव भवति। वृत्तिना तु प्राचांग्रहणमाचार्यनिर्द्देशार्थं व्याख्यातं, भाष्यकारोपि तथैवाशिश्रियत्। तेन सैपुरं स्कौनगरं च वाहीकग्रामौ तत्र 'वाहीकग्रामेभ्यश्चे'ति ठञ्ञिठौ भवतः। सैपुरिकी सैपुरिका। स्कौनगरिकी स्कौनगरिका। अस्य व्यवस्थितविभाषाविज्ञानाच्च क्रोडदेवदत्तशब्दयोरप्राग्देशवाचिनोष्ठञ्ञिठौ न भवतः, शैषिकेष्वेवार्थेष्वियं वृद्धसंज्ञेष्यते। तेनापत्यविकारयो 'रुदीचां वृद्धादगोत्रात्' 'नित्यं वृद्धशरादिभ्य' इतिवृद्धलक्षणप्रत्ययाभावः। एतदपि व्यवस्थितविभाषयैवसिद्धं, वृत्तिकारपक्षे त्वेतत्सर्वं वचनात्साध्यम्। 'गोमतीइति'। गोमती प्राग्देशे नदी देशग्रहणेन न गृह्यते नदीदेशोऽग्रामा इति नद्याः पृथग्ग्रहणात् 'एङ् प्राचां देशे' 'उदीचां वृद्धादगोत्रादि' त्यादिषु प्रागुदचौ श्रुतौ तयोर्विभागज्ञानार्थमाह। 'प्रागुदञ्चाविति'। शरावतीनाम नदी उत्तरपूर्व्वाभिमुखी तस्याद्दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देश उत्तरापरस्यामुदग्देशः तौ शरावती विभजते तया मर्यादया तयोर्विभागो ज्ञायते। 'क्षीरोदकमिति'। 'जातिरप्राणिना' मित्येकवद्भावः। क्वचित् क्षीरोदक इति पाठात्तत्र नियतव्यक्तिविवक्षया जातिपरत्वाभावाद् द्विवचनम्। किमर्थं विभजते विदुषां शब्दसिद्ध्यर्थं यद्यपि नद्या एवमुद्देशो न

भवति विदुषां शब्दा व्यवस्थिताः सिद्ध्यन्ति तथापि तया हेतुभूतया व्यवस्थितं शब्दसाधुत्वमिति उद्देशोऽध्यारोप्यते सैवं भूता सा नोऽस्मान् पातु, क्वचित् प्रागुदीचाविति पाठः तत्राऽपत्यन्वबपूर्वादित्यत्राजितियोगविभागादच्प्रत्ययः । 'उद ईदि' तीत्वं, प्रागुदीचमिति पाठे समाहारद्वन्द्वः । 'द्वन्द्वाच्चुदषहान्तात्समाहार' इति टच् । क्वचित्प्रागुदीच इति पाठः तत्रावयवबहुत्वस्य समुदायआरोपः, प्राग्देशानुदग्देशांश्चेत्यर्थः ॥

इति हरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥ (शेषमग्रे)

---

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

## श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

### तत्र प्रथमाध्यायस्यावशेषः ।

*(Continued from page 366. Vol. XI.)*

टी० "स्वं पदञ्चे"ति, स्वाभिमुखश्चेतनस्त्वं-शब्दार्थः, आभिमुख्यं च स्ववाक्यबोध्यत्वं बोध्यत्वं चाज्ञस्य संसारिणस्त्वतः प्राप्तमिति भावः तस्माद्बोधनार्हतोपयोग्याकारविशिष्टस्त्वमर्थः, अतस्स परित्यक्तो भवति प्रमाणतर्कापर्यालोचनापूर्वा क्तेत्याह "निर्विशेषे"ति, पदद्वयनिमित्तप्रहाणे निर्विशेषत्वस्य बुद्धिस्थत्वात्तदनुपपत्तिरूपतर्कापर्यालोचनं दर्शितं, सामानाधिकरण्यबलान्निर्विशेषवस्त्वभ्युपगम इति शङ्कायां पदद्वयलक्षणालक्षणं दूषणमाह "एवञ्चे"ति, एवञ्च सति-निर्विशेषस्वरूपोपस्थापनपरत्वे मुख्यार्थसम्बन्धितया वस्तुमात्रावबोधनेऽभ्युपगते लक्षणास्वीकार इत्यर्थः । अथ परमतमुपन्यस्यति "अथोच्यतेति", समानाधिकरणवृत्तानामिति यन्यः

पक्षविषयसङ्ग्रहरूपः, विशेषणांशे तात्पर्य्यासम्भवादिति अन्यथा विशेषण-बहुत्वादेकार्थत्वासिद्धेरिति भावः। पूर्वमप्युक्तादेवेत्येवकाराभिप्रायः। प्रथम-सूत्रे हि बहुश उक्तः। यद्वा अन्यनैरपेक्ष्यपर एवकारः, न लक्षणाप्रसङ्ग इति वा-क्यार्थबहिर्भूतप्रतिपादनादिति भावः। एवं पक्षविषये संक्षेपेणोक्तमर्थमुपपादय-ति "यथेत्यादिना", तत्र महाभाष्योक्तेऽप्युदाहरणे विशेषणांशे तात्पर्यासम्भवं सिद्धं कृत्वा उदाहृतः। कथं तत्र विशेषणांशाविवक्षा? त्यत्राह "तद्विवक्षाया-मिति", प्रसक्तस्यानिष्टतां दर्शयति "तस्मि"ति, युगपदभिधाने उद्देश्योपा-देयविभागहानिप्रसङ्गात् पदद्वयप्रकृत्युपस्थापितविशिष्टैक्ये समानविभक्त्या प्रतिपाद्यमाने विशेष्यांशस्येव विशेषणभूतजातिगुणांशयोरप्यैक्यप्रसङ्गाच्च क्रमेणाभिधानपक्षोऽभ्युपगन्तव्य इति हृदि निधायाह—

सू० न हि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशिष्यते जातिगुणयोरन्योऽन्यसमवायप्रसङ्गात्, अतो नीलत्वोत्पल-त्वोपलक्षितवस्त्वैक्यमात्रं सामानाधिकरण्येन प्रतिपाद्यते, तथा सोऽयं देवदत्त इत्यतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्त्तमानकालविशिष्टतया प्रति-पादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामा-नाधिकरण्येन प्रतिपाद्यते। यद्यपि नीलमित्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते तथापि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा, अपि तु विशेषणांशस्याविवक्षामात्रं सर्वत्र समा-नाधिकरण्यस्यैष एव स्वभाव इति न कश्चिद्दोष इति।

टी० "न ही"ति, क्रमपक्षेऽपि पूर्वपदप्रतिपन्नाकारविशिष्टस्य पदा-न्तरप्रतिपन्नाकारविशिष्टवस्तुतादात्म्यं किं समानविभक्त्या बोध्यम्? उत पूर्वपद प्रतिपन्ने विशिष्टे विशेषणान्तरान्वय? इति विकल्पमभिप्रेत्य प्रथमे

विशेषणभूतजातिगुणयोरव्यैक्यप्रसङ्गं सिद्धं बुद्धा द्वितीयेऽपि अन्योन्यसमवायप्रसङ्गमाह "जातिगुणयो"रिति, तात्पर्यबहिष्ठस्यापि विशेषणस्योपयोगं दर्शयन् फलितमाह "अत" इति, नीलोत्पलमित्यत्र विशेषणान्वये स्फुटेऽपि तात्पर्याभाव उक्तः, तत्र विशेषणानन्वयस्यास्फुटत्वाद्विशेषणान्वये स्पष्टतात्पर्याभावमुदाहरणान्तरं दर्शयति "तथे"ति, विशिष्टवाचिनश्शब्दस्य विशिष्टपरित्यागेन विशिष्टैकदेशतया तत्सम्बन्धिनि विशेष्यस्वरूपमात्रे वृत्तिर्लक्षणैव स्यादित्यत्राह "यद्यपी"ति, परिहरति "तथापी"ति, वाच्येऽर्थे न हि शक्तिविषयाद्विशिष्टाद् बहिर्भूतं विशेष्यमिति भावः। "प्रधानांशस्ये"ति, तात्पर्यविषयतया धर्मितया च प्रधानस्य विशेष्यांशस्यावर्जनादप्रधानविशेषणत्यागेऽप्यङ्गुल्यादिविकले पुरुष–शब्दस्येव न लक्षणेति भावः। मुख्यार्थत्वे तुल्येऽपि विशिष्टप्रतिपादनदशातो वैलक्षण्यं दर्शयति "अपि त्वि"ति, अपि वक्तामात्रमिति अशक्ये क्वचिद्व्यापाराभावाद् व्यापारविषयांशेऽपि न ह्यशक्तिरिति भावः। पूर्वं पक्षे लक्षणाभाव उक्त इदानीं सपक्षे विवादी कृतो भवति,विशेषणाविवक्षायामस्वारस्यं स्यादित्यत्राह "सर्वत्रे"ति, सामानाधिकरण्यव्युत्पत्तेरीदृशत्वाचास्वारस्यं व्युत्पत्त्यननुरोधे सति ह्यस्वारस्यम्, अत ऐकार्थ्यव्युत्पत्तिविरोधिविशेषणविवक्षामेवास्वारस्यमिति भावः। इमम्पूर्वपक्षं प्रतिक्षिपति–

भा० तदिदमसारं सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याप्यं, तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टो ऽभिधीयते, यथा नीलमुत्पलमानयेत्युक्ते नीलिमादिविशिष्टमेवानीयते, यथा च विन्ध्याटव्यां मदमुदितो मातङ्गगणः तिष्ठतीति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते।

टी० "तदिदमसार"मिति, प्रथमञ्चरमोक्ततया बुद्धिस्थं व्युत्पत्त्यन्तराश्रयणनिरस्यति "सर्वेष्वेवे"ति, सर्वेषु समानाधिकरणेषु व्यधिकरणेषु च वाक्येष्वित्यर्थः, गामानय गां बधानेत्यादिव्यधिकरणवाक्येषु, न हि प्रतिवाक्यं पदानामर्थभेदव्युत्पत्तिकल्पनं "क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रह" इति न्यायेन क्लृप्तव्युत्पत्त्यैव स्वार्थबोधनसम्भवे व्युत्पत्त्यन्तरकल्पनानुपपत्तेः, तथा समानाधिकरणवाक्येष्वपि न पदानां व्युत्पत्त्यन्तरं प्रवृत्तिनिमित्ताविशिष्टार्थविषयं कल्पनीयमिति भावः । व्युत्पत्त्यन्तराभावेऽपि वाक्यानां परस्परवैषम्यसम्भवोपपादनपरं व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रमिति पदं व्युत्पत्तिसिद्धार्थसंसर्गविशेषाद्वाक्यवैषम्यं न तु प्रकृत्यंशस्य व्युत्पत्त्यनवगतार्थान्तरकल्पनादित्यभिप्रायः । एवं सर्ववाक्यसाधारणं रूपमुक्तम्, अनेन समानाधिकरणवाक्येषु फलितमर्थमाह "तत्रे"ति, तत्र–तेषु वाक्येषु, समानाधिकरणपदानां विशिष्टैकार्थप्रतीतिहेतुत्वमुदाहरणेन दर्शयति "यथे"ति, प्रत्यक्षविषयं परोक्षविषयञ्च उदाहरणद्वयम्, अत एव ह्यानीयते प्रतीयत इत्युक्तं, कारकविभक्त्यन्तत्वञ्च न सामानाधिकरण्यविरोधीत्यभिप्रायेण नीलमुत्पलमानयेत्युक्तं नीलिमादिविशिष्टमेवानीयत इति समानाधिकरणपदसमुदायो वस्तुमात्रप्रत्यायकश्चेद्वस्तुमात्रस्याविशेषादनीलमप्यानीयेत इत्यभिप्रायः । किं च समानाधिकरणपदानां विशेषणपरित्यागे को हेतुस्समानविभक्त्यावगतमैक्यमिति चेन्न प्रातिपदिकावगतविशेषणान्वयबलात्समानविभक्तिरैक्यं न प्रतिपादयेत्, तदेव युक्तं विभक्त्यर्थादपि प्रातिपदिकार्थप्राधान्यात्, "अदितिः पाशान्" "ग्रहं सम्मार्ष्टी"त्यादिषु हि विभक्त्यर्थोऽनादृतः ऐक्यविषयप्रयोगदर्शनादैक्यविषयमिति चेत् विशेषणान्वयेऽपि प्रयोगदर्शनाद्विशेषणान्वयमपि प्रतिपादयति शाब्दप्रतीतिर्वस्तुमात्रस्यैव, विशेषणान्वयस्तु प्रत्यक्षबलात्स्वीक्रियते प्रत्यक्षागोचरेतु यथाशब्दं न विशेषणप्रतीतिरिति चेत् न विशेषणान्वयश्शाब्दप्रतीतिविषयः, ऐक्यन्तु प्रत्यक्षबलादङ्गीक्रियत इति किं न स्यात् ।

भा० एवं वेदान्तवाक्येष्वपि सामानाधिकरण्यनिर्देशेषु तत्तद्विशेष-

णविशिष्टमेव ब्रह्म प्रतिपत्तव्यं, न च विशेषणविवक्षाया-मितरविशिष्टाकारं वस्त्वन्येन विशेषि[1]तव्यम् अपि तु सर्वै-रपि विशेषणैः स्वरूपमेवं विशेष्यं तथाहि भिन्नप्रवृत्ति-निमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिक-रण्यम्, अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्याकाराद्-आकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं हि सामानाधिकरण्यकार्य्यम्

टी० प्रत्यक्षागोचरेऽपि देवदत्तः श्यामो युवेत्यादिप्रयोगेष्वैक्यधीप्र-दर्शनादैक्यं शाब्दप्रतीतिविषय इति चेत्, तत्रैव परोक्षविषयप्रयोगे विशेष-णान्वयस्यापि प्रतीतेर्विशेषणान्वयः शाब्द एव न प्रत्यक्षसिद्ध इति, इत्थं प्रत्यक्षपरोक्षविभागरहितं समानाधिकरणपदानामनेकविशेषणविशिष्टैका-र्थबोधकत्वं दृश्यत इति चरमपर्वाभिप्रायेणोदाहरणद्वयं दर्शितं, तस्माद्य "एव लौकिकास्त एव वैदिका" इति, लोकवेदाधिकरणन्यायेन वेदान्तवा-क्येष्वपि पदद्वयावगतविशेषणापरित्यागेनैवार्थः प्रतिपत्तव्य इत्याह "एवं वेदान्ते"ति, अन्योन्यसमवायप्रसङ्गं परिहरति "न चे"ति, अहणाधिकरणे विस्तरेण परिहारो वक्ष्यत इत्यत्र संक्षिप्तः, न हि यथाऽनुपपत्तिः स्यात्तथा वक्तव्यमिति भावः । युगपदभिधानं हृदि निधाय सर्वैर्विशेषणैः स्वरूपमेव विशेष्यमित्युक्तं, सर्वविशेषणैः स्वरूपस्य विशेष्यत्वेऽनुगुणं सामानाधि-करण्यलक्षणमित्याह "तथा ही"ति, न हि विशेषणान्तरविशिष्टाकारे विशेषणान्तरान्वयप्रतिपादनं सामानाधिकरण्यमित्युक्तमित्यर्थः । सामाना-धिकरण्यलक्षणमन्यं विवृणोति—

भू० यथा देवदत्तः श्यामो युवा लोहिताक्षोऽदीनो ऽकृपणोऽनवद्य इति, यत्र त्वेकस्मिन् वस्तुनि समन्वयायोग्यम्

१ विशेष्टव्यमिति पा० ।

टी० "अन्वयेन निवृत्त्या वे"ति, अन्वयरूपार्थस्य व्यावृत्तिरूपार्थत्वं न कल्प्यं यथा व्युत्पत्त्यन्वयमुखेन व्यावृत्तिमुखेन वा वस्तुनः पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्तताप्रतिपादनं समानाधिकरणपदसमुदायकार्यमित्यर्थः, तत्रोदाहरति "यथे"ति, अन्वयमुखेनानेकप्रवृत्तिनिमित्तवैशिष्ट्योदाहरणं श्यामो युवेति व्यतिरेकमुखेनानेकाकारान्वयोदाहरणम् अदीन इत्यादि, दीनत्वमभास्वरमनस्कत्वं कृपणत्वं-निर्धनत्वम्, अत्रायमर्थः क्रमेणाभिधाने व्यधिकरणवाक्येष्वपि कारणकारकविशिष्टेऽधिकरणकारकान्वयः स्यात् तद्विशिष्टे इतरकारकान्वयो वा प्रसज्जेदित्यन्योन्यविशेषविशेष्यभावचोद्यं व्यधिकरणवाक्येऽपि समानं तत्र यः परिहारस्स एवात्रापि,"तथा हि पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् । न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् । इत्युक्तप्रकारेण स्मरणस्मारणदशायां सर्वैः पदैः पृथक् पृथक् स्वार्थस्मरणान्न विशेषणानामन्योन्यसमवायप्रसङ्गः, परामर्शदशायां यथोपपन्नं भवति तथा परामर्शान्नायं प्रसङ्गः पश्चाद्युगपत्सर्वैः पदैर्वाक्यार्थबोधनाच्च मिथस्समवायप्रसङ्गः, तस्मात्समानाधिकरणपदैर्युगपत्तत्प्रवृत्तिनिमित्तविशिष्टैकविशेष्यप्रतिपादनेन क्रमाभावान्नान्योन्यसमवाय इति, सर्वैर्विशेषणैः स्वरूपमेव विशेष्यमिति यन्थे अयमर्थोऽभिप्रेतः, अत्र सामानाधिकरण्यलक्षणग्रन्थोपादानेन अन्यदपि चोद्यं परिहृतं भवति, युगपदभिधाने विशिष्टयोरैक्यं समानविभक्तिः प्रतिपादयतीति विशिष्टैक्यवद्विशेषणैक्यमपि स्यादिति चोद्यम् । अत्र परिहार, एकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति समानविभक्त्या विशेष्यस्यैवैक्यप्रतिपादनाच्च विशेषणैक्यमिति । ननु विशेषणे विशेष्ये चाविशेषेण प्रातिपदिकेनावगते सति समानविभक्तिर्विशेष्यमात्रैक्यपरा न तु विशेषणैक्यपरेति किं नियामक? मिति चेत् समानविभक्तिरैक्यबोधिका न तु भेदबोधिकेति, किं नियामकं? व्युत्पत्तिरिति चेत् साऽत्रापि तुल्या किं च पदान्तरासमानाधिकृते घट इति पदे प्रयुक्ते तत्स्था विभक्तिः प्रातिपदिकावगतानां विशेषणविशेष्यतत्सम्बन्धानामैक्यं न प्रतिपादयति इति विशेष्यमात्रैक्यमेव प्रतिपादयतीति किं नियामकं? प्रत्यक्षमूला हि व्युत्पत्तिः

प्रत्यक्षस्य विशेष्यमात्रैक्यं दर्शयति न तु विशेषणविशेष्यतत्सम्बन्धानामैक्यम् अतः प्रत्यक्षमूला व्युत्पत्तिर्नियामिकेति चेत् सैवाऽत्रापि नियामिकेति तुल्यमिति, एवं सर्वत्र व्युत्पत्तिसिद्धाऽर्थ एव स्वीकार्यश्चेच्च क्वचिदपि वृत्त्यन्तरकल्पनं, व्युत्पत्त्यन्तरकल्पनं वा स्यादित्यत्राह "यत्र त्वि"ति,

सू० विशेषणद्वयं समानाधिकरणपदनिर्दिष्टं तत्राप्यन्यतरत्पदममुख्यवृत्तमाश्रीयते न द्वयं, यथा गौर्वाहीक इति, नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते। अथ मनुषे एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं वस्तु विशेषणान्तरप्रतिसम्बन्धित्वाद्विलक्षणमिति घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात्समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्

टी० "विशेषणद्वय"मिति, वित्वाद्देरव्युपलक्षणं व्युत्पत्तिसिद्धार्थस्वीकार एव सर्वत्र स्वतः प्राप्तः, तस्य प्रमाणविरोधादन्वयायोग्यत्वे सति वृत्त्यन्तरकल्पनं प्राप्तं, तदसम्भवे व्युत्पत्त्यन्तरकल्पनं गो-शब्दस्य क्रियापरत्वे वृत्त्यन्तराभावाद्धि शक्तिकल्पनं, यदा वृत्त्यन्तरकल्पनं तदानीमप्यन्यतरपदस्यामुख्यत्वकल्पनं तावतैव विरोधशमनात्, न पुनस्सर्वेषां पदानां तात्पर्यनिश्चायकाभावप्रसङ्गात् गौर्वाहीक इति प्रयोगे गोपदस्यैव ह्यमुख्यत्वं न तु वाहीकपदस्यापि अन्यतरपदस्य वृत्त्यन्तरकल्पनेऽपि न निर्विशेषवस्तुपरत्वं मुख्यवृत्त्युपनीतविशेषणानन्वयेऽपि वृत्त्यन्तरोपनीतविशेषणान्वयाद्रित्यभिप्रायः, नीलोत्पलादिवाक्येषु वृत्त्यन्तरकल्पनहेतुरेव नास्तीत्याह "नीले"ति, विशेषणभेदेन विशेष्यभेदं शङ्कते "अथ मनुष" इति, विशेषणप्रतिसम्बन्धित्वं-विशेषणविशिष्टता, एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणमिति भावप्रधानो निर्देशः, निरूप्यमाणत्वं विवक्षितम् एकविशेषणप्रतिसम्बन्धित्वं विशेषणान्तरप्रतिसम्बन्धित्वात् विलक्षणमित्यर्थः । यद्वा एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं वस्तु विशेष-

णान्तरप्रतिसम्बन्धित्वाद्धेतोस्तस्माद्विशेषणान्तरविशेष्यात्पदार्थाद्विलक्षणमित्यर्थः । विशेषणप्रतिसम्बन्धित्वभेदाद्विशेष्यस्वरूपभेदं निदर्शयति "घटपटयोरिवे"ति, यथा घटत्वविशिष्टतायाः पटत्वविशिष्टतायाश्च भेदेन तद्विशिष्टयोर्घटपटयोर्विशेष्ययोर्भेदस्तथा विशेषणान्तरान्वयस्यान्यविशेषणान्वयस्य च भेदेन तद्विशेष्ययोश्च भेदः समानविभक्तिनिर्देशे सत्यप्यवर्जनीय इति सामानाधिकरण्यं न विशिष्टैक्यप्रतिपादनक्षममित्यर्थः ।

मू० अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेवेति, स्यादेतदेवं यदि विशेषणद्वयप्रतिसम्बन्धित्वमात्रमेवैक्यं निरुन्ध्यात्, न चैतदस्ति, एकस्मिन्धर्मिण्युपसंहर्त्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि, अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः, नीलमुत्पलमित्यादिषु तु दण्डित्वकुण्डलित्ववत् रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते, न केवलमविरोध एव प्रवृत्तिनिमित्तभेदेनैकार्थबोधकत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टता ।

टी० न विशिष्टप्रतिपादनपरत्वमिति विशेषणान्वयप्रतीतेरवर्जनीयत्वेऽपि न तत्र तात्पर्यमिति भावः । विशेषणत्यागे तत्प्रतिसम्बन्धिविशेष्योपस्थापनायोगात्तदैक्यमपि दुष्प्रतिपादमित्यत्राह "अपि त्वि"ति, तात्पर्याविषयस्यापि विशेषणस्य परामर्शदशाप्रतीतिमात्रेण तद्विशेष्यप्रतीतिसिद्धेस्तदैक्यप्रतिपादनं सम्भवतीत्यर्थः । परिहरति "स्यादेतदि"ति, यत्रायोग्यत्वमभ्युपगतं तत्रापि विशेषणत्वमेव ह्ययोग्यत्वे प्रयोजकम् अतो नीलत्वादिविशेषणमपि विरुद्धं स्यादित्यत्राह "अयोग्यता चेति," प्रमाणान्तरसिद्धेति न पुनर्विशेषणत्वप्रयुक्तमयोग्यत्वमिति भावः । प्रमाणान्तरमपि घटत्वपटत्वयोर्भिन्नाधिकरणत्वलक्षणं विरोधमवगमयति नीलत्वोत्पलत्वयोरपि स विरोधस्तुल्यः, षट्पदे कुमुदे च पृथग्दर्शनादि.

त्यत्राह "नीलमुत्पलमित्यादि"त्विति, न केवलम्भिन्नाश्रयत्वमात्रं विरोधः अपि तु तन्नियमः, न च नीलत्वोत्पलत्वयोस्तादृशविरोधः क्वचित्सहप्रमितत्वादिति भावः। "दण्डित्वे"ति, दण्डादिकं युतसिद्धं, रूपादिकमयुतसिद्धं युतसिद्धत्व युतसिद्धत्वादिविभागवद्विशेषणत्वमपि विरोधाप्रयोजकमिति भावः। यद्वा दण्डित्वादिकं परस्परपरिहारेण वर्तते रूपं तु रसम्परिहृत्य वर्तते रसस्तु न रूपं परिहृत्य वर्तते तत्र रूपापरिहारिणो रसस्य रूपस्य चाविरोधो दुरपह्नवः क्वचित्सहोपलम्भात्, तथा परस्परपरिहारिणोरपि नीलत्वोत्पलत्वयोः क्वचित्सहोपलम्भादविरोध इत्यभिप्रायेण उदाहरणद्वयं दर्शितम्, अविरोधेऽपि विवक्षितैश्यानुपयोगाद्विशेषणाविवक्षेत्यत्राह "न केवल"मिति, पर्याययोः पदयोरेकार्थवृत्तौ निमित्तसापेक्षत्वात्तेन विना तत्र वृत्त्ययोगात्चात्यन्तोपयोगाद्विशेषणस्य विवक्षितत्वमित्यर्थः। उपपादकत्वमेव विवक्षो बाधदर्शनेन [1]घटयति।

सू० अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात्समानाधिकरण्यमेव न स्यात्, विशेषणानां स्वसम्बन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे सत्येकेनैव वस्तूपलक्षितमित्युपलक्षणान्तरमनर्थकमेव उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः, सोऽयं देवदत्त इत्यत्रापि न लक्षणागन्धो विद्यते विरोधाभावात्।

टी० "अन्यथे"ति, अन्यथा—विशेषणत्यागे। उपलक्षणतया निमित्तत्वं स्यादित्यत्राह "विशेषणानामि"ति, अनादरस्तात्पर्याभावः, यथोपलक्षणभूतायां शाखायां न तात्पर्यमपि तु चन्द्र एव तात्पर्यं तद्वदित्यर्थः ननूपलक्षणान्तरवैयर्थ्यन्तवापि प्रसजेत्, एकस्मिन्नुपलक्ष्ये जन्माद्यनेकोपलक्षणाभ्युपगमादित्यत्राह "उपलक्षणान्तरे"ति, अस्माभिस्तु जन्मादिभिरुप-

[1] दृढयतीति पा०।

लक्षणेऽपलक्ष्यास्मदनुगुणज्ञानशक्त्याद्याकारभेदास्स्वीकृता इति न नैरर्थक्य-मिति भावः। तेनाकारेणेति अन्ततोगत्वाऽप्यवर्जनीयं सविशेषत्वम्, एवं च सति उपलक्ष्याकारान्तराभ्युपगमेन तस्योपलक्षणत्वाङ्गीकारादपि उपलक्षण-तया ऽभिमतानामेव विशेषणत्वाङ्गीकारो वरमिति भावः। पूर्वं लक्षणाङ्गी-कारपक्षेऽन्यतरपदामुख्यत्वादिदूषणान्युक्तानि, यत्तु वाच्ये प्रधानांशस्य प्रति-पादनाच्च लक्षणेति तत्रापि लक्षणा स्यादेव द्वारभूतवृत्तिनिमित्ताभावेन तद्-द्वारकस्याभिधानस्यानुपपत्तेः इति, इदञ्च दूषणं प्रवृत्तौ निमित्ताभावादिति भाष्येण फलितम्। अथोभयपदविशेषणाविवक्षायामपि सामानाधिकरण्यं सोऽयं देवदत्त इत्यादिषु दृश्यत इति यदुक्तं तत्प्रतिवक्ति सोऽयमित्यादिना, विरोधाभावात्—मुख्यार्थभूतविशेषणद्वयसम्बन्धे विरोधाभावात् प्रथमं कालद्वयसम्बन्धविरोधाभावमुपपादयति—

भू० देशान्तरसम्बन्धितया ऽतीतस्य सन्निहितदेशसम्बन्धि-तया वर्त्तमानत्वाविरोधात्, अत एव हि सोऽयमिति प्र-त्यभिज्ञया कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववादिभिरन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात्।

टी० "देशान्तरे"ति, वस्तुविशेषणतया निर्दिष्टावपि देशान्तरसम्ब-न्धसन्निहितदेशसम्बन्धावतीतवर्त्तमानकालोपाधितया विवक्षितौ, इदञ्च का-लोपाध्यन्तराणामुपलक्षणम्, अतीतवर्त्तमान—शब्दौ अतीतवर्त्तमानकालस-म्बन्धिपरौ देशान्तरसम्बन्धितयाऽतीतस्य देशान्तरसम्बन्धाद्युपाध्यवच्छि-न्नातीतकालसम्बन्धिनः सन्निहितदेशसम्बन्धाद्युपाधिमद्वर्त्तमानकालसम्ब-न्धाविरोधादित्यर्थः। अतीतत्वञ्चान्यापेक्षया विवक्षितं, न तूभयकालानुगत वस्त्वपेक्षया, एतदुक्तं भवति एकस्य कालद्वयासम्बन्धं वदतोऽतीतत्ववर्त्तमान-त्वविरोधो विवक्षितः स किं प्रध्वंसस्य वर्त्तमानत्वविरोधो विवक्षितः? स नास्ति प्रध्वंसानभ्युपगमात्, यद्यतीतोपाधिमत्कालसम्बन्धिनो वर्त्तमानत्व-विरोध उच्यते तन्निरूप्यं—किं स्वापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वम्

उतान्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वं? न प्रथमः स्वापेक्षयाऽतीतोपाधिमत्कालसंयोगित्वा[१]भावात् घटादेः, न द्वितीयः एकक्षणसम्बन्धस्यापि विरोधप्रसङ्गात्, एकस्य वस्तुन एकोऽपि हि क्षणः स्वपाश्चात्त्ययत्किञ्चिदुपाध्यपेक्षयाऽतीतो भवति अतो ऽन्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धिनोवर्त्तमानत्वमविरुद्धम् एवमेकस्य स्वप्रागभावस्वप्रध्वंसोपहितकालसम्बन्धस्यैव विरुद्धत्वादन्यापेक्षयाऽतीताऽऽगाम्युपाधिमत्कालसम्बन्धे तदभावाच्च स्वाभावानुपहितकालद्वयसम्बन्ध एकस्य वस्तुन उपपन्न इति, । युक्त्यन्तरञ्चाह "अत एवे"ति, अत एव—कालद्वयसम्बन्धाविरोधादेव, उपपाद्यते—सौगतान् प्रतीति शेषः, सौगतमतनिरासकस्य कालद्वयसम्बन्धविरोधाभ्युपगमो विरुद्ध इत्यर्थः । तदेवोपपादयति "अन्यथे"ति, अन्यथा—कालद्वयसम्बन्धविरोधेन प्रतीतिविरोधे वस्तुस्थिरत्वविषयप्रतीतिविरोधे सर्वेषां क्षणिकत्वमेव स्यादिति, एकस्य देशद्वयकालद्वयान्वयविरोधे देशकालान्तरसाध्यफलसाधनविधानमात्मनित्यत्वोपदेशश्चाप्रमाणं स्यादित्यभिप्रायः । देशद्वयसम्बन्धविरोधं परिहरति—

सू० देशद्वयसम्बन्धविरोधस्तु कालभेदेन परिह्रियते यतस्समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्, अत एवारुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यारुण्यादिविशिष्टैकहायन्याः क्रयसाध्यतया विधीयते, तदुक्तम् "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्या"दिति, तत्र एवं पूर्वपक्षी मन्यते—

टी० "देशद्वये"ति, परिच्छिन्नस्य वस्तुनः स्थानवच्छिन्नदेशसम्बन्धो यौगपद्य एव विरुध्यते, न तु क्रमेण भावित्वे इत्यर्थः, एवं लोकसिद्धस्य नीलोत्पलादिसमानाधिकरणपदप्रयोगस्य विशेषणविवक्षा स्थापिता, एवं प्रवृत्तिनिमित्तभेदेनैकार्थपर्यवसायित्वं समानाधिकरणपदानां वैदिकप्रयो-

१ सम्बन्धित्वाभावादिति पा० ।

गमिदं चेत्याह "यत" इति, अनेन वस्तुमात्रपरत्वे अरुणाधिकरणसिद्धान्तन्यायविरोधश्चोक्तः स्यात्, यतः अत एवेति लौकिकप्रयोगसिद्धवत्कारोक्त्या पूर्वोक्तस्वपक्षपरपक्षसाधकदूषणान्यरुणाधिकरणे विवक्षितानीति भावः । अरुणयैकहायन्येत्यादिवाक्ये पदानां न सामानाधिकरण्यमित्यत्राह "तदुक्तमि" ति, । अर्थैकत्व इत्यादिसूत्रस्यान्यथा व्याख्याततत्वाच्च सामानाधिकरण्यपरत्वमित्यत्राह "तत्रैवमि" ति, "एवमि" ति, अस्मदुक्तावेव पूर्वपक्षराद्धान्तौ सूत्रकाराभिप्रेताविति भावः । किमत्रारुणयेति पदोक्तमारुण्यमेकहायनीमात्रान्वयि? उत प्राकरणिकसर्वद्रव्यान्वयीति प्रथमो विचारः, तत्रारुणयेति पदमेकहायन्येत्यादिपदैरेकवाक्यतया अन्वेति? उत भिन्नवाक्यतया स्थित? मिति तदर्थविचारः, इदं विचारद्वयं पूर्वमीमांसाव्याख्यातृभिरभ्युपेतम् अधिकस्तदर्थविचार उच्यते किमरुणयेत्यादिपदानि व्यधिकरणानि? उत समानाधिकरणानी? ति पुनस्तदर्थविचारः कारकविभक्त्यन्तत्वं किं सामानाधिकरण्यविरोधि? उताविरोधी? ति विरोधीति पूर्वः पक्षः अविरोधीति सिद्धान्तः यदा विरोधि तदा सामानाधिकरण्याभावेनैकवाक्यत्वाभावात् प्राकरणिकसर्वद्रव्यान्वयीति पूर्वपक्षे फलफलिभावः, अविरोधे सामानाधिकरण्येन वाक्यभेदाभावादेकहायन्यन्वयनियम इति सिद्धान्ते फलफलिभावः, अस्माकं तु पूर्वपक्षे सिद्धान्ते च अरुणयेति पदस्य द्रव्यपर्यन्तत्वमनुयायि, परेषां तु गुणमात्रपर्यन्तत्वमुभयत्रानुयायि, आकृत्यधिकरणे गुणवाचिशुक्लादिपदानां जातिवाचिगवादिशब्दवद् द्रव्यपर्यन्तत्वं निर्णीतम् "आश्रितद्रव्य गुणजाती" इति हि टीकाकारः तत्र चात्र च कोविशेषः? इति चेत् एकैकप्रातिपदिकार्थनिरूपणमाकृत्यधिकरणे, अत्र त्वनेकप्रातिपदिकस्यसमानविभक्त्यर्थनिरूपणमिति भेदः । ननु गुणवाचिपदस्य द्रव्यपर्यन्तत्वे एतदधिकरणपूर्वपक्षोत्थानं न स्यात्, गुणमात्रपर्यन्तत्वे हि गुणस्य कारकतया निर्दिष्टस्य द्रव्यान्वयस्य क्रयान्वयस्य च एकवाक्येन बोधयितुमशक्यत्वेन वाक्यभेदात्प्राकरणिकसर्वद्रव्यान्वयीति पूर्वपक्षोत्थानं स्यात् ॥

भू० यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारतैक-

स्वभावत्वात् द्रव्यपर्य्यन्तमेवारुणिमानमभिदधाति तथाप्येकहायन्यन्वयनियमोऽरुणिम्नो न सम्भवति, एकहायन्या क्रीणाति तच्चारुणयेत्यर्थद्वयविधानासम्भवात् ।

टी० द्रव्यपर्यन्तत्वे त्वेकहायनीपदसामानाधिकरण्येन विशिष्टकरणैकत्वात्तस्य क्रयान्वयमात्रस्यैकवाक्येन बोधयितुं शक्यत्वेन वाक्यभेदाभावात् एकहायनीमात्रान्वयीति वाक्यभेदायत्तपूर्वपक्षानुदय इत्याशङ्क्याह "यद्यपी"ति, आकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात्तद्वाचिशब्दो यद्यपि द्रव्यमात्रपर्यन्तस्तथाऽप्येकहायनीत्वाश्रयद्रव्यविशेषपर्यन्तत्वञ्च सिध्यतीत्यर्थः । कुत ? इत्यत्राह "एकहायन्याक्रीणाति" तच्चारुणयेत्यर्थद्वयविधानासम्भवादि"ति, न च वाच्यमरुणयेति पदं क्रीणातिनाऽन्वेति द्रव्यविशेषाकाङ्क्षायां स विशेषः स्ववाक्यस्यैकहायनीपदोपस्थापितं 'द्रव्यं भवती'ति, क्रयस्यैकहायन्यवरुद्धतयाऽरुणापदविभागे साकाङ्क्षत्वाभावाद्राकाङ्क्षोत्थापकच-शब्दद्वन्द्वाद्यभावाच्च, अत आरुण्यस्य क्रयान्वयद्वारा नैकहायन्यन्वयः, स किं पदयोस्सामानाधिकरण्येन? उत वैयधिकरण्येन स्ववाक्यस्थतया, ? न तावत्पदद्वयसामानाधिकरण्येन एकहायन्यन्वयनियम आरुण्यस्य सम्भवति, कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्त्या विशेषणविवक्षानुपपत्त्या च सामानाधिकरण्यायोगात्, तत्र यद्यपि विशेषणविवक्षायां विशेषणभेदेन विशेष्यभेदो जन्माद्यधिकरणन्यायेन परिहृतः विशेषणैक्यान्योन्यसमवायादयश्च पूर्वमेव परिहृताः तथाऽपि कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्तिः स्थिता, कारकविभक्तिर्हि क्रियान्वयबोधोपक्षीणत्वान्न परस्परान्वयं बोधयितुं शक्नोति, परस्परान्वयो हि विशेष्यैक्यम् । एवं विशेषणविवक्षा कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्तिभिन्ने सामानाधिकरण्यम्, अतोऽरुणयैकहायन्येति पदद्वयं पृथक्करणवाचीत्येतावत्सिद्धं कृत्वा वैयधिकरण्ये सति स्ववाक्यस्थतया आरुण्यस्यैकहायन्यन्वयनियमेऽनुपपत्तिरुच्यते एकहायन्या क्रीणातीति वाक्येन एकहायन्याः क्रयस्य च सम्बन्धः प्रतिपन्नः तच्च क्रयणम् अरुणया कर्त्तव्यमिति वाक्येनैकहायनीसाध्यत्वविशिष्टरूपेण

क्रयणमरुणाद्रव्यसाध्यमिति प्रतिपन्नं, तत्पदम् एकहायनीसाध्यत्वविशिष्ट-क्रयणोपस्थापकं तत्र द्रव्यांशस्य तत्साध्यक्रयणस्य च पूर्वप्रतिपन्नत्वेनानूदित-त्वादेकहायनीद्रव्यस्यारुणिमसम्बन्ध एव विधेयः स्यात् । एवञ्चैकहायन्याः क्रयः साध्यस्तया चारुणया भवितव्यमित्युक्तं भवति, ततश्चैकहायन्याः क्रयसम्बन्धो-

सू० ततश्चारुणयेति वाक्यं भित्त्वा प्रकरणविहितसर्वद्रव्यपर्य्य-न्तमेवारुणिमानमविशेषेणाभिदधाति, अरुणयेति स्त्री-लिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शना-र्थः, तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यादिति अत्राभिधीयते "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्" अरुणयैकहायन्येत्यारुण्यविशिष्टद्रव्यैकहायनीद्र-व्यवाचिपदयोः सामानाधिकरण्येनार्थैकत्वे सिद्धे सत्येक-हायनीद्रव्यारुण्यगुणयोररुणयेति पदेनैव विशेषणविशेष्य-भावेन सम्बन्धितयाऽभिहितयोः क्रयाख्यैककर्मान्वयाऽवि-रोधादरुणिम्नः-र

टी० ऽरुणिमसम्बन्धश्चेत्यर्थद्वयस्यैकवाक्येन विधानासम्भवादित्य-र्थः । ततः किं ? मित्यत्राह "ततश्चे"ति, वाक्यभेदे सति स्ववाक्यस्थत्वाभा वादवान्तरप्रकरणेन वा महाप्रकरणेन वा द्रव्यविशेषानिश्चये वासोयजमाना-दिसर्वद्रव्याणां प्रकरणान्वयाविशेषात् क्रीणातीति वाक्यं भित्त्वाऽरुणयेति पदं प्राकरणिकसर्वद्रव्यपर्यन्तस्वार्थमरुणिमानमभिदधातीत्यर्थः । अरुणा-येति स्त्रीलिङ्गनिर्देशः कथ ? मित्यत्राह "अरुणयेती"ति, पूर्वपक्षमुपसंहरति "तस्मा"दिति, "अत्राभिधीयत"इति, अस्मिन् पूर्वपक्षे प्राप्ते सूत्रकारः स्वसिद्धान्तमाहेत्यर्थः । सूत्रमुपादत्ते "अर्थैकत्व"इति, सूत्रस्याक्षरार्थ-माह "अरुणये"त्यादिना, कयोरर्थैकत्वम् ? इत्याकाङ्क्षायां शब्दस्य

अर्थप्रतिसंबन्धित्वात्पदविशेषयोः सन्निहितविषयवाक्यस्थत्वाच्च आरु-ण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोरित्यध्याहृतं, पदद्वयसन्निधिज्ञा-पनार्थमरुणयैकहायन्येत्युक्तम्, आरुण्यविशिष्टमेकहायनीत्वविशिष्टं च द्रव्यं तद्वाचिपदयोस्सामानाधिकरण्येन तत्तद्विशेषणद्वारैकविशेष्यप्रवृ-त्तित्वादर्थैकत्वे सिद्ध इत्यर्थः, द्रव्यगुणयोरैककर्म्यादित्येतद्व्याचष्टे "एक-हायनीद्रव्यारुण्यगुणयो"रित्यादिना, गुणान्वयस्य क्रयान्वयस्य च वाक्य-बोध्यत्वे वाक्यभेदप्रसङ्गो विरोध उक्तः, गुणान्वयस्य प्रातिपदिकसि-द्धत्वाच्च वाक्यबोध्यत्ववार्थसिद्धत्वञ्च, अतः क्रयान्वयबोधनमेव वा-क्यकृत्यमित्यभिप्रायेणारुणयेति पदेनैवेत्युक्तं, क्रयाख्यैककर्मान्वयाविरोधा-दिति वाक्यभेदप्रसङ्गरूपविरोधाभावादित्यर्थः । नियमः स्यादित्येत-द्व्याचष्टे— (शेषमग्रे)

## खण्डनखण्डखाद्यम् ।

—•०•—

*(Continued from page 383 Vol. XI.)*

मू० [a] विरुद्धन्यायेनासमर्थविशेषणत्वम् एवं सर्वत्र निग्रहस्थाने द्रष्टव्यमिति सङ्क्षेपः [b] प्रतिज्ञाहान्यादीत्यादिपदेनापि किं सङ्गृह्यते * प्रतिज्ञान्तरादि ? * —इति चेन्न, ऽप्रतिज्ञा-न्तरमेव निरूपयितुं न शक्यते तद्यथा [c] स्वोक्तस्य [d] पर-दूषितस्य [e] साध्यभागस्य [f] पूर्वानुक्तविशेषणवतोभिधानं प्रतिज्ञान्तरमित्यलक्षणं तथाहि [g] यच्च वादिना प्रथमं सविशेषणः प्रतिज्ञाभागोभिहितः परेण च निर्विशेषणो-क्तभ्रान्त्या दूषितस्ततो वादी प्रथममभिहितं सविशेषण-मेवोपन्यस्येदृशं मयोक्तं नतु निर्विशेषणमतो निरनुयोज्या-नुयोगो भवत इति सदुत्तरमेव ब्रूते तत्रापि गतत्वादति-

व्यापकमेतत् * [h] पूर्वानुक्तविशेषणत्वं तच्च नास्ति तत्कथमतिव्याप्तिः ? *—इति चेन्न,

टी० ॥ [a] "विरुद्धे"ति। साध्याभावसामानाधिकरण्यमात्रस्यदोषत्वे नियमांशवैयर्थ्यवदित्यर्थः तत्रासाधकतासाधने विशेषणवैयर्थ्यमत्र त्वप्रतिपत्तिविप्रतिपत्त्योरुद्भावने इति भावः ॥ निग्रहखण्डनयोः सङ्गतिमाह—। [b] "प्रतिज्ञाहान्यादौ"ति ॥ झटितिसंवरणेन पूर्वानुक्तविशेषणाभिधानेतिव्याप्तिवारणायाह—। [c] "परदूषितस्ये"ति । उदासीनेन तादृशविशेषपूरणेति व्याप्तिवारणाय—। [d] "स्वोक्तस्ये"ति । हेत्वन्तरव्यवच्छेदायाह—। "साध्यभागस्ये"ति। प्रयोज्यभागे विशेषणपूरणात् प्रतिज्ञान्तरं प्रयोजकभागे तत्पूरणे च हेत्वन्तरमिति विभागात् अश्रुतविशेषणश्रादिनं प्रति कदाचिदुक्तमप्यनूद्यत इति तद्वारणाय—। [f] पूर्वानुक्ते"ति । गूढाभिसन्धिर्दूषयति—। [g] "यत्रे"ति । यत्रोक्तमेव विशेषणं पुनः श्रावयति तत्रातिव्याप्तिरित्यर्थः ॥ आशयमविद्वान् शङ्कते—। [h] "पूर्वे"ति ।

मू० (१) [a] प्रथमोक्तेः प्राग भावस्य(२) पूर्वं स्थितत्वात् [b] विशेष्योक्तिरपि तदा नासीदिति चेत् [c] किमायातं तावता विशेषणानुक्त्यतिप्रङ्गस्य(३) [d] विशेष्योक्तिकाले * विशेषणानुक्तिर्विवक्षिता ?*—इति चेन्न, [e] एककर्तृकाया वाचो युगपदसम्भवेन सर्वत्र (४)तथाभावस्यैव भावात् * विशेष्योक्तेरनन्तरकाले ? * इति चेन्न, [f] नीलोत्पलमित्यादौ पूर्वनिपातिविशेषणे तदभावात् * विशेष्योक्तेरव्यवहितपूर्वकाले ? *—इति चेन्न, [g] उत्पलं नीलमित्यादौ तदभावात् * [h] अव्यवहिते ? *—इति चेन्न, [i] बहुविशेषणके तदभावात् ।

(१) प्रथमोक्तेरित्यतः प्रागनूद्यमानेत्यपि ज्ञेयम्—
(२) पूर्वं स्थितत्वात्—वृत्तस्य विशेष्योक्तेः । प्राक् स्थितत्वादित्यर्थः ।
(३) विशेषणानुक्त्या कृतस्यातिप्रसङ्गस्येत्यर्थः ।
(४) विशेष्योक्तिकाले विशेषणानुक्तेरेव सत्त्वादित्यर्थः ।

टी० आशयमुद्घाटयति—। [a]"प्रथमोक्तेरि"ति । अनूद्यमानमपि विशेषणं प्रथमाभिधानात् पूर्वमनुक्तमेवासीदित्यर्थः गूढाभिसन्धिः शङ्कितमाह—। [b]"विशेष्ये"ति ॥ यथाश्रुतं दूषयति—। [c]"किमायातमि"ति । अनूद्यमानस्य विशेषणस्य पूर्वमनुक्त्या यः प्रसङ्गः कृतस्तत्र किमायातमित्यर्थः शङ्किता स्वाभिसन्धिमाह—। [d]"विशेष्ये"ति । अनूदितविशेषणस्य तु न तदानुक्तिरित्यर्थः कालस्यैकोपाध्यवच्छिन्नतामादायाह—। [e]"एके"ति । विशेष्याभिधानकाले विशेषणाभिधानं न क्वापि वचसः क्रमभावित्वात् तथाच विशेष्योक्तिकालानुक्तमेव विशेषणं सर्वत्रोच्यते इति विशेषणमात्राभिधाने एव प्रतिज्ञान्तरं स्यादित्यर्थः ॥ [f]"नीलोत्पलमि"ति विशेष्योक्त्यनन्तरानुक्तविशेषणोक्तौ तत्रातिव्याप्तिरित्यर्थः विशेष्योक्त्यव्यवहितपूर्वकालानुक्तविशेषणोक्तावतिव्याप्तिमाह—। [g]"उत्पलमि"ति । ननु पूर्वत्वमुत्तरत्वं वा न विवक्षितं येनोक्तातिव्याप्तिः स्यादपित्वव्यवहितत्वमात्रमित्याह—। [h]"अव्यवहिते" इति । एकविशेषणाभिधानापेक्षया बहुविशेषणके स्याव्यवधानस्यावश्यकतया उक्तातिव्याप्तिरित्याह—। [i]"बहि"ति ।

मू० * [a]विशेषणाभिधानोचितकाले ? *—इति चेन्न, [b]नानाविशेषणके विशेष्ये क्रमवृत्तित्वाद्वाचः क्रमेणाभिधीयमाने य एकविशेषणाभिधानकालः सोऽपरेषामपि विशेषणाभिधानानां योग्यो भवत्येवेति तदान्येषां क्रमभाविनामभावात्सैवातिव्याप्तः * [c]सर्वस्मिन् योग्ये काले ? *—इति चेन्न, [d]दूषणानन्तरकालस्य योग्यकालत्वाभ्युपगमेऽव्याप्तिः [e]दूषणपूर्वकालस्य तथाभिमतत्वे च दूषणानन्तरभाविन्याविशेषणोक्तिव्यक्ते [f]स्तदानीमभावात् [g]पूर्ववदतिव्याप्तिः ॥

टी० ॥ व्यवहितोपि कालो बहुविशेषणके विशेषणाभिधानोचित एवेति नातिव्याप्तिरित्याह—। [a]"विशेषणे"ति । सुरभि नीलमुत्पलं वि-

काशिमनोहरमलिपटलपीयमानमकरन्दबिन्दुसन्दोहमित्यादावन्योन्यविशेषणोक्तिकालानुक्तान्योन्यविशेषणोक्तौ पुनः सैवातिव्याप्तिरित्याह—। [b] "नानाविशेषणके"ति । विशेषणाभिधानयोग्ययावत्कालानुक्तविशेषणोक्तौ प्रतिज्ञान्तरं नान्यत्रेति शङ्कते—। [c] "सर्वस्मिन्नि"ति । एवं तर्हि दूषणोत्तरकालेपि विशेषणोक्तौ प्रतिज्ञान्तरं न स्यादित्याह—। [d] "दूषणे"ति । ननु दूषणोत्तरकालो निग्रहापादकतया न विशेषणोक्तियोग्यं किन्तु पूर्वकाल एवेत्यत आह—। [e] "दूषणपूर्वकालस्ये"ति । उक्तस्यैव विशेषणस्याश्रवणादादिना दूषणे कृते पुनस्तद्विशेषणोक्तिर्या सैव दूषणपूर्वकालीना व्यक्तिर्न भवति तथाच तस्यां दूषणपूर्वकालीनविशेषणोक्ता(१)वतिव्याप्तिरित्यर्थः ॥ [f] "तदानीमि"ति । दूषणपूर्वकाले इत्यर्थः ॥ [g] "पूर्ववदि"ति । परेण निर्विशेषणप्रमाद्दूषितस्थलवदित्यर्थः ॥

मू० * [a] सर्वस्यास्तस्यास्तज्जातीयाया विशेषणोक्तेरभावो विवक्षित ? *—इति चेन्न, [b] व्यक्तीनामभावप्रतियोगिभूतानां सर्वासां पृथक् प्रमाणेन केनाप्यस्मादृशा प्रत्येतुमशक्यतया भावानिरूपणेन लक्षणस्याज्ञानादसिद्धिप्रसङ्गात् [c] सामान्यप्रत्यासत्त्या व्यक्तयः प्रतिभान्तीति च निरस्तमनुमानखण्डनावसरे [d] एतेन पूर्वमविशिष्टोक्तस्येति विशेषणं प्रक्षेप्तव्यमिति निरस्तम् [e] उत्तरकालवाच्यविशेषणकविशेष्यस्य प्रथममविशिष्टोक्तत्वसम्भवस्य दर्शितत्वात् [f] किञ्च प्रथममविशिष्टमुक्ता भवता यदि विशेषणमिदं प्रक्षिप्यते तदा भवतो हेत्वन्तरं स्यात्तथापि तदभावे वा [g] ममापि कुतः प्रतिज्ञान्तरम् ॥

(१) दूषणं पूर्वकालीनं यस्या विशेषणोक्तेः सा तथा तस्यामित्यर्थः ।

टी० ॥ [a]"सर्वस्या" इति । प्रकृते विशेषणपूर्वकालीना विशेषणोक्तिरस्त्येवेति नातिव्याप्तिरित्यर्थः सकलविशेषणोक्तिव्यक्त्यभावस्य दुर्वहतया तद्गर्भलक्षणस्यापि दुर्निरूपणत्वमित्याह–। [b]"व्यक्तीनामि"ति । ननु विशेषणोक्तिव्यक्तयस्तादृप्येण सामान्यलक्षणया भासन्त एवेति कथं प्रत्येतुमशक्या इत्यत आह–। [c]"सामान्ये"ति । ननु पूर्वमविशिष्टं नोक्तं परेण तु न श्रुतमित्यन्यत् तथाच कथं तत्रातिव्याप्तिरित्यत आह–। [d]"एतेने"ति । उत्पल नीलमित्यत्र पूर्वमविशिष्टस्यैवाभिधानमिति तत्रातिव्याप्तिरित्याह–। [e]"उत्तरे"ति । लक्षणे प्रयोजकभागे विशेषणमिदं क्रमेण प्रक्षिपतो लक्षणवादिन एव हेत्वन्तरं निग्रहस्थानमित्याह–। [f]"किञ्चे"ति ॥ [g]"ममापी"ति । यद्यपि खण्डनवादिने प्रतिज्ञान्तरं नोद्भावितमस्ति येनायमनुयोगः स्यात्तथापि तमेव(१) प्रति सिद्धान्तिना प्रतिज्ञान्तरं व्यवस्थाप्यते इत्यदोषः ॥

मू० * [a]अथ प्रथममेवेदं विशेषणमुपादाय ब्रवीषि? *–तथाप्यव्याप्तिः [b]प्रथमं सविशेषणमुक्त्वा विशेषणवैयर्थ्यभ्रमेण झटिति संवरणान्निर्विशेषणे ऽभिहिते परेण दूषिते पुनः सविशेषणमभिदधतो [c]नैवं प्रतिज्ञान्तरं स्यादित्यव्याप्तिः(२) [d]स्वपरसाध्यपूर्वपदानां विवेचने व्यक्तौ पतनादव्याप्तिश्च [e]प्रकरणादिलभ्यतया प्रागनुक्त विशेषणस्य भ्रान्तपरदूषितस्य प्रकरणलभ्यविशेषणवत्तयानुवदतोपि सदादेतिप्रसङ्गः [f]अनुक्तस्थाने चाप्रतिपादितकरणेपि दोषः [g]प-

(१) तं खाण्डनिकं प्रत्येव सिद्धान्तिना=निग्रहस्थानाद्यभ्युपगन्त्रा, प्रतिज्ञान्तरं व्यवस्थाप्यमानं त्वस्त्येवेत्यर्थः । यदि प्रकृते सिद्धान्ती खाण्डनिक एवेत्याग्रहस्तदा 'प्रतिसिद्धान्तिना'–इति पदविभागः कर्तव्यः ।

(२) यत्र प्रथमं पार्थिवपरमाणुरूपरसगन्धस्पर्शा अनित्या इत्यभिधाय पुनर्नित्यत्वरूपविशेषणवैयर्थ्यमाशङ्क्य तूष्णीं विशेष्यमात्रमेव प्रयुङ्क्ते पार्थिवपरमाणुरूपरसगन्धस्पर्शा इति ततश्च वादिना दूषिते यत्पुनरनित्यत्वरूपविशेषणोपादानं तत्प्रतिज्ञान्तरमिति तत्रातिव्याप्तिस्स्यात्प्रथममविशिष्टोक्तस्येति विशेषणाभावादिति भावः ।

रस्मिन्नज्ञातप्रतिपत्तौ प्रतिपादितत्वानुपपत्तेः. [h] इत्यादि स्ययमूहनीयं प्रतिज्ञान्तरादीत्यादिपदेन किमिष्टं* प्रतिज्ञाविरोधादि?*—इति चेन्न,

टी० ॥ ननु पूर्वमविशिष्टोक्तस्येति विशेषणसहितमेव मया लक्षणं प्रणीतमिति कुतो मम हेत्वन्तरमित्याशङ्क्याव्याप्तिमाह—। [a] "अथे"ति। अव्याप्तिमेव स्फुटयति—। [b] "प्रथममि"ति। [c] "नैवमि"ति। पूर्वमविशिष्टोक्तत्वस्य विशेषणस्याभावादित्यर्थः स्वोक्तस्य परदूषितस्य साध्यभागस्य पूर्वानुक्तविशेषणवतोऽभिधानमिति लक्षणे स्वपदं परपदं साध्यपदं पूर्वपदं च विविच्यमानं व्यक्तिविशेषपरं भवेदित्यननुगमो दोष इत्याह—। [d] "स्वपरे"ति। वर्णात्मकं शब्दमधिकृत्य विप्रतिपत्तौ शब्दोऽनित्य इति प्रतिज्ञाया ध्वन्यात्मके सिद्धसाधनदेशनायां वर्णात्मक एव पक्षीकृत इत्यत्राऽतिव्याप्तिरित्याह—। [e] "प्रकरणादी"ति। सद्वादे समुचितवचने—। [f] "अनुक्ते"ति। प्रकृते प्रकरणपरिप्राप्ततया विशेषणं प्रतिपादित(१)मेवेति नातिव्याप्तिरित्यर्थः॥ यत्र परः प्रकरणापातत्वं न प्रतिपद्यते तत्र प्रतिपादितत्वं नास्तीत्यतिव्याप्तिरेवेत्याह—। [g] "परस्मिन्नि"ति। उक्तस्यापि विशेषणस्य यत्र परेण न श्रवणं तत्राप्यतिव्याप्तिरित्यर्थः अथ प्रतिपादनयोग्यता विवक्षिता तत्राह—। [h] "इत्यादी"ति। योग्यताविरहस्य निरूपयितुमशक्यत्वादिति भावः परोक्तदूषणोद्धाराय पूर्वानुक्तविशेषणवतः पूर्वोक्तस्य साधनीयांशस्य प्रतिपादनं प्रतिज्ञान्तरं स्व(२)पर-साध्य-पूर्व-पदानां प्रकरणसमभिव्याहारादिना तत्तद्विशेषपराणामर्थप्रतिपादकत्वस्य सर्वसिद्धतया खण्डनमिदमनवकाशमेव यद्यपि तथापि यथाकथञ्चित्(३) खण्डितमन्यथा प्रकृतलक्षणात् खण्डनिकस्यैवार्थविशेषप्रतिपत्तिर्न स्या(४)दिति।

---

(१) प्रतिपादितम्=ज्ञापितम्।

(२) स्वपरसाध्येत्यादितः प्राग् यद्यपीत्यनुषज्य सम्बन्धनीयम्।

(३) यथा कथञ्चित्=सर्वसिद्धान्तमपि तेषां निरक्तुमशक्यत्वाभिप्रायेणेत्यर्थः।

(४) 'न स्यात्'-इत्यतोऽग्रे 'तथा च खण्डनीयार्थविशेष ज्ञानाभावात्खण्डनमपि तस्य न स्याद्'-इति शेषः।

मू॰ यत्र [a]एकवक्तृकैकवाक्यांशयोर्मिथो व्याघातः साध्यविपरीतव्याप्तत्वोद्भावनानपेक्षोद्भावनः प्रतिज्ञाविरोधः तदेतल्लक्षणं तथाहि इह [b]भूतले घटो नास्तीत्यादावपि गतत्वेनातिव्यापकमिदं [c]वचनयोर्हि व्याघातोऽन्योन्यविरुद्धार्थत्वं तच्चेहास्ति घटोऽस्तीत्यंशस्य घटसत्त्वबोधकत्वान्नकारस्य च तन्निषेधकत्वात् * [d]नन्वयुक्तमिदमुच्यते नहि घटो नास्तीत्यत्र घटो विधीयते घटस्य निषेधोऽपि येन मिथः व्याघातः स्यात् किन्तु घटो निषिध्यते घटनिषेध एव विधीयत इति यावत्तत्कुतो व्याहतिरिति चेत् ?*—मैवम् ।

टी॰ ॥ [a]"एके"ति । एकवक्तृकं यदेकं वाक्यं तदंशयोरित्यर्थः समस्यापूरणादौ भिन्नवक्तृकमप्येकं वाक्यं भवतीत्यत उक्तमेकवक्तृकमिति कथारूपैकवाक्ये वादिप्रतिवादिवाक्येऽतिव्याप्तिवारणायोक्तमेकवक्तृकेति कथाबहिर्भूततद्वाक्येऽतिव्याप्तिवारणायोक्तमेकेति विरुद्धहेत्वाभासव्यवच्छेदाय साध्येत्यादि साध्याभावव्याप्यत्वोद्भावनसापेक्षमेव विरुद्धोद्भावनमिह तु न तथेत्यर्थः ॥ [b]"भूतले" इति । घट इति घटं विधाय नास्तीति तन्निषेधस्य तद्विरुद्धार्थत्वादतिव्याप्तिरित्यर्थः विरोधमेव स्फुटयति—। [c]"वचनयोरि"ति । घटतदभावयोरुभयोर्विधौ विरोधः स्यादिह तु न तथा निषेधमात्रस्यैव विधेयत्वादिति शङ्कते—। [d]"नन्वे"ति ॥

मू॰ [a]घट इत्यस्य तावदंशस्य घटविधिबोधकत्वं नास्तीत्यस्यापि तत्प्रतिषेधार्थत्वं भवतापि मन्तव्यं [b]यदि त्वेवं नाभ्युपैषि तदा तयोरविरोधार्थतया घटस्यापेक्षितनिषे-

धास्तित्वं च भूतलाश्रितं द्वयमस्य वाक्यस्य बोधनीयं स्यादिति [c]तस्माद्विधिरूप एव घट इति तत्प्रतिक्षेप एव नेति [d]किमेतावेकवक्तृकवाक्यांशौ भवतः परस्परविरुद्धार्थाभिधायकौ वा न भवतः येन लक्षणमिदं भवतस्तत्र न गच्छेत् न मिथो विरोधमात्रं मिथो व्याघातकत्वं किन्त्वेकदेशकालादौ परस्परविरुद्धयोरस्तित्वं * नच नास्तीत्यनेनैकदेशकालादौ विधिनिषेधौ वर्तमानौ बोध्येते ?*—इति चेन्न, [f]उक्तोत्तरत्वात् [g]देशकालाद्यनन्तर्भावे विरोधस्यैवानुपपत्तेः किञ्च यद्येकदेशादौ विरुद्धास्तित्वं प्रामाणिकमभ्युपैषि ।

टी० ॥ नञर्थस्य घटेन सम्बन्ध एव हि विरोधस्तथोभयविधेयतामन्तरेण विरोध एव न भासेतेत्याह—। [a]"घट इत्यस्ये"ति । विरोधभावानङ्गीकारे विपक्षे दण्डमाह—। [b]"यदी"ति । अविरोधे हि घटतदभावौ द्वावपि भूतले विहितौ स्यातामित्यर्थः तस्माद्विधिनिषेधबोधकघटपदनञ्पदयोर्विरोध एवेत्युपसंहरति—। [c]"तस्मादि"ति । विशिष्टस्य लक्षणस्य प्रकृते सम्भवं दर्शयति—। [d]"किमेतावि"ति । ननु घट इति विधिमात्रं ([1])निषेधस्तस्य भूतले इति कथमिह विरोधो विधिनिषेधयोरेकदेशेऽविधानादिति शङ्कते—। [e]"न मिथ"इति—। [f]"उक्तोत्तरत्वादि"ति । उक्तस्यैवात्रोत्तरत्वादित्यर्थः तदेवाह—। [g]"देशे"ति । विरोधस्फुरणं तावदविवादं तच्च देशकालाभेदनिबन्धनमित्यर्थः ॥

(शेषमग्रे)

(१) विधिमात्रम्=सामान्यतो यत्र क्वापि विधानं, नतु निषेधवत्येव भूतले विधानम् ।

॥ श्रीः ॥

श्रीमद्रामानुजाचार्यप्रणीत इति प्रसिद्धो

# वेदान्ततत्त्वसारः ॥

---

श्रीमते रामानुजाय नमः ॥

(*Continued from page* 149. VOL. XI.)

अथ प्रतिबिम्बवादो लिख्यते ।

नन्वृ"तं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे । छायातपौ ब्रह्मविदो वदन्ति' ति श्रुत्या जीवस्य ब्रह्मप्रतिबिम्बत्वं प्रतिपाद्यत इति चेन्न एकदेहावस्थितत्वेऽपि जीवात्मपरमात्मनोरभास्वरभास्वरयोश्छायातपयोरिवाप्रकाशित्वप्रकाशत्वरूपस्वभावव्यवस्थामात्रप्रतिपादनपरत्वात्, "द्वा सुपर्णा सयुजा' सखाया समानं

The doctrine of reflection is next considered.

It may be said that the Śruti passage "There (215) are two drinking their reward in the world of their own works, having entered into the cave (of the heart), into the highest region. Those who know Brahma call them shadow and sunshine" declares that Soul is a (216) reflection of Brahma. We deny this, its purport being merely to declare that though Soul and the Supreme Spirit dwell in the same body, there exists between them a fixed distinction of nature (*viz.*, that the former is non-luminous and the latter luminous) like that existing between a dark shadow and bright sunshine. For it thus agrees in meaning with another Śruti, "Two (217) birds, inseparable friends, cling to the same tree. One of them eats the sweet fruit, the other looks on without eat-

---

215. Kaṭha Upanishad I. 3. 1.

216. The word 'chhāyā' being here understood by the Śānkaras to mean 'reflection.'

217. Muṇḍaka Upanishad III. 1. 1.
Śvetāśvatara Upanishad IV. 6.

वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाक-शीति" श्रुत्यन्तरैकार्थ्यात् । अत्रापि ब्रह्मण आतपत्वाभावादातपव-द्भास्वरत्वमेवातपशब्दार्थ इति, जीवस्य च्छायात्वाभावेऽपि च्छाया-वद्बद्धदशायामभास्वरत्वमेव च्छायाशब्दार्थो भवितुमर्हति । "अ-स्थूलमनण्वह्रस्वमदीर्घमलोहितमच्छायमि"तिच्छायाप्रतिषेधश्रवणाच्च नात्र च्छायाशब्दो ब्रह्मप्रतिबिम्बपरः ।

नन्वे"क एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

ing." Here too, (in the first-quoted passage,) Brahma not being actually sunshine, the term 'sunshine' signifies that he is luminous like sunshine. Soul also not being actually a shadow (reflection), the term 'shadow' must indicate that in the state of bondage it is non-luminous (dark) like a shadow. And in "It is neither gross nor subtile, neither short nor long, nor red, without shadow (218)" there being a revealed denial of the being a shadow,—in the passage under discussion the word shadow does not signify a reflection of Brahma.

But it may be said that according to "The Soul of beings abiding in all beings, though one appears manifold, like the moon in the water," "As the one ether becomes diverse in waterpots, etc, so the one Soul (or Self) dwells in many beings, like the sun (reflected) in lakes of water," and other authoritative texts, as in the case of the reflections of the moon shewn in the water of tanks, canals, and irrigated fields, there is only an adscititious (219) difference of the cognitions residing in (constituting) Lord and Soul, which cognitions are reflections of Brahma shewn in

218. Bṛihad Āraṇyaka Upanishad III. 8. 8.

219. A difference resulting from the conditioning (unreal) *antaḥkaraṇādi* alone, just as the numerous and variously-shaped reflections of the moon in the water of lakes, etc., are due to the presence of that water, the action of its waves, etc.

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्" ॥

इत्यादिशास्त्रानुसारेण तडागकुल्याकेदारजलाभिव्यक्तीनां चन्द्रप्रतिबिम्बानामिव मायाहङ्कारतद्विकाराभिव्यक्तब्रह्मच्छायानामीश्वरजीववृत्तिज्ञानानामौपाधिकभेदकत्वेन तन्निबन्धनो ऽयं "ज्ञाज्ञौ द्वावजावीशानीशा"विति चेन्न परिच्छिन्नव्योमादिविलक्षणवस्तुनश्छायासम्पत्त्यसम्भवाल्लोहिताच्छायश्रवणाच्च । काल्पनिकच्छायाङ्गीकारे जीवेश्वरयोरपि मिथ्यात्वप्रसङ्गात् । तदभ्युपगम "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः","य एतद्विदुरमृतास्ते भवन्ती"त्यादिविधीनामा-

Māyā, the organ of egoism, and its modifications; hence the distinction indicated in "There (220) are two, one knowing (Lord), the other not-knowing (Soul), both unborn, one strong, the other weak," (and like passages), rests on that false difference alone, (and does not prove real duality). We reject this view for the following reasons.—It is impossible that a substance (entity) whose nature is diverse from that of ether (221) and other finite things, should assume the form of a shadow (reflection), and there is a Vedic statement that it (Brahma) is "not red, without shadow." If such fictitious reflection is affirmed, it follows that Soul and the Lord are unreal. If this, too, is maintained, "Behold the (222) Self (or Soul) is verily to be seen, to be heard," "They (223) who know it become immortal," and other like injunctions become meaningless. If, further, this also should be maintained, then Brahma being an object not ascertained by any other means of proof (than the

220. Śvetāśvatara Upanishad I. 9.

221. Diverse from these as being infinite, while ether is an effect, according to the Vedānta, and therefore finite.

222. Brihad Āraṇyaka II. 4. 5.

223. Śvetāśvatara Upanishad III. 10.

नर्थक्यप्रसङ्गात् । तस्याप्यभ्युपगमे ब्रह्मणो मानान्तराविषयत्वात्स्वानुभवस्यापि मिथ्याभूतजीवानतिरिक्तावभासकत्वाच्च यावत्प्रमाणप्रमेयमिथ्यात्ववादिनः कथायामधिकारानुपपत्तेः । जलचन्द्रदृष्टान्तोपदेशानां ब्रह्मणः शरीरभूतचिदचिद्गतदोषास्पर्शप्रतिपादनपरत्वोपपत्तेर्वाक्यान्तरोपदिष्टजीवेश्वरस्वरूपस्वभावयाथार्थ्यबाधकत्वाभावात् । श्रुते चान्तर्य्यामिणो निर्दोषत्वम्, "एको देवः सर्वभूतेषु गूढः", "अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च, सूर्य्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्त-

Veda), and personal experience not declaring anything ulterior to to Soul (which is held by the Śankaras) to be unreal, one who thus asserts the falsity of all means of proof and things proved thereby cannot be regarded as competent to engage in discussion.. Lastly, since (224) the teachings conveyed in the illustration of the reflection of the moon in the water admit of explanation as intended to make known that (Brahma) is unaffected by the faults attaching to Soul and not-Soul, which constitute his body, they do not deny the reality of the essence and nature of the Lord taught in other texts. And the faultlessness of the Internal Ruler is declared in the Śruti, "There (225) is one god hidden in all beings," "As (226) one fire, when it has entered, the world, assumes forms corresponding to the different forms of the fuel it burns, so the one Inner Soul of all beings assumes forms corresponding to the different forms it enters, and exists also without," "As (227) the sun, the eye of the whole world, is not sullied by the external faults (impurities) seen by the eye

224. Since a perfectly appropriate meaning is thus established.
225. Śvetāśvatara Upanishad VI. 11.
226. Katha Upanishad II. 5. 9.
227. Ibid. II. 5. 11.

रात्मा न लिप्यते लोकदुःखेन बाह्यः" । अन्यथा "ऽऽकाशमेकं हि यथा घटादिषु पृथग्भवेदि"तिदृष्टान्तान्तरोपादानवैयर्थ्यप्रसङ्गात् । ननु

"सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्मापि तथैवैकः पृथक् पृथक्" ॥

इत्याद्यात्मैकत्ववादाः कथम्, अवैलक्षण्यादिति ब्रूमः, भेदशब्दो हि वैलक्षण्यवचनो लोके प्रसिद्धः सुसदृशेषु नास्य कश्चिद्भेदोऽस्तीति वक्तारो भवन्ति । तथाऽऽत्मनामपि नरपशुतिर्यग्भेदभिन्नशरीरवर्त्तिनां शरीरसम्बन्धमपोह्य केवलतत्त्वरूपेण निरूप्यमा-

so the one Inner Soul of all beings is not sullied by the misery of the world, being himself without." Otherwise it (228) would be idle to adduce the other illustration "As one ether becomes diverse in waterpots," etc.

But it may be asked, How is it that we find the following and other declarations of the unity of spirit, "As (229) one ether is viewed as possessing the differences of white, blue etc., so one spirit also is regarded as manifold by those whose minds are deluded by error"? We reply, Because of non-diversity of nature, for the word 'difference' is currently accepted as signifying diversity of nature, as in the case of things very much alike

228. If the illustrations given of the reflection of the sun and moon in the water do not convey the meaning already set forth, *viz.*, that the Supreme as Antaryāmi is not affected by the faults of his body, Soul and not-Soul, which are pervaded by him, but teach the Śaṅkara doctrine of reflection, then the further illustration "For as one ether" etc., must, according to the same system, teach the doctrine of circumscription, and so be discordant and irrelevant.

229. That is, ether (or sky) is imagined by the ignorant to possess those differences of colour, etc., which really belong to sunlight, clouds, vapour, etc.

णानां पद्मरजःपरमाणूनामिव न किञ्चिदपि वैलक्षण्यमस्तीत्यनेनाभिप्रायेणैकत्ववादा नानात्वनिषेधाश्च । तदभिप्रायमेवेदं भगवद्वचनं "विद्याविनयसम्पन्न"इत्यादि "निर्दोषं हि समं ब्रह्म" प्रकृतिसंसर्गदोषविमुक्ततया सममात्मवस्तु हि ब्रह्म । "सर्वभूतेशः सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः", वाराहे "यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदं सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम्", लैङ्गे "सत्त्वस्वरूपश्च स्वयं स विष्णुः पुरुषोत्तमः नहि पालनसामर्थ्यमृते सर्वेश्वरं हरिमि"त्यादिभिः प्रामाणिकानां चेतनान्तरशङ्का नोपपद्यते । "ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यते" । नारायणस्य तु, "अथ एको ह वै

people are accustomed to say 'there is no difference between this (and that).' So, also, there is no diversity of nature (230) inherent in souls dwelling in bodies possessing the differences (different conditions) of man, beast, and bird, when, excluding their connection with these bodies, they are considered in their pure essence; just as no diversity of nature pertains to the atomic particles of the lotus pollen. Such is the meaning of such affirmations of unity and denials of duality. Such, too, is the meaning of the saying of Bhagavat "(The learned look upon a Brāhman) endowed with knowledge and refinement, (a cow, an elephant, a dog, and a Śvapāka), as all (231) alike, (Even here worldly existence is vanquished by those whose mind is fixed on uniformity (of Spirit), because Brahma is without fault and of uniform (232) nature." Because Brahma, *viz*, spiritual essence, is uniform when freed from the faults resulting from connection with Nature.

230. Soul is the same in essence, though there is a real distinction of individuals.

231. Bhagavadgītā V. 18.

232. Ibid. V. 19. See Rāmānuja's Bhāshya on the passage.

नारायण आसीत्", "अथ नित्यो ह वै नारायणः", "एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः", "नारायणः परं ब्रह्म, आत्मा नारायणः परः", सुबालोपनिषदि "किं तदासीत्तस्मै नैवेह किञ्चनाग्र आसीन्मूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः", श्वेताश्वतरे "स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" "देशतः कालतो व्याप्तिर्मोक्षदत्वं तथैव च । हरेर्विभूतिमात्रन्तु केवलं सम्प्रभाषितम्", स्कान्दे "बन्धको

In view of the passages "This Vishṇu is the lord all beings, O students of Brahma, (in the Varāha Purāṇa) "The god Hari is the highest object, by goodness Soul is liberated, goodness is one with Nārāyaṇa," (and in the Linga Purāṇa) "Vishṇu himself is essentially goodness, there is no possibility of protection apart from Hari the lord of all" those who accept the authority of sacred institutes cannot entertain the supposition that (233) any other intelligence (spiritual being) (than Nārāyaṇa is the Supreme Spirit). And there is also the following "He is here called Hari because he subdues and takes away Brahmā, Indra, Rudra, Yama, and Varuṇa."

And that Nārāyaṇa is the opposite of all imperfection, and the repository of the whole assemblage of excellent qualities, is known from such texts as "Verily one only, Nārāyaṇa, existed," "Verily eternal is Nārāyaṇa," "This Nārāyaṇa is the Inner Soul of all beings, devoid of sin, the one heavenly deity," "Nārāyaṇa is the Supreme Brahma, Nārāyaṇa is the Supreme Spirit," (in the Subāla Upanishad) "What then existed? Nothing indeed existed here (in the world) in the beginning; there was a baseless root—these creatures are produced—there was one heavenly deity, Nārāyaṇa,"

233. The sense seems to be that though, as just shown, all spirit is the same in essence, still there is a fixed distinction of nature between the Supreme Spirit (Nārāyaṇa) and Soul.

भवपाशेन भवपाशाच्च मोचकः कैवल्यदः परं ब्रह्म विष्णुरेव सनातन"इत्यादिभिर्निखिलहेयप्रत्यनीकत्वं कल्याणगुणगणाकरत्वमवगम्यते । सद्ब्रह्मात्मशिवादिशब्दा हि तुल्यप्रकरणस्थेन नारायणशब्देन विशेषितास्तमेवावगमयन्ति । ननु"आत्मा वा इदमग्र आसी", दिति प्राक्सृष्टेरेकत्वावधारणात्कथं सूक्ष्मचिदचिद्विशिष्टस्य नारायणस्य कारणत्वम् । उच्यते "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती"ति परित्यक्तस्थूलाकाराणां सूक्ष्माकारापत्त्या ब्रह्मणि वृत्तिः प्रतिपाद्यते नतु स्वरूपनिवृत्तिः, "अक्षर-

(in the Svetāśvatara Upanishad) "He is omnific, omniscient, self-caused (self-existent), who knows, is the author of time, endowed with qualities, who knows everything, is the master of nature and the embodied soul, the lord of the three qualities, the cause of the bondage, existence, and liberation of the world," "Universal existence in space and time, and likewise the bestowing of liberation, pertain to Hari; but only a little of his divine greatness has been declared," (in the Skanda Purāṇa) "He who takes captive in the snare of existence, and he who liberates from the snare of existence, the giver of absolute emancipation, the Supreme Brahma, is the eternal Vishṇu alone". For the words 'Existent,' 'Brahma,' 'the Self,' 'the Blessed,' etc., having their meaning defined by the word Nārāyaṇa occurring in like passages (of the Veda), denote the same deity (Nārāyaṇa).

But you will say, Since the words "Spirit alone was this in the (234) beginning" affirm the existence of unity prior to creation, how can Nārāyaṇa differenced by subtile Soul and not-Soul be the cause of the world? We reply that in "That from which these beings are born, by which when born they live, into which departing they (235) enter," it is set forth that beings having rejected

234. Bṛihad Āraṇyaka Upanishad I. 4. 1.

235. Taittirīya Upanishad III. 1.

न्तमसि लीयते तमः परे देवे एकीभवती"तितमःशब्दवाच्यायाः प्रकृतेः परमात्मन्येकीभावश्रवणात् । पृथग्ग्रहणरहितत्वेन व्यतिरेकीभावः स एव लयशब्दार्थः, यथा "वृक्षे लीनाः पतङ्गा, वने लीनाः सारङ्गाः" । अत एव "तमसा गूढमग्रेऽप्रकेतमासीत्", "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध" इति । सूक्ष्मरूपेण चेश्वरस्या"न्तःप्रविष्टः शास्ता जनानां सर्वात्मे"त्यनेन स्वस्य स्वयमेवात्मा शास्ता चा"ग्निरात्मानं दहती"ति वदत्यन्तानुपपत्तेः । अथ च "एष एवासाधु कर्म कारयति तं यमधो निनीषती"ति सर्व-

their gross form exist in Brahma (236) by the assumption of a subtile form, but destruction of essence is not intended; for in "The Imperishable One (Soul) is merged in darkness (Nature) darkness becomes one with the Supreme Deity,"—it is declared that Nature, here designated by the term darkness, becomes one with the Supreme Spirit. The becoming one with the Supreme Spirit is existing as that which cannot be cognised as (237) distinct. This is the meaning of the word 'laya,' as seen for instance in "The birds are merged (concealed) in the tree," "the deer are merged (concealed) in the forest." Hence, too, it is said "In the beginning this was hidden by darkness and unperceived", "From this the Māyā-associated One creates all this, and in it another, (Soul), is enclosed by (238) Māyā." (239) For that "Having entered in, He is the ruler of beings, the self, (or soul), of all," means that, the Lord existing in subtile form becomes his own ruler, and his own self, is wholly unreasonable; just as it would be to say 'fire

236. During the period of *pralaya* they continue to exist as one with Brahma, and thus the Supreme, differenced by subtile Soul and not-Soul, becomes the cause of the world.

237. Not the becoming identical with.

238. Śvetāśvatara Upanishad IV. 9.

239. Here begins a long repetition of paragraphs occurring at pp. 51—53.

ज्ञोऽपि जीवभूतस्य स्वस्य नरकानुभवहेतुभूतासाधुकर्मकारयिता पाप-
कर्मसु निवर्त्तनशक्तोऽपि नियन्तेत्यादिकं सर्वमसमञ्जसमेव स्यात् ।
आह च सूत्रकारः "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" जगतो
ब्रह्मानन्यत्वं प्रतिपादयद्भिस्तत्त्वमस्ययमात्मा ब्रह्मेत्यादिभिर्जीव-
स्याप्यनन्यत्वं व्यपदिश्यत इत्युक्तम् । तत्रेदं चोद्यते यदीतरस्य
जीवस्य ब्रह्मभावोऽमीभिर्वाक्यैर्व्यपदिश्यते तदा ब्रह्मणः सार्वज्ञ्य-
सत्यसङ्कल्पत्वादियुक्तस्यात्मनो हितरूपजगदकरणमहितरूपजग-
त्करणमित्यादयो दोषाः प्रसज्येरन् । आध्यात्मिकाधिभौतिकाधि-

burns itself.' Likewise that by the words "It is He alone that causes him whom He desires to degrade to do wrong deeds," it is meant that He, though omniscient, causes wrong deeds which are the occasion of His own experiencing of hell, in the form of Soul, and that He though able to cease from evil deeds, is the regulator (actuator) therein, is altogether incongruous.

And the author of the Sūtras has said "Through the declaration of the other, (Soul), to be Brahma, there would attach the fault of the not-making of what is beneficial," etc., *i. e.*, it is said by those who maintain the identity of the world with Brahma, that the identity of Soul also with Brahma is declared by the texts "That thou art" and "this Self is Brahma," etc. In reply thereto, it is urged (in the Sūtra), 'If by these sentences it is declared that another, *viz.*, Soul, is Brahma then the not-making of a world taking the form of what is beneficial to himself, and the making of a world injurious to himself, and other faults will attach to Brahma as one endowed with the attributes of omniscience, real resolve, etc. This world is a cause of infinite pain, originating from self (body, etc.), from elemental beings (wild beasts, etc.), and from superhuman powers (demons, etc.), and one who is self-dependent and wise does not engage in such a work, (viz., as the making of the world), resulting in his own disadvantage.

द्विकाऽनन्तदुःखाकरं चेदं जगत्, न चेदृशे स्वानर्थे स्वाधीनो बुद्धिमान्प्रवर्त्तते । जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः, भेदे सत्यनन्यत्वासिद्धेः । औपाधिकभेदविषया भेदश्रुतयः स्वाभाविकाभेदविषयाश्चाभेदश्रुतय इति चेत्, तत्रेदं वक्तव्यं स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति, न वा । न जानाति चेत्सर्वज्ञत्वहानिः । जानाति चेत् स्वस्मादभिन्नस्य जीवस्य दुःखं स्वदुःखमिति जानतो ब्रह्मणो हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्या ।

( शेषमग्रे )

The Śruti passages declaring that Brahma is distinct from Soul, are rejected by you when you assert the identity of the world and Brahma, for if there is distinction, identity cannot be established. If you say that the Śruti passages that speak of distinction, relate to adventitious distinction, and the Śruti passages that speak of identity relate to essential identity, then in this regard it ought to be stated whether Brahma, the cause of the world, knows soul to be essentially identical with himself or not. If he does not know, there is an end to omniscience. If he does know, then there inevitably attach to Brahma, as one knowing the pain of Soul, identical with himself, to be his own pain, the faults of the not-making (of a world) beneficial to himself, and the making (of a world) injurious to himself.

J. J. JOHNSON.

*(To be Continued.)*

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

## विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

*(Continued from page 376. Vol. XI.)*

हतवृत्तम्, हतं वृत्तं यत्र, तत्. हतत्वं चा ऽश्रव्यत्वं, गुरुकार्यतमपादान्त्यलघुवर्णत्वं, प्रकृतरसाननुगुणत्वं च. अन्यतमत्वेनैषामनुगमः. अश्रव्यत्वं च लक्षणाननुगमाद्, यतिभङ्गात्, स्थानविशेषे गणविशेषयोगाच्च. यद्वा, हतत्वमश्रव्यत्वमेव. तच्च गुर्वादिनियमरूपलक्षणाननुगमाद्, यतिभङ्गात्, स्थानविशेषे गणविशेषयोगाच्च, शिखरिण्यादावन्त्यस्य लघोर्गुरुकार्यतमत्वात्, प्रकृतरसाननुगुणत्वाच्च. तत्राद्यं यथा—

यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः ।<br>
तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत ब्राह्मणः ॥

अत्र श्लोके पञ्चमस्य गुरुत्वाच्छन्दोभङ्गः । यतिभङ्गो वर्णवृत्ते यथा—

२

अमृतममृतं कः संदेहो, मधुन्यपि नान्यथा,<br>
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्, ।<br>
सकृदपि पुनर्म्मध्यस्थः सन् रसान्तरविज्जनो<br>
वदतु, यदिहा ऽन्यत् स्वादु स्यात् प्रियारदनच्छदात् ॥

अत्र हरिणीच्छन्दसि षष्ठे दशमे च यतिरुचिता, चतुर्थे तु यदिहान्यदित्यत्र तद्भङ्ग [क] इत्यश्रव्यता । मात्रावृत्ते स्थानविशेषे [ख] गणविशेषयोगो यथा—

(क) चतुर्थे तु पादे तद्भङ्ग इत्येकस्यः पाठः ।
(ख) स्थापनविशेषे-इत्येकत्र पठ्यते ।

जो परिहरिउं(क) तीरइ मणं पि ण सुन्दरत्तणगुणेण ।
अह णवर जस्स(ख) दोसो पडिबक्खेहिं पि पडिबण्णो ॥

अत्रार्य्यायां द्वितीयतृतीयौ 'सगणभगणौ' तौ च तथाविधौ छन्दःशास्त्रेण दुःश्रवत्वेन प्रतिपादितौ । पादान्तलघोर्गुरुकार्य्याक्षमत्वं यथा—

विकसितसहकारतारहारिपरिमलगुञ्जितपुञ्जितद्विरेफः(ग) ।
नवकिसलयचारु(घ)चामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥

अत्र "वा पादान्त" इति पादान्तस्य गुरुत्वाच्छन्दोभङ्गाभावेऽपि प्रथमपादान्तवर्त्तिन इकारस्य लघोर्गुरुकार्यकरणाक्षमत्वम्, इन्द्रवज्रादिषु(ङ) तु तत्कार्य्यक्षमत्वाददोषः, तस्मात्, 'हारिप्रमुदितसौरभे'ति पठनीयम्, न केवलं प्रथमतृतीयपादयोरेवायं दोषः, किंत्वन्ययोरपि, तत्र चतुर्थे यथा—

अन्यास्ता गुणरत्नरोहणभुवो, धन्या मृदन्यैव सा,
सम्भाराः खलु तेऽन्य एव, विधिना यैरेष सृष्टो युवा, ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलाद्,
दृष्टे यत्र पतन्ति मूढमनसां शस्त्राणि वस्त्राणि च(च) ॥

अत्र 'वस्त्राण्यपी'तिपाठे गुरोरेव संयोगपरतया स्वरवृद्धौ लघुरपि गुरुकार्य्यकारी सम्पद्यते, एवं द्वितीयपादेऽप्यूह्यम्, एषु चाश्रव्यता सहृदयोद्वेजिनी दुष्टताबीजम्, अतो नित्यदोषोऽयम् । प्रकृतरसाननुगुणत्वं यथा—

हा नृप! हा बुध! हा कविबन्धो! विप्रसहस्रसमाश्रय देव! ।
मुग्धविदग्धसभान्तररत्न! क्वासि गतः, क्व वयं च तवैते ॥

---

(क) जं परिहरउ तीरइ मणाअपिणेत्यादि पुस्तकान्तरम् । जं परीत्यादिः पाठः प्रभासम्मतः, जो परीत्यादिस्तु महेश्वरादिसम्मतः ।

(ख) तस्सेति पाठान्तरं तु न शलक्षणम् ।

(ग) ०भारिहारिपरिमलपुञ्जितगुञ्जितद्विरेफः—इति महेश्वरसम्मतः पाठः ।

(घ) किशलयेति पु० । उभयविधाश्च किसलयसूकरादिशब्दाः साधव इति स्थितिः

(ङ) वसन्ततिलकेन्द्रवज्रादिष्वित्येकीयपाठस्तु न युक्तः ।

(च) मूढमनसामस्त्राणि वस्त्राणि चेति पुस्त० ।

इदं दोधकवृत्तं शोकाननुगुणं, तद्विरोधिहास्यव्यञ्जकत्वात्· अस्य च प्रतिकूलवर्णवद् दुष्टताबीजम्·(क) नीरसे च नास्यात्मलाभ इति नित्यदोषता ॥ (५)

"न्यूनाधिके"त्यादि· न्यूनपद,मधिकपदं, कथितपदं चेत्यर्थः· तत्र, न्यूनपदम्, न्यूनं पदं वाचकशब्दो यत्र, तत्·(ख) द्योतकन्यूनतायां त्वऽनभिहितवाच्यत्वमिति(ग) विशेषः· उदा०—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चलतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः, ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं,
गुरुः खेदं खिन्ने मयि भजति, नाऽद्यापि कुरुषु ॥

अत्र पादत्रयमध्ये 'ऽस्माभि'रिति, 'खिन्न इत्यस्य पूर्वं'मित्थ'मिति च पदद्वयास्ति· आवश्यके च ते, अन्यथा कर्त्तुरलाभादेकवाक्यत्वाऽसम्भवाच्च·(घ)अर्थश्चैतादृश एव विवक्षित इति शब्दस्यैवायमपराधः· यत्र त्वर्थ एव न तादृशो विवक्ष्यते, तत्रार्थ एव दुष्ट इति साकाङ्क्षत्वं दोषान्तरमिति(ङ)· द्रष्टव्यम्· विवक्षिताप्रतिपत्तिश्च दूषकताबीजम्· अतो झटित्याक्षेपादितस्तल्लाभेन क्वचिद्रसादिपरिपोषकत्वेन चादोषत्वम्(च) ॥ (६)

अधिकपदं यथा—

स्फटिकाकृतिनिर्म्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तः प्रतिमल्लास्तमयोदयस्तु कोऽपि ॥

अत्र स्फटिकमेव निर्म्मलतायामुपमानं विवक्षितम्· उपात्तेप्याऽऽकृतिपदे यथाकथञ्चित्तेनैवोपमितिपर्य्यवसानादित्याकृतिपदमधिकम्· न तु

(क) अस्य च प्रतिकूलवर्णत्वं दुष्टताबीजमित्येकस्मिन्नास्ते, न तु न्याय्यम् ।
(ख) तत्त्वमित्यन्यत्र ।
(ग) वाच्यमिति पा० ।
(घ) अत्र "तदर्थस्य विवक्षितत्वा"दित्यधिकमेकत्र पुस्तक आस्ते· तत्तु प्रमादपतितमिति ज्ञेयम् ।
(ङ) "यत्र त्वर्थ एव तादृशं विवक्ष्यते, तत्रार्थ एव दुष्ट इति साकाङ्क्षं तु दोषान्तरमिती'त्येकत्र पुस्तके भवति, न तु भवति युक्तम् ।
(च) "आक्षेपतस्तल्लाभेऽदोषत्व"मिति त्वन्यपुस्तकस्थं न पर्याप्तार्थकम् ।

व्यर्थत्वादपुष्टार्थेन सङ्कर इति वक्ष्यते· न केवलं समास एव पदाधिक्यम्, किंत्वसमासेपि· यथा—

इदमनुचितमक्रमश्च पुंसां, यदिह जरास्वपि मान्मथा विकाराः, ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥

अत्र 'कृत'मधिकम्, पूर्वार्द्धवत्तेन विनैव प्रतीतिपर्य्यवसानात्· कृतं प्रत्युत प्रक्रमभङ्गमावहति, पूर्वार्द्धेऽकरणात्· तथाच 'यदपि च न कुरङ्ग-लोचनाना'मिति पठनीयम्· निष्प्रयोजनशब्दप्रयोगश्रवणेन श्रोतुर्वैमुख्यं दूषकताबीजम्· अतो हर्षादावभिव्यक्तौ न दोषत्वम्· ॥ (७)

कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला-
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु! कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥

अत्र लीलापदं वारद्वयमुपात्तम्· दूषकताबीजं च कवेरशक्त्युन्नयनेन श्रोतुर्वैमुख्य,मतो लाटानुप्रासादावदोषत्वम्, अशक्त्यनुन्नयनात्· इदं तु चिन्त्यम्—समासे सत्येकस्मिन्नपि पदे व्यवधानाल्लाटानुप्रासवि-रहेऽप्यस्य सम्भवात् कथं न पददोषत्वमपीति ॥ (८)

पतत्प्रकर्षम्, अलङ्कारकृतस्य बन्धकृतस्य वा प्रकर्षस्य निमित्तं विना यत्रोत्तरोत्तरं पातो निकर्षः· यथा—

कःकः कुत्र न घुर्घुरायितघुरीघोरो घुरेच्छूकरः,
कःकः कं कमलाकरं विकमलं कर्त्तुं करी नोद्यतः, ।
केके कानि वनान्यरण्यमहिषा नोन्मूलयेयु,र्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ॥

अत्र सूकरा(क)द्यभिधाने विकटबन्धकृतोऽनुप्रासकृतश्च प्रकर्षः सिंहा-भिधाने पतितः· दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैरस्यम्· रसानुगुण-तया तत्यातेपि न दोषः ॥ (९)

(क) शूकरेत्यन्यत्र ।

समाप्तपुनरात्तम्, समाप्तं सत् पुनरुपात्तम्· वाक्ये समाप्ते पुनस्तदन्वयिशब्दोपादानं यत्रेत्यर्थः· यत्तु समाप्ते वाक्ये ऽविशेषविधायिविशेषणान्तरोपादानवत्त्वं तल्लक्षणमिति· तत्र, "प्रागप्राप्ते"त्यादौ वाक्यान्तरारम्भे विशेषणान्तरानुपादाने तल्लक्षणविरहेण तत्रानित्यदोषव्युत्पादनविरोधात्· उदा०—

क्रेङ्कारः स्मरकार्मुकस्य, सुरतक्रीडापिकीनां रवो,
झङ्कारो रतिमञ्जरीमधुलिहां, लीलाचकोरीध्वनिः, ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो, नववयोलास्याय वेणुस्वनः ॥

अत्र "तनोतु व" इति समाप्तमेव वाक्यं "नववय"इत्यादिविशेषणेनोपात्तम्· निराकाङ्क्षत्वं च दूषकताबीजम्· अतश्चानित्यदोषोयम्, वाक्यान्तरारम्भे तदभावात् ॥ (१०)

अर्द्धान्तरैकवाचकम्, द्वितीयार्द्धगतमप्रधानहेत्वाद्यर्थकमेकं वाचकं यत्र, तत्· यथा—

मसृणचरणपातं गम्यतां, भूः सदर्भा,
विरचय सिचयान्तं मूर्ध्नि, घर्मः कठोरः, ।
त,दिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिः शिक्षिता वीक्षिता च ॥

अत्र 'भूः सदर्भा, तन्मसृणचरणपातं गम्यता'मिति वाक्यम्· तत्र च "त"दित्यर्द्धान्तरगतम्·अत्र च निराकाङ्क्षता दुष्टिबीजम्· (क) श्रुतमात्रस्यैव भूसदर्भत्वस्याक्षेपादिनाहेतुत्वप्रतीतेः यस्य तु कर्त्रादेर्न तथाप्रतीति,स्तस्यार्धान्तरोपादाने ऽप्यात्मलाभ एव नास्ति,तल्लाभेपि,वा न दोषत्वम् ॥ (११)

अभवन्मतयोगम्, अभवन्नभिमतो योगो यत्र· नचाविमृष्टविधेयमध्ये ऽस्यान्तर्भावः, उपजीव्यत्वेन भेदादिति केचित्· वस्तुतस्तु, तत्र पदार्थयोरुपस्थितयोरन्वयो भवत्येव, परं त्वनभिमतेनाप्राधान्यादिना रूपेण·

(क) दुष्टताबीजमिति पु· ।

तेन तत्र विधेयत्वानवगममात्रम्· (क) अत्र तु सम्बन्ध एव तयोर्न प्रतीयेत इति महान् भेदः· नन्वेवमभवन्मतयोगमित्यत्र योगे मतत्वविशेषणानर्थक्यमिति चे,न्न, एकवाक्यस्थपदोपस्थापितत्वादिरूपस्य योगस्य सर्वत्रापि सत्त्वात्·(ख)मतत्वं चान्वयबोधविषयत्वमित्यप्रसङ्गः· एतच्च क्वचिद्विभक्तिभेदात्· यथा–

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि,-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः, ।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणां,
किं तैस्त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितम् ॥

अत्र यैरित्यस्य विशेष्यतया क्षपाचारिशब्दार्थो विवक्षितः· नच तेन तैस्तथायोगः प्रतीयते, विभक्तिभेदात्· अथ यैर्लीलापानभुवः कल्पिता, येषां प्रतापोष्मभिरित्यादिप्रकारेण यच्छब्दाभिधेययोरिव तथान्वयोस्तु, किं विशेष्यान्तरविवक्षयेति चे,न्न, अनुवाद्यानां हि विधेयेनैव साक्षादन्वयो, नतु तदनन्तर्भाव्या ऽनुवाद्यान्तरेण गुणत्वस्योभयत्र तुल्यतया विशेष्यत्वविनिगमनाया अशक्यत्वात्· तदेतदुक्तम्–"गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्या"दिति· अत एवा"ऽरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाती"त्यत्रारुणयादीनां पिङ्गाक्ष्यादिभिर्नान्वयः· नापि गवा, तस्या अपि क्रयसाधनत्वेन गुणत्वा(ग),त्किन्तु क्रयेणैव· कथं तर्हि न धर्म्यन्तरस्यैवारुण्यादिभिः क्रय इति चेन्न, आरुण्यादीनां गोत्वान्ताना(घ)मार्थसमाजात्· तर्हि तद्वदेवात्राप्यार्थ एव समाजोऽस्त्विति चेद्, भवेदेवं, यदि तद्वत्समानविभक्तिकत्वं भवेत्· कथं तर्हि भवत्यभिमतो योग इति चेत्, 'क्षपाचारिभि'रिति पाठे· कथम्· सकलयत्पदनिर्दिष्टानां तत्पदेन परामर्शे तेषां सर्वेषां क्षपाचारित्वावगतेः । क्वचिन्न्यूनतादिनिबन्धनः· यथा–

(क) "तेनतत्र विधेयत्वानवगममात्र" मित्येतावदेकत्र नास्ति ।
(ख) योगस्याऽपि सत्त्वादित्येकत्र भवति ।
(ग) "विशेषणविभक्तिवैयर्थ्यात्"–इत्येतावन्मात्रमत्र स्थाने खल्वेकत्र पुस्तके ऽधिकं पठ्यते ।
(घ) गवान्तानामिति पा· ।

त्वमेवंसौन्दर्य्या, स च रुचिरतायाः परिचितः,
कलानां सीमानं परमिह युवामेव भजथः, ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वा,-
मऽतः शेषं यस्या,ज्जितमिह तदानीं गुणितया ॥

अत्र शेषसम्पत्ते[क]र्गुणिताजयप्रयोजकत्वान्वयो विवक्षितः· स च द्विधा संभवति, "य"दित्यस्य 'चे'दित्यर्थकतया, "तत्रादि"पदार्थयोर्विवक्षया वा· तयोर्य्यदि प्रथमे तात्पर्य्यं, तदाऽवाचकता· द्वितीये तु न्यूनपदत्वमिति· नच न्यूनपदस्याप्यत्रैवान्तर्भावः, क्वचिन्न्यूनपदेऽप्यध्याहारादिना मतयोगसम्भवे ऽपि विलम्बादेव दुष्टत्वसम्भवात् । क्वचिदाकाङ्क्षाविरहात्· यथा—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम्, ।
कोदण्डेन शराः, शरैररिशिर,स्तेनापि भूमण्डलं,
तेन त्वं, भवता च कीर्त्तिरतुला, [ख] कीर्त्या च लोकत्रयम् ॥

अत्र पूर्वार्द्धार्थेनोत्तरार्द्धस्य योगो विवक्षितो, नच कथञ्चित्सम्पद्यते· तथाहि, अर्थानां वाक्यार्थे योगः क्रियात्वेन वा, (१) कारकत्वेन वा, (२) सम्बन्धित्वेन वा, (३) एषां विशेषणतया वा, (४) हेतुत्वलक्षणत्वादिना वा, (५) तदादिना पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भाद्वाक्यैकवाक्यतया वा (६) भवेत्· तत्र कोदण्डादेः प्रथमतृतीयपञ्चमषष्ठाः पक्षास्तद्विशेषणता च असम्भाविता एव· कारकत्वमपि [ग] कर्मकर्तृभावाभ्यामन्यत्र घटते· तत्राकर्णनक्रियायां पदार्थमात्रस्य कर्म्मत्वे विवक्षिते 'कोदण्डं शरानि'ति द्वितीया स्यात्· अथ परस्परान्विता मिलिताः पदार्थाः कर्म्म, न प्रत्येक,मतो न प्रत्येकवाचकात् कोदण्डादिशब्दाद् द्वितीयेति चेत्,

(क) मङ्गलशेषसम्पत्तेरित्येकत्र ।
(ख) कीर्त्तिरनघेति पु· ।
(ग) कारकमपीति पा· ।

तर्हि, शुद्धप्रातिपदिकार्थमात्रार्थत्वात् कोदण्डः शरा इत्यादिप्रथमा स्यात्· "माहिषं दधि सशर्करं पय" इत्यादिवत्· अथ समासादनक्रियायां कोदण्डादीनां तु कर्तृतया शरादीनां तु कर्म्मभावेनान्वय इति चेत्, न, शराः समासादितमित्यनन्वयात्· किञ्च, येन यत्समासादितं कोदण्डेन शराः समासादितास्तदाकर्णयेति प्रतीतिपर्य्यवसाने कर्त्रोः कर्म्मणोश्च भेदः प्रतीयेत, नचाकाङ्क्षानिवृत्तिः स्यात्· अथ यच्छब्दस्य बुद्धिस्थवाचकतया कोदण्डादिपदार्थ एव यच्छब्दार्थः· तथाच यच्छब्दार्थस्य क्रियान्वये कोदण्डादीनामन्वयो जात एवेति चेत्, न, एवं हि कोदण्डादीनां पुनरुपादानं व्यर्थमेव स्यात्· तस्मादस्ति कश्चित् प्रकारकृतस्तदर्थयोर्भेद इति तदवच्छिन्नतया योगः कथंचिदुपपादनीयः· एतेना, विप्लतच्छब्दार्थत्वमपि निरस्तम्· अथ कर्तृकर्म्मणोर्विशेषणानि कोदण्डादीनीति चेत्, न, 'कोदण्डेन येन शरा यत्समासादितं तदाकर्णये'ति वाक्यार्थपर्य्यवसाने पुनर्विशेषानुक्तावाकाङ्क्षाया अनिवृत्तिप्रसङ्गा,च्छरा यदित्याद्यनन्वयप्रसङ्गाच्च· अत एव, कोदण्डादिशरादिकर्तृकर्म्मणी, तद्विशेषणं तु यच्छब्दार्थ इत्यपि व्युदस्तम्· अथ येन यदासादितमिति सामान्यतो ऽवगमात् केन किमिति विशेषप्रश्ने कोदण्डेन शरा इत्याद्युत्तररूपाणि वाक्यान्तराणीति चेत्, न, तादृशप्रश्नाश्रवणात्· अर्थासावुन्नीयते· एवमुत्तरालङ्कारोपि लभ्यत इति चेत्, न, येन यदासादितं तदाकर्णयेति प्रतिज्ञाय प्रश्नं विनापि कोदण्डादिनिर्देशसम्भवेन तदुन्नयनाऽसिद्धेः· ननु चासादितमित्यस्य क्रियापदस्य वचनादिविपरिणामेनानुषङ्गे 'कोदण्डेन शराः समासादिता' इत्यादिवाक्यान्तरारम्भे को दोष इति चेद्, वाक्यभेदः, पूर्वापरार्द्धयोरनन्वयतादवस्थ्यात्· लोके तादृशवाक्यभेदेऽपि दोषाभावात्तथाप्रयोग इति व्युत्पन्नस्यापि विवक्षितयोगाभावेऽस्यावतारो, यथा—

चापाचार्य्यस्त्रिपुरविजयी, कार्त्तिकेयो विजेयः,
शस्त्रव्यस्तः सदनमुदधि,र्भूरियं हन्तकारः, ।
अस्त्येवैतत्, किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः ॥

अत्र रेणुकाकण्ठबाधाजन्यनिन्दया भार्गवस्य योगो विवक्षितस्तन्निन्दाप्रकरणात्,परशोः स्वक्रियापाटवेनानिन्दनीयत्वाच्च· नच तथा प्रतीयते,कृतवतेति तृतीयया परशुनैव सम्बन्धावगमात्· कृतवत इतिपाठे तु भार्गवे निन्दायोगः प्रतीयते· यदि तु परशुनिन्दानन्तरं विदग्धोक्त्या भार्गवेपि निन्दावगम,स्तदा कृतवत्त्वस्य तेनाऽयोगात्कुत्राप्ययोगोदाहरणमेवैतत्· तथाहि, यथा स्वद्रोहयोग्यत्वोपपत्तये परशुस्वामिनो महादेवशिष्यत्वादीनि विशेषणान्युपात्तानि, तथा तदयोग्यत्वोपपादनाय तस्यैव कश्चिद्धर्मो वक्तुमुचित इति भार्गवेण कृतवत्त्वस्यान्वयो विवक्षितो, नच प्रतीयत इति दुष्टत्वम्· एवं च चण्डीदास(क)व्याख्यानमनादेयम् । क्वचित्समासाच्छन्नतया मतयोगाभावः· यथा–

चत्वारो वयमृत्विजः, स भगवान्कर्म्मोपदेष्टा हरिः,<br>
संग्रामाध्वरदीक्षितो नरपतिः, पत्नी गृहीतव्रता, ।<br>
कौरव्याः पशवः, प्रियापरिभवक्लेशोपशान्तिः फलं,<br>
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥

अत्र संग्रामाध्वरस्य ऋत्विगादिषु सर्वत्रान्वयो विवक्षितः· नतु प्रतीयते, समासच्छन्नत्वात् । क्वचिद्व्युत्पत्तिविरोधात्· यथा–

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः<br>
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।<br>
भर्त्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी·<br>
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥

अत्र तनुपदार्थस्य पार्वत्या योगो ऽभिमतो,दण्डपादेन प्रतीयते· वाक्ये यत्प्रधानं, तत्रैव निजादिपदव्युत्पत्तेः·(ख) दूषकताबीजमिष्टप्रतीतिविरह इति नित्यदोषोऽयम् ॥ (१२)

(शेषमये)

(क) चण्डीदासादीत्येकत्र ।

(ख) निजादिपदेत्येकपुस्तकस्थस्तु पाठो नातियुक्तः ।

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 328. Vol. XI.)

१५ आत्माऽयं सर्वसंबद्धो भानुभासक उच्यते । नित्यो ऽयमविनाशित्वादुपादेयः कथं भवेत् ॥ २५ ॥

नन्वैहिकामुष्मिकसकलसांसारिकसुखतत्साधनकलापाद्विमुखस्यानादिभवसंचितपुण्यनिचयक्षपितकल्मषस्याशेषविषयदोषदर्शनासादितोद्वेगस्य परमपुरुषार्थकामिनो मुमुक्षोः कथमयमुपादेयः स्यात् । तच यद्यप्ययमात्मा नित्यः विनाशसामग्रीरहितत्वात् आत्मविनाशस्य ग्रहीतुमशक्यत्वाच्च स्वसत्ताकाले ग्राह्याभावात् ग्राह्यकाले ग्राहकाभावात् । न च परिच्छिन्नत्वादस्यानित्यत्वमनुमेयम् आत्मत्वादा-

15. This Self is in relation with (as the substrate of) all things. It is said (of it in the Veda) that sun-like* it illumines (all things) It is eternal, for it is imperishable. How then can this Self be *accepted* (as the goal of human endeavour)?......XXV.

An opponent argues that the Self as taught in Vedânta cannot be the highest aim of man: pleasure and the absence of pain are the only aims.

An opponent now urges that the Self cannot be accepted as the aim of man by one who, when his sin has been destroyed by the store of merit acquired by him during a beginningless round of transmigratory lives, is pained at seeing defects in all earthly objects; and turning his face away from transient pleasure, present and future, together with the means of obtaining such, desires the highest aim of man, sc. emancipation. (This the opponent maintains) although (he admits that) the Self is eternal;

* भान्विति भानुवद्भासकः । उच्यते श्रुत्या इति शेषः । N. D's. gloss.

त्मा ह्यपरिच्छिन्नः । यत आहुः । यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते ॥ व्यापकस्यापि गगनादेरनित्यत्वं दृष्टमिति चेत् न व्यापकत्वापरिज्ञानात् सर्वा-

for there is no means* of destroying Self (since Self is not a *product*, kārya): nor is the destruction of Self conceivable, for while Self *is*, the thing to be known (grāhya, sc. non-existence of Self) *is not*; and while the non-existence of Self *is*, the knower (grāhaka sc. self) *is not*. Nor (continues the opponent) can the non-eternal nature of Self be inferred from its finitude; for to Self belongs self-hood, and Self is infinite. Hence the sages declared :—'Since in this world it pervades things, grasps and enjoys them, and since of it the presence is unbroken, hence it is termed ātmā.'

But as a matter of fact (some one may argue,) ether &c. (viz., time and space, which (like Self) are pervasive (infinite) are also non-eternal. Not so: for such an argument implies a misapprehension of the meaning of *pervasion*. Pervasion means relation with all things—*complete*† relation with everything—in short, the

* The gloss expands, technically,—समवायिकारणनाशो वा असमवायिकारणनाशो वा द्रव्यनाशसामग्री परीक्ष्यते—sc. by the Naiyāyikas—न च अकार्यस्य आत्मन उभयमस्ति अकार्यत्वं च अनाद्यदृष्टप्रवाहाधारत्वादिति प्रागेवोक्तमिति—cf. pp. 2,3 supra.—To annihilate Self, we must destroy either the samavāyikāraṇa, i. e. the material of which Self is composed, or the asamavāyikāraṇa i. e. the contact of the parts which make up the Self. And this would be possible only if Self were a product, kārya, which Self is not.

† सर्वात्मना is glossed by निःशेषतया 'without a remainder.' अधिष्ठानं by सत्ताप्रदं; further on, आत्मनः सर्वाधिष्ठानत्वं नाम अध्यस्तस्य सत्तास्फुर्त्तिप्रदत्वम् ।—the substrate gives existence to that which it pervades, and makes it appear in consciousness, sphurti. अननुगत = व्याप्य; अनुगत= व्यापक. *Pervasion*, vyāpti, is not to be taken in the Nyāya sense

संबद्धत्वं हि व्यापकत्वं सर्वस्मिन्सर्वात्मना संबद्धत्वमननुगतानामधिष्ठानमिति यावत् न ह्यन्येनान्यः सर्वात्मना व्याप्यते व्याप्यस्वरूपासत्त्वप्रसङ्गात् व्यापकस्वरूपविनिर्मुक्तस्वस्वरूपाभावात् अन्यथा सर्वात्मना व्याप्त्यसंभावात् । न च कालदेशवस्त्वपरिच्छिन्नेप्यात्मनि प्रमाणान्तरापेक्षा भानुवत्स्वयम्प्रतिभातत्वात् सर्वजगदवभासकत्वेन श्रुतौ प्रसिद्धत्वात् तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतेः । तथापि सुखदुःखाभावेतरत्वादनुपादेयत्वमेव ।

being the substrate of finite (non-pervasive) things. Nor can one finite be *completely* pervaded by another finite, for it would follow from this that the pervaded thing was in itself non-entity, since it has no character apart from that of the pervading thing: otherwise (sc. if it had an independent character) *complete* pervasion could not take place. Nor is there need of any other source of knowledge to make known the Self, unlimited though this is as to time, space and substance; for, like the sun, Self is self-illumined; for Self is declared in Śruti to illumine the whole world, thus—'When the Self shines, every thing shines after it: by its light all this is lighted.'

Nevertheless (continues the opponent) the Self cannot be accepted as the aim of man, because it is something different from pleasure and the absence of pain (which are the only aims.)

---

of invariable concomitance of two or more things; but in the further sense of that final and complete pervasion of the manifold by the one existent or Self (ātman) on which Vedānta texts are for ever insisting. The Self alone *is*: the manifold *appears*, is *unreal*, mithyā, as *inexplicable* apart from the Self, anirvachanīya.

ननु किमिदमनुपादेयत्वं आदानक्रियाऽविषयत्वं वा इच्छाविषयत्वविरहो वा स्वकृतिसाध्यत्वविरहो वा एतद्विशेषितसुखदुःखाभावेतरत्वं वा विशेष्यमेव वा अन्यद्वा । नाद्य इष्टापत्तेः सुखदुःखाभावयोरनुपादेयत्वापत्तेश्च न हि सुखं वा दुःखाभावो वा आदानक्रियया विषयीक्रियते । न द्वितीयः इच्छातद्विषयत्वयोरप्युपादेयत्वापत्तेः ।

Now what (we ask) is this unfitness to be accepted as the aim of man? Does it consist (*a*) in the not being an object for the act of acceptance (in the literal sense of taking by the hand)? Or (*b*) in the not being an object of desire? Or (*c*) in the not being something which one can bring about (sādhya) by volition? Or (*d*) in the being different from pleasure and the absence of pain, as qualified above in (*c*)*? Or (*f*) simply in the being different from pleasure and the absence of pain, without the above qualification†? Or (*g*) does this unfitness consist in anything else?

The first (definition) will not avail the opponent, for from it follows what we are quite prepared to admit (viz., that the Self cannot be handled): and further will follow (what he is not prepared to admit) that pleasure and the absence of pain are not to be accepted as the aim of man, because neither of these is the object of the act of handling.

Nor will the second definition‡ avail; for from it will follow that both to *desire* and to *the being the object of desire* belong

* एतदिति एतेन स्वकृतिसाध्यत्वविरहेण इति । gloss.

† sc. that Self is not a product (sādhya) to be willed into existence. विशेष्यमेव इति सुखदुःखाभावेतरत्वमात्रमित्यर्थः । gloss.

‡ The obscure argumentation of the text (of which a re-statement largely based on Nānā Dikshita's gloss is attempted below) is urged against a Naiyāyika, who holds that not the Self but pleasure and the absence of pain constitute the sole end of man. Challenged to give a satisfactory explanation of his statement that the Self is *unfit* to be

fitness to be accepted as the aim of man. Nor can it be argued that what is to be accepted as the aim of man is the desired object itself as characterised by occasional and accidental attributes, sc. desire and the being the object of desire.

accepted as the aim of man, he is supposed to offer a number of definitions of such *unfitness;* but he is met on his own ground, and in each definition thus offered some one flaw or another is exposed. So much by way of apology for the inevitable pedantry of the following.

Now, if unfitness to be a human aim consists in the thing not being an object of desire, then, contrariwise, *fitness* consists in the thing being an object of desire, Next suppose that the emotion of desire has found expression in a proposition e.g. 'I desire pleasure' This proposition discovers (at least for the Naiyāyika) three elements, viz, the desired object or vishaya; the desire, ichchhā; and the being an object of desire, ichchhāvishayatā. The two latter are qualifying or adjective elements to the vishaya, which, in the above proposition, stands, not per se, but in relation to desire, sc. sukhe ichchhāvishayatā varttate But now it is for the Naiyāyika to say whether he regards these adjective elements as viśeshaṇa's i. e distinguishing attributes 'which must be present with and inhere in (as forming a constituent part of) the object' (for this defn. cf. Ved. paribh. Pandit Vol vii p. 450) If so, both the ichchhā and the ichchhāvishayatā will have to be accepted as human aims along with the sukha to which they are both present and essential. And this of course he cannot maintain. To escape this difficulty he is supposed to argue that ichchhā and ichchhāvishayatā are upalakshaṇa's, i. e. occasional and accidental attributes; as 'the crow perched on Chaitra's house yester-day, though not there now, serves to point out the house, and is therefore only an upalakshaṇa'. (cf. Ved. paribh supra). Now the absence of pain is universally desired, and this is based on the common consciousness that absence of pain is desirable: in the latter, again, pain is a part of what is known; and since only what is known can be desired, pain too must be an object of desire.

ताभ्यामुपलक्षितं विषयस्वरूपमिति चेन्न दुःखस्याप्युपादेयत्वापत्तेः ज्ञानविषयस्यैवेच्छाविषयत्वादिच्छाजनकस्य च ज्ञानस्य सविकल्पकत्वेन दुःखविषयत्वात् । विषयैकदेश इति चेत् न सुखे तदभावात् इच्छाविषयविशेष्यस्वरूपमात्रमुपादेयमिति चेत् न अहं स्वर्गी स्यामित्यत्रात्मनोऽपि तथात्वापत्तेः । न तृतीयः स्वकृतिसाध्ययोरपि दुःखतत्साधनयोरनुपादेयत्वात् । न चतुर्थः विशेषणवैयर्थ्यात् । न पञ्चमः साध्याऽवैशिष्ट्यात् । अन्यस्य निर्वक्तुमशक्यत्वात् दुःख-

For from this would follow that pain also is to be accepted as an aim. For only that which is known can be an object of desire: (and pain is known), because the knowledge which gives rise to desire (for the absence of pain), inasmuch as it implies a knowledge of certain attributes in the thing desired (savikalpakatvena), implies a knowledge of pain as the counterpart (viśeshaṇa) of the absence of pain. Nor can it be held that only a part of the (desired) object (is the aim of man), for in the case of pleasure this is absent (sc. a *part* of the pleasure is not desired). Nor that the subject portion only of the thing desired is to be accepted as an aim; for in such a case as 'May I possess heaven' the Self would have to be admitted as an aim (which the opponent will not admit). Nor will the third definition avail; for pain and the instruments of pain, although these are things which one can bring about by volition, are not accepted as the aim of man. Nor is the fourth definition valid; because the qualification (inserted therein) is useless (since the highest aim of man is admittedly not the means of obtaining pleasure, but pleasure itself). Nor is the fifth definition valid; for the probandum (sādhya) is here identical (with the probans, hetu).

Nor is it possible to unfold any other definition,* because the

* The only view open to the opponent is to declare that Self is not the aim of man, because it is identical with pain.

त्साधनतादात्म्यस्यानभ्युपगमपराहतत्वात् । न च सर्व्वात्मकत्वव्या- घातः सर्व्वाधिष्ठानत्वस्यैव सर्व्वात्मकत्वस्यार्थत्वात् न हि सत्यस्य मिथ्यातादात्म्यमस्ति सत्यत्वविरोधात् । तथा चानुपादेयत्वस्यैव निर्व्वक्तुमशक्यत्वात् किमिदमनुपादेयत्वमात्मनोऽनिष्टमापाद्यत इति चेत् न इतरानुप[illegible]र्ज्जनत्वस्यैवोपादेयार्थत्वात् तच्च सुखदुः- खाभावयोरेव अन्येषां तदुपसर्ज्जनत्वात् सुखदुःखाभावेतरश्चात्मा भावरूपत्वेन दुःखाभावानात्मकत्वात् । सर्व्वशून्यात्मकत्वे दुःखा- भावात्मकत्वमप्यस्तीति चेत् न विज्ञातुरात्मकत्वात् न च शून्यं विज्ञातृ न च विज्ञानं शून्याश्रयमभावस्य भावधर्म्मकत्वानुपपत्तेः ।

view that pain and the instruments of pain are identical with Self is already set aside as being held by none.

Nor may the opponent argue that thus (sc. by denying the identity of the Self with pain) the all pervasive character of Self is overthrown; for what we mean by this all pervasive character is that the Self is the substrate of all things (cf. adhisṭhāna p. 450 note). For the identity of the real (satya) with the unreal, (mithyā) cannot be affirmed as subversive of reality.

And as this very *unfitness* to be accepted as a human aim cannot itself be explained (by the opponent), what, we ask, has he proved against us (anishṭa) as regards the unfitness of the Self to be the aim of man? Not so, (replies the opponent); for that something is fit to be accepted as the highest aim of man implies the independence of that thing as regards other things. And this independence belongs only to pleasure and the absence of pain; for to these all other things are subordinate (as aims). And the Self is something different from pleasure and the absence of pain, for since Self is a *positive* entity (bhāvarūpatvena) it cannot be the *negation* of pain. And it cannot be urged that since Self is the void (or blank pervading) all things, it can be the negation of pain; for self-hood belongs to the cogniser. Nor is the void a cogniser; nor does cognition reside in the void; for a mere negation cannot (as substrate) have a positive entity as its attribute.

आरोपितो धर्मधर्मिभाव इति चेत् तर्हि आरोप्यस्याधिष्ठानं वाच्यम् न हि निरधिष्ठानो भ्रमोऽस्ति । शून्यमेवेति चेत् तर्हि शून्यव्यामिश्रमेव सर्वः सर्वं प्रतीयात् न च तथास्ति सत्त्वेनैव सर्वस्य प्रतीतेः । किं च सर्वस्यारोपितत्वे आरोपाधिष्ठानस्य पूर्वमेव सिद्धिर्वाच्या सा च स्वत एवेति कथं शून्यं स्यात् न हि शून्यं स्वतः सिद्धमिति अन्यथा परिभाषामात्रत्वापत्तेः तस्माद्भावरूपत्वादेव दुःखाऽभावाऽनात्मकत्वम् । न च सुखात्मकत्वं स्रगादिविषयज्ञानाऽजन्यत्वात् सुखस्य च तज्जन्यत्वात् अन्यथा तदर्थितया तदुपादानानुपपत्तेः । जन्याजन्ययोश्चाभेदानुपपत्तेः ।

If it be argued that this relation of substrate and attribute is falsely imagined, then some substrate for this false surmisal must be affirmed; for there is no error without a substrate (of reality) If it be said that this very void is the substrate, then all men should be conscious of all things as blended with this void (which as substrate should appear identical with the things surmised in it): but such is not the case, for all things are known as existent only. Further, on the view of the universe being erroneously surmised, some proof of the existence of the substrate of the surmisal previous (to the surmisal) must be declared. If it be said that this proof proceeds from itself alone, than a void cannot be the substrate; for a void is not self-proved: for to say that it is self-proved (anyathâ) would be to convert it into a mere technicality (or synonym of Self). Hence Self as a positive entity cannot be the negation of pain. Nor is the Self pleasure, for it does not follow as an effect from the knowledge of garlands and other pleasurable objects. And pleasure is an effect from such knowledge: if it were not, then the pleasurable objects could not be accepted (desired) through a desire for pleasure. And (the Self is not pleasure,) because the identity of a product (sc. pleasure) and a non-product (sc. Self) is impossible. Nor is it the relation only between pleasure (and the self) that is brought about as a product by the acceptance of pleasurable objects (tena); for consciousness takes the form, 'pleasure has been produced for me': and further,

न च सुखसम्बन्ध एव तेन जन्यः सुखं मे जातमिति प्रतीतेः सुखात्मनोः संबन्धस्य समवायस्याजन्यत्वाच्च । न च स्वात्माऽसंबद्धे स्वतन्त्रे सुखे प्रमाणमस्ति त्वया चाङ्गीक्रियते त्वयाप्यात्मतादात्म्यापन्नस्य नित्यसुखस्यैव स्वीकारात् । किं च सुखात्मनोस्तादात्म्ये ऽहं सुखमिति प्रतीतिप्रसङ्गः न च तदस्ति तस्मात्सुखदुःखाभावान्यत्वादनुपादेय एवात्मा । न च ताभ्यामन्यः पुरुषार्थोस्ति येनात्मा मुमुक्षूणामुपादेयः स्यात् । न चात्मत्वमेव परमपुरुषार्थताप्रयोजकं तथा लोके व्यवहाराभावात् । सुखं मे स्याद् दुःखं मा भूदिति आत्मसम्बन्धिसुखदुःखाभावयोरेव काम्यमानत्वात् । न चात्मा मम स्यादिति कामनास्ति न चाऽकाम्यमानः पुरुषार्थः ।

because the relation between pleasure and Self technically termed samavāya, *intimate*, is not a product (it is considered *nitya*, eternal in the Nyāya). Nor is there evidence for pleasure independent of (as) not in relation with the Self, nor do you admit such; for what you admit is eternal pleasure only as identical with Self. Moreover, if Self and pleasure were identical, our consciousness ought to take the form 'I am pleasure'—which is not the case. Hence Self is indeed, not to be accepted as an aim; because it is different from pleasure and the absence of pain. Nor apart from these two is there any other human aim, so that Self might be accepted as an aim by those desiring emancipation. Nor can it be held that self-hood constitutes the highest aim of man, since this is not the common experience of the world; for pleasure and the absence of pain, relating to ourselves, are the only desirable things:—thus, 'may pleasure be mine; may pain cease for me.' Nor does desire take the form,—'may Self be mine'; and that which is not desired is not a human aim.

न चायमलौकिकः पुरुषार्थः । लोकव्यवहारानुल्लङ्घनेनैव वेदेन पुरुषार्थप्रतिपादनात् । अन्यथा * ऽलौकिकत्वात्स्वर्गस्यापि सुखरूपता न स्यात् । किं च किमयं लोकोत्तरो येनैहिकं पारत्रिकं च ससाधनं सर्वं पुरुषार्थं परित्यज्याऽजन्मब्रह्मचर्याद्याऽशेषदुःखजातेनात्मानमवसादयन्नलौकिकः पुरुषार्थोऽयमात्मेति वदन्नेव कृतार्थः स्यात् । तथा च रागिगीतं वरं वृन्दावने शून्ये शृगालत्वं स इच्छति । न तु निर्विषयं मोक्षं मन्तुमर्हति गौतमेति ।

Nor can it be said that this (Self) is a super-sensuous aim; for the Veda declares the aim of man without running counter to human experiences. If this were otherwise, paradise (svarga) also, as being something super-sensuous, could not have (for men) a blissful character. Moreover, how strangely has this (Vedāntin opponent) transcended human experience, that, setting aside all human aims in this and in the next world, together with the means of attaining them, and harassing himself with all that complex of pains from birth onwards through the various stages of studentship &c., to the end of life, he should rest satisfied in the bare statement that the Self is a transcendental aim! To our view conforms (tathācha) the song of the lover:—' Better he who desires to be a jackal in the lonely Vṛindā forest †: nor can one accept emancipation in which no objects remain to be desired, O Gautama!'

---

* पुरुषार्थत्वात् var. lect.

† cf. Gādādharī, Muktivāda;

वरं वृन्दावने रम्ये शृगालत्वं व्रजाम्यहम् ।
न च वैशेषिकीं मुक्तिं प्रार्थयामि कदाचन ॥

किं च यद्ययमात्मा पुरुषार्थः स्यात् कथं तर्ह्यप्रयत्नलब्धमात्मानमुपेक्ष्य वैषयिकसुखलोभात्तत्काम्यतीर्थादौ म्रियन्ते प्राणिनः न च ते भ्रान्ताः शास्त्रेणापि तदनुमोदनात् । न लोकवचनात्तात न वेदवचनादपि । मतिरुत्क्रमणीया ते प्रयागमरणं प्रति । कुष्ठाद्युपहताश्च दुःखाभावमुद्दिश्य म्रियन्ते इति तु सार्वजनीनम् । तत्किमनात्मैवोपादेयः । कः संशयः । सुखदुःखाभावयोस्तत्साधनानां च पुत्रकलत्रगृहक्षेत्रगोहिरण्यादीनामुपादेयत्वस्याविगीतत्वात् । नन्वैहिकामुष्मिकसकलसुखतत्साधनजातमुपेक्ष्य केवलमात्मानमेवोद्दिश्य श्रवणादावपि के चन प्रवर्तन्ते एवेति चेत्ते

Moreover, if this Self is the aim of man, how is it that living beings disregard the Self which is to be attained without difficulty, and through a desire for sensuous pleasure go to die at one or other of the favourite tīrthas? Nor can it be said that these men are deluded, for even the Śāstras approve their action: thus, 'Dear one! thy resolve to die at Prayāga thou shalt not yield through word of man or Veda.' And it is a common fact that lepers and others, seeking rest from pain, choose to die. What then, (the Vedantin asks) is something other than Self to be accepted as the aim of man? Assuredly; for the acceptance of pleasure and the absence of pain and the means thereto, viz., sons and home, cattle &c. as aims is without reproach.

Matsya Pu. IV. 23.

Now it may be urged that some men disregarding all present and future pleasure and the means thereto, and keeping in view the Self alone, enter on *hearing* and the other prescribed means. Well then, let these men be considered the deluded ones; according to the maxim that the inclusion of the many is right; whereas such men are few indeed. It may be urged that the Veda declares

तर्हि भ्रान्ता भवन्तु बहूनामनुग्रहो न्याय्य इति न्यायात् द्विषा एव हि ते । विज्ञानमानन्दं ब्रह्मेति सुखरूपत्वमप्यात्मनः श्रुतौ श्रूयत इति चेत् श्रूयतां नाम न ह्येतावता ऽऽत्मा पुरुषार्थः न हि सुखमत्येव पुरुषार्थः स्वसंबन्धितयैव तस्य पुरुषार्थत्वात् अन्यथा शत्रुसुखस्यापि पुरुषार्थत्वापत्तेः न हि सुखं सुखस्य पुरुषार्थः सांसारिकमपि सुखं नानादुःखसंभिन्नमनुपादेयमेवेति चेत् न गत्यन्तराभावात् न हि भिक्षुकभिया स्थाल्यनधिश्रयणम् । आयाति चेत् दुःखं परिहर्तव्यं । सुखं तूपादेयमेव । कथं तर्ह्यात्मज्ञानार्थं श्रवणादिविधिः दुःखाभावार्थमेव एवमात्मनोऽपुरुषार्थत्वे प्राप्ते ब्रूमः ॥

that the Self is pleasure in the passage 'Brahman is Intelligence, Bliss.' This may be granted; but by this is not meant that Self is the aim of man: for pleasure in itself is not an aim but only as deing in relation with one's self. Otherwise the pleasure of an enemy also would become an aim. Nor is pleasure the aim of pleasure (which the Vedântin identifies with Self). It may be urged that worldly pleasure, mingled as it is with all kinds of pain, certainly cannot be accepted as the aim of man. This objection is to be set aside, because no other resource (than this sorrow-mingled pleasure) is open to man: nor does the fear of beggars deter one from putting the cooking pot on the fire. But (you say) pain comes. Away with it then! But pleasure is indeed the aim of man. Why then for the sake of a knowledge of the Self are injunctions as to *hearing* &c. prescribed in the Veda? Simply to bring pain to an end.

To the view thus laid down, viz. Self is not the aim of man we reply:

A. V.

*(To be continued).*

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

—•••—

श्रीगणेशाय नमः ।

(*Continued from page* 448. VOL. XI.)

"अनभिहितवाच्य"मित्यावश्यके वयः· तेनानभिहितं वाचकपदातिरिक्तमवश्यवाच्यं यत्र, तदित्यर्थः, वाचकपदानभिधाने न्यूनपदत्वव्यवस्थापनात्· यत्तु "न्यूनपदे प्रतीतिमात्र,मत्र तु विरुद्धा प्रतीतिरित्यनयोर्भेदः· 'अप्राकृतस्ये"तिवक्ष्यमाणोदाहरणे च मत्सम्बन्धित्वेन वीरशिशुप्रतीतिरेव विरुद्धा प्रतीति"रिति कस्यचिद्व्याख्यानम, तदनुभवविरुद्धम्, तथानुभवस्याप्रतीतेः· इदं चान्यथावाच्यस्या(क)न्यथाभिधानाद्वा, ऽवाचकस्य द्योतकादेरनभिधानाद्वा· आद्यं यथा—

अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्याहृतस्य मम नाम तथापि नास्या(ख) ।
केऽप्येष वीरशिशुकाकृतिरप्रमेय-
सौन्दर्य्यसारसमुदायमयः पदार्थः ॥

अत्राहमपहृतोस्मीतिप्रकारेणापहृतत्वस्य विधिर्वाच्यः· तेन वाक्यद्वयसमाप्तौ तथापीत्युपपद्यते, द्वितीयवाक्यगतत्वेनैव तस्योपपत्तेः·(ग) नन्वयमविमृष्टविधेयांश एवेति चे,न्न, नहि विधेयाविमर्शमात्रमत्र दूषणं,

(क) अन्यथावाच्यस्य पदस्येति पा· ।
(ख) तथाप्यनास्थेति पुस्तकान्तरम् ।
(ग) तस्य प्रतीतेरिति पा· ।

किंतु तथापीत्यस्याऽसङ्गतिरपि· तदनुरोधेनैव ह्यपहृतत्वस्य विधेयत्वाभ्यु· पगमो, न तु तत्प्राधान्यात्· एतेना 'ऽवान्तरवाक्ये न विधेयाऽविमर्श' इति समाधानमनादेयं, बीजाभावात्. "वर्णमप्यमुक्ते"त्यवान्तरवाक्य एव तदु· दाहरणाच्च· अस्तु वात्रोदाहरणे विधेयाऽविमर्शः, तथापि द्वितीयभेदे तदसङ्करमात्रेणैव दोषभेदव्यवस्थितिः· (क) यथा–

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्ती ।
स्वप्नेऽनिरुद्धघटनाधिगतानुरूप·
लक्ष्मीफलामसुरराजसुतां विधाय ॥

अत्र सुरासुराणामपि मनोरथस्य दूरवर्तीत्यप्यर्थोऽवश्यं वाच्यः· (ख) अन्यथा ऽन्यमनोरथविषयत्वं प्रतीयेत । असमासेऽप्येष दोषः· यथा–

प्रणयभङ्गपराङ्मुखचेतस·
स्त्वयि निबद्धरतेः प्रियवादिनः ।
कमपराधलवं मम पश्यसि,
त्यजसि मानिनि! दासजनं यतः ॥

अत्र लवमपीत्यर्थोऽवश्य वाच्यः, अन्यथा लवनिषेधे स्थूलप्र· तीतिप्रसङ्गात्· दूषकताबीजं प्रथमेऽभिमताऽप्रतीति,रन्त्ययोस्तु विरुद्ध· प्रतीतिरिति नित्यदोषोऽयम् ॥ (१३)

"अपदस्थे'ति· अस्थानस्थपद,मस्थानस्थसमासञ्चेति द्वयमित्यर्थः· अस्थानस्थत्वं चायोग्यस्थानस्थत्वम्· तयोराद्यं यथा–

प्रियेण संग्रथ्य विपक्षसन्निधा·
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां,(ग)
वसन्ति हि प्रेम्णि गुणा, न वस्तुनि ॥

(क) दोषभेदव्यवस्थितेरिति पा· ।
(ख) ०ऽवश्यवाच्य इतीतरत्र· न त्वर्थे विशेषः· उत्तरत्राप्येवम् ।
(ग) जलाविलामिति पु· ।

अत्र 'न काचि'दिति न योग्यं नञः स्थानम्· प्रतियोगिसन्निधिर्हि तथेति न युक्तम्· तत्राप्रधानेपि "न खलु न खलु बाणः[(क)] सन्निपात्योऽयम-'स्मि''न्नित्यादौ निरवद्यप्रयोगदर्शनात्·; परं तु 'काचिन्न विजहौ,अपि तु सर्वा एव विजहु'रितिविरुद्धप्रतीतिप्रसङ्गादयोग्यं स्थानमेतत् । विरुद्धप्रतीतजननादिव विकल्पितोयोगस्य पदस्याप्रयोगासम्भवादपि 'स्थानस्यायो ग्यत्वम्· यथा—

> लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
> मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् ।
> पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया
> प्रोन्मृष्टः करपङ्कजेन कुटिलाऽऽताम्रच्छविः पातु वः ॥

अत्र कुटिलाताम्रच्छवित्वं नखलक्ष्मशङ्काबीजमिति तत्पूर्वमेव प्रयुज्यमानमुपयुज्यते, नतु पश्चादिति स्पष्टं दुष्टिबीजम्· नित्यश्चायम् ॥ (१४)

अस्थानस्थसमासं यथा—

> अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
> स्थातुं वाञ्छति मान एष,[(ख)] धिगिति क्रोधादिवाऽऽलोहितः ।
> उद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणा-
> त्फुल्लत्कैरवकोशनिस्सरदलिश्रेणीकृपाणं शशी ॥

अत्र पूर्वार्द्धे क्रुद्धस्य शशिन उक्तिरिति तत्समासस्य योग्यं स्थानं, न पुनः कवेरुक्तिरुत्तरार्द्धमित्यस्थानसमासता· नच प्रतिकूलवर्णत्वान्तर्भावः, समासस्यावर्णरूपत्वात्· नापि पतत्प्रकर्षता. प्रथमप्रक्रान्तस्य प्रकर्षस्याग्रे त्यागे हि तत्सम्भवो, ऽत्र तु तद्विपरीत्यात्·[(ग)] किञ्च, उभयत्रोचितस्यैव प्रकर्षस्याभावे तत्संभवः· अत्र त्वेकतरत्रैव समासौचित्यमिति दूषकताबीजं सहृदयवैमुख्यम् ॥ (१५)

---

(क) बाणा इति पु· ।
(ख) कोप एव इति पाठस्तु न प्रशस्तः ।
(ग) तद्वैपरीत्यमिति पु· ।

सङ्कीर्णम्, वाक्यान्तरपदेन मिश्रम्॰ यथा–

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥

अत्र पादगत हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, कोपं मुञ्चेतिवाक्यत्रये ऽन्योन्यवाक्यस्यपदमादायानभिमतं प्रतीयते॰ इदमेव च दुष्टिबीजं, प्रतीतिविलम्बो वा॰ एकवाक्ये क्लिष्टत्वमिति ततो भेदः॰ ॥ (१६)

गर्भितम्, जातगर्भम्॰ अन्तःस्थितवाक्यान्तरवाक्यमित्यर्थः॰ तत्र[क] वाक्यं क्वचित्स्वभावत एवैकं,[ख] क्वचित्तु वाक्यैकवाक्यतयैकीभूतम्॰ तत्राद्यं यथा–

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः, ।
वदामि भवतस्तत्त्वं, न विधेया कदाचन ॥

अत्र 'वदामि भवतस्तत्त्व'मिति वाक्यान्तरं प्रमथवाक्ये स्थितम् । द्वितीयं यथा–

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवा ऽसियष्ट्या ऽरिकण्ठे,
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती, ।
तत्सक्तोयं न किञ्चिद्गणयति, विदितं तेस्तु, तेनास्मि दत्ता
भृत्येभ्यः, श्रीनियोगाद्गदितु[ग]मिव गतेत्यम्बुधिं यस्य कीर्तिः ॥

अत्र "तत्सक्तोयं न किञ्चिद्गणयति"तेन भृत्येभ्यो दत्तास्मी'ति वाक्यैकवाक्यमध्ये "विदितं तेस्त्वि" तिवाक्यान्तरं स्थितम्॰ प्रत्युत 'लक्ष्मीस्ततो ऽपसरतो'तिविरुद्धमतिकारित्वात् प्रकाशितविरुद्धत्वम्॰ प्रतीतिविच्छेदात्[घ] दुष्टिबीजम्॰ अतो न यत्र प्रतीतिर्विच्छिद्यते, तत्र नायं दोषः ॥ (१७)

प्रसिद्धिहतम्,[ङ]

(क) तत्स्विति पा॰ ।
(ख) स्वभावादेवैकमित्यन्यत्र ।
(ग) वदितुमिति पु॰ ।
(घ) प्रतीतिच्छेदात्रेति पु॰ ।
(ङ) प्रसिद्धिहतमिति पु॰ ।

“मञ्जीरादिषु रणितप्रायं, पक्षिषु च कूजितप्रभृति, ।
स्तनितमणितादि सुरते, मेघादिषु गर्जितप्रमुखम्” ॥–

इतिप्रसिद्धिमतिक्रान्तम्· यथा–

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥

रवो मण्डूकादिशब्दे कविप्रसिद्धो,नतूक्तविशेषणके[क]सिंहनादे· न चाऽवाचकसङ्करः, तुल्येनैव रूपेणोभयत्र शक्तिसत्त्वेप्येकत्रैव कविप्रयोगनियमात्· अत एवायं वाक्यदोषः, विशेषणविशेषसन्निधानेन[ख]विशेषपरत्वादिति ॥ (१८)

भग्नप्रक्रमम्, भग्नः प्रक्रमः प्रस्तावौचित्यं यस्य, तत्· एतच्चा[ग]नेकधाऽवस्थितम्· तत्र प्रकृतेः प्रक्रमभङ्गो यथा–

नाथे निशाया नियतेर्वियोगादस्तंगते हन्त निशापि याता, ।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति ॥

अत्रा“स्तंगत”इति गमेः प्रकृतेः प्रस्तावे “याते”ति यातेः प्रयोगे प्रकृतिप्रक्रमभङ्गः· भिन्नाभ्यामुपस्थापितं भिन्नवद्भातीति कुलाङ्गनानां स्वामिसदृशावस्थाप्रतीतिर्न सम्भवति· तस्माद् गता निशापी’ति युक्तः पाठः·[घ]ननु,“नैकं पदं द्विः प्रयोज्यं प्रायेणे”ति वामनसूत्रम्· अत्रापि कथितपदं दुष्टमनुपदमेवोक्तम्· तथात्र पुनर्गमेः प्रयोगोपि दुष्ट एव स्यादिति चेत्, न, उद्देश्यप्रतिनिर्देश्याऽतिरिक्तं ह्येकपदद्विःप्रयोग[ङ]निषेधविषयः· तादृशे तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्ना वा प्रयोगं विना दोषः· यथा–

(क) विशेषणे–इति, विशेषे–इति च पा· ।
(ख) विशेषणविशेष्यसंनिधानेनेति पा· ।
(ग) तच्चेति पा· ।
(घ) युक्तपाठ इति क्वचित् ।
(ङ) द्विष्प्रयोगेति क्वचित्· उभयथा च साधु ।

उदेति सविता ताम्र,स्ताम्र एवास्तमेति च, ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥

इति· अत्र 'रक्त एवास्तमति चे'ति यदि क्रियेत, तदा पदान्तर· प्रतिपाद्यमानः[(क)] स एवार्थो भिन्न इव प्रतीयमानः प्रतीतिं व्यवद्धीत । प्रत्ययस्य यथा–

यशो ऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा[(ख)] ।
अनुत्सुकाना[(ग)]मभियोगभाजां समुत्सुकेवाङ्कमुपैति लक्ष्मीः ॥

अत्र तुमुनः प्रक्रमे सनो ऽभिधानमेकरूपस्तनां प्रतीतिं [(घ)]स्थगयति· 'सुखमीहितुं वे'ति युक्तः पाठः । सर्वनाम्नो यथा–

ते हिमालयमा ऽऽमन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्या ऽर्थं तद्विसृष्टाः खमुद्ययुः ॥

अत्रा' स्मै"–इतीदमा प्रक्रमात् "तद्विसृष्टा"इत्यत्राप्य'नेन विसृष्टा'· इत्येव वाच्यम्· नच तदिदमोरर्थाभेदः, इदमः प्रस्तुतप्रत्यक्षपरामर्शक· त्वात्, तदस्त्व ऽप्रत्यक्षपूर्वानुभूतपरामर्शकत्वात्, [(ङ)]अन्यथा ऽनयोः [(च)]पर्या· यतापत्ते· । पर्य्यायस्य यथा–

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम्, ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥

अत्रापत्येषु बहुषु सत्स्वपि तस्मिन्नपत्ये स्नेहातिशयविवक्षणादप· त्यशब्दे प्रयोक्तव्ये पुत्रशब्दप्रयोगात् पर्यायप्रक्रमभङ्गः· केचित्व'ऽसति पुत्रे सुतायां स्नेहो युक्त,स्तस्य तु सत्य ऽपि पुत्रे तस्यां सो ऽभूदिति विवक्षणात्

(क) पदान्तरप्रतिपद्यमान इति पाठान्तरं तु न प्रलक्षणम् ।

(ख) अपवर्त्तितुं वेति पु· तु नाति युक्तम् ।

(ग) निरुत्सुकानामिति सर्वत्रोपलभ्यते,तथापि न्याय्यत्वादनुत्सुकानामिति स्थाप्यते ।

(घ) एकरूपताप्रतीतिमिति पु· ।

(ङ) तदस्त्वप्रत्यक्षपूर्वानुभूतपरामर्शकत्वादित्येतावन्मात्रमत्र स्थाने खल्वेकत्र पुस्तके नास्ति ।

(च) अन्यथा तयोरिति पु· ।

दोषप्रतीति'रिति समादधिरे· तदयुक्तम्, "अनन्तपुष्पस्य मधोर्हि चूत"[क] इतिदृष्टान्तवैषम्यप्रसङ्गात्, अत्र च सामान्यविशेषभावेनोपादानाद्दार्ष्टान्तिकेऽपि[ख] तथैवौचित्यात्· तस्मा'दपत्यवतोऽपी'ति युक्तः पाठः· नचात्रापि बहुत्वालाभाद्दृष्टान्तवैषम्यम्· अपत्यान्यस्य सन्तीति बहुत्व एव[ग] मतुपो विधानात्· एतेन "साधुरेव 'पुत्रवत' इति पाठ" इत्यतः "केचि"-दित्यन्तेन साम्प्रदायिका इत्यर्थकेन वृत्तिकृतोऽत्रानुमतिरेवेति चण्डीदासमतमनादेयम्· अथापत्यपुत्रशब्दयोः कथं पर्यायता· तत्र केचित्, अपत्यपर्य्यायोऽपि पुत्रशब्दः· अन्यथा पुत्रीत्यत्र स्त्रीप्रत्ययस्य[घ] कुत्रान्वय इत्याहुः· तच युक्तम्, तथा सति दोषस्यैवाऽप्रसङ्गाद्, अपत्यार्थकत्वाविशेषात्· तस्मात्पर्य्यायत्वमेकार्थप्रतिपादकत्वमात्रम्, नत्वेकप्रकारकप्रतीतिजनकत्वमपि· अत एव लघुतामुपक्रम्या'गरीया'नित्युक्तावपि पर्य्यायप्रक्रमभङ्ग उच्यते· यथा–

> विपदोऽभिभवन्त्यविक्रमं, रहयत्यापदुपेतमायतिः, ।
> नियता लघुता निरायते,रगरीयान्न पदं नृपश्रियाम्[ङ] ॥

इति· अत्रैव विपदापदोरुपसर्गप्रक्रमभङ्गोऽपि[च] द्रष्टव्यः· 'तदभिभवः कुरुते निरायतिम्, लघुतां भजते निरायति,र्लघुताभागऽपदं नृपश्रियां'मिति पाठो युक्तो, यदि न च्छन्दोभङ्गः ॥

> काचित् कीर्णा रजोभिर्दिवमनुविदधे[छ] मन्दवक्त्रे[ज]न्दुलक्ष्मी,-
> रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः, ।
> भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः,
> प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्य्यः शशंसुः ॥

(क) अनन्तपुष्पस्य चूत इति पु· ।
(ख) एकत्र 'अपि'नं पठ्यते ।
(ग) बहुर्द्व एवेति पु· ।
(घ) पुत्रस्त्रीप्रत्ययस्येतिपाठस्तु कथंचिदुपयोजनीयः ।
(ङ) नृपश्रिय इति प्रायः पठ्यते ।
(च) एकत्राऽपिकाररहितं पठ्यते· ।
(छ) विदधावित्ति पा· ।
(ज) भिन्नवक्त्रेति क्वचित् ।

अत्र 'श्राच'दित्युपक्रम्य 'काश्चि'दिति वचनप्रक्रमभङ्गः तस्मा-'त्काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्म्मन्दवक्त्रेन्दुशोभा'निःश्रीका' इति पठनीयम्। 'कम्पमाना''इत्यत्र च कम्पमीयु(क)रिति पठनीयम्। शतृशानचो-र्गुणीभूतक्रियान्तराभिधायकत्वनियमात्। नचात्र क्रियान्तरं प्रधानमस्ति,(ख)

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु,(ग)।
विश्वस्तैः(घ)क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले,
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः॥

अत्र "गाहन्ता"मितिकर्तृकारकवाचितिङः प्रक्रमे "क्रियता"मिति कर्मकारकवाचकस्य। 'विश्वस्ता रचयन्तु शूकरवरा'इत्यदुष्टम्।

अकलिततपस्तेजोवीर्य्यप्रथिम्नि यशोनिधा-( )
वऽवितथमदाऽऽध्माते रोषान्मुनावभिगच्छति(च)।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्म्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च॥

अत्र तपस्तेजोवीर्य्य(छ)क्रमेणोपक्रम्य तदुभयोचितयोः पादोपसंग्रह-(ज)धनुर्ग्रहणयोः पौर्व्वापर्य्यं योग्यम्, "यथासङ्ख्यमनुदेशः समाना"मि-तिन्यायादिति तदन्यथाकरणे क्रमप्रक्रमभङ्गः। एवमन्यदप्यूह्यम्। अत्र सर्व-त्रैवरूपप्रसूताया: प्रतीतेः स्खलन(झ)मुपघातो वा दूषकताबीजम्। यदुक्तम्—

(क) कम्पमापुरिति पा०।

(ख) आख्यातप्रक्रमभङ्गप्रसङ्गाच्च—इति खल्वेकत्र पुस्तके ऽत्राऽधिकं भवति।

(ग) रोमन्थमभ्यस्यतामित्यात्मनेपदीय एकतमपुस्तकस्थः पाठो ऽपि साधुः अत एव चाभ्यस्यतामित्यनेन पदप्रक्रमप्रकल्पनमुद्योतकृता भवति।

(घ) विस्रब्धैरिति विश्रब्धैरिति च भवतः क्वाचित्कौ पाठौ।

(ङ) तपोनिधाविति त्वेकस्थो नाऽतियुक्तः।

(च) ०वभिधावतीति पाठान्तरम्।

(छ) तपस्तेजोवीर्यरोषाधित्येकत्र पठ्यते, तेजोवीर्यरोषाविति चेतरयोः "अत्र तपस्तेजोवीर्य्ये क्रमेणेति पाठ" इति तूद्योतः। अत्र पाठानां परास्परापरिप्राप्तेऽपि नानात्वे टीकासम्मत एवाभ्युत्याच्यस्तः।

(ज) पादोपसङ्ग्रहे—इत्यन्यत्रास्ते।

(झ) स्खलनमिति० त्वेकत्र।

"प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ।
ह्लादः स्फुरन्नास्वादो यत्र म्लानत्वमश्नुते॥
दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः"।

इति अत एव नित्यदोषोयम्॥ (१९)

अक्रमम्, अविद्यमानः क्रमो(क) यत्र, तत् यत्पदानन्तरं यत्पदोपादानमुचितं, ततोऽन्यत्र तदुपादानं यत्रेत्यर्थः यथा–

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत,स्त्वमस्य लोकस्य च नेत्रकौमुदी॥

अत्र "लोकस्य चे"ति चकार"स्त्वं"शब्दानन्तरं युक्तः, 'त्वं शब्दर्थस्यैव शोच्यतायां समुच्चयस्य द्योतनीयत्वात् लोकपदार्थे समुच्चयाभावात् अथाऽपदस्थपदादस्य को भेदः "तत्र प्रतीत्यन्तर,मत्र सैव प्रतीतिः, किन्तु विलम्बिते"ति(ख)केचित् तन्न, "कुटिलाताम्रच्छवि"रित्युदाहृते ऽपदस्थपदे प्रतीत्यन्तराभावात् वयं तु ब्रूमः–अव्यवधानेनैव यत्राभिमतप्रतीतिजननसामर्थ्यं, तदेतस्य विषयो, ऽन्यः पुनरितरस्य चादीनां चाव्यवहितपदार्थेष्वेव समुच्चयादिद्योतकता यदुक्तं महिमभट्टेन–

"अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः।
सम्बन्धं, ते हि स्वां शक्तिमुपदध्युरनन्तरे॥"

इति नच नञोऽप्यव्यवहितस्यैव तथात्व,मतः "स्रजञ्च काचिद्विजहा"वित्यादिकमप्यक्रमभेदः स्यादिति वाच्यम्, "न खलु न खलु बाणस्सन्निपात्यो ऽयमस्मि"न्नित्यादौ व्यवधानेपि प्रतीतिविशेषाभावात् नचायं चादिपदेष्वेव दोषः, किंत्वि'स्य'मादिपदेष्वपि (ग) यथा–

(शेषमग्र)

(क) क्रमे इति त्वऽयुक्तः पाठः खल्वेकत्रत्यः।
(ख) किन्तु लम्बितेति पाठः।
(ग) किन्त्वस्यमादिष्वपीति पु।

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page* 421. Vol. XI.)

सू० क्रयसाधनभूतैकहायन्यन्वयनियमः स्यात् यद्येकहायन्याः क्रयसम्बन्धवदरुणिमसम्बन्धोऽपि वाक्यावसेयः स्यात् तदा वाक्यार्थद्वयविधानं स्यात्, न चैतदस्ति अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम् एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते न गुणसम्बन्धः, विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थो भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थ वृत्तिः सामानाधिकरण्यमिति हि तल्लक्षणम्,

टी० "अरुणिम" इत्यादि, सर्वद्रव्यसाधारणप्रकरणानपेक्षत्वाद्वाक्यस्यतयैव नियमसिद्धिरित्यर्थः । अत्र गुणद्रव्ययोर्विशेषणविशेष्यभावः प्रातिपदिकावसेयः, विशेष्यैक्यं सामानाधिकरण्यावसेय क्रयान्वयो वाक्यावसेय इति वाक्यस्य क्रयान्वयबोधनमेव कृत्यन्तस्मादेकस्मिन्वाक्येऽर्थद्वयविधानप्रसङ्गाभावाद्वाक्यभेदाभावेनारुण्यं न प्राकरणिकसर्वद्रव्यान्वयि, अपि त्वेकहायनीमात्रान्वयीति सूत्रार्थः, वैधिकरण्येन पदयोरर्थभेद इति पूर्वपक्षे प्राप्ते अर्थैकत्वे इत्युक्तं, द्रव्यगुणयोः क्रयान्वये द्वारद्वारिभावेन विना तदयोगाद्द्वारान्वयद्वार्यन्वयरूपार्थयोर्भिन्नत्वाद्वाक्यभेदप्रसङ्गरूपविरोधः स्यादिति शङ्कायामैककर्म्यादित्युक्तम्, एकहायन्यन्वयानियम इति पूर्वपक्षे नियमः स्यादित्युक्तमिति, अत्र गुणसम्बन्धः प्रातिपदिकावसेयोऽस्तु ततः किं वाक्य-

भेदायत्तानियमपरिहारस्येति शङ्कायां सूत्राक्षरयोजनायां सङ्ग्रहेणोक्तमर्थं विवृणोति "यद्वीत्यादिना, किमारुण्यस्य द्रव्यमात्रान्वये वा द्रव्यविशेषान्वये वा वाक्यबोध्ये तद्विद उच्यत? इति विकल्पे द्रव्यमात्रान्वयस्य प्रातिपदिकावसेयत्वमाह "अरुणये"ति, यदि गुणगुणिसम्बन्धः प्रातिपदिकावसेयः तर्हि सामानाधिकरण्यस्य किं कृत्यमित्यपेक्षां शमयन् द्वितीयं शिरः प्रतिवक्ति "एकहायनीपदे"ति, तस्यैकहायनीत्वमात्रम् अरुणिमविशिष्टद्रव्यस्यैकहायनीत्वाश्रयत्वं विशेष्यैक्यमित्यर्थः, अनेन अरुणाधिकरणाऽऽकृत्यधिकरणयोः प्रतिपाद्यभेदश्चोक्तो भवति, प्रातिपदिकस्य धर्म्मिपर्यन्तत्वमाकृत्यधिकरणार्थः, अनेकप्रातिपदिकस्यसमानविभक्तेर्विशेष्यैक्यपरत्वप्रतिपादकमरुणाधिकरणमिति कथङ्गुणसम्बन्धो न सामानाधिकरण्यावसेय इत्यत्राह "विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थ" इति, विशिष्टैक्यमित्युक्ते विशेषणांशस्यैक्यं माभूदिति विशिष्टद्रव्यैक्यमित्युक्तं द्रव्य-शब्देन विशेष्यांशोविवक्षितः । एतदुपपादकत्वेन सामानाधिकरण्यलक्षणमन्यमाह "भिन्ने"ति, न हि विशेषणविशेष्यवाचिनोः पदयोर्विशेषणविशेष्यभावसम्बन्धे वृत्तिः सामानाधिकरण्यमित्युक्तमित्यर्थः, एवं प्रातिपदिकेन गुणान्वयस्समानविभक्त्या परस्परान्वयो वाक्येन क्रियान्वयश्च बोध्यत इति कृत्यत्रयमुक्तम् । एतत्पराभ्युपेतमित्याह—

भा० अत एव हि रक्तः पटो भवतीत्यादिषु कार्य्यादेकवाक्यत्वं पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः, रागसम्बन्धस्तु रक्तपदेनैवाभिहितः, रागसम्बन्धिद्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्येनावसेयमेवमेकेन गुणेन द्वाभ्यां बहुभिर्वा तेन तेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धं; देवदत्तः श्यामो युवा लोहिताक्षः दण्डी कुण्डली तिष्ठति शुक्लेन वाससा यवनिकां सम्पादयेत् ।

टी० "अत एवे"ति, किञ्च द्रव्यपर्यन्ताभिधानेऽप्येकहायनीपदेन वाक्यस्य निराकाङ्क्षत्वादरुणयेति पदं न तत्रान्वेतीति शङ्का च परिहृता भवति 'अर्थवादाधिकरणेऽर्थवादनैरपेक्ष्येण विधेरेव प्रवर्त्तकत्वाद्विधिवाक्येनार्थवादस्य नैकवाक्यत्वमिति शङ्कायामर्थवादस्य श्रूयमाणत्वात्तत्रापि विधेराकाङ्क्षाऽस्तीति कल्प्यन्तस्मादुत्थापिताकाङ्क्षोऽर्थवादो विधिनैकवाक्यतयाऽन्वित इति निश्चितः, तत्र तैरेवोक्तमुदाहरणमिदं रक्तः पटो भवतीति, तत्र हि पटो भवतीत्येतावता निराकाङ्क्षत्वेऽपि वाक्यस्य प्रयुक्तं रक्तपदं कीदृशः पट इति उत्थापिताकाङ्क्षमन्वेति एवमत्राप्यरुणयेति पदं श्रूयमाणमुत्थापिताकाङ्क्षत्वादेकवाक्यतयाऽन्वितमिति भावः। अत एव–कृत्यत्रयस्यापि यथोक्तप्रकारत्वादेव, रक्तः पटो भवतीति वाक्ये यथोक्तप्रकारेण कृत्यत्रयं दर्शयति "पटस्ये"ति, रक्तः पट इत्यादि वाक्ये विशेषणस्यैकत्वात्तदुत्थापिताकाङ्क्षमन्वेति बहूनि विशेषणानि समस्तपदोक्तानि चेदन्वितानि स्युः न तु व्यस्तपदोक्तानि, अत्र तु पदानि व्यस्तानि, तत्र प्रथमान्तत्वात्सामानधिकरण्यमत्र तु पदानि कारकविभक्त्यन्तानि, तस्मान्नात्र सामानाधिकरण्यमिति शङ्कात्रयमभिप्रेत्याह "एकमेकेने"ति, पदेन समस्तेन व्यस्तेन वेति कारकविभक्त्यन्तेन प्रथमान्तेन वेति चात्राभिप्रेतं, तत्र प्रथमान्तबहुविशेषणान्वये उदाहरणमाह "देवदत्त"इति, देवदत्तः श्याम इत्यादिकमुदाहरतोऽयं भावः–रक्त पट इति पदैर्द्वयमपिद्वाचकमरुणयेति पदञ्चैतनवाचकमिति वैषम्यं यथा न प्रयोजकं तथा प्रथमान्तत्वकारकविभक्त्यन्तत्ववैषम्यमप्यप्रयोजकमिति, अन्तरङ्गबहिरङ्गविशेषणे अप्येवमित्यभिप्रायेण दण्डी कुण्डलीत्युक्तम्। कारकविभक्त्यन्तैकपदान्वयोदाहरणमाह "शुक्लेन वाससे"ति, कर्मकारकमुदाहरति–

सू० नीलमुत्पलमानय नीलोत्पलमानय गामानय शुक्लां गोमनाचीम्, "अग्नये पथि कृते पुरोडाशमष्टाकपालं निर्वपे"दिति, एवमरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति

टी० "नीलमुत्पलमि"ति, समस्तोदाहरणमाह "नीलोत्पलमि"ति,

कारकविभक्त्यन्तानेकपदान्वयोदाहरणमाह "गा"मिति, संप्रदानकारकवि-षयं वैदिकं चोदाहरणमाह "आनय"इति, पुरोडाशमष्टाकपालमिति कर्म्म-कारकमपि सिद्धम्, । एवमरुणयेत्यादिवाक्येऽपि तुल्यमित्यत्राह "एव मि"ति, । ननु कारकविभक्तेः क्रियान्वयबोधोपजीवत्वाच्च परस्परान्वयबोध-कत्वम् उच्यते कारकविभक्तिः क्रियान्वयबोधिका स्यात्, किमत्रायोगव्यव-च्छेद एव? उतान्ययोगव्यवच्छेदश्च? अयोगव्यवच्छेदमात्रं न विरुद्धम् अन्ययोगव्यवच्छेदश्चेत्तर्हि क्रियान्वयबोधोपजीवा कारकविभक्तिः पशुना यजेत्यादिषु सङ्ख्यान्वयमपि न बोधयेत्, कारकविभक्तित्वाकारात् क्रियान्व-यबोधनम्, एकवचनत्वद्विवचनत्वाकारात्सङ्ख्याऽन्वयबोधनमित्याकारभेदा-दविरोध इति चेत्, समानविभक्तित्वाकाराविशेषेण तद्वत्परस्परान्वयमपि बोधयेत्। नन्वेकपदस्था कारकविभक्तिर्युगपत्सङ्ख्यान्वयं क्रियान्वयञ्च बोध-यतीति तुल्यबलत्वाचान्योन्यासहत्वं, परस्परान्वयस्तु पदान्तरपरामर्शसापेक्ष इति विलम्बितत्वात्स बाधित इति चेत् किं विलम्बितत्वाविलम्बितत्व-मात्रमेव प्राबल्यदौर्बल्यहेतुः? तर्हि प्रत्यक्षमेव प्रमाणमन्यद् दुर्बलं स्यात् तत्सापेक्षत्वेन विलम्बितत्वात्, तस्माद्विजयी लोकायतिकः। किञ्च श्रुतिरेव प्रमाणं न स्मृतिः विलम्बात् श्रुतिलिङ्गादिष्वपि श्रुतिरेव प्रमाणं न लिङ्गादि विलम्बादेवं, प्रथमा विभक्त्यन्तेषु चैकपदस्थैकवचनादिना प्रागेव सङ्ख्यान्व-यप्रतीतेः पदान्तरस्थसमानविभक्तिपरामर्शसापेक्षसामानाधिकरण्यासिद्धिः स्यादिहापि द्रव्यगुणयोः पराभिमत आर्थः परस्परान्वयो न सिध्येत्, शब्दतः प्रथमावगताक्रियायान्वयापेक्षया तस्यार्थत्वेन चरमावगतत्वाभ्युपगमात्, नैवं विरोधे सति हि विलम्बिताविलम्बितयोर्बाध्यबाधकभाव इति चेत् तर्ह्य-त्रापि क्रियान्वयसङ्ख्यान्वयवत्परस्परान्वयस्यापि विरोधाभावाद्विलम्बाविल-म्बावकिञ्चित्करौ, अत्राविरोधः परैरभ्युपेतः पश्चाद्दार्थान्वयस्सिध्यतीति सि-द्धान्तोक्तिः, न केवलमविरोधमात्रात्परस्परान्वयसिद्धिः प्रयोगस्य निरूपक-त्वात् कारकविभक्त्यन्तपदानां सङ्ख्याऽन्वयेन सह क्रियान्वयबोधने हि प्रयोगो

१ नियामकत्वादिति पा॰ ।

दृश्यत इति चेत् तथा परस्परान्वयबोधनमपि प्रयोगसिद्धमिति चरमयुक्त्य-भिप्रायेण प्रथमान्तकारकविभक्त्यन्तबहूदाहरणमुदाहृतं ,देवदत्तश्श्याम इत्यादिकं यथैकवचनादीनामेकत्वादिसङ्ख्यान्वयबोधकत्वं प्रथमान्तेषु कारकविभक्त्यन्तेषु चाविशिष्टमङ्गीक्रीयते उभयत्राविशेषेण प्रयोगदर्शनात्समानविभक्तेरप्यविरुद्धार्थैक्यबोधकत्वमुभयत्राविशेषेण प्रयोगदर्शनादङ्गीकरणीयमित्यर्थः । एवं कारकविभक्तिप्रयुक्तानुपपत्तिः परिहृता, तथा विशेषणत्रिवक्षायां यदनुपपत्तित्रयन्तत्र विशेषणभेदे विशेष्यभेदोऽजन्मायाधिकरणन्यायेन परिहृत इति नात्र विवक्षितः, विशेषणैक्यपरिहारः प्रागुक्तोऽत्रानुसन्धेयः । अथान्योन्यसमवायः परिहर्तव्यः, विशिष्टत्वमुपस्थाप्य विशिष्टोऽर्थ एक इति ज्ञापयित्वेति ल्यबन्तत्वान्तनिर्देशेन क्त्वात्रयस्य क्रमभावित्वं प्रतीयते ततश्चान्योन्यसमवायप्रसङ्ग इति तदपनोद्यं करणकारणविभक्त्यन्तसामानाधिकरण्यं वदतः सूत्रकारस्य तावन्मात्राभिप्रायत्वशङ्का च निवार्या अत स्तदर्थमाह—

सू० एतदुक्तं भवति यथा काष्ठैः स्थाल्यामोदनं पचेदित्यनेककारकविशिष्टैका क्रिया युगपत्प्रतीयते, तथा समानाधिकरणपदसंघाताभिहितम् एकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोध, खादिरैश्शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेदित्यादिष्विति, यत्तूपात्तद्रव्यकवाक्यस्थगण—शब्दः केवलगुणाभिधायीत्यरुणयेति पदेन केवलगुणस्यैवाभिधानमिति,

टी० "एतदुक्तं भवती"ति "पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकमिति न्यायेन युगपद्बोधनात् क्रमभावित्वाभावाच्च विशेषणान्तरविशिष्टे विशेषणान्तरान्वयविधानेन विशेषणानामन्योन्यसमवायप्रसङ्ग इत्यर्थः । यौगपद्यकथनेन पूर्वं ल्यबन्तनिर्देशः क्त्वात्रयभेदनिर्वाहकपरामर्शक्रमप्रकटना.

र्थे इत्युक्तं भवति, तत्कारकप्रतिपत्तिवेलामित्यनेनेदं सूत्रं सर्वकारकविभक्त्य-न्तप्रदर्शनार्थमिति दर्शितम् । इत्यादिषु न कश्चिद्विरोध इत्यन्वयः विरोधो-ऽन्योन्यसमवायाद्विवक्षितः, युगपत्प्रतिपत्तमित्यनेन तत्र परिहारो विव-क्षितः, यथाकाष्ठैरित्यादिकं वदता समानाधिकरणपदविषयचोद्यपरिहारो व्यधिकरणवाक्येऽपिसमाना इति प्रतिबन्द्याभिप्रेता । अयमर्थः—व्यधिकरणा-नि पदानि तत्तत्कारकविशिष्टां क्रियां किं युगपत्क्रमेण वा प्रतिपादयन्ति? यौगपद्ये उद्देश्योपादेयविभागाभावप्रसङ्गोऽनेककारकविशिष्टक्रियैकत्वे विशेष्यक्रियैक्यवद्विशेषणभूतकारकैक्यमपि स्यात्, क्रमेण चेत् कारकान्तर-विशिष्टक्रियायां कारकान्तरान्वयविधानं स्यात्, तदा काष्ठस्थाल्यादेरन्यो-न्यान्वयप्रसङ्गेन काष्ठस्य स्थाल्यधिकरणं, स्थाल्याः काष्ठमधिकरणं वा स्यात् न तदस्ति, विशेष्यभूतक्रियाया एवैकत्वं वाक्यप्रतिपाद्यं न तु विशिष्टस्य अतोऽन विशेषणभूतकारकैक्यप्रसङ्गः, सर्वकारकैः क्रियाया एव विशेष्यत्वेन नान्योन्यसमवायप्रसङ्ग इति चेत् तथा समानविभक्तेर्विशेष्यांशमात्रैक्यपर-त्वाच्च विशेषणैक्यं प्रत्यक्षमूला व्युत्पत्तिश्च नियामिका यथा पट इत्येक-पदप्रयोगे तत्स्थमेकवचनं न विशेषणविशेष्यैक्यं प्रतिपादयति किन्तु विशे-ष्यैक्यमेव तत्र नियामिका व्युत्पत्तिः इहापि तद्वद्युगपत्सर्वैर्विशेषणैरेकस्ये-वार्थस्य विशेष्यत्वेन न विशेषणानामन्योन्यसमवायप्रसङ्गश्चेति, एवं सूत्रका-राभिप्रेतौ पूर्वपक्षराद्धान्तौ अभिहितौ । अथ परोक्तपूर्वपक्षराद्धान्तयोरनु-पायिनमर्थं तत्पदसाधारणार्थं च व्युदस्यति यस्त्वित्यादिना, कृष्णा गच्छति श्वेतमालभेतेत्यादिषु गुणवाचिपदानां गुणिपर्यन्तत्वं तैरभ्युपेतम् आकृत्य-धिकरणन्यायात् तत्रोपात्तद्रव्यकवाक्यस्थत्वङ्गुणवाचिशब्दानां गुणिमात्रप-र्यन्तत्वे प्रयोजनमभ्युपेतं पटस्य शुक्ल इत्यादिषु तथा दर्शनात् पटश्शुक्ल इत्यादिषूपात्तद्रव्यकवाक्यस्थत्वेऽपि तदपवादकसामानाधिकरण्याद् गुणि-पर्यन्ताभिधानमिति चाभ्युपेतं, तत्र गुणमात्रपर्यन्तत्वे यत्प्रयोजकमुक्तं त-दभ्युपगम्य प्रकृते गुणमात्रपर्यन्तत्वं दूषयति—

सू० तन्नोपपद्यते लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य

गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनादुपा-त्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतं पटः शुक्ल इत्यादिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवा-भिधानात ।

टी० "तच्चोपपद्यत" इति, कुत इत्यत्राह "लोकवेदयोरि" ति, का-रकविभक्त्यन्तत्वस्य सामानाधिकरण्याविरोधित्वोपपादनमुपजीव्येदं दू-षितं, गुणिपर्यन्तत्वापवादकमुपात्तद्रव्यकवाक्यस्थगुणवाचिपदत्वं यत्तस्या-पवादकपसामानाधिकरण्यस्य अरुणयेत्यादिवाक्ये विद्यमानत्वोपपादनात् केवलगुणाभिधायित्वमयुक्तमित्यर्थः । एवं परोक्तप्रयोजकाभ्युपगमेन तत्सा-ध्यप्रयोज्यं गुणमात्रपर्यन्तत्वं दूषितम् । अथ तदुक्तं प्रयोजकं दूषयति "उपा-त्तद्रव्ये" ति, तत्र हेतुमाह "पटश्शुक्ल इत्यादिष्वि" ति, गुणमात्रपर्यन्तत्वे गुणिपर्यन्तत्वेऽपि साधारणमुपात्तद्रव्यकवाक्यस्थगुणवाचित्वं गुणमात्रपर्य-न्ततायाः प्रयोजकं न भवतीत्यर्थः । ननु न तस्य प्रयोजकत्वहानिः अप-वादेन हि क्वचिद् गुण्यभिधानमित्यत्राह—

सू० पटस्य शुक्ल इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिरसमान-विभक्तिनिर्देशकृता न पुनरुपात्तद्रव्यकत्वकृता तत्रैव पट-स्य शुक्लो भाग इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्या-दिविशिष्टद्रव्यं प्रतीयते, यत्पुनः क्रयस्यैकहायन्यवरुद्धत-याऽरुणिम्नः क्रियाऽन्वयो न सम्भवतीति तदपि विरोधि-गुणरहितद्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्र-यगुणाभिधानेन क्रियाक्रियापदान्वयाविरोधादसङ्गतम्,

टी० "पटस्ये" ति, असमानविभक्तिनिर्देशः प्रयोजक इत्यर्थः । अस-मानविभक्तिनिर्देशो ऽसमानाया विभक्तेर्निर्देशः न समानविभक्तिनिर्देशाभावः श्वेतो यातीत्यादिष्वपि गुणमात्रपर्यन्तत्वप्रसङ्गात् व्यभिचारिणः प्रयोज-कत्वकल्पनं व्यभिचारस्थले तदपवादकल्पनं चायुक्तम् । अव्यभिचारिप्रयो-

जकसद्भावादित्यभिप्रायः । गुणमात्रपर्यन्तत्वेनेदमपि प्रयोजकमसाधारणं पटस्य शुक्लो भाग इत्यसमानविभक्तिनिर्देशेऽपि गुणपर्यन्तत्व दिति चेदित्यत्राह "तत्रैव पटस्ये"ति, अयमर्थः पट-शब्देन समानविभक्तिनिर्देशेऽपि शुक्ल-शब्दस्य विशेष्यवाचिभागशब्देनासमानविभक्तिनिर्देशाभावाच्च तस्य गुणमात्रपर्यन्तत्वे प्रयोजकत्वभङ्गः, यथा त्वत्पक्षे गुणमात्रपरत्वापवादकाभिमतभाग-शब्दसामानाधिकरण्यात् न तस्य धर्म्मिपर्यन्तत्वाप्रयोजकत्वहानिरिति । किंच न केवलमुपात्तद्रव्यकवाक्यस्थताया व्यभिचार एव कल्पनागौरवमप्यस्ति परमते श्वेतमालभेतेत्यादिषु गुणवाचिपदस्य गुणिपर्यन्तत्वमुक्तं पटस्य शुक्ल इत्यादिषु तदपवादकत्वेनोपात्तद्रव्यकवाक्यस्थत्वमभ्युपेतं तस्याप्यपवादकत्वेन पटः शुक्ल इत्यादिषु सामानाधिकरण्यमुक्तमिति प्रयोजकत्रयकल्पनाऽस्ति, अस्मत्पक्षे तु श्वेतमालभेत पटः शुक्ल इत्यादिप्रयोगेऽप्यपृथक्सिद्धधर्मवाचित्वादेव गुणिपर्यन्तत्वं सिद्धं पटस्य शुक्ल इत्यत्र असमानविभक्तिनिर्द्देशकृतं गुणपर्यन्तत्वमिति प्रयोजकद्वयमेव, इदमर्थं सिद्धमिति न कण्ठोक्तं कल्पनागौरवम् । एवं परस्य पूर्वपक्षसिद्धान्तानुगतमरुणयेति पदस्यानुगुणमात्रपरत्वं निरस्तम् । अथ पूर्वपक्षासाधारणार्थस्य स्वसिद्धान्तयुक्त्या परिहृतत्वं वक्तुमाह "यत्पुनरि"ति, एकहायन्यवरुद्धतया-एकहायन्या निराकाङ्क्षत्वाद्विभागे साकाङ्क्षत्वे सत्येव ह्येकवाक्यस्थत्वमिह तदभावाच्च क्रयान्वय इत्यर्थः । तस्य परिहृतत्वं दर्शयति "तदपी"ति, नीलं शुक्लं कृष्णमित्यादि व्याकृत्यर्थं विरोधिगुणरहितशब्दप्रयोगः गुणपदस्यैव गुणिपर्यन्तत्वेन गुणविशिष्टमेकङ्करणमिति अरुणाम्ना द्रव्यद्वारा क्रयान्वयात् क्रयान्वयासम्भवोऽनुपपन्न इत्यर्थः । राद्धान्तासाधारणमर्थं दूषयति-

मू० राद्धान्ते चोक्तन्यायेनारुणिम्नः शाब्दद्रव्यान्वये सिद्धे द्रव्यगुणयोः क्रयसाधनत्वाऽनुपपत्त्याऽर्थात परस्परान्वयः सिध्यतीत्यप्यसङ्गतम्, अतो यथोक्त एवार्थः, तस्मात्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्य-

गेनैवैक्यप्रतिपादनं वर्णनीयं, तत्त्वनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्धाशुद्ध्युभयावस्थाचेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिककल्याणगुणगणैकतानं परमात्मानमभ्युपगच्छतो न सम्भवति, अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथाऽवस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोषभागित्वं परस्य प्रसज्येत इति चेत् ।

टी० "राद्धान्ते चे"ति, 'सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यत", इति न्यायेन वाक्यैक्यत्वे कथंचित्सम्भवति वाक्यभेदाश्रयणायोगात् 'गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणी''ति, न्यायेन द्रव्यगुणयोः परस्परान्वयापेक्षत्वान्नष्टाश्वदग्धरथन्यायेनार्थादन्वय इति तद्राद्धान्तः, तदयुक्तं शाब्दान्वयसिद्धेरित्यर्थः । स्वोक्ताधिकरणार्थमुपसंहरति "अतोयथोक्त एवार्थ''इति, । किञ्च "गुणे शुक्लादयः पुंसी''ति गुणपर्यन्तत्वे पुंलिङ्गतायाः प्राप्तत्वादरुणयेति स्त्यन्तपदस्य गुणमात्रपरत्वं दुर्वचम् । किञ्च पूर्वपक्षश्चात्यन्ताभासः—भिन्नवाक्यमिति हि पूर्वपक्षः तथा सत्यरुणयेति पदं नोपात्तद्रव्यकवाक्यस्यम्भवति उपात्तद्रव्यकवाक्यस्यत्वे सिद्धे हि गुणमात्रपर्यन्तत्वसिद्धिरिति वाक्यभेदेऽप्यरुणयैकहायन्येति प्रत्यासत्त्यतिशयादेकवाक्यतुल्यतया उपात्तद्रव्यकवाक्यस्थमिति चेत् सन्निधिविशेषादेकवाक्यस्थत्वफलभूतगुणमात्रपर्यन्तत्वसिद्धिश्चेत्तत एवैकवाक्यैकवाक्यस्थताफलभूतैक । हायन्यन्वयनियमोऽपि स्यादिति वाक्यभेदहेतुकस्य पूर्वपक्षस्यानुदय एव स्यादिति राद्धान्तोऽपि दुःस्थएकहायनाश्रयेन च क्रयसाध्य इत्यक्रियायांः करणद्वयसाकाङ्क्षत्वकल्पकस्य च–शब्दस्य द्वन्द्वसमासस्य चाश्रयणात् अत इमौ पूर्वपक्षराद्धान्ताव्रतिदुःस्थतया सूत्रकाराभिमताविति वक्तुमयुक्तम् । अतोऽस्याधिकरणस्य यथोक्तावेव पूर्वपक्षराद्धान्तौ सूत्रकाराभिमतौ, एवमस्तु ततः किं प्रस्तुतसामानाधिकरण्यस्येत्यत्राह "तस्मादि''ति तस्मात्,–

सामानाधिकरण्यस्य अनेकविशेषणविशिष्टैकार्थपरत्वस्य लोकवेदसिद्धत्वात् ईदृशं सामानाधिकरण्यमपरपक्षे न सम्भवति पदद्वयावगतगुणहानादित्याह "तत्त्वि"ति जीवब्रह्मभेदमनभ्युपगच्छतो न सम्भवतीति प्रतिज्ञाया उपपादनार्थमनाद्यविद्येत्यादिकम् । अशेषहेयप्रत्यनीकेत्यादिकं च विशेषणमुभयत्र प्रवृत्तिनिमित्तफलितयोक्तम् । कर्मवश्योऽनुग्राह्यो नियाम्यश्च जीवो नियाहकोऽनुग्राहकश्च परमात्मा भवितुं नार्हतीत्येषां विशेषणानामभिप्रायः । मुक्तिदशायामैक्यशङ्काव्युदासार्थं शुद्धाशुद्धोभयावस्थादित्युक्तं न हि नियाम्यदशायां नियहकर्तुर्नरपतेरन्यः पुरुषोऽनुग्रहदशायामनुग्राह्योऽयमनुग्रहकृता, तेन-

सू० नैतदेवं त्वम्पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात्, एतदुक्तं भवति सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वमिश्रानवधिकातिशयासंख्येयानन्तकल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म बहु स्यामिति सङ्कल्प्य—

नृपेणाभिन्नो भवतीति भावः । स्वेतरवैलक्षण्यं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थमुभयलिङ्गत्वेन वैषम्यमाह "अशेषेत्यादिना, निर्विशेषवादिनेत्येतावता पर्याप्तत्वेऽपि स्वपक्षमनभ्युपगच्छतो दूषणवचनं कुदृष्टिपक्षत्रयेऽपि दूषणसाम्यज्ञापनार्थं तच्छब्दावगतविशेषणाभ्युपगमवत्त्वं-शब्दावगतविशेषणमभ्युपगन्तव्यं, तथा सति ब्रह्मणो दुःखित्वादिप्रसङ्ग इति शङ्कते "अभ्युपगच्छतोऽपीत्या"दिना, परिहरति "नैत"दिति, । कुत इत्यत्राह "त्व"मिति, "एवे"ति, तत्पदप्रतिपन्नस्य जीवविलक्षणस्यैवेति भावः । जीववाचित्वेन व्युत्पन्नस्य पदस्य तदन्तर्यामिपरत्वं लाक्षणिकं तत्कथं परस्यैवाभिधानादित्युक्तमित्यत्राह "एतदुक्तमिति द्वारद्वारिभावविपर्ययशङ्काव्युदासार्थोऽयमारम्भः, वेदव्युत्पत्तिसिद्धं सर्वशब्दानां परमात्मवाचित्वमभ्युपपादयति 'सच्छब्देत्या"दिना, सामानाधिकरण्यबलात्तत्त्वम्पदावगतविशेषाः स्वीकार्याः ब्रह्मणो निदोषत्वमङ्गलास्पदत्वादि श्रुत्यन्तरसिद्धस्य अतस्तदविरोधाया-

न्तर्यामिपरत्वं युक्तमिति तत्त्वमस्यादिसामानाधिकरण्यमुख्यत्वनिर्दोषत्वश्रुत्य-न्यथानुपपत्त्यभिप्रायेण निरस्तनिखिलेत्यादिविशेषणमुक्तं, सच्छब्दाभिहितमिति कारणवस्तुवाचिसच्छब्दः कारणत्वानुगुणगुणान्वितवस्तुपर इति भावः । बहु स्यामितीति यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र लिङ्-वाच्येन याहक्रिया परमापूर्वेण सन्निधिसमाम्नातेषु पदार्थेष्वविशेषेण स्वशेषतया गृह्यमाणेषु तत्र प्रोक्षणावघातगोत्वादेः परमापूर्वं प्रति शेषत्वं व्रीहियवादिद्वारकं, च यागादेस्तु तच्छेषत्वमद्वारकं च केश्चिन्निश्चीयते तथा बहु स्यामिति याहक्रयहणेन तेजःप्रभृतिसर्वनामरूपेषु सामान्येन परमात्मीयतयाऽवगतेषु तत्रानुप्रवेशपूर्वकनामरूपव्याकरणश्रुत्यादिभिस्सद्वारकमध्यवसीयत इत्यनुसन्धेयं यथोपबृंहणेषु गुणवान् तमेवं गुणसम्पचम् इत्यविशेषोक्तेषु भगवद्गुणेषु समस्तमविभक्ताङ्गस्निग्धवर्णः इत्युक्तानां स्निग्धवर्णत्वादीनां धर्मज्ञस्सत्यसन्धश्चेत्युक्तानां सत्यसन्धत्वादीनाञ्च गुणानां दिव्यविग्रहद्वारकत्वमद्वारकत्वञ्च दृश्यते तथेहापीश्वरशरीरभूतचिदचिद्वारको ऽद्वारकश्च गुणान्वयो यथाश्रुति स्वीकार्य इति भावः । बहुः स्यामिति बहुनामरूपभाग् भवेयमित्यर्थः ।

सू० तेजोऽबन्नप्रमुखं कृत्स्नं जगत्सृष्ट्वा तस्मिन्देवादिविचित्रसंस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य स्वयञ्च स्वेच्छयैव जीवान्तरात्मतया ऽनुप्रविश्य एवं भूतेषु स्वपर्यन्तेषु देवाद्याकारेषु संघातेषु नामरूपे व्याकरोत्, एवंरूपसंघातस्यैव वस्तुत्वं शब्दवाच्यत्वञ्चाकरोदित्यर्थः, अनेन जीवेनात्मना जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति, ब्रह्मात्मकत्वञ्च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते ।

टी० तेजोबदप्रमुखमिति प्रमुख-शब्देन तत्त्वान्तरसृष्टिर्विवक्षित-देवादिविचित्रसंस्थानसंस्थित इति च वक्ष्यमाणविदचिदंशविभागार्थं जगा-

द्वाकारकथनं न तु जीवानुप्रवेशपूर्वावस्थाकथनं परमात्मन एव कृत्स्नजगच्छ-रीरित्वं चेत् कथं जीवात्मनश्शरीरित्वमिति शङ्कापनोद्यते "चेतनमि"ति-शब्देन चेतनत्वं शरीरित्वे प्रयोजकमित्यर्थः, चेतनमित्यनेन विज्ञानञ्चा-विज्ञानं चेत्यत्र विज्ञान-शब्दस्य ज्ञातृवाचित्वं दर्शितं, जीववर्ग-शब्देन विज्ञानं जीवेनेत्येकवचनं "नित्योनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानि"त्यादिभिरैकार्थ्याज्जातावेति व्याख्यातम्भवति अ-नेन जीवेनेत्यत्रानेनेति निर्देशस्याभिप्रायविवरणं स्वकर्मानुगुणेष्विति जीव-विशिष्टपरमात्मविशेषणेदं-शब्दस्य जीवद्वारकवैचित्र्यपरत्वाज्जीववैचि-त्र्यस्य च कर्मवैचित्र्याधीनत्वात् जीवकर्तृकप्रवेशव्यावृत्त्यर्थं स्वेच्छयेत्युक्तं पारतन्त्र्यं स्वातन्त्र्यञ्चानुप्रवेशहेतुवैषम्यमित्यर्थः। एवं भूतेषु-द्वारद्वारिभा-वेन व्यस्थितेष्वित्यर्थः स्वपर्यन्तेषु देवाद्याकारेषु संघातेषु तत्तद्देवाद्यव-स्थास्तत्तद्वाचिशब्दांश्चाकरोदित्यर्थः। नामरूपे व्याकरोदित्युक्ते नामरूप-व्याकरणस्य परमात्मपर्यन्तत्वस्य अस्फुटत्वाद्विशदयति "एवमि"ति, पूर्वे ल्यबन्तनिर्दिष्टानां क्रियाणां क्रमविवक्षाराहित्यं चानेन प्रदर्श्यते, एवं रूप-सङ्घातस्य-चिदचिदीश्वरात्मकस्य सङ्घातस्येत्यर्थः एवं स्वरूपसङ्घातस्येति पाठे अयमर्थः स्वं रूपं च स्वरूपं तस्य सङ्घातः स्व-शब्देन शरीरीश्वर उच्यते रूप-शब्देन चिदचिद्वस्तुनी शरीरशरीरिरूपसङ्घातस्येत्यर्थः। वस्तुत्वं देवादिवस्तुत्वं जीवेनात्मनेत्यत्र जीववैलक्षण्यस्य स्पष्टत्वादात्म-शब्दस्या-नेकार्थसाधारण्याच्च तद्विवृण्वन् स्वपरपक्षसाधारणमन्वयार्थमाह "अने-ने"ति, मयेत्यात्म-शब्दव्याख्यानम्। आत्मशब्दस्यास्मद्वाचित्वे सति हि ब्रह्मात्मत्वं दर्शितम् भवति स्वरूपैक्यशङ्कां व्युदस्यति "ब्रह्मात्म-कत्वं चे"ति,

(शेषमग्रे)

---

॥ ॐ नमो गणेशाय ॥

## काशिकाव्याख्या पदमञ्जरी।

*(Continued from page 407. Vol. XI.)*

"गाङ्कुटादिभ्यो ऽञ्णिन्ङित्" ॥ कुट आदिर्येषामिति बहुव्रीहावन्तर्व-

र्तिन्या विभक्त्या पदत्वेपि जश्त्वं न भवति, अनुक्रियमाणरूपविनाशप्रसङ्गात्। [1]अथ वा कुट कौटिल्यइति धातुपाठे योकारस्तेन सह सानुबन्धानुकरणं द्रष्टव्यम्। अत्र चत्वारः पक्षाः सम्भवन्ति, इत्संज्ञकेन ङकारेण सह सम्बन्धप्रतिपादनं, ङितो वा विधिः, संज्ञाकरणं, तद्गुदनिर्देशो वेति। तत्राद्ये पक्षे गाङ्कुटादिभ्यः परो ऽञ्णित्प्रत्ययो ङिद् इत्संज्ञकङकारयुक्तः, इत्संज्ञको ङकारस्तस्यास्तीत्यर्थः। अत्र येषामस्ति ङकारः यङादीनां तेषु व्यर्थो ऽनुवादो येषां नास्ति तव्यादीनां तेषु मिथ्या[2]ऽयमित्युपक्रममात्रमयं पक्षः। अथ द्वितीयः। गाङ्कुटादिभ्य इति पञ्चम्या अञ्णिदिति प्रथमायाः षष्ठीं प्रकल्पितायां ङिदादेशः प्राप्नोति, अत्र प्रथमाया न च वैयर्थ्यं लाघवार्थत्वात्, तत्र ङिदिति कर्मधारये ऽसमासे वा 'ऽऽदेः परस्ये' ति तव्यादीनामादेर्ङकारः प्राप्नोति, कथं पुनरित्संज्ञको नामादेशः स्यात् स्वयं निवृत्त्यभिमुखः, को दोषः स्थानिनं निवर्त्य निवर्तिष्यते। स्यादेतत्। इद्ग्रहणसामर्थ्यादादेशो न भविष्यति आदेशत्वे हि 'लशक्वतद्धित' इत्येव सिद्धेत्संज्ञेत्यागमो ङकारो विधास्यतइति। तच्च। अनेनेत्संज्ञा यथा स्यात् तेनः माभूदित्येवमर्थमिद्ग्रहणं स्याद्, कः पुनरत्र विशेषस्तेन वा सत्यानेन वा, अयमस्ति विशेषस्तेन सत्यां लोपः स्याद् अनेन पुनर्न। तस्येति प्रकृतपरामर्शात् तस्येत्यस्य प्रकृतस्येत्संज्ञकस्येति, एवं च श्रूयमाणएव ङकारे ङित्कार्याणि भवन्ति, तत्र 'नेड्वशि कृति' त्यत्र वरमनादौ कृतीति यदि परिगणनं तदात्र प्रतिषेधाभावात् कुटिङ्गा कुटिङ्गमिति प्राप्नोति। अथ तु सम्भवोदाहरणप्रदर्शनं तदात्रापि प्रतिषेधात् कुट्ङा कुट्ङमिति प्राप्नोति, बहुव्रीहौ तु ये ऽमी प्रसिद्धा ङितश्च ङादयस्तएव तृजादीनामादेशाः स्युः, न चान्तर्यतो व्यवस्था, यत्र खल्वन्तरतमस्यानन्तरतमस्य च प्रसङ्गस्तत्रान्तरतमपरिभाषा, न चात्रान्तरतमानां तङ्ङादीनां प्राप्तिः, लोके शास्त्रे वा तेषामप्रसिद्धेः। न चान्तरतमपरिभाषैव तान् कल्पयितुमर्हति,

(१) अथ वेति नास्ति सहेत्यत्र च सह वेति २ पुस्तके पाठः। ३ पुस्तके तु अथ वेति नास्ति कौटिल्ये इतीत्यत्र च इति वेति पाठः।

(२) मिथ्यावचमिति २। ३। पुस्तके पाठः।

नियामकत्वात्तस्याः । सन्तु वा तव्यङादयस्तेपि त्वादेशा भवन्तो 'ङिच्चे'-त्यन्त्यस्यैव स्युः । ननु च नात्र श्रोतः स्थान्यादेशभावः किं तर्हि गाङ्कुटादिभ्यः परो ऽञ्णित्प्रत्ययो ङिद् इत्संज्ञकङकारयुक्त इति सिद्धानुवादमात्रं तत्व्यापारः स तु सिद्धानुवादो विधानमन्तरेण नोपपद्यते इति ङकारस्येत्संज्ञकस्य विधिः कल्प्यते, किमतो, यद्येवमिदं ततो भवति विधिवाक्यस्याश्रुतत्वात् क्व परिभाषाङ्गतामुपेयात् 'षष्ठी स्थाने योगे' ति वा 'आदेः परस्ये' ति वा 'ङिच्चे' ति वा । नैतदस्ति । यस्मात् षष्ठीप्रकल्पनेन श्रोत एव स्थान्यादेशभाव उपपादितः । अस्तु वा कल्पितविधानं, य एव त्वसौ विधिः कल्प्यते तत्रैव परिभाषाङ्गभावमुपैति विध्यङ्गत्वात्परिभाषाणां, परिभाषाः खलु विधेरङ्गभूता अनुवादवाक्यश्रुतार्थान्यथानुपपत्त्या विधिवाक्यमेव कल्पन्ते सर्वथा दुष्ट एवायं पक्षः । संज्ञाकरणे 'क्ङिति चे' त्यत्रास्य ग्रहणं न[1] स्यात् संज्ञारूपस्यानुच्चारितत्वात्, ङिच्छब्दः संज्ञा ङिच्छब्दश्चोच्चारितः प्रत्येकसम्बन्धमपीद्ग्रहणं क्व इद् यस्येत्येतावदेव सम्पादयेत् । न वान्वर्थो ऽवयवद्वययुक्ता संज्ञेति प्रत्यभिज्ञाभावात् क्ङित्प्रदेशेष्वस्य ग्रहणं न स्यादेव तथा केवले ङिच्छब्द उच्चारिते तस्यैव ग्रहणं स्याद् न यङादीनां 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययात्,' ततश्च ग्रहिज्यादिसम्प्रसारणं गृह्णातीत्यादावेव स्याद् न जरीगृह्यतइत्यादौ, न च यङादीनां ङित्करणस्य वैयर्थ्यं, क्ङित्प्रदेशेषु यत्र संज्ञारूपं न प्रत्यभिज्ञायते तत्र ग्रहणार्थत्वात् । ननु चैवं गाङ्कुटादिभ्यः परस्य ङित्संज्ञाविधानमनर्थकमापद्यते कथं क्ङित्प्रदेशेष्वस्य ग्रहणं नास्तीत्युक्तमेव केवलश्च ङिच्छब्दो ग्रहिज्यादिसूत्रएव न च तत्र गाङ् गृह्यते नापि सर्वे कुटादयः किं तु व्यतिरेक एव, सत्यम् । न्यायागतेर्थे किं कुर्मस्त्यज्यतामयं पक्षः, तदेवमेतेषां पक्षाणां दुष्टत्वात् चतुर्थं पक्षमाश्रित्याह । 'अतिदेशोऽयमिति' । 'इङादेशो गृह्यतइति' । 'इङश्च' 'गाङ् लिटि' 'विभाषा लुङ्लृङो' रिति विहितः । 'ङकारस्यानन्यार्थत्वा-

(१) प्राप्नोतीति ख पाठः ।

दिति'। इङादेशस्य हि यो ङकारस्तस्यैतदेव प्रयोजनमिह तस्यैव ग्रहणं यथा स्यादिति। अथ सामान्यग्रहणं कस्मान्न भवति, असमानत्वादादेशस्य। ङकारो ऽन्यार्थ आत्मनेपदस्य स्थानिवद्भावेनैव सिद्धत्वात्। धातोस्तु चरितार्थः, यद्येवम्, आब्ग्रहणे चाप एव ग्रहणं प्राप्नोति पकारस्यानन्यार्थत्वात्, न। एवं हि चापोनुबन्धावनर्थकौ स्यातां टापश्च टकारः,। अतो यच्च यावच्च समानं सम्भवति चरितार्थपित्त्वमचरितार्थपित्त्वमपि तत्सर्वमाश्रीयते न चाबूपमेव यावत्। 'कुङ् शब्दइति'। तदनन्तरं वृत्करणाद् आकूतमिति प्रयोगदर्शनात् कूङ् दीर्घान्तः ङिद्वद्भवतीत्यर्थ इत्यन्तरेणापि वतिं वत्यर्थोगम्यते यथा सिंहो माणवक इति, यद्ययमतिदेशः, 'असंयोगाल्लिट् किदि'ति प्रकरणेपि कित्कार्यातिदेशो ऽङ्गीकर्त्तव्यस्ततश्च सिसृवतीत्यत्र सत्यपि 'हलन्ताच्चे'ति सनः कित्त्वातिदेशे स्वाश्रयमकित्त्वमाश्रित्य सृजिदृशोरित्यमागमः प्राप्नोति, अतिदेशेन पराश्रयं कार्यं प्राप्यते न तु स्वाश्रयं निवर्त्यते, सिद्धं तु प्रसज्यप्रतिषेधात् क्ङिति न भवतीति, ततश्च स्वाश्रयस्य कार्यस्याभावादातिदेशिककित्त्वाश्रयः प्रतिषेधो भविष्यति। इह तर्हि उच्चुकुटिषति ङित इत्यात्मनेपदं प्राप्नोति, ङितो धातोरात्मनेपदमुच्यते इह चातिदेशेन सन एव ङित्त्वं न धातोः, यत्रावयवे लिङ्गमचरितार्थं तत्र समुदायस्य विशेषकं भवति इह त्ववयवएव गुणप्रतिषेधादिकं ङित्त्वस्य प्रयोजनमस्ति, यङन्तादपि तर्हि न प्राप्नोति तस्मान्नैवं शक्यं विज्ञातुं ङितो धातोरिति ततश्चैकं सनमेव ङितमाश्रित्यात्मनेपदं प्राप्नोति, नैष दोषः। सप्तमीसमर्थाद्वतिः ङितीव ङिद्वत्। ननु च नात्र वतिर्निर्दिश्यते, सत्यं, परत्र परशब्दप्रयोगात् कल्प्यमानो वतिर्व्याख्यानात् सप्तम्यन्तादाश्रीयते, एवमपि प्रतियोगिनि सप्तमी प्राप्नोति अर्जुणातीति, एवं तर्हि अनुदात्तङित इत्यत्र उपदेशइति वर्त्तते उपदेशे यो ङित् तत आत्मनेपदं भवति। 'अध्यगीषतेति'। 'विभाषा लुङ्लृङो'रिति गाङादेशः। 'आत्मनेपदेष्वनतः' घुमादिसूत्रेणेत्वं, 'व्यचेरित्यादि'। व्यच व्याजीकरणे तुदादौ कुटादिभ्यः प्राक् पठ्यते। 'उद्विविचितेति'। ग्रहिज्यादिना सम्प्रसारणम्। कुव्यवा-

इतिबहुव्रीहिः । कथं विध्यचिथ. अनसीति पर्युदासोऽयमसुन्प्रत्ययस्य कृत्वा तत्सदृशे कृति कार्यं विज्ञायते, कथं लिखितुं स्वयमेव लिखिष्यतइति, यावता कुटेः पूर्वं लिखिः पठ्यते, कश्चिदाह । कुटस्यादिः कुट आदिर्येषां ते कुटादयः, कुटादिश्च कुटादयश्चेति बहुव्रीहितत्पुरुषयोः सहविवक्षायां 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यत' इति बहुव्रीहेः शेषः, तत्र तत्पुरुषवृत्त्या संगृहीतो लिखिरपि ङित्त्वस्य निमित्तमिति, एवं तु लिखित्वा लेखित्वा लिलिखिषति लिलेखिषति शकुनिष्वालेखनइत्यनुपपन्नं स्यात् तस्मादवश्यमुपपादनीयं 'संज्ञापूर्वको विधिरनित्य' इति गुणो न भविष्यति । धू विधूनने, कुटादिः । तस्या 'र्त्तिलूधूसूखनसहचर इत्र' इतीत्रप्रत्यये गुणो न प्राप्नोति, नात्र गुण इष्यते धुवित्रमित्येव भवति, कल्पसूत्रकाराणां तु प्रयोगाश्छान्दसत्वादुपपादनीयाः । अथ वा 'भञ्जभासमिदो घुरच्' विदिभिदिच्छिदेर्कुरिति, तिवक्ष्ये प्रत्ययान्तरकरणं ज्ञापकमातिदेशिकं ङित्त्वमनित्यमिति ॥

"विज इट्" ॥ 'ओविजी भयचलनयोरिति' । यस्तु तुजिं विजिं विद्धानिट् स्वरानिति विजिः न स गृह्यते ऽनिट्त्वाद् इतरस्तु ईदित्त्वसामर्थ्यात् सेट्, वृद्धसंज्ञासूत्राद् यस्यादिरिति वर्त्तते तेनेड्विशेष्यते यस्यादिरिडिति तेनोत्तमैकवचनस्य ग्रहणं न भवति नह्यसौ कस्य चिदादिः, अत एवागममात्रस्यायं ङित्त्वविधिर्न भवति किं तर्हि तदादेः प्रत्ययस्येत्याह । 'इडादिः प्रत्यय इति' । 'उद्विजितेति' । ङित्त्वाल्लघूपधगुणाभावः ॥

"विभाषोर्णोः" ॥ ऊर्णुञ् आच्छादने णिद् नोपधः, रषाभ्यामितिणत्वेन पाठः[1] । प्रोर्णुनाव रेफवियोगे ऽभ्यासात्परस्य न[2]कारस्य श्रवणं भवति प्रोर्णुवितेति ङित्त्वपक्षे उवङ् अन्यत्र गुणः ॥

"सर्वधातुकमपित्" ॥ अपिदिति पर्युदासश्चेत् च्यवन्तइत्यत्र च्युअन्ते इति स्थिते नित्यत्वादन्तरङ्गत्वाच्चैकादेशः, न च वार्णादाङ्गं बलीयः, नानाश्रयत्वात्,तत्र कृते परस्येहापित आश्रितत्वात्तं प्रत्यादिवद्भावात्

१ श्रवणं न भवतीति २ । ३ । पुस्तके पाठः तत्र णकारस्येति शेषः ।

पिद्वपितोरेकादेशो ऽपिद्ग्रहणेन गृह्यतइति शबेकादेशवतः सार्वधातुकस्य ङित्त्वाद् गुणनिषेधः प्राप्नोति। प्रसज्यप्रतिषेधे तु पित्त्वनिमित्तो निषेधः पूर्वस्य कार्यमिति पूर्वं प्रत्यन्तवद्भावाद् ङित्त्वाभावः। अस्तु तर्हि प्रसज्यप्रतिषेधः, यद्येवं तुदानीत्यत्र विकरणोत्तमयोः पिद्वपितोरेकादेशः परस्य पितो ङित्त्वनिषेधे कर्त्तव्ये आदिवत्स्यादित्यङितमुत्तममाश्रित्य गुणः प्राप्नोति 'अन्तादिवच्चे'त्यत्र पूर्वपरौ समुदायावभिप्रेतो नाचौ, किं कारणम्। आद्यन्तयोरवयवत्वात् स्थानिनोरचोरेकादेशेन निर्वर्तितत्वाच्च, अतः स्थानिनावचौ पूर्वपरौ ययोः समुदाययोरन्तादी एकादेशोपि तयोरेवान्तादिवद्भवतीत्ययमतिदेशार्थः। अत एव ब्रह्मबन्धूरित्यत्र एकादेशोपि प्रातिपदिकं प्रत्येवान्तवद्भवति ध्रुवे तुवे इत्यत्र च उत्तमैकवचने कृत्वयोरेव पिद्वपितोरेकादेश इति अचावेव प्रत्यादिवत्त्वे स्यादेव दोषः, एवं तर्ह्येकादेशस्य पूर्वविधौ स्थानिवद्भावात्यवद्वयेपि यथा स्थानिकाले यथायोगं गुणस्य प्रवृत्तिनिवृत्ती भवतस्तथा कृतेप्येकादेशे स्थानिबुद्ध्या भविष्यतः, एवमुभयोर्निर्दोषत्वेऽपि प्रसज्यप्रतिषेध एवाश्रयणीयः। तत्र हि तदाश्रयणसामर्थ्याद्यच्च यावच्च पितो ङित्त्वं प्राप्तं तस्य सर्वस्य निषेधादिदमपि सिद्धं भवति अचिनोद् अचिनवमिति, अत्र हि ङितो लङ आदेशस्य स्थानिवद्भावेन प्राप्तस्य निषेधो भवति पर्युदासे त्वतिदेशेनैकवाक्यत्वात् तस्यैव पर्युदासात् स्थानिवद्भावकृतं ङित्त्वं स्यादेवेति यासुटो ङिद्वचनं ज्ञापकमाश्रयणीयं स्यात्। किं च ङिच्च पिन्न भवतीत्ययमप्यत्रार्थ इष्यते ऽतो न ब्रूताद्भवानित्यत्र तातङः स्थानिवद्भावात्प्राप्तस्य पित्त्वस्य निषेधात् पिदाश्रयो ब्रुव ईण् न भवति, तृणह भवान् तृणह इण् न भवतीत्येषा दिक्। अत एतदर्थमपि प्रसज्यप्रतिषेध आश्रयणीयः, तत्र हि पृथक्कृतस्य नञो यथेष्टमभिसम्बन्धो भवति पिद् ङिन्न भवति ङिच्च पिन्न भवति, तत्र यस्यौपदेशिकं पित्त्वं तस्यातिदेशप्राप्तं स्थानिवद्भावप्राप्तं च ङित्त्वं निषिध्यते, यस्य पुनरौपदेशिकं ङित्त्वं तस्य स्थानिवद्भावप्राप्तं पित्त्वं निषिध्यतइति विवेक्तव्यम्। 'कुरुतइति'। ङित्त्वाद्विकरणस्य गुणाभावः, 'अत उत्सार्वधातुके" इत्युत्वं च भवति। अत्र च तृतीयासमर्थाद्भुतिराश्रयणीयो न

पूर्ववत्सप्तमीसमर्थात् तेन पचेते इत्यत्रा 'तो ङित' इति ङितो यत्कार्यं तदपि भवति, यद्येवं चिनुतइति तास्यनुदात्तेदिति लसार्वधातुकानुदात्तत्वं प्राप्नोति, नैष दोषः । उपदेशग्रहणमुभाभ्यामपि सम्बध्यते ङिदुपदेशाद्-दुपदेशादिति, अह्न्विङोरिति वा पर्युदासात् तत्सदृशस्योपदेशङकारवतो ग्रहणमिति सर्वमनवद्यम् ॥

"असंयोगाल्लिट् कित्" ॥ लिटा ऽऽक्षिप्तो धातुरसंयोगग्रहणेन विशेष्यतइत्याह । 'असंयोगान्ताद्धातोरिति' । ननु चात्र पर्युदासत्वमुक्तं प्रतीयते ततश्च संयोगान्तसदृशाद् हलन्तादेव स्याद् बिभिदतुः बिभिदुरित्यादौ, निन्यतुरित्यादौ तु न स्यात्, ज्ञापकात् सिद्धं, यदय 'मृतश्च संयोगादेर्गुण' इति सस्मरतुरित्यादौ गुणं विधत्ते तज् ज्ञापयति नात्र नञिवयुक्तन्यायो धातुमात्रस्यैव ग्रहणमिति, ङित्त्वे प्रकृते कित्त्वातिदेशस्य प्रयोजनम् ईजनम् ईजतुः ईजुः यजादीनां कितीति सम्प्रसारणं यथा स्यात्, जजागरतुः जजागरुः 'जाग्रोऽविचिण्णल्ङित्स्वि' ति गुणो यथा स्यात् । यदि पुनर्गाङ्कुटादिभ्यो[१]ऽपि कित्त्वमेवातिदिश्येत, नैवं शक्यम्, इह हि दोषः स्याद् णु स्तुतौ धू विधूनने तृच्, नुविता धुविता 'श्र्युकःकिती' तीट्प्रतिषेधः प्राप्नोति यथा लूत्वा लूनः, नैष दोषः । पूर्वस्य कार्यातिदेशोऽयमित्युक्तम्, इह तर्हि कुटित्वा पुटित्वा 'न क्त्वा सेट्' इत्यातिदेशिकस्यापि कित्त्वस्य प्रतिषेधः स्यात्, ननु च सनि झल्ग्रहणं ज्ञापकं वक्ष्यते न क्त्वा सेडिति निषेधो नातिदेशिकस्य भवतीति, सत्यम् । असति क्त्वाग्रहणे सति तु तस्मिन् सनो न क्त्वा सेडिति निषेधो न लभ्यते इत्यज्ञापकं तत्र झल्ग्रहणं, तथा 'सार्वधातुकमपिद्' ति कित्त्वातिदेशे जाग्रतः जाग्रतीति गुणः स्याद् ङित्त्वातिदेशे त्वविचिण्णल्ङित्स्विति पर्युदासो भवति । 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात् पूर्वविप्रतिषेधेन' । कित्त्वस्यावकाशः ऋजतुः ऋजुः नह्यत्र विध्यन्तरस्य कस्य चित्प्रसङ्गः, गुणस्यावकाशः वर्त्तित्वा वर्धित्वा, ववृते ववृधुरित्यत्रोभयप्रसङ्गे कित्त्वं भवति पूर्वप्रतिषेधेन । इह तु बिभिदतुः

१ परस्यापीत्यधिकं २ पुस्तके ।

विभिदुः नित्यत्वादेव क्वित्त्वं सिद्धं तद्धि कृतेपि गुणे प्राप्नोत्यकृतेपि, गुणस्तु क्वित्त्वे सति न प्राप्नोति शब्दान्तरत्वात् तु गुणे कृते असंयोगान्तत्वात् किक्त्वं न प्राप्नोतीत्युभयमनित्यमिति पूर्वविप्रतिषेध उच्यते, स चायं कार्यातिदेशपक्षे स्फुटमेव वक्तव्यः। तथाहि। अनेनैव क्वित्कार्यातिदेश ईजतुरित्यादौ यत्र विध्यन्तरस्याप्रसङ्गस्तत्र सम्प्रसारणमतिदिश्य चरितार्थमतिदेशं परत्वाद् गुणो बाधेत, शास्त्रातिदेशे वा क्ङिति चेत्येतच्छास्त्रमतिदिश्यते तच्च यद्यपि गुणस्यापवादभूतं तथाप्यन्यत्र चरितार्थत्वाद् दुर्बलेनातिदेशेनातिदिष्टः 'क्ङिति चे' ति प्रतिषेधो दुर्बल इति तं बाधित्वा गुणः स्यादेव ॥

"इन्धिभवतिभ्यां च" ॥ इन्धेरागन्तुक इकारो न, श्तिक्श्तिपौ धातुनिर्देश इतीक् प्रत्ययः, तेनानिदितामिति न लोपो न भवति। 'समीधइति'। ञिइन्धी दीप्तौ अनुदात्तेत्, एशः कित्त्वादनिदितामित्युपधालोपद्विर्वचने सवर्णदीर्घत्वं, 'बभूविव बभूविथेति'। कित्त्वाद्यथाक्रमं वृद्धिगुणौ न भवतः। इन्धेः संयोगार्थमित्यादिना पूर्वकार्यसिद्धिं दर्शयन् सूत्रारम्भं समर्थयते। अयं योगः शक्यो ऽवक्तुं, कथम्, इन्धेरनन्तरश्छन्दस्येव लिट् भवति, भाषायां त्विजादेश्चेत्यामा भवितव्यं, छन्दसि च 'छन्दस्युभयथे' ति लिटः सार्वधातुकसंज्ञा 'सार्वधातुकमपिदिति' ङित्त्वादुपधालोपः। श्नमि तु कर्त्तव्ये आर्धधातुकसंज्ञा छान्दसत्वाद्वा श्नमभावः, भवतेरपि 'भुवो वुग्लुङ्लिटो' रिति वुग्विधीयते तत्र भूव भूइथ इति स्थिते वुक् प्राप्नोति वृद्धिगुणौ च, कृताकृतप्रसङ्गित्वेन नित्यो वुक्, न च शब्दान्तरप्राप्तिः, एकदेशविकृतस्यानन्यत्वाद् वुकि च कृते ऽनजन्तत्वादलघूपधत्वाच्च वृद्धिगुणौ न भविष्यतः, अवश्य चैतदेवं विज्ञेयं वुका वृद्धिगुणौ बाध्येते इति यो हि मन्यते कित्त्वादिमे गुणवृद्धी न भविष्यत इति तस्य णलि वृद्धिः स्यादेव न 'स्नवो र्णिती' ति वृद्धेः क्ङिति वेति प्रतिषेध, अनिग्लक्षणत्वात्। एवं तर्हि ज्ञापकार्थमिन्धिग्रहणमेतज् ज्ञापयति इन्धेर्भाषायामप्यनित्य आमिति, समीधे समीधां चक्र इति भाषायामपि भवति। भवतेरपि वुगनित्यः, किं कारणं,भुरिति वर्त्तते न च गुणवृद्ध्योः कृतयोरुवर्णान्तो भवतिर्भवति, उरिति

निर्वर्त्तिष्यते, यदि निवर्त्तते बोभाव बोभविथ अहं किल बोभव यङ्लुक्यपि नित्यत्वाद् वुक् प्राप्नोति, अनुवर्त्तमाने पुनरूदित्यस्मिन् उभयोरनित्ययोः परत्वाद् गुणवृद्धयोः कृतयोरनुवर्णान्तत्वाद् वुङ् भवति । अथेदानीं यङ्लुक्यप्यनेनैव लिटः कित्त्वं कस्माच भवति श्तिपा निर्देशात् । यदि पुनर्वुग्विधावेव श्तिपा निर्देशः क्रियेत, नैवं शक्यम् इह हि दोषः स्याद् बोभूवतुः बोभूवुः, यदा पुन कित्त्वविधौ श्तिपा निर्देशः क्रियते न वुग्विधौ तदा यङ्लुकि पित्सु वचनेषु लिटः कित्त्वाभावाद्गुणवृद्धयोः कृतयोरूदित्यधिकाराद्वुङ् भवति, अपित्सु वचनेषु 'असंयोगाल्लिट्किदि' ति कित्त्वे सति गुणाभावादुवर्णान्तत्वादुग् भवति । ननु चोक्तमारभ्यमाणेपि कित्त्वे वृद्धेः प्रतिषेधो न सिद्ध्यति अनिग्लक्षणत्वाद् इति । नैष दोषः । ङिद्ग्रहणमप्यनुवर्त्तते तत्सामर्थ्यादनिग्लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यति, सत्यमस्त्ययं शुष्कस्तर्को वार्त्तिककारस्तु न क्षमते यदाह 'इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्य'मिति । 'अन्थियन्थीत्यादि' । श्रन्थ ग्रन्थ संदर्भे, दम्भु दम्भे, ष्वञ्ज परिष्वङ्गे । 'श्रेथतुः श्रेथुरिति' । कित्त्वादुपधालोपः, एत्वाभ्यासलोपावप्यत्र वक्तव्यौ.। 'देभतुरिति' । नलोपे कृते ऽत एकहल्मध्ये नादेशादेरित्येत्वाभ्यासलोपौ, न च लोपस्यासिद्धत्वम्, आभाच्छास्त्रं यस्यासिद्धत्वस्यानित्यत्वात् । 'परिषस्वजइति' । ष्वञ्ज परिष्वङ्गे, अनुदात्तेत्, उपसर्गात्सुनोतीति षत्वं, सदिस्वञ्ज्योः परस्य लिटीति परस्य प्रतिषेध, अत्र के चिद्रुति पठन्ति श्रश्रन्थतुरित्याद्यपि भवति । अथ पित्सु वचनेषु कथं यदि संयोगार्थमेव वचनं पित्सु न भाव्यम्, अथ संयोगान्तार्थं पिदर्थं च पित्स्वपि भाव्यं किं पुनरत्रार्थतत्त्वं देवा ज्ञातुमर्हति ॥

"मृडमृदगुधकुषक्लिशवदवसः क्त्वा" ॥ क्लिश हिंसायाम् अनुदात्तेद् दिवादिरकर्म्मकः, क्लिशू विबाधने क्र्यादिः सकर्मकः परस्मैपदी, द्वयोरपि ग्रहणं, किमर्थं पुनरिदं तावता किदेव हि क्त्वा तत्राह । 'न क्त्वा सेडित्यादि' । अपकर्षो, ऽपवादः । नन्विदमेव नियमार्थं भविष्यति मृडादिभ्य

एव क्त्वा किद्भवति नान्येभ्य इति नार्थो 'न क्त्वा सेडि' त्यनेन, कथं लूत्वा पूत्वा तुल्यजातीयस्य सेटो नियमः, ननु क्लिशः क्त्वानिष्ठयोरिति 'विकल्पेनेड्विधानादनिट् क्त्वा सम्भवति, एवं तर्हि मृडमृदवदवसां कित्त्व-विधानं नियमार्थमितरेषां तु रलो व्युपधादिति विकल्पबाधेन विधिसम्भवान्नियमो न भविष्यति । एवमपि विपरीतोऽपि नियमः स्याद् मृडादिभ्यः क्त्वैव किदिति । 'उदित्वा उषित्वेति' । यजादित्वात्सम्प्रसारणं 'शासिवसिघसीनां चे' ति षत्वं 'वसतिक्षुधोरिट्' ॥

"रुदविदमुषग्रहिस्वपिप्रच्छः संश्च" ॥ 'समर्थमिति' । तत्र चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥

"इको झल्" ॥ सनाक्षिप्तस्य धातोरिका विशेषणात्तदन्तविधिर्भवतीत्याह । 'इगन्ताद्धातोरिति' । इक् स्मरण इत्यस्य तु धातोर्ग्रहणं न भवति नह्यतः परो झलादिसन् सम्भवति, कथम् 'इणो गा लुङि' 'णौ गमिरबोधने' 'सनि च' 'इण्वदिक इति वक्तव्यं' 'गमेरिट् परस्मैपदेषु' अधिजिगमिषति । ननु च भावकर्मणोरात्मनेपदे ऽनुदात्तोपदेशेत्यनुनासिकलोपार्थमेतत्स्यात्, तत्र तु रूपे विप्रतिपत्तिः गमेरिङादेशस्य ग्रहणमिति वचना'दज्झनगमां सनी' ति दीर्घो न भवति अधिजिगंस्यत इति के चित् । अन्ये त्वाहुः । अज्झनगमामित्यत्राज्ग्रहणं न कर्तव्यं कथं, सनि दीर्घ इत्येको योगः, अवश्च, एवं सिद्धे ऽज्ग्रहणं प्रवृत्तिभेदेन गमेरपि विशेषणार्थम् अजादेशस्य गमेरिति, तेनास्यापि दीर्घेण भाव्यम्, अजादेशत्वाद् अधिजिगांस्यतइति रूपमिति तदेवं धातोरपि ग्रहणं युक्तमेव, एवं तर्हि झला साहचर्याद् गर्गादिषु जिगीषुशब्दस्य पाठाच्च प्रत्याहारस्य ग्रहणमुत्तरसूत्रे च इक्समीपाद्धलः पर इत्यनुपपन्नं धातुग्रहणे । 'झलादिरिति' । कथं पुनस्सत्सप्तमीनिर्देशे तदादिविधिः शक्यो विज्ञातुं, झल्मात्रस्य सनो ऽसम्भवात् । ननु च चिक्रीर्षितेत्यादावतो लोपे सति सम्भवति, अपूर्वविधित्वाच्च न लोपस्य स्थानिवत्त्वम्, एवं तर्हि वृद्धसंज्ञासूत्राद्यस्यादिरिति वर्तते सन् किद्भवति कीदृशः यस्य झलादिरिति, एतेन तदन्तविधिरपि निरस्तो वेदितव्यः । 'चिचीषतीति' । एकाच इतीट्-

प्रतिषेधः । 'तुष्टूषतीति' । 'शर्पूर्वाः खयः' । 'शिशयिषतइति' । 'पूर्ववत्सनः' । 'किमर्थमिति' । योगविभागविषयः प्रश्नः, सूत्रं तूत्तरार्थं कर्त्तव्यं दीर्घत्वं गुणस्य बाधकं भविष्यतीति । ननु कुङ् शब्दे कुटादिः, चुकूषतइत्यस्ति दीर्घस्यावकाशः दीर्घान्तोयमित्यवोचाम, इह तर्हि गुपुरीषोत्सर्गे धु गतिस्थैर्ययोः कुटादी, जुगूषति दुधूषति । एवमपि प्रत्याहारग्रहणमवर्णकमुतो दीर्घ इति वक्तव्य,मस्ति प्रत्याहारग्रहणे प्रयोजनं किं प्रतिभेदेन गमिमपि विशेषयिष्यामीति । यद्येतावत्प्रयोजनं स्यादुतो दीर्घ इत्युक्त्वा इङ्हन्योरिति वक्तव्यं येषां गमेरिङादेशस्य ग्रहणमिति पक्षः, येषामनिङादेशस्यापि ग्रहणं तेषामिहन्योरिति वक्तव्यं हना साहचर्यादिङिति धातुर्गृह्यते नेकारस्तस्मादज्ग्रहणसामर्थ्याद्दीर्घत्वं गुणस्य बाधकं भविष्यतीति सुष्ठूक्तं, यथैव तर्हि झलादौ गुणो बाध्यते एवमिङादावपि बाध्येत यियविषति नात्र दीर्घः प्रवर्त्तते किं कारणं झलिति वर्त्तते अनुनासिकस्य क्विझलोरिति । 'यथैव तर्हीत्यादि' । असति हि किस्वे नाप्राप्ते विध्यन्तरे आरभ्यमाणं दीर्घत्वं यथा गुणं बाधते एवं णिलोपमपि बाधेत । ननु यत्र नाप्राप्ते तस्य बाधकः क्व च नाप्राप्ते दीर्घ आरभ्यते गुणे णिलोपे तु ज्ञीप्सतीत्यत्र प्राप्ते चिचीषतीत्यत्राप्राप्ते पाक्षिक एव परिहारः । यत्र बाध्यं भेदेनापेक्ष्यते इदमस्मिन्विषये प्राप्तमिदमस्मिन्विषयइति तत्रैकबाधेनोपपत्तौ सत्यामनेकबाधो न न्याय्य इति किमेकं बाध्यतामित्यपेक्षायां येन नाप्राप्ते स बाधनीय इत्युच्यते एवं ह्यपेक्षितविधिर्भवति, यदि तु नाप्राप्ते विध्यन्तरइदमारभ्यतइति कार्यसामान्यमपेक्ष्यते तदा सर्वमेव बाधनीयम्, एतेन पुरस्तादपवादन्यायेन णिलोपमेव दीर्घत्वं बाधेत न गुणमित्यपि चोद्यं निरस्तं, यस्मादयमपि न्यायः कार्यसामान्यचिन्तायां नास्त्येव, अतः सुष्ठूक्तं णिलोपमपि बाधेतेति । 'दीर्घत्वस्यावकाशदानायेति' । एतदेव स्फुटयति । 'चिचीषतीत्यादिष्विति' । सति हि किस्वे चिचीषतीत्यादौ किस्वेनैव गुणो बाध्यते न दीर्घेणेत्यत्राधित्वैव विध्यन्तरं सावकाशो दीर्घः परत्वाण्णिलोपेन बाध्यतइत्यर्थः । 'ज्ञीप्सतीति' । मारणतोषणनिशामनेषु ज्ञा,ज्ञपमिच्चेति चुरा-

द्विषु पाठाद् णिचि पुकि 'मितां ह्रस्वः' सन् सनीवन्तर्द्धतीडभावपक्षे 'आप्ज्ञप्यृधामीत्' ईत्वम्, 'अत्र लोपोऽभ्यासस्य'। किमर्थो योगविभाग इत्याशङ्क्य प्रयोजनमाह। 'इकः कित्त्वमित्यादि'। गुणो माभूदित्येवमर्थमिक उत्तरस्य सनः कित्त्वं विधीयत इत्यर्थः। दूषयति। 'दीर्घारम्भादिति'। गुणो न भविष्यतीति शेषः। 'कृते भवेदिति'। शास्त्रमावर्तमानं जपादिवद्धर्म्मे साधनमिति भावः। 'अनर्थकं स्विति'। शास्त्रपूर्वकात्प्रयोगाद्धर्म्मो न तु प्रवृत्तिमात्रादिति भावः। ननु च सनिमीमाघ्वित्यत्र मिनोतेरपि मीग्रहणेन ग्रहणार्थं दीर्घविधिः स्यात्, माभून्मीग्रहणेन ग्रहणं 'मीनातिमिनोतिदीङां ल्यपि च' त्यात्वे कृते 'गामादाग्रहणेष्वविशेष' इति माग्रहणेन ग्रहणं भविष्यति तत्रायमप्यर्थः मीग्रहणमपि न कर्त्तव्यं भवति। 'ह्रस्वार्थमिति'। ह्रस्वानामेव दीर्घविधानसामर्थ्याद्गुणो न स्याद् दीर्घाणां तु पुनः प्राप्नोति तुलूषति, नहि दीर्घान्तेषु दीर्घशास्त्रं प्रवर्त्तते पूर्वमेव तद्रूपसद्भावादिति भावः। 'सामर्थ्याद्धि पुनर्भाव्यमिति'। सामर्थ्यं प्रयोजनसद्भावः, यथा 'मो राजि समः क्वौ' विति मकारस्यैव मकारो विधीयते विकारान्तरं माभूदिति तथा दीर्घस्यापि गुणो माभूदिति पुनर्दीर्घो भविष्यति, यदि तर्हि प्राप्नुवन्विधिः दीर्घेण बाध्यते ऋदित्त्वमपि न प्राप्नोति चिकीर्षति तत्राह। 'ऋदित्त्वं दीर्घसंश्रयमिति'। दीर्घः संश्रयो निमित्तं यस्य तत्तथोक्तं, यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, न चात्राकृते दीर्घे ऋदित्त्वं प्राप्नोति, इह तर्हि तितीर्षति अकृतेपि दीर्घत्वे ऋदित्त्वं प्राप्नोतीति। ऋदित्त्वनिवृत्त्यर्थमेव दीर्घत्वं स्याद्, अत आह। 'दीर्घाणां नाकृते दीर्घ इति'। दीर्घाणामप्यकृते दीर्घत्वे ऋदित्त्वं न प्राप्नोति, किं कारणम्, इत्त्वोत्वाभ्यां गुणवृद्धी भवति विप्रतिषेधेन, अतो यावद्दीर्घेण गुणो न बाधितः तावदित्वं न प्राप्नोति तस्मात्वार्थं एतेनेति स्थिते प्रयोजनमाह 'णिलोपस्त्विति'॥

(शेषमग्रे)

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

*(Continued from page* 401. Vol. XI.*)*

## अथ षष्ठाध्याये पञ्चमः पादः आरभ्यते ॥

दर्शाऽभ्युदयेष्टौ नैमित्तिकदेवताऽपनयाधिकरणम् ।

सू० अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे ॥ १ ॥

अकाले प्रक्रान्ते दर्शे प्रायश्चित्तमाम्नातं "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति, तत्र संशयः किं कर्मान्तरमिद ? मुत प्रक्रान्तस्यैव दर्शस्य देवताभ्योपनयो देवतान्तरसंयोगश्च चोद्यत ? इति, "अनेकार्थविधायित्वात्कर्मान्तरविधिर्भवेत् । प्राप्तकर्मानुवादेन नानेकार्थविधिः क्षमः" । अग्न्यादयो देवतास्तद्गुणाश्च दातृत्वादयोदधिशृतयोश्चाधिकरणत्वं स्थविष्ठाणिष्ठादीनां च चरुत्व मिति बहवोऽर्था नापूर्वविधिमन्तरेण शक्यन्ते विधातुं, तस्मात्कर्मान्तरमेवाकालोपक्रमप्रायश्चित्तत्वेन विधीयत इति प्राप्ते उच्यते "प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना । प्राकृतीभ्यस्तदा च्छिद्य द्रव्यमन्याभ्य उच्यते" ॥ न तावत्सम्भवन्त्यां गतौ प्रकृतहानाप्रकृतकल्पना विशिष्टविधानापूर्वकर्मान्तरकल्पनं न्याय्यं 'सम्भवति चात्र प्रक्रान्त एव गुणविधानं, तथा हि त्रेधा तण्डुलान्विभजेदित्यनेन तावन्मध्यमादिभावेन तण्डुलानां विभागो न विधीयते मध्यमादिविनियोगवशेनैवार्थसिद्धत्वात्, अतस्तण्डु—शब्देन प्रकृतं हविस्त्रयमुपलक्ष्य तस्यापरित्यक्तयागान्वयस्य पूर्वदेवताभ्यां विभागोपनयो विधीयते, ततश्चापनीतानां हविषां देव-

तान्तरसंयोगो ; पेषितोमध्यमादिश्रवणैर्विधीयते मध्यमानां तण्डुलानामग्निर्दाता स्थविष्ठानां दध्नश्चेन्द्रः प्रदाता, अणिष्ठानां शृतस्य च विष्णुः शिपिविष्टः, न चानेकार्थविधानं दातृप्रदातृशिपिविष्ट—शब्दानां यौगिकानां श्रुत्यैवाग्न्यादिपदसामानाधिकरण्यात् पदद्वयप्रतिपादितं विशिष्टं देवताकारकमेकेन विधिना शक्यं विधातुम्, अभ्युदयेष्टिप्रकरणे च "सह श्रपयती"ति वचनमस्ति तेन सम्प्रतिपन्नदेवताकयोर्दधिस्थविष्ठयोः शृताणिष्ठयोश्च सहपाकादर्थप्राप्तं चरुत्वं दधिशृतयोश्चाधिकरणत्वमिहानूद्यते, तस्मादवाक्यभेद इत्यकर्मान्तरत्वम् । एवं चातञ्चनाभ्यासदर्शनमुपपन्नं भवति, तथा हि श्रूयते यदि बिभियादभिमोदिष्यतीति महारात्रे हवींषि निर्वपेदित्यु[1]पक्रतैस्तण्डुलैरुपासीत अर्धं दधि हविरातञ्चनार्थं निदध्यात् अर्धं न यद्यभ्युदियात् तेनातच्य प्रचरेद्यदि न प्रातरन्येद्युस्तेन ब्राह्मणं भोजयेदिति तद्यदि कर्मान्तरमभ्युदितेष्टिस्ततस्तत्र दधिशृतयोरधिकरणत्वेन प्रणीताकार्यं विधानादुपादेयत्वेन प्रकृतग्रहणे प्रमाणाभावात् लौकिक एव दधिश्रपणं कृत्वा सायं दोहेनाकालेऽपि प्रक्रान्तेन प्रायश्चित्तनिर्हृतकालापराधदोषेणैकान्तरितोऽपि दर्शः कर्तव्यो न दध्यन्तरमुत्पाद्यं तत्रातञ्चनमनर्थकं तत्र प्रक्रान्तस्य दध्नस्त्यागे दध्यन्तरोत्पादे चादृष्टद्वयं कल्प्यम्, असमत्पक्षे तु तेन दध्ना प्रक्रान्तस्य प्रयोगस्यानुष्ठितत्वादवश्यं श्वोदध्यन्तरमुत्पाद्यमित्यर्थवदातञ्चनं, तत्र सायंदोहाद्वैनैयान्तःच्याद्वान्येनेत्येतावद्विधेयमिति लाघवं, तस्मात्कर्मान्तरम् ॥

उपांशुयागेऽपि देवतापनयाधिकरणम् ।

सू० उपांशुयाजेऽवचनाद्यथा प्र[2]कृतौ ॥ २ ॥

तत्रैव चिन्ता किमुपांशुयाजद्रव्यस्याग्न्यादयस्य प्राकृतीभ्यो देवताभ्योऽपनयोनेति अमावास्यायामप्युपांशुयाजोऽस्तीति कृत्वा चिन्तेयं, न त्वमावास्यायामुपांशुयाजोऽस्ति, वाचनिको हि तस्य पौर्णमासीकालः उपांशु पौर्णमास्यां यजन्निति कालविधिपरं हीदं वचनमिति सूत्रकारस्थितिः तदुक्तं सूत्रकारेण-

१ फलीकृतैरिति पा० ।

२ यथा प्रकृति इति पा० ।

मावास्यायामुपांशु याजमनिच्छता एतदेव पौर्णमासीविधिपरत्वेनोपन्यस्त-मिति, तथा च त्रयोदशामावास्यायामिति लिङ्गमुपपद्यते, अन्यथा चतुर्दश-त्वापत्तेस्तदप्युक्तं पौर्णमास्यां यदा तस्मिन्द्वे दर्शविषये सदा प्रधानाहुतयस्सन्ति तदा सङ्ख्योपपद्यते तस्मात्कृत्वा चिन्तेयम् । उपवर्षस्तु वृत्तिकारो बह्वृच-ब्राह्मणेऽमावास्यायामप्युपांशुयाजो विहित इति, तदभिप्रायेणेयं चिन्तेत्याह तत्राज्यस्य देवतान्तरसंयोगाश्रवणाच्च प्राकृतीभ्योऽपनयनं तण्डुलग्रहणेन तु प्रकृतहविर्मात्रस्य अप्राकृतीभ्योऽपनयनविधानादाज्यस्याप्यस्त्येवापनयस्तच्च ताऽभ्योपनीतं देवतान्तरेण वचनाभावादसंयुक्तं प्रहीणं भवति, न च देवता ऽभावे यागः सम्भवतीत्युपांशुयाजो लुप्यते ।

अनिरुप्तेऽप्यभ्युदयेऽध्यधिकरणम् । सू० निरुप्ते स्यात्तत्संयोगात् ॥ ३ ॥

यदा निरुप्ते हविषि चन्द्राभ्युदयो जायते तदैव किं प्रायश्चित्तम्? उत कर्मोपक्रममात्र इति तत्रावश्यं तावद्धविषा चन्द्रोदयो विशेष्यः, न च तदुदासीनं तस्य विशेषणं भवतीत्यवश्यं या काचित्क्रियाऽपेक्षिता तत्र निर्वापस्य श्रुतत्वात्तद्विशिष्टमेव हविरभ्युदयविशेषणमिति नानिरुप्ते प्राय-श्चित्तं, नैवं हविरभ्युदियादित्येतावतैवाप्रवृत्तस्याभ्युदयसम्बन्धासम्भ-वात् प्रवृत्तं हविरिति ज्ञायते, तावता च निमित्तोपपत्तेरविवक्षितो हविरुभयत्ववन्निर्वापः, तस्मादकालप्रवृत्तिमात्रं निमित्तमिति प्रागपि नि-र्वापादभ्युदये ज्ञाते कर्तव्यमेव नैमित्तिकम् ॥

अनिरुप्तेऽभ्युदये वैकृतीभ्यो-निर्वापाधिकरणम् । सू० अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभू-तेष्वपनयात् ॥ ४ ॥

कर्मप्रवृत्तिमात्रं निमित्तमिति स्थितं, नैमित्तिकस्तु देवताऽपनयो देवतान्तरसंयोगश्च किं निर्वापोत्तरकालं तण्डुलावस्थे हविषि कर्तव्यो नि-र्वापस्तु प्राकृतीभ्य एव स्यात् ज्ञातेऽप्यभ्युदये? उत वैकृतीभ्य एव निर्वाप? इति संशये तण्डुलग्रहणात्तदवस्थस्यैवापनयः, नैतदेवं हविर्मात्रोपलक्षणार्थं तण्डु-लग्रहणं न स्वरूपेण विवक्षितं, तद्विवक्षायां हि दधिशृतयोरनपनयात्

देवतान्तरसंयोगवचनमनुपपन्नं स्यात्तस्मात्प्राङ् निर्वापादभ्युदये वैकृतीभ्य एव निर्वापः ॥

किञ्चिन्निरुप्तेऽभ्युदयेऽवशिष्टस्य तूष्णीं निर्वापाधिकरणम् ।

सू० विनिरुप्ते न चतुर्मुष्टीनामपनयस्तद्गुणत्वात् ॥ ५ ॥

एकस्मिन्द्वयोर्वा मुष्ट्योः प्राकृतीभ्यो निरुप्तयोर्यद्यभ्युदयोऽवगम्यते किं तदा शेषं प्राकृतीभ्यो निर्वप्तव्यम् ? उत वैकृतीभ्यो ? ऽथवा तूष्णीमिति संशये "प्राकृतीनां प्रवृत्तत्वात्ता एवावशिष्टेऽपि स्युः निमित्तानन्तरं नैमित्तिकोपनयस्संयोगश्च कर्तव्यस्तस्माद्वैकृतीभ्यः शेषं द[1]द्यात्, सत्यं, निमित्तानन्तरं नैमित्तिकं तत्र विभागस्य संयोगमात्रापेक्षत्वेनावयवेऽपि सम्भवादवशिष्टो निर्वापांशः प्राकृतीभ्यस्तावदपनेतव्य इत्येतद्गृह्णीमः, वैकृतीभ्यस्तु संयोगोऽस्यामवस्थायां न सम्भवति ताहि प्राकृतीनां स्थाने संयोज्याः पदार्थेन च प्राकृतीनां संयोगो विहितो नावयवेन तेन वैकृत्योऽपि पदार्थेन संयोजयितव्या नावयवेन न च सामिकृते निर्वापे वैकृतीनां पदार्थसंयोगः सम्भवति तस्मात्प्राकृतीभ्योऽपनीतो वैकृतीभ्यश्चासंयुक्तोऽवशिष्टो निर्वापांशस्तूष्णीं कर्तव्यः ॥

सन्नयदसन्नयदुभयस्यैवाभ्युदये प्रायश्चित्ताधिकरणम् ।

सू० सान्नाय्यसंयोगान्नासन्नयतः स्यात् ॥ ६ ॥

किमियमभ्युदयेष्टिः सन्नयत एव स्या ? दुतासन्नयतोऽपी ? ति संशये शृते चरुं दधनि चरुमिति श्रवणादसन्नयतश्च दधिशृतयोरभावात् नास्ति नैमित्तिके सामर्थ्यं तस्मात्सन्नयत एवाधिकारः सत्यं यदि दधिशृते चरोरधिकरणत्वेन चोद्येयातां न त्वेवं वाक्यभेदप्रसङ्गात् न ह्येकं वाक्यं स्थविष्ठांस्तण्डुलानुद्दिश्य देवतान्तरं दध्यधिकरणत्वञ्च शक्तो विधातुम् अतस्तण्डुलान्दधिशृते चोद्दिश्य देवतामात्रं विधीयते, न चोद्दिश्यानां साहित्यं विवक्षितमतो ऽसन्नयतोदधिशृता भावेऽपि तण्डुलानां देवतान्तरसंयोगः कर्तव्यः ॥

---

[1] स्यादिति पा० ।

सत्राय प्रवृत्तमात्रस्य विश्वजिदधिकरणम्।

## सू० साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात् ॥ ७ ॥

यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्सोममयभज्य विश्वजिता यजेते"ति किमयं विश्वजित्क्रीतराजकस्यैवोत्थाने? उताक्रीतराजकस्यापी? ति विचारः, "नैमित्तिकमिदं सोमविभागेन विशेषितम्। नाक्रीतराजकस्यैतच्छक्यं क्रीते भवेदतः। उच्यते यदि सोमविभागोऽयमङ्गत्वेन विधीयते तत एवं भवेदेष त्वर्थं प्राप्तो न चोच्यते क्रीतराजकस्य तावदर्थप्राप्तः सोमविभागोऽर्थान्तरविभागवच्च विधातव्यः अक्रीतराजकस्य त्वशक्यत्वादेव विधेयो विभागः तस्माद्रागप्राप्तद्रव्यविभागानुवादमात्रमिदं सोमग्रहणं तु प्रदर्शनार्थं विश्वजिन्मात्रं तु विधीयत इत्यक्रीतराजकस्यापि स्यात् ॥

दीक्षापरिमाणस्य द्वादशाहत्वनियमाधिकरणम्।

## सू० दीक्षापरिमाणे यथा काम्यविशेषात् ॥ ८ ॥

नैमित्तिकप्रसङ्गाद् दीक्षानिमित्ता धर्माः कियन्तं कालमनुवर्तन्त इत्येवमर्थं दीक्षापरिमाणं चिन्त्यते, ज्योतिष्टोमे श्रुतानामेका दीक्षातिस्रोदीक्षा द्वादशदीक्षा इत्येवमादीनां सर्वेषां किं ज्योतिष्टोमे विकल्पेन निवेशः? उत द्वादशपरिमाण? मेव तत्र स्यादेकादीनां तूत्कर्षो विकृतिष्विति संशयः तत्र भाष्यकारो यथाकाम्यविशेषादित्यनेन पूर्वपक्षमुक्त्वा द्वादशाहस्तु लिङ्गादित्यनेन द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति श्रुतस्य भृतिवननस्य पक्षान्तरेष्वसम्भवाद् द्वादशपरिमाणमेव सिद्धान्तितवान् वार्त्तिककारस्त्वयुक्तमिदमिति मत्वा सूत्रद्वयमपि द्वयोरधिकरणयोरुस्सूत्रपूर्वपक्षयोः सिद्धान्तसूत्रत्वेन व्याचख्यौ, तत्र भृतिवननसामर्थ्यात् द्वादशाहपरिमाणं मन्वानस्योत्तरं, न हि प्रत्यक्षश्रुतानामेकादिपक्षाणां भृतिवननवचनवशेन दौर्बल्यं येन तदनुग्रहार्थमुत्कृष्येरन्, तस्माद्यथा काम्येव स्यात्, भृतिवननं तु द्वादशपक्षे भविष्यति। यद्वा दीक्षितो भृतिं वन्वीतेत्येतावद्विधीयते, द्वादशग्रहणं तु प्रदर्शनार्थमिति व्याख्येयम् ॥

## सू० द्वादशाहस्तु लिङ्गात्स्यात् ॥ ९ ॥

द्वादशाहे किं दीक्षापरिमाणानां विकल्पः ? उत द्वादशपरिमाणमेवे ? ति प्रकृतिवद्विकल्पे प्राप्त उच्यते । "षट्त्रिंशदहोवा एष यद् द्वादशाह" इति लिङ्गादुपसत्सुत्यानां च प्रतिस्वन्द्वादशत्वाद्दीक्षा अपि द्वादशेति गम्यते तथा भीन्धत एव दीक्षाभिरिति दीक्षाबहुत्वं व्याख्याय तद्वाक्यशेषे द्वाभ्यां लोमा वद्यति द्वाभ्यां त्वचं द्वाभ्यामसृक् द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमिति षण्णां द्विकानामनुक्रमणाद्विध्युद्देशगतं बहुत्वं द्वादशस्वेव स्थाप्यते ॥

गवामयने माघपौर्णमास्याः पुरस्ताद्दीक्षाऽधिकरणम् ।

## सू० पौर्णमास्यामनियमोऽविशेषात् ॥ १० ॥

दीक्षाप्रसङ्गादिदमधिकरणं गवामयने चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासस्तस्य न काचन निर्या भवति इत्येवं चैत्रींस्तुत्वाततुक्तं "चतुरहे तु पुरस्तात् पौर्णमास्ये दीक्षेरन् तेषामेकाष्टकायां क्रयः सम्पद्यते" इति तत्र संशयः किमेषां या काचित्पौर्णमासी किं वानन्तरश्रुती चैत्री उत माघीति तत्राविशेषाद्याकाचित्स्यात् चैत्री स्तुतिस्तु चित्रापूर्णमासे दीक्षेरन् इत्यस्य शेषो न चतुरहे पुरस्तादित्यस्य न चैकाष्टकाश्रुतिवशान्माघीविषयत्वं द्वादशानामपि कृष्णाष्टमीनामेकाष्टकाशब्दवाच्यत्वात्तथाहि श्रूयते द्वादशपौर्णमास्यो द्वादशैकाष्टका इति तस्मादविशेषः सत्यमेकाष्टकाशब्दो न विशेषकः चैत्र्यास्त्वनन्तरमेव कीर्तितत्वात् सामान्यविषयः पौर्णमासी—शब्दः तद्विषयो भवति तस्माच्चैत्री स्यात् स्यादेतदेवं यद्येकाष्टका—शब्दः सर्वत्र स्यात् स च माघ्याः पौर्णमास्या उपरितने कृष्णपक्षे याऽष्टमी तस्या एव वाचको वृद्धव्यवहारे प्रसिद्धोऽन्यासु तु गौणः प्रयोगः किं चोपक्रम "एकाष्टकायां दीक्षेरन् एषां वै संवत्सरस्य पत्नीति" तस्यां दीक्षामुक्त्वा तत्र दोषमभिधायान्ते चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन् इत्युक्त्वा दीक्षातः प्रच्युतामेकाष्टकां क्रयसम्पत्यानुगृह्णाति तेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्टकां न छंबट्कुर्वन्तीति संवत्सरपत्नी च माघ्याः पौर्णमास्या उपरितन्येवाष्टमी नान्यास्तद्विषयो हि मन्त्रः श्रूयते "याञ्जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीं

संवत्सरस्य या पत्नी सानो अस्तु सुमङ्गलीति" किं चार्त्तं वा एते संवत्सरस्याभिदीक्षन्ते पराकाष्टकायां दीक्षन्ते तत्रामानावृत् भवत इति शिशिरगतामष्टमीमेकाष्टकां दर्शयति तस्मान्माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गवामयनिकी दीक्षेति ।

दीक्षोत्कर्षे तद्धर्मानामप्युत्कर्षाधिकरणम् ।

**सू० दीक्षाकालस्य शिष्टत्वादतिक्रमे नियमानामनुत्कर्षः प्राप्तकालत्वात् ॥ ११ ॥**

दीक्षितस्याग्निहोत्रादयो निषिद्धाः अवभृथे कृते दीक्षातो मुक्तिः । तद्यदा केनचित्कारणेनाव भृथोत्कर्षो भवति तदा किमग्निहोत्रादि कर्त्तव्यं न वेति संशयः । तत्रादीक्षितो न जुहोतीति यावन्तं कालं शास्त्रवशेन दीक्षानुवृत्तिस्तावत् न जुहोतीति शास्त्रार्थं मरवाऽवभृथोत्कर्षेण शास्त्रकृता दीक्षानुवृत्तिः अतः कर्त्तव्यमग्निहोत्रादि मन्यते । न काललक्षणायां प्रमाणमस्ति दीक्षाया एव प्रतिषेधनिमित्तत्वोपपत्तेरतो येन केनापि हेतुना दीक्षानुवर्तमाना प्रतिषेधमप्यनुवर्तयति । तस्मादकर्त्तव्यमग्निहोत्रादि प्रागवभृथात् ।

ज्योतिष्टोमोत्कर्षे प्रतिहोमाननुष्ठानाधिकरणम् ।

**सू० तच्च प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ १२ ॥**

अवभृथोत्कर्षकृता दीक्षानुवृत्तिः पुरुषापराधकृता न विधिकृता । अतस्तत्काले पुरुषापराधकृतमग्निहोत्राननुष्ठानमिति प्रतिहोमः कर्तव्यः । नैवं यथा तथावादीक्षातावदनुवृत्ता तावता चानधिकारादग्निहोत्रमकर्तव्यं कर्तव्याकरणे च प्रतिहोमः तस्माच्च प्रतिहोमः ॥

उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानाधिकरणम् ।

**सू० प्रतिहोमश्चोर्द्ध्वमवभृथादिष्टेः ॥ १३ ॥**

कृतेऽवभृथे यद्युदवसानीयोत्कर्षो दैवाद् भवति तदा किमग्निहोत्रं कर्त्तव्यमकरणे च प्रति होमः स्यात् अथवा न कर्त्तव्यं प्रतिहोमश्च न कर्त्तव्य इति तत्रावभृथस्य दीक्षान्मोचनत्वात्तदुत्तरकालकर्त्तव्यमाग्निहोत्रमकरणे च प्रतिहोमः स्यात् सत्यं, दीक्षा निवृत्ता तथाऽप्येतया पुनराधेयसंततयेष्ट्याऽग्निहोत्रं जुहोतीति वचनेन कृतोदवसानीयस्याग्निहोत्राधिकारप्रतिपादनात्ततः प्रागधिकाराभावादकर्त्तव्यमग्निहोत्रम् । अकृते च न प्रतिहोमः । (शेषमग्रे) .

# खण्डनखण्डखाद्यम् ।

(Continued from page 428. Vol. XI.)

मू० [a]तदा विरुद्धशब्दस्तवायमन्य एव सामयिकार्थः कश्चि-त्प्रमाणेन तथाभूतस्य ग्रहणादेव विरुद्धत्वाभ्युपगमप्राप्तेः * अथ प्रामाणिकं नाभ्युपैषि * तदाऽ[b]प्रामाणिकं मिथो व्याघातकत्वं क नाम नास्तीत्यतिव्याप्तिः * [c]अथ मन्यसे यथा परेणाभिधीयेते अर्थौ तथा मिथो व्याघातकाविति ब्रूमः तत्र च प्रमाणं प्रसरत्येवेति ? *—न [d]कथमपि तत्र प्रमाणप्रवृत्तौ विरोधभाषापरिभाषामात्रत्वापत्तेः [e]यथा परेणोक्तोऽर्थस्तथा मिथो व्याघातक इत्यपि कचिन्मिथो व्याघातकत्वमप्रमाय न वक्तुं शक्यं ।

टी० ॥ किञ्च त्वयोच्यते प्रकृते घटतदभावयोरेकदेशत्वं नास्तीति न विरोधस्तत्र तदुभयैकदेशवृत्तित्वं प्रमितं न वा आद्ये तयोः सामानाधिकरण्येन प्रमाणप्रवृत्तौ रूपरसवदविरोध एवेत्याह—। [a]"तदे"ति ॥ द्वितीये त्वाह—। [b]"अप्रामाणिकमि"ति ॥ ननु माता वन्ध्येत्यादौ मातृत्ववन्ध्यात्वयोः सामानाधिकरण्यमभिधीयमानं विरुद्धमित्युच्यते नतु तदुभयसामानाधिकरण्यमेतावता प्रमीयते इति शङ्कते—। [c]"अथे"ति । तदुभयसामानाधिकरण्यं वाक्यविषयत्वेनापि यदि प्रमितं तदा प्रमितत्वान्न विरोध इत्याह—। [d]"कथमपी"ति । वाक्यावच्छेदकत्वेनापीत्यर्थः एतदेवाह—। [e]"यथे"ति । यद्वा प्रकारान्तरेणापि प्रमितत्वमाह—। "यथे"ति । यथा परेणोक्त इति हि सामानाधिकरण्येन परेणोक्तस्तथाच मिथो व्याघातकत्वमनयोरित्यभिधानं मिथो व्याघातकत्वाप्रमितौ न स्यादित्यर्थः ।

मू० *[a]प्रसज्यते मिथो व्याघातो न प्रसाध्यते? *—इति चेन्न, क्वचिदप्यप्रमितस्य प्रसञ्जयितुमपि भवताऽशक्यत्वात्* [b]मा प्रमायि अप्रमयैव तद्व्यवहार? *—इति चेन्न, क्वचिदप्यप्रमितमाभासमात्रोपस्थितं क्व नाम नोपस्थापयितुं शक्यमित्युक्तैवातिव्याप्तिरावर्त्तते *[d]अनेकत्र नियतयोरेकत्र प्रसञ्जनम्? *—इति चेन्न, [e]प्रसञ्जकस्य तद्द्वयस्यैकत्र स्थितिनियतताप्रमितावविरोधस्यानेवंभावे चानापादकत्वस्यापत्तेः ॥

टी० ॥ ननु प्रसङ्गमात्रं व्याघातस्य क्रियते स च पराभ्युपगममात्रप्रयुक्त एव नतु तत्प्रमाप्रयुक्तः परस्याभ्युपगमोऽपि न प्रमिते एव विषये तदभानेऽपि तद्दर्शनादन्यथा आपाद्यबाधः(१) क्वापि न स्यात्तथाच गतं तर्कमात्रेणेति शङ्कते—। [a]"प्रसज्यते" इति । प्रसज्यमानस्य(२) तत्र परं बाधस्तर्कगुणो नतु सार्वत्रिकः तथाच क्वचिदपि प्रसञ्जनीयस्य प्रमितत्व वाच्यमन्यथा प्रसञ्जकप्रसञ्जनीययोर्व्याप्त्यग्रहे मूलशैथिल्यमेव तर्कस्य स्यादित्याह—। [d]"क्वचिदपी"ति । पराभ्युपगममात्रादेव प्रसङ्गः प्रवर्त्तते ज्ञानमात्रतन्त्रो हि व्यवहारो नतु प्रमामात्रतन्त्रः कथमन्यथा शुक्तिरजततादात्म्यं विधेयत्वेन भ्रमे निषेध्यत्वेन तद्बाधे व्यवह्रियेतेत्याह—। [c]"मा प्रमायी"ति । नैयायिकमते प्रमितमेव व्यवह्रियते मतान्तरमादाय चेदुच्यते तदाभासज्ञानं सर्वत्र सुलभमित्यप्रामाणिकं मिथो व्याघातकत्वं क्व नाम नास्तीति यदुक्तं तदेवावर्त्तत इत्यर्थः ननु व्याहन्यमानयोरर्थयोः स्वस्वस्थाने प्रमितयोरेकत्र प्रसञ्जनं क्रियते नतु प्रसञ्जने तदुभयसामानाधिकरण्यप्रमा तन्त्रमित्याह—। [d]"अनेकत्रे"ति । विरुद्धयोरेकैकमात्रप-

(१) वह्न्यभावादिनाऽऽपादकेनाऽऽपाद्यस्य धूमाभावादेः पर्वतादौ बाधो न स्यादित्यर्थः ।

(२) प्रसज्यमानस्य=वह्न्यभावादेः, तत्र=पर्वतादौ, परं=केवलं, बाधस्तर्कगुणो, नतु सार्वत्रिकः=ह्रदादावपि बाधस्तर्कगुण इत्यर्थः ।

सञ्जनं नानिष्टं मिलितोभयप्रसञ्जनं च तद्व्याप्यधर्मग्रहाधीनं तथाच तादृशव्याप्यप्रमाया व्यापकप्रमाध्रौव्ये क्व विरोधस्तदप्रमितौ च नापादन-मपीत्याह—। [c] "प्रसञ्जकस्ये"ति ।

मू० [a] एकैकमव्याप्याभ्यां पृथक् पृथक् तथापादनम् ? *—इति चेन्न, [b] एकैकमव्याघातात् * [c] अर्थाद्द्वयं स्यादिति चेत् ? *— [d] अर्थापत्त्यर्थत्वेनैवा(१)व्याघातात् [e] अर्थादा-पादनं न साधनम् ? *—इति चेन्न, [f] मिथोविरोधित्वेन तर्काभासत्वापत्तेः [g] इष्टापादनाच्च [h] *—मिथो व्याघातात् कथं तथा स्यादिति ? *—तन्न, [i] तद्द्वयधर्मैकत्वाद्व्याघा-तापत्तेः धर्मिणिप्रमापेक्षायामव्याघातात् ॥

टी० ॥ तदुभयं विरोधिद्वयं मिलितं नापाद्यं किन्तु प्रत्येकमित्या-ह—। [a] "एकैके"ति । तथाच व्याघातो नापादितः स्यादित्याह—। [b] "ने"ति । एकैकापादनमेव मिलितापादनव्याघातापत्तिपर्यवसन्नमित्या-ह—। [c] "अर्थादि"ति । एकैकापादने अर्थाच्चेद्व्याघातः सिद्धस्तदार्थापत्ति-प्रमाणसिद्धतया विरोधिनोः सामानाधिकरण्यस्य व्याघातरूपत्वाऽसम्भ-व इत्याह—। [d] "अर्थापत्तौ"ति । इयमर्थापत्तिर्न विरोधिद्वयसामानाधिकर-ण्यसाधिका किन्तु तदापादिका तथाच न विरोधः प्रामाणिक इत्या-ह—। [e] "अर्थादि"ति । आपाद्यतापि प्रमितस्यैवेति दोषे सत्येवाह—। [f] "ने"ति । एकत्र मिथो विरुद्धव्याप्यद्वयाभावादुभयापादनमसम्भवि कथ-ञ्चित्पराभ्युपगममात्रबलेनाप्यापादनं न सम्भवति तर्काभासत्वात्तस्यापा-दनस्येत्यर्थः एकैकापादनं च नानिष्टमतोऽप्यसौ तर्काभास इत्याह—। [g] "इष्टे"ति । एकैकापादनं विरुद्धद्वयापादनपर्यवसन्नमतः कथमिष्टापा-दनमित्याह—। [h] "मिथ" इति । तर्ह्येकं धर्मं विरुद्धधर्मद्वयालिङ्गितं स्यादि-त्यापादनं पर्यवसन्नं तच्च विरुद्धधर्मद्वयालिङ्गितत्वप्रमितावेव स्यादिति त्वदभिमतव्याघातस्याव्याघातत्वमित्याह—। [i] "तद्द्वये"ति ॥

(१) अर्थापत्ति प्रमाणसिद्धत्वे नैवेत्यर्थः ।

मू० * [a]"एवमादीनां तु दोषाणां परं प्रत्यभिधाने तवापि सर्वमिदं सुवचम्?*–इति चेन्न, [b]तत्राप्यन्यत्र दोषो मयापाद्यते इति प्रतिबन्दिं मुञ्चतः [c]किं परपक्षे दोषादानमात्रं विवक्षितमुत यस्तत्र त्वया समाधिरभिधेयः स मयापीत्यभिप्रायात्स्वपक्षे समाधिः न तावदाद्यः [d]अप्रस्तुतत्वात् [e]परोक्तदोषानुधारे तावतैव कथाया(१)स्तदर्द्धस्य वा पर्यवसानात् ।

टी० ॥ ननु विरोधव्याघातादिपदं यदि सार्थकं तदा तत्खण्डनं तवानवकाशं निरर्थकं चेत्तदा त्वयैव सार्थकपदकदम्बसमभिव्याहारेण तदुच्चारणमनुपपन्नं किञ्च प्रतीतो व्याघातः खण्ड्यते अप्रतीतो वा आद्येपि प्रमितोन्यथा वा प्रथमे खण्डनव्याघातः द्वितीये भ्रान्तेरभ्रान्तिपूर्वकतया खण्डनव्याघात एव तृतीयेपि खण्डनव्याघातः नह्यप्रतीयमानमेव दोषवत्तया ज्ञाप्यते अशक्यत्वादिति दुरुत्तरेयं प्रतिबन्दिरिति शङ्कते–। [a]"एवमि"ति । इदानीं प्रतिबन्दिखण्डनमुपक्रमते–। [b]"तत्रापी"ति । प्रतिबन्दिफलं पृच्छति–। "कि[c]मि"ति । परपक्षे दोषाभिधानमात्रं प्रतिबन्दिफलं तुल्यन्यायतया परोक्तदोषोद्धारो वेत्यर्थः ॥ [d]"अप्रस्तुत्वादि"ति । परोक्तं दोषमनुद्धृत्य परस्मै दोषाभिधानस्याप्राप्तकालत्वात् आकाङ्क्षितक्रमविपर्ययरूपत्वादित्यर्थः अप्रस्तुतत्वमर्थान्तरत्वं तु प्रकृते न सम्भवति प्रकृतदूषणाङ्गस्यैवाभिधानात् अन्यथावयवविपर्यासवचनमप्यर्थान्तरमेव स्यात् [e]"परोक्ते"ति । परोक्तदोषानुद्धारे हि तेनैव निग्रहेण निगृहीतो वादी कथान्तरप्रक्रमं नासादयत्येव तथाच वितण्डयास्तावतैव पर्यवसानं जल्पस्य वादस्य चार्द्धं परपक्षदूषणं पर्यवसन्नं स्वपक्षस्थापनरूपमर्द्धमवशिष्यते वयं च वैतण्डिका इति जितमस्माभिस्तव प्रतिबन्दिग्रहणमात्रेणेत्यर्थः कथापदमिह वितण्डामात्रपरं

(१) कथायाः=वितण्डाकथायाः, तदर्द्धस्य=जल्पवादात्मककथार्द्धस्य।

मू० [a] निग्रहापरिहारावधित्वात्तयोः द्वितीये तु [b] स एवाभिधीयतां [c] का नोहानिः * [d] भवांस्तावदभिधत्तां कस्तत्र समाधिः ततो मयाप्यभिधेयम् ? *—इति चेन्न, [e] मया तदभिधानस्य साम्प्रतमप्रस्तुतत्वा [f] न्नहि मया स्वपक्षसाधनं त्वया च दूषणं प्रकृते वक्तुमारब्धमस्ति किन्तु त्वया स्वपक्षो निर्वाह्यस्तद्दूषणं च मयाभिधानीयमिति कथा प्रस्तुता वर्त्तते ईदृशि च कथाविभागे मत्पक्षे समाधानाय मां पर्यनुयोक्तुं कुतोऽधिकारो भवतः * [g] अथ विशेषतस्त [h] न्निष्टङ्कणे किं प्रयोजनमस्ति तावदेतादृशिचोद्ये परिहारो यतस्त्वयापि स्वपक्षे सौ स्वीकार्य इत्याशयस्ते ? *—सोऽपि न युक्तः ।

टी० ॥ [a] "निग्रहे"ति । तयोः कथातदङ्गयोर्निग्रहापरिहारमात्रावधित्वादित्यर्थः ॥ [b] "स एवे"ति । स्वपक्षसमाधिरेवेत्यर्थः [c] "का नोहानि-रि"ति । प्रकृतदोषे त्वया समाहितेऽपि खण्डनान्तरस्य मयावतारणीयत्वात् समाधेरेव वा पुनराभासीकरिष्यमाणत्वादित्यर्थः प्राथमिक(१)समाध्यभिधानायासलाघवमेवापाततः प्रतिवन्दिफलमिति शङ्कते—। "भवानि"ति । भवेदेवं यदि मम तदभिधानाधिकारः स्यात्त्वेवमित्याह—। [e] "मये"ति । ननु तुल्य एवायं दोष इति प्रतिबन्दिरहस्यं तथाच त्वया कथं न समाधेयमित्यत आह—। [f] "नही"ति । आकाङ्क्षाक्रमेणैवं कथायां साधनदूषणयोरभिधानमुचितं तथाच मम तद्दोषसमाधानं न स्थेयानुविधेयाकाङ्क्षितमित्यर्थः ननु प्रतिबन्दिदानेन त्वयि समाधानभारं विन्यस्य मया स्वदोषः समाहितप्राय एव स्वपक्षपक्षपातेनापि तद्दोषसमाधित्सायास्त्वावश्यकत्वादित्याह—। [g] "अथे"ति ॥ [h] "तन्निष्टङ्कणे" इति । अस्यां कथायामयं दोषस्तवैव समाधेयो न ममापीति निष्टङ्कणे इत्यर्थः ॥ (शेषमग्रे)

(१) प्राथमिकस्य त्वदुक्तस्य समाधेर्मयाऽभिधाने कृते आयासलाघवमित्यर्थः ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी।

(Continued from page 492. VOL. XI.)

"हलन्ताच्च" ॥ 'समीपवचनोऽन्तशब्द इति'। अवयववचनस्तु न भवति धातावन्यपदार्थे 'येन विधिस्तदन्तस्ये'त्येव तदन्तविधेः सिद्धत्वात्, इकस्त्वन्यपदार्थत्वं नैव सम्भवति, नहि वर्णो वर्णान्तरस्यावयव उपपद्यते 'हल् चासावन्तश्चेति'। कर्मधारयं दर्शयति, निपातनाद्विशेषणस्य परनिपातस्तत्र च कस्मान्नो हलित्यपेक्षायामिक इति पञ्चम्यन्तं संनिहितं षष्ठ्यन्तं विपरिणम्यत इत्याह। 'इगन्ताद्धिति'। इकमपेक्षमाणस्याप्यन्तशब्दस्य नित्यसापेक्षत्वात् सूत्रे कर्मधारयः, बहुव्रीहौ तु धातोरन्यपदार्थत्वं नैव सम्भवति, अन्तशब्दो हि नियतदे[1]शमेव समीपमाचष्टे परं नाम न समीपमात्रं न च धातोः परसमीपावस्थिते हलि ततः परः सन्सम्भवति, इकि त्वन्यपदार्थे यस्येकः परसमीपे हल् न तस्यानन्तरः सन् सम्भवतीत्येकेन हला व्यवधाने विज्ञायेतेति धिप्सतीत्यत्र न स्याद्, हलिति जातिग्रहणात् सिद्धावपि प्रतिपत्तिगौरवप्रसङ्गः। ननु च माभूदन्तग्रहणं हल इत्येवास्तु इका हल्विशेष्यते तेन च धातुः, इकः परो यो हल् तदन्ताद्धातोरिति। न चैवमत्र शङ्कनीयमसत्यन्तग्रहणे इग्वतो हलन्तादिति विज्ञायेत ततश्च यजेः सन् 'सन्यतः' यियक्षतइत्यत्रापि कित्त्वे सति संप्रसारणं प्राप्नोतीति। नहीक्छब्दस्य मुख्ये ऽर्थे सम्भवति तद्वति वृत्तिर्युक्ता, किं च इग्वत इत्यस्य व्यावर्त्यमपि न सम्भवति यायज्यतेः सनि यायजिषतइत्यत्र सत्व झलादिस्तस्मादन्तग्रहणं चिन्त्यप्रयोजनम्, इह धीप्सतीति य इक्समीपे हल् नकारो न ततः परः सन्, यतश्च परः सन् भकारात् न स इक्समीप इति कित्त्वं न स्यादित्यत आह। 'दम्भेरिति'। दम्भेरपि परस्य सनः कित्त्वं सिद्धं, कुतः, हल्ग्रहणस्य जातिवाचकत्वात्, तत्प्रयोजक इतिवत्समासः, जातिवाची हल्शब्दः एकैव च जातिर्नकारभकारयोः

१ देशस्य समीपवचनमाचष्टे इति ३ पाठः।

व्यक्तिद्वारकं च जातेरिक्समीपत्वं तदपेक्षयात्र सनः परत्वं नकारव्यक्तिरिक्समीपे वर्त्तत इति जातिरपि वर्त्तते भकारव्यक्तेः परः सुचिति जातेरपि परः, विपर्ययस्तु सर्वापि शास्त्रेणानाश्रितत्वादकिं चित्करः, भकारव्यक्तिरिक्समीपे न वर्त्ततइति जातिरपि न वर्त्तते नकारव्यक्तेः परः सच भवतीति जातेरपि परो न भवतीति । 'धीप्सतीति' । 'दम्भ इच्च' किस्वादुपधालोपः, 'एकाचो बशो भष् झषन्तस्य स्ध्वो' रिति भष्भावः, द्विर्वचनम् 'अत्र लोपो ऽभ्यासस्य'

"लिङ्सिचावात्मनेपदेषु" ॥ 'आत्मनेपदेषु परत इति' । एतत्सिच एव विशेषणं न लिङ्परस्मैपदस्य झल्ग्रहणानुवृत्त्यैव व्यावर्त्तितत्वात् । 'भित्सीष्टेति' । भिदिः स्वरितेत् 'लिङः सीयुट्' 'सुट् तिथोः' । 'भुत्सीष्टेति' । बुधिरनुदात्तेत् पूर्ववद् भष् । 'अबुद्धेति' । 'च्लेः सिच्' 'झलो झलि' 'झषस्तथोर्धो धः' 'झलां जश् झशी' ति धकारस्य दकारः । 'यक्षीष्टेति' । स्वरितेत्त्वादात्मनेपदं व्रश्चादिषत्वं, 'षढोः कः सि' । 'अयाक्षीदिति' । अमागमे यणि च कृते वदव्रजेत्यकारस्य वृद्धिः ॥

"उश्च" ॥ लिङ्सिज्भ्यामाक्षिप्तस्य धातोरिरित्यनेन[१] तदन्तविधिरित्याह । 'ऋवर्णान्तादिति' । ऋ गतावित्यस्य तु ग्रहणं न भवति 'सर्त्तिशास्त्यर्त्तिभ्यश्चे' त्यङो विधानेन सिचो ऽसम्भवात् । नन्वङ्विधौ कर्त्तरीत्यनुवृत्तेः कर्म्मणि सिजपि सम्भवति, एवं तर्हि शैलीयमाचार्यस्य यत्रास्य धातोर्ग्रहणमिच्छति तत्र श्तिपा निर्देशं करोति 'अर्त्तिपिपर्त्योश्च' 'सर्त्तिशास्त्यर्तिभ्यश्च' 'गुणोर्त्तिसंयोगाद्यो' रिति । नैतदस्ति । 'स्मिपूङ्रञ्ज्वशां सनि' 'ऋच्छत्यृता' मिति स्वरूपेणापि ग्रहणं दृष्टम्, एवं तर्हि व्याप्तिन्यायाद्गुर्णग्रहणम् । 'अकृतेति' । 'ह्रस्वादङ्गा' दिति सिचो लोपः । 'अवरिष्टेति' । 'लिङ्सिचोरात्मनेदेष्वि' तीट् ॥

"वा गमः" । 'सङ्गसीष्टेति' । समो गम्यृच्छीत्यात्मनेपदम् ॥

१ विशेषणादित्यधिकं २ पुस्तके ।

"हनः सिच्" ॥ सेत्वाविर्देशस्याल्लोपो न कृतः । 'आहसतेति' । 'आङो यमहन' इत्यात्मनेपद 'मात्मनेपदेष्वनत' इत्यदादेशः । 'सिज्यहणं लिङ्गृह्यर्थमिति' । प्रकृतं सिज्यहणं लिङ्संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः । ननु च 'हनो वध लिङी'ति लिङि वधादेशो नित्यः, घानिबोष्टेति विप्रबद्दिटि वधादेशाभावेप्यझलादित्वादप्रसङ्गस्तत् किं लिङ्गृह्यस्येत्यत्राह । 'उत्तरत्रेति' । उत्तरार्थमवश्यं सिज्यहणं कर्त्तव्यं तदिहैव क्रियते न्यायानुसरणे प्रतिपत्तिगौरवं माभूदित्येवमर्थमित्यर्थः । 'आत्मनेपदयहणमित्यादि' । 'यमः परस्मैपदेषु' यमरमैनमातामिति सगिटौ भवत इति झलादिः सिज्ञ भवति, उपयमने तु नित्यमात्मनेपदं स्याच्छ्वोः परस्मैपदेषु सिचो लुग् भवति 'वा गम' इत्यत्रापि परस्मैपदेष्वङ् भवति लिङि यासुट्निवृत्त्यर्थमेव च झल्यहणमनुवर्त्यम्, एवमस्मिन्नप्यघानिषातामिति चिण्वद्दिटि माभूदिति, तदेवं 'वा गम' इत्यारभ्यात्मनेपदयहणं चिन्त्यप्रयोजनं, किमर्थं पुनरिदं यावताऽऽत्मनेपदं ङिति सिजन्तस्याङ्गस्यानिदितामित्येव नलोपः सिद्धः, उच्चारणार्थो हि सिच इकारो नानुबन्धः, ज्ञापनार्थम् । एतज् ज्ञापयति न सिजन्तस्योपधालोपो भवतीति तेनामंस्तेति सिद्धं भवति । ननु च सिच्यनुदात्तोपदेशेति लोपो यथा स्याद् आत्मनेपदे उपधालोपो माभूदित्येवमर्थमि[1]दं स्यात्, कः पुनरत्र विशेषः सिचि वा लोपो भवत्वात्मनेपदे वा, अयमस्ति विशेषः, आत्मनेपदे लोपे सति 'अतो लोपः' प्राप्नोति सिचि तु न, आभीयस्यानुनासिकलोपस्यासिद्धत्वात् । यद्यपि उपधालोपोप्याभीयस्तथापि व्याश्रयत्वादसिद्धत्वं न प्राप्नोति आत्मनेपदउपधालोपः सिच्यतो लोपः, यद्येवं बहिरङ्ग उपधालोपो बहिर्भूतात्मनेपदापेक्षत्वाद् अन्तरङ्गोल्लोपोऽन्तर्भूतसिजपेक्षत्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे' । ननु चैषा परिभाषाप्या भाच्छास्त्रीया 'वाह ऊठ्' इत्यत्र ज्ञापितेति तस्यामन्तरङ्गबहिरङ्गयोरसिद्धत्वाद् यथा पपुष इत्यादावाल्लोपादिषु वसोः संप्रसारणस्यासिद्धत्वं न भवति तथात्रापि न स्यात्ततश्चातो लोपः स्या-

[1] मेतदिति पाठः ३ ।

दिति सिच्येवानुनासिकलोप एषितव्य इति वक्तव्यमेव सिचः कित्त्वमिति ज्ञापकानुपपत्तेरमंस्तेत्यादावुपधालोपः स्यात्, तस्मात् सिच इकारो ऽनु-बन्ध एव नोच्चारणार्थस्तेनानिदितामिति प्रतिषेधादुपधालोपाभावः। इदितो नुमित्यत्र धातुग्रहणं सिजन्तनिवृत्त्यर्थमेव क्रियते न धातूपदेशावस्था-यामेव नुम् यथा स्यादित्येवमर्थं, कुण्डेत्यादिसिद्धये च यत्नान्तरमास्थेयमिति केचित्। नेति वयम्। उपधालोपेपि नातो लोपेन भवितव्यं किं कारणमुप-देशइति वर्त्तते उपदेशे यो ऽकारान्तस्तस्य लोप, इहापि तर्हि न प्राप्नोति 'धिन्विकृण्व्योर च' धिनुतः कृणुतः, नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते उपदेशे या प्रकृतिरकारान्तेति किं तर्ह्यार्धधातुकमभिसंबध्यते आर्द्धधा-तुकोपदेशे यदकारान्तं तस्येति, तदेवमुपधालोपेपि न कश्चिद्दोष इति ज्ञा-पकार्थमेव वचनमिति सर्वमनाकुलम्॥

"यमो गन्धने"॥ ननु यमिरुपरमे पठ्यते, कथं गन्धने वर्त्तत इत्यत आह। 'अनेकार्थत्वादिति'। 'उदायतेति'। परावद्यं स्वयं प्रकाशित-वानित्यर्थः। 'उदायंस्त पादमिति'। आकृष्टवानित्यर्थः॥

"स्थाघ्वोरिच्च"॥ चकारेण कित्त्वं समुच्चीयतइत्याह। 'सिच्च किदिति'। प्रयोजनं गुणो माभूदिति। इत्त्वं तु गुणविधानार्थमेव स्यात् लघुत्वात्। 'उपास्थितेति'। 'उपान्मन्त्रकरणे' 'अकर्मकाच्चे' त्यात्म-नेपदं 'ह्रस्वादङ्गा' दिति सिचो लोपो, न चेत्वं सिचीत्युच्यते किं तर्हि इका-रश्चान्तादेशस्सिच्च किद्भवतीत्येतावत्, तेनेत्वस्यासिन्निमित्तत्वाद् भव-त्येव लोपः। 'इच्चेत्यादि'। तकार इद्यस्य तस्य भावस्तकारेत्वम्, इच्चे-त्यत्र निर्देशे कस्य कार्यस्य सिद्धये इकारस्य तकारेत्त्वं क्रियतइत्यर्थः। 'दीर्घो माभूदिति'। आन्तर्यतः प्राप्नोतीति भावः। 'सतेपि स इति'। इकारविधानेनापि विनेत्यर्थः। कित्त्वे हि घुमास्थादिसूत्रेणैव दीर्घस्सिद्धस्त-स्मादित्त्वविधानसामर्थ्याद् आनन्तरतमोपि ह्रस्व एव भविष्यतीत्यर्थः।' भा-व्यमानो ऽणुसवर्णान् गृह्णाती' त्ययमप्यत्र परिहारः संभवति[१]। 'आनन्तर इति'। असदृशआदेशे क्रियमाणे ह्रस्वइव प्लुतोपि स्यात् स माभूदि-

(१) समर्थनाश्रित्येत्यादिमित्यधिकं ३ पुस्तके।

त्यर्थः.। 'प्लुतश्चेति'। अनेन तपरत्वं प्रत्याख्यायते। यद्यनेन प्लुतो विधीयेत तदा यत्र विषये 'ऽनन्त्यस्यापि प्रश्नाख्यानयो'रित्यादिना प्लुतो विहितस्तत्राप्यनेनैव स्यात् अस्मिन्कर्त्तव्ये तस्यासिद्धत्वादिति पक्षे ऽनुवाददोषः प्राप्नोति ततो ह्रस्व एव भविष्यति। अन्ये तु तपरत्वमनेन समर्थितं मन्यन्ते ऽसति तकारेऽआन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति। ननु चोक्तं सिद्धो ऽत्र दीर्घ इति सिद्धे सत्यारम्भो नियमार्थः स्यात् दीर्घ एव यथा स्यात् प्लुतो माभूदिति तदिदमुक्तम्। 'अनन्तरइत्यादिना'। घुमास्थादिसूत्रेणानेन वा दीर्घे सति यद्यपि विशेषो नास्ति तथाप्यनन्तरे ऽप्रिक्रमाणेपि विशेषे प्लुतो माभूदिति दीर्घः स्यादित्यर्थः, माभूद् इति चेत् तत्राह। 'प्लुतश्चेति'। स चासति तपरत्वे न प्राप्नोति सति तु तस्मिन् दीर्घस्याप्रसङ्गाद्विधिरेव संपद्यतइति स्वविषये प्लुतो न व्यावर्त्यते तदेवमन्यत्र भिन्नकालनिवृत्त्यर्थं तपरकरणमिह तु दीर्घनिवृत्त्यर्थं प्लुतप्रवृत्त्यर्थं च वस्तुबलात्सम[1]पादि॥

"न क्त्वा सेट्"॥ 'न किद्भवतीति'। कित्कार्यं न करोतीत्यर्थः। न पुनः ककारस्येत्संज्ञाभावात् कित्त्वं भवतीति प्रकृतो हि किच्छब्दः कित्कार्यकारिणि वर्ततइति तदर्थस्यैव निषेधो युक्तो देवित्वेत्यादौ गुणप्रतिषेधाख्यं कित्कार्यं न भवतीति। 'निगृहीतिरिति'। अत्र तितुत्रेतीट्प्रतिषेधो न भवति तितुत्रेष्वग्रहादीनामिति वचनात्। 'निकुचितिरिति'। कुञ्च् कौटिल्याल्पीभावयोः, एषूदाहरणेषु संप्रसारणं गुणप्रतिषेध उपधालोपश्च कित्त्वाद्भवन्ति। 'न सेडित्यादि'। पूर्वार्द्धमेव यन्थ उत्तरार्द्धाच्च नेत्यपकृष्यते न सेडित्येतावतापि योगेनाकित्त्वे कृते गुधितो गुधितवानित्यत्र निष्ठायामवधारणाद्विधमात्र भविष्यति, 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृष' इति नियमः शीङादिभ्य एव परा निष्ठा न किदिति, विपरीतस्तु नियमो निष्ठैवेति व्याख्यानाच्च भवति। लिटि तर्हि प्रतिषेधः स्यात् ततश्च जगिमव जगिमम गमहनेत्युपधालोपो न स्याद् अत आह। 'ज्ञापकादिति'। पूर्वाचार्यप्रसिद्ध्या परोक्षे लिडुच्यते। यथा भव-

(१) संपन्नमिति पा॰ ३।

न्त्री लट्,श्वस्तनी लुट्, किं ज्ञापकमित्यत आह । 'सनीति' । 'इको झ-
लि'त्यत्र झल्ग्रहणस्यैतत्प्रयोजनं शिशयिषतइत्यत्र माभूदिति, यदि च न
'सेडि'ति प्रतिषेध आतिदेशिकस्यापि कित्त्वस्य स्याद् झल्ग्रहणमनर्थकं स्यात्
प्राप्नोत्वत्र कित्त्वं न सेडिति प्रतिषेधो भविष्यति, तदेतद् झल्ग्रहणमैाप-
देशिकस्य कित्त्वस्यायं प्रतिषेधो नातिदेशिकस्येत्यस्यार्थस्य ज्ञापकं विदुः ।
ननु चोत्तरार्थं झल्ग्रहणं स्याच्छ्रोरित्त्वं झलादो यथा स्यात् चिचरि-
षतिट माभूदिति उपास्थायिषाताम्, अत्र हि उपास्थासृआतामिति
स्थिते इत्त्वं च प्राप्नोति चिण्वद्भावश्च, परत्वाच्चिण्वद्भावे युक्च प्राप्नोति
वृद्धिश्च, अपवादत्वाद्युकि कृते यकारस्येत्वप्रसङ्गः, न च पुनर्वृद्धिर्लभ्यते
पूर्वमेव युक्ता बाधितत्वात् तस्मादुत्तरार्थं झल्ग्रहणम्, नैतदस्ति ।
यस्मादित्वं कित्त्वसंयोगेनोच्यते न चात्र कित्त्वमस्ति न सेडिति प्रतिषेधात्
तद्यत्रास्यां दशायां झल्ग्रहणस्य ज्ञापकत्वं स्थितमित्यातिदेशिकस्यापि
कित्त्वस्यायं प्रतिषेधो भवति । 'रेण तुल्यं सुधीवनीति' । शोभना
धीवानो ऽस्याः सुधीवा स्त्री 'अनो बहुव्रीहे'रिति प्रकृतस्य ङीपो निषेधे सति
'संनियोगशिष्टानामन्यतराभावे उभयोरप्यभाव' इति यथा रेफो न भवति
तद्वदिहापीत्यर्थः । 'वस्वर्थमिति' । अर्थशब्दो निवृत्तो जग्मिवानित्यत्र
क्रसोः कित्त्वप्रतिषेधे माभूदित्येवमर्थं तर्हि क्त्वाग्रहणमित्यर्थः । दूष-
यति । 'किदतिदेशादिति' । सिद्धमिति शेषः । अस्त्वत्रोपदेशिकस्य कि-
त्त्वस्य प्रतिषेध आतिदेशिकं कित्त्वं भविष्यति, यत्र तर्हि तत्प्रतिषिध्यते
संयोगान्तेष्वञ्जेः, आञ्जिवान् अत्र हि नलोपे कृते द्विर्वचनएकादेशे च
'वस्वेकाजाद्घसा'मितीडागमस्तत्र कृते कित्त्वप्रतिषेधाद् नलोपनिवृत्तो
द्विहल्त्वात् नुटि सत्येकाच्त्वाभावादिण्निवृत्तो कित्त्वनलोपादीनां चक्र-
कप्रसङ्गः, एवं तर्हि छान्दसः क्वसुः, लिट् छन्दसि सार्वधातुकमपि भवति
'सार्वधातुकमपिद्'ति ङित्त्वं ङितीत्युपधालोपः, न च संयोगान्तेषु कित्त्व-
ङित्त्वयोः कश्चिद्विशेषस्तस्माद्वस्वर्थमपि क्त्वाग्रहणं न भवति । एवं
तर्हि 'निगृहीतिः प्रयोजनम्' । क्तिन् क्तिचिन्नवृत्त्यर्थं क्त्वाग्रहणमित्यर्थः । यदि
पुनरुपरिष्टाद्योगविभागः क्रियते, न सेयिनष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः,

मृषस्तितिक्षायाम्, उदुपधाद्भावादिकर्मणोरन्यतरस्यां, ततः पूङश्च । पूङश्च परा निष्ठा सेण्न किद्भवति, ततः क्त्वा च, क्त्वा च सेट् किन्न भवति अत्र पूङ इति निवृत्तमिति, ततः क्त्वा ग्रहणं शक्यमकर्तुम् ॥

"निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" ॥ ञिक्ष्विदा स्नेहनमोचनयो-रित्यस्य भौवादिकस्य ञिद्धातोर्ग्रहणं न तु ष्विदा गात्रप्रक्षरण इति दैवा-दिकस्य ञिदिः साहचर्यात्, अस्य चाञित्त्वात्, ञिक्ष्विदा स्नेहनमोचनयो-रिति दैवादिकस्य ग्रहणं न तु ञिक्ष्विदा अव्यक्ते शब्दे इत्यस्य भौवा-दिकस्य मिदिना साहचर्यात्, ञिधृषा प्रागल्भ्ये । 'शयितवानिति' । अत्व-सन्तस्येति दीर्घः । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवति स एव धातुर्द्विरुच्यत इति कृत्वा, तत्रापवादः स्मर्यते ।

श्तिपा शपा ऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं किञ्चित्पञ्चैतानि न यङ्लुकि ॥

इति । तदिह शीङो ऽनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः शेश्यितः शेश्यितवान्, एरनेकाच इति यण् ॥

'मृषस्तितिक्षायाम्' ॥ इदमेव तितिक्षाग्रहणं ज्ञापकमनेकार्था धातव इति, अन्यथा मृषिस्तितिक्षायामेव पठ्यत इति तदपार्थकं स्यात् । 'अपमृषितमिति' । अविस्पष्टमित्यर्थः ॥

"उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" ॥ 'द्युतितमिति' । द्युत दीप्तौ नपुंसके भावे क्तः । 'प्रद्युतित इति' । 'आदिकर्मणि क्तः कर्त्तरि च'-ति कर्त्तरि क्तः । 'मुदितमिति' । मुदी हर्षे । 'लिखितमिति' । शब्वि-करणानामेवेति न तावत् स्थितमित्यशब्विकरणोपि लिखिः प्रत्युदाहृतः, एवं प्रभुक्त इति । क्ष्विते तस्मिन् खिटिक्रिटी भौवादी क्रुशिश्च, खिटितं किटितं क्रुष्टमिति प्रत्युदाहर्तव्यम् ॥

"पूङः क्त्वा च" ॥ इहान्यतरस्यांग्रहणानुवृत्तौ सेडित्यस्य च निवृत्तौ इड्विधौ पूङश्चेति शक्यमकर्तुम् । उत्तरसूत्रे च वाग्रहणं, कथम्, अनिटोरेव क्त्वानिष्ठयोरनेन कित्वं विकल्प्यते, तत्र यदा कित्त्वं तदा

'श्र्युकः किती' ति प्रतिषेधात् पूतः पूतवान् पूत्वेति, अकित्वपक्षे त्विटि पवितः पवितवान् पवित्वेति भवति, सेड्ग्रहणं तु विच्छिन्द्यात्, तस्मात्सेडित्यस्मिन्नुत्तरार्थमनुवर्तमाने पूङ्श्चेत्यारभ्य उत्तरत्र वाग्रहणमिह नित्यतासिद्ध्यर्थं, पुवित्वेति पक्षे माभूत्तदाह। 'अन्यतरस्यां ग्रहणं न स्वर्यते उत्तरसूत्रे पुनर्वावचनादिति'। 'न सेडिति वर्तते इति'। ननु पूङः परयोः क्त्वानिष्ठयोरिटा न भवितव्यं 'श्र्युकः किती' ति प्रतिषेधादत आह। 'पूङश्चेति'। 'पूङः परो निष्ठाप्रत्यय इत्यादि'। किं पुनः कारणं साक्षात् श्रुतं क्त्वाप्रत्ययमपहायानुवृत्तस्य निष्ठाप्रत्ययस्यान्वयो दर्शित उदाहरणं च, अत आह। 'क्त्वाप्रत्ययस्येति'। एतदेव द्रढयति। 'तथा चोक्तमिति'। इडाद्योः क्त्वानिष्ठयोर्नित्यमकित्त्वमिष्यते ततश्च क्त्वाग्रहणमुत्तरार्थमिति भारद्वाजीयैरेवमुक्तमुत्तरार्थमपि तदिहैव कर्तव्यं सेडित्यनेन सम्बन्धार्थम्, अन्यथा निष्ठानिवृत्तौ तत्सम्बद्धं सेडित्येतदपि निवर्तेत। अनुबन्धोच्चारणं विस्पष्टार्थं न पूञो निवृत्त्यर्थम् इडिविधौ पूङ एव ग्रहणात् पूञः क्त्वानिष्ठयोः इडभावा,चापि यङ्लुकि निवृत्त्यर्थम्, इडिधावनुबन्धनिर्देशेन यङ्लुक्यपि न क्त्वा सेडिति प्रतिषेधस्य स्थितत्वात्। न च क्त्वाग्रहणसामर्थ्यात्तस्यापि प्रतिषेध,स्तस्योत्तरत्राप्युपयोगसम्भवात्। अनुबन्धनिर्देशस्य च निष्ठायां चरितार्थत्वात्। एवं च क्त्वाग्रहणमुत्तरार्थमिति वृत्तिग्रन्थस्याविरोधस्तेन पोपुवितवानिति निष्ठायां भवति क्त्वायां तु गुणे पोपवित्वेति भवति॥

"नोपधात्थफान्ताद्वा"॥ 'निष्ठेति निवृत्तमिति'। पूर्वसूत्रे चानुकृष्टत्वात्। 'गुफित्वेति'। गुफ गुम्फ ग्रन्थने। 'रेफित्वेति'। रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। अथैर्तद्विकल्पाभावेपि रलो व्युपधादिति विकल्पोत्र कस्मान्न भवति नोपधग्रहणसामर्थ्यात्। ननु ऋकारोपधो नोपधग्रहणस्य व्यावर्त्यं सम्भवति ऋफ हिंसायाम् अर्फित्वेति, नैतदस्ति। त्रैशब्द्यं ह्यनयोर्धात्वोर्भवति अर्फित्वा ऋफित्वा ऋम्फित्वेति तच्च सत्यमपि नोपधग्रहणे भवत्येव'। सति तावदनोपधस्य 'न क्त्वा सेडि' ति निषेधे सति अर्फित्वेति भवति, नोपधस्य त्वस्मिन्विकल्पे ऋफित्वेति। असत्यपि

नोपधग्रहणे सर्वत्रास्मिन्विकल्पे प्रवृत्तेपीदमेव रूपत्रयं भवति अन्तग्रहणं ज्ञापनार्थं यत्कमन्तरेणास्मिन्प्रकरणे न तदन्तविधिर्भवतीति, तेनोत्तरसूत्र-ऋत इति धातुर्गृह्यते न ऋदन्तः ॥

"वञ्चिलुञ्च्यृतश्च" ॥ वञ्चु गतौ भौवादिः, वञ्चु प्रलम्भने चुरादिः, सोपि गृह्यते अनित्यण्यन्ताश्चुरादय इति । लुञ्च अपनयने, ऋतिः सौत्रो धातुः 'ऋतेरीयङि' ति स च घृणायां वर्त्तते ॥

"तृषिमृषिकृशेः काश्यपस्य" ॥ ञितृषा पिपासायां, मृष तितिक्षायाम्, कृश तनूकरणे । 'काश्यपग्रहणं पूजार्थमिति' । काश्यपस्यैतद्विधं विज्ञानं नान्येषामित्यसाधारणज्ञानोद्भावनमाचार्यस्य पूजाद्वारेण शास्त्रस्यापि पारम्पर्यप्रतिपादनेन प्रामाण्यप्रतिपादनात् पूजा भवति ॥

"रलो व्युपधाद्धलादेः संश्च" ॥ क्त्वाप्रत्ययस्य 'न क्त्वा सेडिति' कित्त्वे प्रतिषिद्धे सनोप्यकित्त्वे स्वतः सिद्धउभयत्र विधिमुखेनेदं प्रवर्त्तत-इत्याह । 'वा कितौ भवत इति' । 'द्विद्योतिषतइति' । 'द्युतिस्वाप्योः संप्रसारणम्' । 'एषिषिषतीति' । इटि कृते 'अजादेर्द्वितीयस्य' ॥

"ऊकालोज्झ्रस्वदीर्घप्लुतः" ॥ ऊकालो यस्य स ऊकालः 'तपरस्तत्कालस्ये' तिवन्निर्देशः समर्थनीयः, एतच्च संज्ञिनो विशेषणं तत्र च ऊ इत्येकस्यैव शब्दस्योच्चारणाद्विशेषणस्यैकत्वात् संज्ञाप्येकैवेति यश्चोदयेत् तं प्रत्याह । 'ऊ इति त्रयाणामित्यादि' । प्रश्लेषणं प्रश्लिष्टं, तेन निर्देशः प्रश्लिष्टनिर्देशः । तेन विशेषणत्रयपरिच्छिन्नास्त्रयः संज्ञिन इत्यर्थः । प्रश्लेषणे प्रमाणमाह । 'ह्रस्वेति' । ह्रस्वदीर्घप्लुत इति न तावदेका संज्ञा गौरवादनावृत्तेश्च, अतस्तिसृणां संज्ञानां द्वन्द्वोयम् । न चैकस्यानेकसंज्ञाकरणे प्रयोजनमस्ति, लुगादिसंज्ञास्वपि तद्भावितत्वेन प्रत्ययादर्शनस्य भेद आश्रितः प्रकारान्तरासम्भवात् इह तु निर्देश एव त्रयाणां सम्भवति तस्मात्संज्ञानां त्रित्वात् संज्ञिनामपि त्रित्वमनुमीयतइति भावः । बहुवचननिरासार्थमेकवद्भाव इत्युक्तं, समाहारद्वन्द्वइत्यर्थः । 'स नपुंसक' मित्येतत्तु न भवतीत्याह । 'पुंलिङ्गनिर्देश इति' । सौत्र इति भावः । प्रश्लेषे क्रममाह । 'उ ऊ ऊ ३ इत्येवं कालइति' । उकारादीनां परिच्छेदको यः

कालो निमेषादिस्तत्काल इत्यर्थः । कुतः पुनरवसितमेष एव क्रम इति आदौ मध्ये वा त्रिमात्रे प्लुताश्रयः प्रकृतिभावः प्राप्नोति, तथा मध्येन्ते वा मात्रिके 'द्वन्द्वे घी' त्येतद्बाध्येतेति चेत्, न । अनेन हि प्लुतसंज्ञा ततश्चादौ मध्ये वा पठितस्य त्रिमात्रस्य प्लुतसंज्ञैव न कुतः प्रकृतिभावः, यदि च मात्रिको मध्येन्ते वा स्याद् ह्रस्वसंज्ञैव न स्यात् कुतो घिसंज्ञा कुतस्तरां पूर्वनिपातः, एवं तर्हि ज्ञापकात्सिद्धं यदयं 'विभाषा पृष्टप्रतिवचने हे' रिति हेः प्लुतं शास्ति तज्ज्ञापयति नान्ते मात्रिक इति, कथं योन्ते स प्लुतः प्लुतस्य प्लुतवचनमनर्थकम्, अनन्तरतमप्लुतार्थमेतत्स्यादिति चेत्, नहि सत्यां गतौ परिभाषा बाध्या । यच्च 'सुपि चे' ति दीर्घत्वं शास्ति तज्ज्ञापयति न मध्ये मात्रिक इति, कथं यो मध्ये स दीर्घो दीर्घस्य दीर्घवचनमनर्थकं, यच्चो 'मध्यादान' इत्योमः प्लुतं शास्ति तज्ज्ञापयति द्विमात्रिको नान्त्य इति, कथं योन्ते स प्लुतः प्लुतस्य प्लुतवचनमनर्थकम् । 'दधि मध्विति' । रूपोदाहरणे, कुमारीत्यादि कार्योदाहरणं, हल्ङ्याब्भ्य इति दीर्घाश्रयः सुलोपो भवति । 'देवदत्त ३ अन्वासीति' । 'अनन्त्यस्यापि प्रश्नाख्यानयो' रिति प्लुतः देवदत्त त्वमत्र भवसीति प्रश्नः, नुशब्दः प्रश्नं द्योतयति, देवदत्तशब्दात्परस्य सोः 'ससजुषो रु' रिति रुत्वम्, अतो रोरप्लुतादित्युत्वे प्रतिषिद्धे 'भोभगोअघोअपूर्वस्य योऽशी' ति यत्वं 'लोपः शाकल्यस्य' । उकारोयमणा तेन द्विमात्रयोरपि ग्रहणाद् ह्रस्वसंज्ञा प्राप्नोति, न च दीर्घप्लुतसंज्ञाभ्यां बाधः, एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशाभ्युपगमाद् अत आह । 'कालग्रहणमिति' । कालग्रहणं तावदुकारादिभिः प्रत्येकमभिसम्बध्यते, उकाल इत्यस्मिन्वाक्ये सत्यपि सवर्णग्रहणे कालशब्दस्य न पुनः प्रत्येकपरिसमाप्तिर्युज्यते कुतः एकस्यैव श्रुतत्वात् द्विमात्रत्रिमात्रौ हि संज्ञित्वेन प्रतीयेते न तु साक्षादुच्चरितौ, एवं चैकत्वाद्ध्रुतग्रीहेरेक एव संज्ञी तत्रैकस्य विरुद्धकालद्वयासम्भवेन सवर्णग्रहणाभावाच्छुत एवोकारः कालविशेषणमिति कालग्रहणं संज्ञिनः परिमाणार्थं, यद्वा ऊ अजित्येव कालार्थो लभ्यते कथ,

मुकारादयोऽच्त्वं न व्यभिचरन्तीति नाच्त्वेन ते विशेष्यन्ते ऽपि तु तैरच्, न चाज्मात्रस्योकारादित्वमुपपद्यतइति सामानाधिकरण्यान्यथानुपपत्त्या तत्सदृशस्याचः प्रतिपत्तिस्तत्र च स्थानसाम्यमसम्भवाच गृह्यते प्रयत्नसाम्यं चाव्यभिचारीति कालसाम्यमेव ग्रहीष्यते नार्थः कालग्रहणेन तत्क्रियते श्रूयमाणेनैव कालं विशेषयितुमिति कालग्रहणं परिमाणार्थम् । 'आलूयेति'। ह्रस्वाश्रयस्तुङ् न भवति। 'तितउच्छत्रमिति'। असत्यज्ग्रहणेऽच्द्वयसमुदायस्य प्रत्येकवर्णकालसंकलनया द्विमात्रत्वाद्दीर्घसंज्ञा स्याद् यस्तु मध्ये द्विमात्राकालः सवर्णकालो न भवतीति समुदायस्य द्विमात्रत्वं न व्याहन्तीति स्यादेव प्रसङ्गः, अज्ग्रहणे तु न भवति अच्समुदायस्यानच्त्वात्, यद्यपि वर्णग्रहणे जातिग्रहणं सा तु जातिरेकैकव्यक्तिव्यङ्ग्या न समुदायव्यङ्ग्या, तेन दीर्घसंज्ञायामभावात् 'दीर्घा' 'त्पदान्ताद्वे' ति तुग्विकल्पो न भवति, न च सत्यपि विकल्पे तेन मुक्ते ह्रस्वाश्रयस्तुग् लभ्यते समुदाये कार्यमारभ्यमाणे ऽवयवानां स्वकार्यप्रत्यव्यापारात् ॥

"अचश्च" ॥ 'इको गुणवृद्धी' इत्यनेन समानमिदम् । स्वसंज्ञया विधाने नियमार्थमित्यत्र युक्तिमाह । 'अजिति वर्त्तनइति' । ततश्च ह्रस्वादिशब्दा इहानुवृत्ता नाचमुपस्थापयन्ति तस्य स्वयमुपस्थानादिति स्वरूपपदार्थका आश्रीयन्ते, तेन ह्रस्व इत्येवं योऽज्विधीयते सोऽचः स्थाने भवतीत्ययमर्थः सम्पद्यते, एवं दीर्घप्लुतयोः। 'द्योरित्यादि'। 'दिव औत्' 'पथिमथ्यृभुक्षामात्' 'त्यदादीनामः' 'दिव उद्' ति औकारादयो न संज्ञया विधीयन्तइति हल एव स्थाने भवन्ति ॥ (शेषमग्रे)

---

## खण्डनखण्डखाद्यम् ।

(*Continued from page* 504. VOL. XI.)

मू० [a] "नहि मत्पक्षे चेत्समाधिरस्ति तावता त्वत्पक्षेपि तेन भवितव्यमित्यत्र प्रमाणमस्ति * [b] साम्यादेवम् ? *—इति चेन्न, [c] वैषम्यस्याभ्युपगमात् [d] यदि . तत्रतमसाधारणं

रूपमादाय मद्दर्शनं प्रतितन्त्रसिद्धान्तं वा तच्च समाधिः स्यादत्र च त्वत्पक्षे पद्भावान्न स्यात्तथा सति साम्यमा-त्रात्कथं समाधिरमात्रत्रापीति निश्चेतुं शक्यते * [e] कोऽसौ तत्र विशेष? *–इति चेन्न, मया साम्प्रतं तदभिधान-स्याप्रस्तुतत्वादित्युक्तत्वात् * [f] चोद्यसाम्यात्समाधिसाम्य-म? *–इति चेन्न, दूष्यगतविशेषभावाभावविशेषितत्वा-दिनापि तद्वैषम्यसम्भवात् ॥

टी० ॥ यद्यावयोः प्रकृतदोषे समाधिसाम्यं स्यात्तदा स्यादप्येवं न त्वेवमित्याह–। [a] "नही"ति । दोषसाम्यमेव समाधिसाम्यमाक्षिपतीत्या-शङ्कते–। [b] "साम्यादि"ति । वैषम्यस्यावश्यकत्वेन बाधादाक्षेप एवायं न सम्भवतीत्याह– [c] "वैषम्यस्ये"ति । तदेवोपपादयति–। [d] "यदी"ति । यथा पक्षेतरे उपाधौ स्वव्याघातकत्वेन दूष्ये बाधस्थले प्रतिवन्दिग्रहे तत्रासाधारणबाधोक्तीतं रूपमादाय([1])यथा वा ज्ञानायाथार्थ्यपक्षेनाश्वा-सप्रसङ्गे मीमांसकेन दोषे दत्ते तावप्यनाश्वासप्रसङ्गस्तुल्य इति प्रतिव-न्दिग्रहे प्रमाण्यस्य स्वतस्त्वं प्रतितन्त्रसिद्धान्तमादाय समाधिर्विषमः एवं सर्वत्रावेयमित्यर्थः ननु तथापि समाधिवैषम्यप्रयोजकविशेषोपदर्शनव्यग्रता महती तवैवेत्याह–। [e] "कोसावि"ति । पूर्वं समाधिगतो विशेष उक्तः सम्प्रति दूष्यगतं विशेषमभिधातुं शङ्कितमपि शङ्कते–। [f] "चोद्यसाम्या-दि"ति । चोद्यमेव न समानं येन समाधिसाम्यमाक्षिप्येतेत्यर्थः ॥

मू० [a] यथा सद्व्यवहारस्य सत्तास्वीकारकत्वे तुल्येपिसत्तायां सत्ताभ्युपगमेनवस्थया तदाश्रये च तदभावेन [b] एवमन्य-त्रापि बहुलं दर्शनादिति [c] किञ्च परोद्भावितमसिद्धा-दिकमपरिहृत्य प्रतिवन्द्या प्रत्यवतिष्ठमानस्य कोऽभिप्रायः

(१) असाधारणं बाधोक्तीतं रूपमादाय समाधिर्विषमः–इत्यन्वयः ।

किं यदिदं दोषतया परेणोद्भावितं तददूषणमदूष्येपि गतत्वात् उत दूषणमपि सन्नोद्भावनीयं तुल्ययोगक्षेमत्वात् यथाहुः [d]तत्रोभयोरित्यादि ।

टी० ॥ दूष्यगतं विशेषं दृष्टान्तेनोपपादयति—। [a]"यथे"ति । सत्तासाधनायोपन्यस्तः सद्व्यवहारः सत्तायामनैकान्तिकत्वेन दूष्यस्तत्रानवस्थाप्रसञ्जकत्वरहितत्वं विशेषस्तादृशः सद्व्यवहारः सत्ताश्रये घटादौ नतु सत्तायामपीत्यर्थः ॥ [b]"एवमि"ति । इहेतिबुद्धिः समवायसाधिका समवाये समवायान्तराभावात् अनैकान्तिकी तत्राप्यनापादकत्वं(१)दूष्यगतो विशेषः यथा घटाभावविशिष्टबुद्धिर्भूतलेऽतिरिक्ताभावसाधिकाप्यभावेऽभावान्तरसाधने कुण्ठा तत्राप्यनवस्थानापादकत्वमेव विशेष इत्याद्यूह्यं प्रतिवन्दिग्रहणस्याभिप्रायविशेषमिदानीं विकल्प्य दूषयति—। [c]"किन्त्वि"ति । परपक्षे दोषाभिधानं वा समाधिसाम्यं वेति पूर्वविकल्पितमिदानीमदूष्ये त्वत्पक्षे गतत्वात् दूषणमेवैतन्न भवति भवदपि वा नोद्भावनीयमिति विकल्प्यते इत्यपौनरुक्त्यं ॥ [d]"यत्रे"ति । यत्रोभयोः समो दोषः परिहारोपि तत्समः नैकः पर्यनुयोज्यः स्यात्तादृश्यर्थविचारणे इति भट्टवार्त्तिकम् ।

मू० नाद्यः [a]यद्यचासिद्धादिलक्षणमस्ति उद्भाविते दूषणे तदा दोषत्वस्याशक्यपरिहारत्वात् [b]परिहारे वा तस्यालक्षणत्वप्रसङ्गात् [c]यद्येतद्दूषणं कथं तद्यदूष्यत्वेन वादीनाङ्गीकृते प्रतिवन्दिस्थाने गतमिति चेत् यद्येतददूषणं [d]कथं दोषलक्षणोपपन्नमित्यचापि दीयतां दृष्टिः [e]नियमाकाभावे तद्धैनदीयदूषणत्वे सन्देहः पर्यवसित इति चेदस्तु दोषसन्देहेपि भवदीयसाधनस्यासाधकत्वं सन्दिग्धासि-

(१) अनापादकत्वम्, अनवस्थानापादकत्वमित्यर्थः ।

इवत्[f] किञ्च यल्लक्षणवतोऽत्र दोषत्वसन्देहस्तल्लक्षणक एवायमन्यत्रापीति तत्राप्यसिद्ध्यादेरदूषणत्वमेव स्यादितीयं प्रतिबन्दीदुरुत्तरा प्रतिबन्दिवादिनोऽपि नापि द्वितीयः ।

टी० ॥ [a] "यदी"ति । दूषणलक्षणयोगित्वे दूषणत्वधीः स्यादित्यर्थः तल्लक्षणाक्रान्तमप्येतददूषणं चेत्तदा लक्षणमतिव्यापकमलक्ष्येऽपि गतत्वादित्याह–। [b] "परिहारे" इति । अदूष्यत्वाभिमतगामित्वादिदं तावददूषणमेव लक्षणं चेदतिव्यापकं तदा तदुपग्राहकं लक्षणान्तरमेव वक्तव्यमिति शङ्कते–। [c] "यदी"ति ॥ [d] "कथमि"ति । लक्षणान्तरप्रणयनमशक्यमिति भावः ॥ अदूष्ये गतत्वाददोषत्वं दोषलक्षणोपपन्नत्वाच्च दोषत्वमिति सत्प्रतिपक्षतया सन्देह इत्याह–। [e] "नियामके"ति । अत्रादोषत्वेऽन्यत्रापीदं दूषणं न स्यादित्यपरां प्रतिबन्दिमापादयति–। [f] "किञ्चे"ति ।

मू०, [a] तथाहि उभयवादिसम्मताद्दूष्यत्वं धूमानुमानादिकं यदि प्रतिबन्दीकरोति(१) परस्तदा तद्दर्शने(२) न्यत्र(३) क्वचिदप्येतदसिध्द्यादिकं नोद्भावनीयं परसाधनेषु तस्यैव धूमानुमानादेः प्रतिबन्द्या भयादित्येषा मयापि सुग्रहैव तं प्रतिप्रतिबन्द्याऽन्यापि शक्यते एव पठितुं यत्रोभयोः समो दोष इत्यादि * [b] अथ यं विशेषमादाय प्रतिबन्दी स्यात्तन्मात्रस्यानुद्भावनं न तु सामान्यत एव ? *–इति चे [c] न्न, तत्र विशेषे प्रतिबन्द्या त्याजितदुष्टत्वे गतत्वात्तल्लक्षणमेव नेति स्यात् [d] विशिष्य तद्विशेषत्याजने च तादृशस्य लक्षणस्यासिद्धिरेव स्यादिति कृतं प्रतिबन्द्या ॥

(१) प्रतिबन्दीकरोति=दूषणीयं करोति ।
(२) तद्दर्शने=तच्छास्त्रे ।
(३) अन्यत्र परसाधनेषु (असिद्धहेत्वाभासेषु) क्वचिदप्येतदसिद्ध्यादिकं नोद्भावनीयमित्यन्वयः ।

टी० ॥ [a] "तथाही"ति । उद्भाव्यमानोयं दोषः सदनुमानमास्कन्दतीति भयेन् दोषानुद्भावनं चेत्तदा तस्य क्वाप्युद्भावनं न स्यात्तदानीमपि सदनुमानास्कन्दभयस्य विद्यमानत्वात् इत्यपराप्रतिबन्दिः प्रतिवन्दिवादिनं प्रतीत्यर्थः दोषः सदनुमानं नास्कन्दत्येव किंतु पराभ्युपगमरीत्या दोषश्चेदयं स्यात्तदा सदनुमानमप्याकुलयेदिति प्रतिबन्दिग्रहणमित्याह–। [b] "अथे"ति । यं दोषं पुरस्कृत्य प्रतिवन्दिः स चेच दोषस्तदा तद्दोषलक्षणमतिव्यापकमलक्ष्येपि गतत्वादित्याह–। [c] "ने"ति । ननु प्रतिवन्दिग्रहणस्य नायमभिप्रायो यदयं दोष एव न भवति किन्तुयद्ययं दोषः स्यात्तदा तत्रापि स्यादित्यस्य प्रकृते यो दोषो दीयते तत्र दोषलक्षणमेव न गतमित्यभिप्रायस्तदा दोषलक्षणविरह एवाभिधीयतां किं प्रतिवन्द्येत्याह–। [d] "विशिष्ये"ति । असिद्ध्यादिसामान्यलक्षणमेव तथा विशेषणीयं येनातिव्याप्तिर्न स्यादित्यर्थ इति केचित् ॥

मू० * [a] अथ मद्दर्शनमात्राभ्युपगतादूष्यत्वं किञ्चित्पदार्थं प्रतिवन्दीकरोति(१) तदैतदुक्तं [b] तेन स्यादिह नेदं दूषणं वक्तव्यमभिधानेऽन्यथैव युक्त्या तवेष्टभङ्गप्रसङ्गात्? *–इति तन्न, [c] इदमिह दूषणं वक्तव्यमनभिधानेस्यैवानिष्टस्य परसिषाधयिषितस्य सिद्धिप्रसङ्गात् इत्यभिधानानुकूलाया अपि प्रतिवन्द्याः सम्भवात् * [d] नन्वेवमेवास्तु तथा चाभिधाने नऽभिधाने चोभयतः पाशाप्रतिवन्दीरज्जुर्भवत एव दुर्निवारा स्यात्? *–मैवम् ।

टी० ॥ ननु प्रपञ्चमिथ्यात्वसाधनं व्यावहारिकत्वं यदि प्रतिवन्दीकरोति(१) तदा तदापादितदोषस्यादोषत्वव्यवस्थापनं न प्रतिवन्दिवादिनोभिमतं येन लक्षणमतिव्यापकं स्यादपितु दोषत्वव्यवस्थापनमेवेत्यत आह–। [a] "अथे"ति ॥ [b] "तेने"ति । प्रतिवन्दीवादिनेत्यर्थः ॥ [c] "इद-

(१) प्रतिवन्दीकरोति=दूषणीयं करोति ।

मिहे"ति । भेदः पारमार्थिको व्यावहारिकत्वादित्यत्र यदि वेदान्तिना-स्वरूपासिद्धिर्वाच्या तदा प्रपञ्चो मिथ्या व्यावहारिकत्वादित्यपि स्वरूपा-सिद्धया दुष्टमेव स्यादिति यदि प्रतिबन्दीवादिनोऽभिमतं तदा प्रतिबन्दी-परिहाराय वेदान्तिनाप्यपरा प्रतिबन्दिः करणीया तथ्यथा यदि व्यावहारि-कत्वं मया नासिद्धया दूषणीयं तदा भेदस्य त्वदिष्टं पारमार्थिकत्वं सिद्धो-दित्यवश्यं मया दोषोयमुद्भाव्य इत्यर्थः ॥ [d] "नन्वि"ति । यदि दोषत्वं ब्रवीषि तदा त्वत्साधनमन्यनेन दोषेण दुष्टं स्यात् नचेद्ब्रवीषि तदा मत्सिषाधयिषितं सिद्धेदित्यभिधानानभिधानयोस्तवैव सङ्कटप्रवेश इत्यर्थः॥

मू० [a] मिथो विरुद्धायाः प्रतिबन्द्यास्तर्काभासत्वात् [b] मिथो विरोधस्य तर्कदूषणत्वात् [c] सत्प्रतिपक्षानुमानवद्वयोरपि परस्पर [d] प्रतिक्षेपेणैवोपक्षीणत्वादिति [e] न्यायद्वितीयाध्या-यप्रथमाह्निक([1])सूत्रे प्रमेयता च तुलाप्रामाण्यवदित्यचापा-दितदृष्टान्ताभावलक्षणदोषसाम्येन प्रत्यवस्थितं पूर्वपक्षवा-दिनं निराकर्त्तुमाचार्यः समानमित्यनुत्तरमभ्युपगमाद-भ्युपगतं तावद्भवतास्मत्पक्षे दृष्टान्तो नास्तीतिब्रुवन्नन्यो-तकरो यचोभयोरित्यादिवदतो भट्टस्य प्रतिभटी कर्त्तव्यः॥

टी० ॥ [a] "मिथ"इति । अभिधानानभिधानाभ्यां दोषो मयि त्वया यदापाद्यते सेयं तृतीया प्रतिबन्दिः साच न सम्भवति मिथो विरुद्धाभ्यां धर्माभ्यामेकस्यापाद्यस्यापादनं तर्काभासो यत इत्यर्थः कथं तर्काभासोयमित्यत आह-। [b] "मिथ"इति ॥ [c] "सत्प्रतिपक्षे"ति । यद्य-भिधानपक्षे दोषस्तदानभिधानपक्षेदोषो न सम्भवती([2])त्युभाभ्यां दोषापा-दनद्वयस्य मिथः प्रतिबन्धादनुपपत्तिरित्यर्थः ॥ [d] "उपक्षीणत्वादि"ति । परस्पर प्रतिबन्धेन स्वस्वकार्याक्षमत्वादित्यर्थः नतु यचोभयोः समो दोषः

(१) षोडश=

(२) "यदि चानभिधानपक्षे दोषस्तदाऽभिधानपक्षे न सम्भवति"-इतिशेषः दूरणीयः, कथञ्चिद्विगलितो वा ज्ञेयः ।

इत्यभिदधतो भट्टाचार्यस्य प्रतिबन्ध्यभ्युपगमस्त्वत्प्रतिबन्दिखण्डन विरुद्ध इत्यत आह–। [e] "न्याये"ति । भट्टाचार्यविरोधेऽप्युक्तोतकराचार्यस्य प्रतिबन्दिखण्डनाभ्युपगमोऽस्त्येवेति तदनुरोध एव ममापीत्यर्थः ॥

मू० [a] तत्किं प्रतिबन्द्यादि दूषणं न भवत्येव * नन्वेवं भवतोऽपसिद्धान्तः स्यादिति चेत् ? *–[b] तर्हि दृश्यतामपसिद्धान्तस्य लक्षणं प्रकृतसम्बद्धतया, [c] वाङ्मात्रेणापसिद्धान्ते भवतः किमिति नापसिद्धान्तः स्यात् * सिद्धान्तविपरीताभ्युपगमोऽपसिद्धान्तः प्रतिबन्द्यादि भवता सिद्धान्तत्वेनाभिप्रेतं [d] ममेदं † दर्शनमाश्रित्याभिधेयमिति भवता दर्शनविशेषस्याभ्युपेतत्वात् दर्शनस्य च तत्तत्पदार्थस्वीकारात्मकत्वात् तेषु च पदार्थेषु प्रतिबन्दीदूषणत्वादेः प्रविष्टत्वात् ? *–इति चेन्न, लक्षणमेव तावदिदमपसिद्धान्तस्य नोपपद्यते मत्सिद्धान्तविपरीतमभ्युपगच्छतोऽपसिद्धान्तप्रसङ्गात् ।

टी० ॥ ननु स्थाने स्थाने शङ्कराचार्यप्रभृतिभिः प्रतिबन्दिरभ्युपगतैवेति तदनभ्युपगमे तवापसिद्धान्त इत्यपसिद्धान्तखण्डनाय प्रस्तौति–। [a] "तत्किमि"ति ॥ [b] "तर्ही"ति । लक्षणाधीनप्रतिपत्तिकत्वाल्लक्ष्यस्येति भावः प्रकृतसम्बन्धितया लक्षणं दर्शयेत्यर्थः ननु किं लक्षणोपदर्शनेन यतः प्रसिद्ध एवापसिद्धान्त इत्यत आह–। [c] "वाङ्मात्रेणे"ति । अव्यवस्थितापसिद्धान्तापादनं सर्वत्रसुलभमित्यर्थः ननु कथामुपक्रममाणेन मया प्रतिबन्दिः सिद्धान्तत्वेन नाभ्युपगता येन तदनभ्युपगमादपसिद्धान्तः स्यादित्यत आह–। [d] "ममेद † मि"ति । अभ्युपगतप्रतिबन्दिदोषत्वशास्त्राभ्युपगम एव कथोपक्रमे प्रतिबन्द्यभ्युपगम इत्यर्थः यदीदं लक्षणं तदा मत्सि-

(†) "ममैवम्"–इति क्वाचित्कः पाठः ।

द्धान्तस्य प्रपञ्चमिथ्यात्वस्य विपरीतमभ्युपगच्छतो नैयायिकादेरपसिद्धान्तापत्तिरित्याह—। [e]"लक्षणमि"ति ॥

मू० * स्वसिद्धान्त[a]स्तथापेक्षित? *—इति चेन्न, [b]विशेषणपूरणमन्तरेण तदलाभात्[c] अन्यथा सर्वत्र विशेषणोपादानवैयर्थ्यम् एवमभ्युपगमे भवत एवेयमपसिद्धान्तकृत्या-[d]निवृत्त्यापत्तेः त्वत्सिद्धान्ते शतशो हेत्वादौ विशेषणोपादानदर्शनात परसिद्धान्तहेतूनां चानुपात्तविशेषणानामनैकान्तिकी कृत्य त्वच्छास्त्रे बहुशो दूषितत्वात् प्रथमं स्वशब्दविशेषणमनुपादाय दूषणभयेनेदानीं तत्करणे च हेत्वन्तरं नाम निग्रहस्थानं भवतः हेत्वन्तरं हि प्रथममविशेषणं साधकभागमभिधाय पश्चाद्विशेषणवत्तद्वचनं [e]किञ्चैवं लक्षणमभिदधानस्य भवतोऽप्राप्तकालतापातः अप्राप्तकालोवयवविपर्यास इति लक्ष्यमभिधाय हि लक्षणाभिधानं युक्तं तस्य च भवता विपर्यासः कृतः ॥

टी० [a]"तथापेक्षित" इति । यद्विपरीताभ्युपगमेनापसिद्धान्त इत्यर्थः ॥ [b]"विशेषणे"ति । स्वपदमनन्तर्भाव्य यल्लक्षणं कृतं ततस्तदलाभादित्यर्थः ॥ ननु सामान्यपदस्य विशेषे तात्पर्यात्सिद्धान्तपदं स्वसिद्धान्तपरमतो नोक्तदोष इत्यत आह—। [c]"अन्यथे"ति । एवं सति विशेषणं क्वापि न दीयेतेति भावः ॥ [d]"निवृत्त्यापत्तेरि"ति । व्यावृत्त्यापत्तेरित्यर्थः । स्वशास्त्रे विशेषणापूरणात्परकीयहेत्वादौ च विशेषणमन्तरेणोपन्यस्ते त्वया दूषणाभिधानात् विशेषणापूरणस्य त्वत्सिद्धान्तत्वादित्यर्थः 'किञ्चैवमि"ति । लक्ष्यं पक्षमुपन्यस्य, तच्चेतरभेदार्थं लक्षणस्य हेतोरभिधानमित्यस्य विपर्यासस्त्वया कृत इत्यप्राप्तकालस्ते निग्रहस्थानमित्यर्थः ॥ (शेषमग्रे)

श्रों नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

श्रों श्रीगणेशाय नमः ।

*(Continued from page 499. Vol. XI.)*

---

दीक्षोत्कर्षे नियमानाम- प्युत्कर्षाधिकरणम्। सू° दीक्षाकालस्य शिष्टत्वादतिक्रमे नियमानामनुत्कर्षः प्राप्तकालत्वात् ॥ १४ ॥

दीक्षितस्याग्निहोत्रादयः प्रतिषिद्धाः अवभृथे कृते दीक्षातो मुक्तिस्तत्र्दा केनापि कारणेनावभृथोत्कर्षो भवति तदा किमग्निहोत्रादि कर्त्तव्यं? न वेति संशयः तत्रादीक्षितो न जुहोतीति यावत्कालं शास्त्रवशेन दीक्षानुवृत्तिस्तावन्न जुहोति इति शास्त्रार्थं मत्वाऽवभृथोत्कर्षेण न शास्त्रकृता दीक्षानुवृत्तिः अतः कर्तव्यमग्निहोत्रादि मन्यते न काललक्षणायां प्रमाणमस्ति दीक्षाया एव प्रतिषेधनिमित्तत्वोपपत्तेरतो येन केनापि हेतुना दीक्षाऽनुवर्तमाना प्रतिषेधमप्यनुवर्तयति तदकर्तव्यमग्निहोत्रादि प्रागवभृथात्, तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् अवभृथोत्कर्षकृता दीक्षानुवृत्तिः पुरुषापराधकृता न विधिकृता अनस्तत्काले पुरुषापराधकृतमग्निहोत्राननुष्ठानमिति प्रतिहोमः कर्तव्यः, मैवं यथा तथा वा दीक्षा तावदनुवृत्ता तावता चानधिकारादग्निहोत्रमकर्तव्यं कर्तव्याकरणे च प्रतिहोमस्तस्माच प्रतिहोमः ॥

उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानाधिकरणम्। सू° प्रतिषेध[1]श्चोर्ध्वमवभृथादिष्टेः ॥ १५ ॥

कृतेऽवभृथे यद्युदवसानीयोत्कर्षो दैवाद्भवति तदा किमग्निहोत्रं कर्तव्यमकरणे च प्रतिहोमः स्यादथवा न कर्तव्यं प्रतिहोमश्च न कर्तव्य इति, तत्रावभृथस्य दीक्षोन्मोचनत्वात्तदुत्तरकालं कर्तव्यमग्निहोत्रमकरणे

---

१ प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः। इति पा०।

च प्रतिहोमः स्यात् सत्यं, दीक्षा निवृत्ता तथाऽप्यनया पुनराधेयमग्निमिति होऽग्निहोत्रं जुहोतीति वचनेन क्रतोरङ्गमानीयस्याग्निहोत्राधिकारप्रतिपादनाच्च ततः प्रागधिकाराभावादकर्तव्यमग्निहोत्रम् अकृते च न प्रतिहोमः ॥

प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणम् ।

सू० प्रतिहोमश्चेत्सायमग्निहोत्रप्रभृतीति ब्रूयेरन् ॥ १६ ॥

षोडशिसंस्थे प्रातरग्निहोत्रप्रभृत्यनुष्ठानाधिकरणम् ।

सू० प्रातस्तु षोडशिनि ॥ १७ ॥

क्रत्वाचिन्तेयं यदि होमाः स्युः कस्तेषां क्रम इति युगपदुपस्थितानामनियमः, येनैव क्रमेणातिपन्नास्तेनैव कर्तव्यास्तेनाग्निष्टोमादिषु सायमग्निहोत्रप्रभृतयः प्रतिहोमाः षोडशिनि प्रातः प्रभृतयः ॥

भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गताऽधिकरणम् ।

सू० प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ १८ ॥

गतं प्रासङ्गिकं पुनः प्रायश्चित्ताधिकारमनुसन्धत्ते दर्शपौर्णमासयोः श्रुतो "भिन्ने जुहोती"ति होमः किं यत्र यत्र भेदस्तत्र तत्र सर्वत्र स्यात्? उत प्रकरण एवं निविशत? इति सन्देहे वाक्येन यत्रचिन्मित्तं नैमित्तिकमवगम्यमानमशक्यं प्रकरणेन प्रकृतेऽवस्थापयितुं तस्मात्सर्वत्र स्यादिति मन्वानस्योत्तरं नैमित्तिकस्यापि तावदवश्यं फलेन भवितव्यं तदभावे विध्ययोगात् तत्राप्रतीतफलकल्पनात् प्रकृतेऽकवाक्यतैव बलीयसीति तत्रैव निवेशः ।

व्यापन्नशब्दार्थनिर्णयाधिकरणम ।

सू० व्यापन्नस्याप्सुगतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ १९ ॥

"व्यापन्नमप्सु प्रहरती"ति श्रूयते तत्र व्यापन्न-शब्देन किमुच्यत इति, प्रश्ननेनैवोपक्रमः तत्रोत्तरं यदार्याणामभोज्यं केशकीटावपन्नादि तद् व्यापन्नं प्रतीयेत ॥

१ कृपण-शब्दः प्रकन्ध्यादित्वात्साधुः दुर्ष्टाचमिति तु तदर्थः ।

अपच्छेदयौगपद्येऽपि प्राय-श्चित्ताधिकरणम् ।

सू० विभागश्रुतेःप्रायश्चित्तं यौगपद्ये न विद्यते ॥ २० ॥

ज्योतिष्टोमे बहिष्पवमानं सर्पतां "यदि प्रस्तोताऽपच्छिन्द्याद्ब्रह्मणे वरं दद्याद्यदि प्रतिहर्त्ताऽपच्छिन्द्यात्सर्ववेदसं दद्याद्यद्युद्गाताऽपच्छिन्द्याददक्षिणेन तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्याद्यत् पूर्वस्मिन् दास्यन्स्या"दिति तद् यद्युद्गातृप्रतिहर्त्रोरपच्छेदो युगपद्भवति तदा किं प्रायश्चित्तं कर्तव्यं न वे?ति संशयः तत्रोभाभ्यां क्रियमाणोऽपच्छेदो नैकेन व्यपदेष्टुं शक्यते तस्माद्यौगपद्ये निमित्तविघातात् प्रायश्चित्तं न कर्त्तव्यम् । "स्यादेवं यदि कर्तृत्वं सापेक्षमुभयोर्भवेत् । एकैकस्य तु यत्नेन निरपेक्षेण जायते ॥ विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः । कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥

यौगपद्ये ऽदाक्षिण्यस-र्वस्वदाक्षिण्यविकल्पाधि-करणम् ।

सू० तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥ २१ ॥

यौगपद्ये प्रायश्चित्तद्वयमापतति तत्किं समुच्चीयतेऽथ विकल्प इति विचारः, तत्र विकल्पस्यान्याय्यत्वात् तेन पुनर्यजेतेति प्रयोगद्वयसंभावात् । पूर्वस्मिन्नदाक्षिण्यम् उत्तरस्मिन् सर्ववेदसमिति उभयसम्भवात्समुच्चयः नैतदेवं यत्र हि प्रयोगे निमित्तं तस्यैव नैमित्तिकं प्रायश्चित्तमङ्गं न प्रयोगान्तरे क्रियमाणेन प्रायश्चित्तेन निमित्तवतः प्रयोगस्य साद्गुण्यं भवति तस्मादेकस्मिन्नेव प्रयोगे द्वयमापतति तदशक्यं समुच्चेतुमिति विकल्पः ॥

आनुपूर्व्येणापच्छेदे उत्तराप-च्छेदनिमित्तप्रायश्चित्तानुष्ठा-नाधिकरणम् ।

सू० पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ २२ ॥

यत्रानुपूर्व्येणोद्गातृप्रतिहर्त्रोरपच्छेदो भवति तदा किं पूर्वापच्छेदनिमित्तं प्रायश्चित्तं कार्यं मुतोत्तरनिमित्तमिति संशयः, तत्र पूर्वनिमित्तमसंजातविरोधं निर्विघ्नमवगम्यते तद्विरुद्धत्वादशक्यमवगन्तुमुत्तरम्, अतः पूर्वबलीयस्त्वम् एवं प्राप्ते अभिधीयते नात्र पूर्वेणोत्तरस्य ज्ञानस्योत्पत्तिः

शक्यते निरोद्धुं प्रत्यक्षेण वाक्येन तदेव(१)मुत्पाद्यत एव तच्चोपजायमानं स्वविहद्धं पूर्वज्ञानं बाधमानमेवोत्पद्यते, तेनोत्पन्नमपि पूर्वप्रायश्चित्तज्ञानं मिथ्या भवति, बाधितत्वादुत्तरस्य तु न किञ्चिद्बाधकमस्ति, न हि पूर्वविज्ञानमुत्तरबाधेनोत्पद्यते तस्यामवस्थामवस्थायामुत्तरस्यानुपजातत्वात् जाते तूत्तरविज्ञाने जायमानेनैव तेन बाधितं पूर्वविज्ञानमसत्त्वात् कर्मीभूतं नोत्तरं बाधितुं लभते तस्मात्पूर्वदौर्बल्यम्। नैमित्तिकशास्त्राणां ह्ययमर्थः प्रागन्यथाकर्तव्योऽपि क्रतुर्निमित्ते सति अन्यथा कर्तव्य इति ततश्च यथा नित्यं द्वादशशतज्ञानमुत्पन्नं पाश्चात्येनैव नैमित्तिकेन सर्वस्वदानादिविज्ञानेन बाध्यते तथा नैमित्तिकमपि पूर्वं निविष्टमुत्तरेण बाध्यते॥

उद्गातुरुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानाधिकरणम्।

सू० यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन्॥२३॥

पौर्वापर्ये जघन्यनिमित्तं प्रायश्चित्तमिति स्थितं तद्यदोद्गाता जघन्यो भवति तदा पुनर्यज्ञे किं सर्ववेदसं देय? मुत द्वादशशत? मिति संशयः, तत्र यत्पूर्वस्मिन् दास्यन् स्यादिति यदेव क्रतुस्वभावेनादेयं तदेव प्रतीयते तच्च द्वादशशतं तस्मात्तदेव पुनः प्रयोगे देयमित्येकः पूर्वपक्षः, पूर्वस्मिन् प्रयोगे प्रथमं द्वादशशतं दास्यन्नासीत्प्रतिहर्तरि त्वपच्छिन्ने सर्ववेदसमतः उभयमपि पुनः प्रयोगे यत् पूर्वस्मिन् दास्यन् स्यादिति शक्यं वक्तुं तस्माद्विकल्प इति द्वितीयः॥ सिद्धान्तस्तु द्वादशशतं सर्ववेदसेन बाधितमतो न तद्दास्यन् भवति सर्ववेदसमेव तु दास्यन् भवति, तस्मात्तदेव पुनः प्रयोगे स्यात्। ननु तदप्यदक्षिणयेन बाधितं नेति ब्रूमः, न ह्युद्गात्रपच्छेदेन पूर्वदक्षिणा बाध्यते किं तर्हि पूर्वस्मिन्प्रयोगे दातव्या सती दक्षिणा तत उत्कृष्य उत्तरस्मिन् प्रयोगे निक्षिप्यते पूर्वप्रयोगे चोद्गात्रपच्छेदवेलायां द्वादशशतं बाधित्वा सर्ववेदसमेव दातव्यमासीत् अतस्तदेव पुनः प्रयोगे देयम्॥

अहर्गणे अपच्छेदेन सर्वेषामावर्तनाधिकरणम्।

सू० अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात्॥२४॥

(१) तदवश्यमुत्पाद्यत इति एवेति पा०।

द्वादशाहादिष्वहर्गणेषु यदा कस्मिंश्चिदहन्युद्गात्रपच्छेदो भवति तदा किं कृत्स्नस्याहर्गणस्यावृत्तिः उत तदेवाहरावर्तेत? इति संशये साधननिवेशित्वाद् धर्माणां गणस्य च साधनत्वात् तस्यैवादृत्तिगणस्य संस्थापने पुनः प्रयोगश्चेति प्राप्तेऽभिधीयते "अशाब्दत्वात् समूहस्य न फलं प्रतिचोदना। यागस्य चोदना तत्र यागाः प्रत्येकमेव ते। अतोमिथोऽनपेक्षास्ते यागाः स्वाङ्गसमन्विताः फलं संहत्य कुर्वन्ति स्वापूर्वद्वारमाश्रिताः। तेन यस्मिन्नपच्छेदस्तदावृत्तिगुणान्वितः अनावृत्तिगुणैरन्यैः संहत्य कुरुते फलम्" ॥

इति शास्त्रदीपिकायां षष्ठस्य पञ्चमः पादः ॥ ५ ॥

---

## अथ षष्ठाध्याये षष्ठः पादः प्रारभ्यते ॥

सत्रे समानकल्पानां सहाधिकाराधिकरणम्।

सू० सन्निपातेऽवैगुण्यात् प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥

दर्शपौर्णमासयोः पुरुषभेदेन कल्पभेदः समाम्नातः राजन्यवासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामित्यादिः, स दीक्षणीयादिष्वतिदिष्टः सत्रेष्वनेककर्तृकेषु प्राप्तस्तत्र संदिह्यते ॥ किं भिन्नकल्पा अपि संहत्य सत्रमासीरन्नुत तुल्यकल्पा? एवेति तदर्थमिदं विचार्यते किं वासिष्ठादयो नाराशंसाद्यङ्गत्वेन कर्तारो विधीयन्ते? ॥ उत वासिष्ठानुद्दिश्य नाराशंसादि तादर्थ्येन विधीयत इति, तत्र वासिष्ठार्थत्वेन विधाने फलकल्पनाप्रकरणबाधाच्च वासिष्ठादय एव नाराशंसाद्यङ्गत्वेन विधीयन्ते, षष्ठी च सम्बन्धवाचिनी सत्रेषु च सत्रिणां प्रत्येकमेव कर्तृत्वमिति स्थितम् ॥ अतस्तत्र वासिष्ठावासिष्ठैः क्रियमाणो नाराशंसो वासिष्ठेनापि तावत् क्रियत एवेति, अविगुणास्तथा तनूनपादप्यन्यैरतोऽयं कञ्चित्कल्पमाश्रित्य भिन्नकल्पा अप्यधिक्रियेरन् इत्येवं प्राप्ते ब्रूमः वासिष्ठादीन् स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादि विधीयते तादर्थ्ये च क्रतूपकारद्वारेणाऽप्युपपद्यमिति न फलकल्पनापत्तिः, एवं च धात्वर्थस्यान्यत्र

विधानात्सं निर्ज्ञातविधिर्भवति यथालोद्देशेन तु वासिष्ठादिविधौ धात्वर्थेऽन्यस्य विधानाद्विप्रकृष्टार्थविधानं स्यात्, अतः पूर्वेऽन्यतरकल्पाश्रयणेऽन्ययोः तेन क्रतूपकाराभावाद्विगुणः क्रतुर्न फलं साधयेत्, तस्मात्तुल्यकल्पानामेवाधिकारः ॥

भिन्नकल्पयोरपि राज्ञः पुरोहितस्य च कुलाययज्ञेऽधिकाराधिकरणम् ।

सू० वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ २ ॥

"एतेन राजपुरोहितौ सायुज्यकामौ यजेयाता"मित्यत्र संशयः किमयं षष्ठीतत्पुरुषैकशेषः राज्ञः पुरोहितौ राजपुरोहितः राजपुरोहितश्च राजपुरोहितश्च राजपुरोहिताविति, ततश्च राजद्वयसम्बन्धिनोर्द्वयोः पुरोहितयोरधिकारः? उत कृतैकशेषेणोत्तरपदेन तत्पुरुषो, राज्ञः पुरोहितौ राजपुरोहिता? विति, ततश्चैकराजसम्बन्धिनोर्द्वयोरधिकारः? उत कर्मधारयः? राजात्मकौ पुरोहिताविति, अथवा द्वन्द्वो राजा च पुरोहितश्चे? ति, तत्र युगपदधिकरणे द्वन्द्वः, तेन पदद्वयमपि लक्षणावृत्ति स्यात्, अतस्तत्पुरुषोऽयं समासादुत्पन्नं द्विवचनं तदर्थस्यैव द्वित्वमाह तस्माद् राजद्वयसम्बन्धिनौ द्वौ। यद्वा पुरोहितपदाद् द्विवचनं तदर्थस्यैव द्वित्वमाह राज्ञः पुरोहितौ द्वाविति, एतस्मिँस्तु पक्षद्वये पूर्वपदं लक्षणावृत्ति स्यात्। किञ्च नैकस्य राज्ञः पुरोहितद्वयमस्ति पुरोहितं वृणीत इत्युपादीयमानस्यैकत्वस्य विवक्षितत्वात्, प्रथमपक्षे राजपदमनर्थकं राज्ञ एव पुरोहितोऽस्ति नान्यस्य अतोऽव्यभिचारादविशेषणं सदनर्थकं राजपदं स्यात्, अतः कर्मधारयोऽस्तु सोऽपि न राज्ञः पुरोहितत्वाभावात्, ब्राह्मण एव पुरोहितत्वेन वरीतव्य इति श्रूयते, तस्माद् द्वन्द्व एवाय, न च तत्र कस्यचिल्लक्षणा युगपदधिकरणे द्वन्द्व इत्यस्यापवादादित्युक्तं तन्त्ररत्ने, तस्माद् राज्ञः पुरोहितस्य चात्र भिन्नकल्पयोरेव सतोर्वचनादधिकारः ॥

सत्रे ब्राह्मणमात्रस्याधिकाराधिकरणम् ।

सू० सत्राणि सर्ववर्णानामविशेषात् ॥ ३ ॥

सत्रेषु किं त्रयाणामपि वर्णानामधिकार? उत ब्राह्मणस्यैवे? ति विचारः, तदर्थं किं येयजमानास्त ऋत्विज इत्यनेनार्त्विज्यं यजमानसंस्कारत्वेन

विधीयते? उत यजमाना आर्त्विज्याकृत्स्नेने? ति चिन्त्यते "सत्राणि सर्ववर्णानां भवेयुरविशेषतः। ऋद्धिकामादिवाक्येषु विशेषः श्रूयते न हि॥ प्राप्तेषु त्रिषु वर्णेषु यच्छब्देनोपबन्धनात्। संस्कारार्थतया तेषामार्त्विज्यमुपयुज्यते॥ प्रधानभूतैरेव च तैः क्रियमाणमार्त्विज्यं न गुणभूतानध्वर्यून् कर्तॄनपेक्षते गुणकर्तृपरिच्छेदेन 'ब्राह्मणमार्त्विज्याकृत्स्नं तदभावे तदपि द्वाराभावाच्च सत्रे प्राप्नोति तस्मात् त्रयाणामधिकार इति प्राप्ते ब्रूमः "नार्त्विज्यं यजमानानां संस्कारत्वेन चोद्यते। तथा ह्यप्रकृतं कार्यमार्त्विज्यस्य प्रसज्यते। तेन यच्छब्दयोगेऽपि नो द्वेषः स्वामिनामिह आर्त्विज्यमेव तूद्दिश्य यजमानविधिर्भवेत्" ॥ प्रकृतितश्च द्वौ धर्मावार्त्विज्याकृत्स्नेन प्राप्तौ अन्यकर्तृकता ब्राह्मणकर्तृकता च, तत्रान्यकर्तृकता ये यजमानास्त ऋत्विज इत्यनेन बाधिता, ब्राह्मणकर्तृकतायास्तु न किञ्चिद् बाधकमस्ति, ऋद्धिकामादिशब्दानां ब्राह्मणत्वाविरोधात् तस्मात्प्रकृतितः प्राप्तं ब्राह्मणकर्तृकत्वं वाचनिकं च यजमानकर्तृकत्वम् उभयं सम्पादयितुं ब्राह्मणा एव सत्रासयामासीरन्निति ॥

सत्रे विश्वामित्रतत्समानकल्पानामेवाधिकाराधिकरणम्।

सू० वासिष्ठानां वा ब्रह्मत्व[१]स्य नियमात् ॥ ४ ॥

ब्राह्मणानामपि किं सर्वेषामधिकार? उत वासिष्ठानां तत्समानकल्पनां च? अथवा वैश्वामित्राणां तत्समानकल्पानां चे- ति संशयः, तत्राविशेषात्सर्वेषां वासिष्ठो ब्रह्मेति प्रकृतौ ववचनात् ब्रह्मत्वस्याविगुण्यायाऽवश्यं वासिष्ठेन भवितव्यम्, अतस्तत्समानकल्पनामधिकारः, य एव कश्चित्स्तोमभागमधीयीत स एव वासिष्ठ इत्यवासिष्ठस्यापि स्तोमभागविदो ब्रह्मत्वस्यानुज्ञानाच्चाविश्यम्भावी वासिष्ठः, वैश्वामित्रो होतेति ववनात् होत्रमवश्यं वैश्वामित्रेणैव कर्त्तव्यं, न च भिन्नकल्पनामधिकारोऽस्तीति स्थितमाद्ये, तस्माद्वैश्वामित्रस्य तत्समानकल्पानां च सत्रेऽधिकारः ॥

(१) ब्रह्मत्वनियमादिति पा० ।

सत्रे आहिताग्नेरेवाधिकाराधिकरणम् ।

सू० विद्वारस्य प्रभुत्वाद्नग्नीनामपि स्यात् ॥ ५ ॥

किमनाहिताग्नीनामपि सत्रे ऽधिकार उताहिताग्नीनामेवे? ति संशयः तत्राग्नीनां पदार्थत्वाद्यस्य कस्य चिदग्निषु साधितं कर्म सर्वेषां फलं साधयति ध्रुवम् औदुम्बरीव येन केनचिद्यजमानेन संमिता तस्माद्येनकेनचिदाहिताग्निना संहृत्याऽनाहिताग्नयोऽप्यासीरन्, नैवम् इष्टिपूर्वकता सोमविकाराणामवस्थिता। इष्टौ चानाहिताग्नीनां न कथञ्चिदधिक्रिया। आधातुरग्नयः कार्यं नान्येषां साधयन्ति च। उपग्राहविशेषेण कर्तुरेव फलान्वयात् आदधीतेत्यात्मनेपदादाधातुरेवाधानफलेन भवितव्यं, कर्मयोग्यता चाग्नीनां फलमतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति, तस्मादनाहिताग्नीनामनधिकारः, यजमानसंमितौदुम्बरी तु शास्त्रार्थो येन केनचिदपि प्रकृतप्रयोगगतेन यजमानेन सम्पाद्यत इति वैषम्यम् ॥

जुह्वादीनां साधारण्याधिकरणम् ।

सू० जुह्वादीनामप्रयुक्तत्वाद्यथाकामी प्रतीयेत ॥ ६ ॥

जुह्वादिपात्रेषु चिन्ता, किं यस्य कस्यचित्पात्रैः सत्रं प्रयोक्तव्यम् उतान्यानि साधारणानि उत्पाद्यानी? ति, तत्राग्निवदुपग्राहविशेषविरोधाभावात् यस्य कस्यचित्पात्राणि भवेयुः सत्यमयं विरोधो नास्ति किं त्वाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च दहन्तीति तथा दक्षिणे हस्ते जुहूमासादयेदित्यादिवचनैः पात्राणां दाहे गुणभावः सादनप्रतिपत्तिश्च विधीयते, तद्यदि कस्यचित्पात्रैरुपक्रान्ते प्रयोगे तस्य यजमानस्य दिष्टगतिः स्यात् ततस्तस्य संस्कारः पात्राणां च प्रतिपत्तिर्हीयेत, यदि तु तैर्दह्येत तदा प्रक्रान्तः प्रयोगो विगुणः स्यात्, तस्मात्साधारणान्युत्पाद्येरन् ॥

विकृतवचनदर्शनाभिधेनीषु वर्णान्वयाधिकाराधिकरणम् ।

सू० पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद् यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येकस्मिन्नधिकारः स्यात् ॥ ७ ॥

यास्विष्टिषु अध्वरकल्पादिषु सप्तदशसामिधेनीरनुब्रूयादिति श्रुतं तासु किं वैश्यस्यैवाधिकार ? उत त्रयाणामपी?ति संशये दर्शपौर्णमासप्रकरणपठितेन सप्तदश वैश्यस्येति वाक्येन साप्तदश्याङ्गत्वेन वैश्यो विधीयते कर्ता, न च प्रकृतौ साप्तदश्यमस्तीति यत्राध्वरकल्पादौ तद्विहितं तत्रैव वैश्यविधिस्तेन वैश्यकर्तृकसाप्तदश्याङ्गत्वादध्वरकल्पादौ वैश्यस्यैवाधिकारः, मैवं "प्रकृतौ हि श्रुतं वाक्यं ततोनोत्कर्षमर्हति । तस्माद्वैश्यानुवादेन साप्तदश्यं विधीयते" तच्च वैश्यनिमित्तत्वात्पाञ्चदश्यस्य बाधकं वै कृतैर्वचनैः साप्तदश्यं क्रत्वङ्गमुच्यते, तदनैमित्तिकत्वेन त्रयाणां न विशिष्यते, तस्मादध्वरकल्पादौ त्रयाणामधिकारिता ॥

इति शास्त्रदीपिकायां षष्ठस्य षष्ठः पादः ॥ ६ ॥

---

## अथ षष्ठस्य सप्तमः प्रारभ्यते ॥

* विश्वजिति पित्रादीनामदेयत्वाधिकरणम् ।

सू० स्वदाने सर्वमविशेषात् ॥ १ ॥

विश्वजिति "सर्वस्वं ददाती"ति श्रुतं, तत्र किं ज्ञात्यादीनामपि स्व-शब्दवाच्यानां दान? मुत धनस्यैव यत्रास्य स्वामित्वमिति संशये सर्वेषां स्व-शब्दवाच्यानां दानमविशेषात्, शक्यन्ते च पित्रादयोऽपि परविधेयाः कर्त्तु परस्वत्वापादनं हि दानम्, अतः पित्रादयोऽपि देयाः, नैतदेवं, न हि शक्यन्ते दातुं स्वत्वत्यागपूर्वकं हि परस्वत्वापादानं दानं, न च दीयमानोऽपि पिता न पिता भवति, यत्र तु प्रभुत्वयोगेन स्व-शब्दवृत्तिस्तच्छक्यं दातुं तस्मिन् हि दत्ते पूर्वस्य स्वामित्वं निवर्तते परस्य च स्वामित्वमुपजायते, किञ्चायं स्व-शब्दोऽपि भिन्नया शक्त्याऽऽत्मात्मीयज्ञातिधनेषु वर्तते तत्रैकस्मिन् प्रयोगेऽस्यैक एवार्थः, तत्र धनस्य दानसम्भवात्तद्विषय एव स्वशब्दस्तस्माद्धनस्यैव दानं न पित्रादीनाम् ॥

* विश्वजिति पृथिव्या अदेयत्वाधिकरणम् ।

सू० न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ २ ॥

येयं महापृथिवी सा देया नेति सापि सार्वभौमस्य धनमिति मन्यमानो दानमाह नासौ कस्यचित् स्वं, राज्यं हि स्वविषयपरिपालन-कण्टकोद्धरणवृत्तित्वेन कर्षकादिभ्यः करादानं दण्ड्येभ्यश्च दण्डादान-मिति एतावान् सम्बन्धः, न स्वामित्वमतो न सार्वभौमो महापृथिवीं दद्यान्माण्डलिकश्च मण्डलम् ॥

विश्वजिति अश्वादीनाम-देयताधिकरणम् ।

सू० अकार्यत्वा[1]त्ततः पुनर्विशेषः स्यात् ॥ ३ ॥

विश्वजित्येव "न केसरिणो ददाती"ति हि श्रुतं तत्र केसरिणो दानं नेति विहितप्रतिषेधात् पक्षे दानं पर्युदासस्त्वयम् अपि तु वाक्य-शेषः स्यादित्यनेन न्यायेन अयं च तस्यैव न्यायस्य प्रपञ्चः प्रसङ्गादिहोक्तः ॥

विश्वजिति विद्यमानाना-मेव सर्वस्वानां दानाधिकर-णम् ।

सू० नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ४ ॥

"सर्वस्वं ददाती"ति किं यत्पुरुषस्योपभोग्यं स्वं कुप्याकुप्यशयनास-नगवादि तत्सर्वं ददातीति शास्त्रार्थः, ततश्च यस्यापि यन्नास्ति सोऽपि तदर्जयित्वा दद्या?दुत यदस्य विद्यते तत्सर्वं ददाती?ति संशये यत्सर्वं स्वं तद्दद्यादिति श्रुत्यर्थविधिलिप्सया दानविधिं मन्यते, चोदकेन तु दानस्य प्राप्तत्वाद्यस्य यदस्ति स तस्मिन् द्वादशशतमात्रं दातुं प्रवृत्तः सन् सर्वं दद्यादिति सर्वता विधीयते, किञ्चायं सर्व-शब्दः प्रसिद्ध-स्वत्वेष्वेव सर्वेषु उपपन्नत्वाच्चासिद्धस्व त्वानानामाक्षिपत्यर्जनं, तस्माच्चार्ज-यित्वा देयम् ॥

विश्वजिति धर्मार्थसेवक-शूद्रस्यादेयताधिकरणम् ।

सू० शूद्रश्च धर्मशास्त्रत्वात् ॥ ५ ॥

धर्मार्थं परिचारकत्वेन यजमानमुपास्थितो, यः शूद्रः स किं देयो न वेति, सर्व-शब्दानुग्रहात्परविधेयीकरणसम्भवाच्चादेयः, स्वत्वाभावाद-निच्छया परवश्यत्वानभ्युपगमसम्भवाच्चादेयः, दासस्तु देय एव ॥

( शेषमके )

---

(१) अकार्यत्वाच्चेति पा· ।

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

तत्र प्रथमाध्यायस्यावशेषः ।

---

(*Continued from page* 481. Vol. XI.)

मू० "इदं सर्वमसृजत यदिदं किञ्च" "तत्सृष्ट्वा तदेवानुप्राविशत्" तदनुप्रविश्य सच्च त्यच्चाभव"दित्यत्र इदं सर्वमिति निर्दिष्टञ्चेतनाचेतनं वस्तुद्वयं सत्त्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्याञ्च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणो ऽनुप्रवेशाभिधानात्, अत एवंनामरूपव्याकरणात् सर्व वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मवाचिनः इत्यवगतमिति। किञ्च ऐतदात्म्यमिदं सर्वमिति चेतनमिश्रं प्रपञ्चमिदं सर्वमिति निर्दिश्य तस्यैष आत्मेति प्रतिपादितम्, एवञ्च सर्वं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं चेतनं जगत्तस्य शरीरं च भवति ।

टी० इदं सर्वमिति निर्दिष्टञ्चेतनाचेतनवस्तुद्वयम् इत्यत्र सर्व-शब्दस्यासङ्कोचोऽभिप्रेतः, तदनुप्रविश्य सच्च त्यच्चाभवत् विज्ञानञ्चाविज्ञानञ्चेत्यनन्तरवाक्येन सर्वशब्दस्य स्वतःप्राप्तत्वमसङ्कुचितत्वं स्थापितमित्याह "इदं सर्वमि"ति, अनुप्रविश्य नामरूपे व्याकरवाणीत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वं गम्यते तत्सृष्ट्वा तदेवानुप्राविशदित्यनुप्रवेशस्य सृष्टिपूर्वकत्वङ्गम्यते तस्मादत्र पौर्वापर्यविवक्षा समानकर्तृकत्वमात्रमेवात्र विवक्षितं "तस्य त्वष्टा विदधद्रूपमेती"ति वाक्ये सृष्ट्यनुप्रवेशयोस्समानकालीनत्वाव-

गमात् तस्माद्ब्राह्मेऽप्यनुप्रविश्येति ल्यबन्तनिर्देशोऽनुप्रविष्टस्रष्टुर्त्रिविध्य ज्ञापनार्थ इत्यवगन्तव्यं सृष्ट्वा नुप्रविशदिति स्थित्यर्थोनुप्रवेशो वा एवं नामसद्रूपव्याकरणप्रकार उक्तः । ततः किं प्रस्तुतस्येत्यत्राह "अत एवमि"ति, अतः उदाहृतश्रुतिवाक्यात् एवं परमात्मपर्यन्तनामरूपव्याकरणप्रतिपादनात् सर्व-शब्दानां परमात्मपर्यन्तत्वे मानं दर्शितं देहवाचिशब्देष्वाकृतिनयसञ्चरणेन परमात्मपर्यन्तत्वमुपपादयिष्यन् शरीरत्वाद्युपक्रम् वाक्यं दर्शयति "किञ्चे"ति, ततः किमित्यत्राह "एवञ्चे"ति, न केवलमात्म-शब्देन शरीरत्वं गम्यम् अपि तु शरीरत्वं शरीरलक्षणेन सह कण्ठोक्तं चेत्याह–

मू० तथा च श्रुत्यन्तराणि "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृत" इति प्रारभ्य "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यम् आत्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत इत्यादि, "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं योऽपामन्तरे सञ्चरन् यस्यापः शरीरमित्यारभ्य यो ऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरन्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इत्यादीनि सचेतनं जगत्तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति, अतः चेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरकं परमात्मान मेवाभिदधति यथाऽचेतनदेवादिसंस्थानपिण्डवाचिनः शब्दास्तत्तच्छरीरकजीवात्मन एव वाचकाः चत्वारः पञ्च दशरात्रा देवत्वं गच्छन्तीत्यादिषु देवा भवन्तीत्यर्थः–

टी० "तथा च श्रुत्यन्तराणी"ति, अन्तःप्रविष्टश्शास्तेत्येतत्सर्वात्मत्वविवरणं, विशेषणद्वयेन नृपनभोक्त्यावृत्तिः, भगवतो नियन्तृत्वकथनात्तदेकनियाम्यत्वं शरीरलक्षणमुक्तं भवति । जगत्परमात्मशरीरमस्तु ततः किं प्रस्तुतस्य सामानाधिकरण्यस्य ? शरीरात्मभावो हि भेदरूपतया सामानाधिकरण्यं विरोधीत्यत्राह "अतश्चेतनवाचिन" इति, अतः–चिदचिदात्मकजगतः परमात्मशरीरत्वात्, शरीरभूतचेतनवाचिपदानान्तच्छरीरिपरमात्मवाचित्वं कथमिति शङ्कायां शरीरिवाचिपदानां शरीरिपर्यन्ताभिधायित्वदर्शनादित्याह "यथे"ति, शरीरिपर्यन्तं वैदिकप्रयोगं दर्शयति "चत्वार"इति तत्र देव–शब्दस्य शरीरिपर्यन्तत्वं स्पष्टयति "देवा भवन्ती"ति, देवत्वं गच्छन्तीत्युक्तं, न तु देवं गच्छन्तीति देव–शब्दस्य शरीरमात्रपरत्वे शरीरत्वं गच्छन्तीत्युक्तं स्यात् ततश्च देहात्मैक्यमुक्तम् अतश्शरीरित्वं गच्छन्तीत्यभ्युपगन्तव्यम् अतः भावप्रत्ययान्तत्वं प्रकृतिभूतदेवशब्दस्य शरीरिपर्यन्तत्वज्ञापकमित्यर्थः । शरीरवाचिपदानां शरीरिपर्यन्तबोधकत्वमपि लाक्षणिकमित्यत्राह–

सू० शरीरस्य शरीरिणं प्रति प्रकारत्वात् प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानाच्छरीराभिधायिनां शब्दानां शरीरिपर्यवसानं न्याय्यं, प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनीत्थमिति प्रतीयमानोऽंशः तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्य्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्य्यवस्यति ।

टी० "शरीरस्ये"ति, शरीरवाचिनां प्रकारिपर्यन्तत्वं जातिगुणवाचिपदानामिव आकृत्यधिकरणन्यायसिद्धमित्यर्थः । जातिगुणवाचिनां द्रव्यपर्यन्तवाचित्वं कथमित्यपेक्षायामाकृत्यधिकरणन्यायं विवक्षुस्तदर्थं प्रथमं प्रकारप्रकारिणौ विविच्य दर्शयति "प्रकारो हि नामे"ति, तद्वाचिशब्दस्य प्रकारिपर्यन्तत्वमुपपादयति "तस्ये"ति, तस्य तद्वस्त्वपेक्षत्वेन प्रकारस्य प्रकार्यपेक्षस्थिति स्वरूपत्वेन तत्प्रतीतेः–प्रकारस्य पृथगवस्थितस्वरूपप्रतीतेः तदपेक्षत्वात्–प्रकारिसापेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति प्रकार-

प्रतीतेः प्रकारिण्येव पर्यवसानं युक्तमिति प्रकारवाचिशब्दः प्रकारिणि पर्यवस्यतीत्यर्थः । शब्दशक्तेर्विशेषणमात्रविषयत्वेऽप्यर्थसामर्थ्याद्विशेष्यांशबोधनम् । अतोऽर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टार्थबोधसामग्री तच्च बोधनं मुख्यकोटिनिविष्टं यथासंस्कारसचिवेन्द्रियजन्यमपि प्रत्यभिज्ञानमिन्द्रियप्रसूतत्वात्प्रत्यक्षमेव न स्मृतिर्भवति तथाऽत्र मुख्यत्वम् । अतश्शब्दशक्तिः प्रकृतिनीतिसमात्रे पर्यवस्यति विशेष्यबोधनमर्थसामर्थ्यादिति केचिदाहुः तदयुक्तं शब्दशक्तेर्विशेष्यपर्यन्तत्वाभावे निष्कर्षकशब्देऽप्यर्थसामर्थ्याद्विशेष्यपर्यन्तधीप्रसङ्गात् रूपग्रहणेन नयनशक्तिः रूपिज्ञानमर्थसामर्थ्यजन्यं स्यात् तदाभ्युपगमे गन्धशब्दादिग्रहणे सत्यर्थसामर्थ्यात् पृथिवीगगनादिप्रतिपत्तिश्च स्यात्, न च तथा प्रतिपत्तिरस्ति जात्यादिशब्दशक्तिर्जात्यादिस्वरूपमात्रविषया गवादिशब्दशक्तिर्द्रव्यपरतन्त्रजात्यादिविषयेति निष्कर्षकानिष्कर्षविभाग इति चेत् तर्हि शब्दशक्तेः प्रकारिविषयत्वमभ्युपगन्तव्यं स्यात् धर्मिपरतन्त्ररूपताऽवगतेर्धर्मिप्रतिपत्तिसापेक्षत्वाच्छब्दशक्तेस्तत्प्रतिपत्तिहेतुत्वाच्च । किं च "वचसां वाच्यमुत्तमं" नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वतीत्यादिवचनस्वारस्यं च शब्दशक्तेरेव विशेष्यपर्यन्तत्वे सिध्यति ततोऽविशेष्यपर्यन्ता शब्दशक्तिरित्यत्र तात्पर्यम् । एवं न्यायशिक्षा कृता इत्थं प्रमाणोपपत्तिसिद्धत्वात्सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचितत्पदेन त्वं-पदसामानाधिकरण्यं मुख्यवृत्तमित्याह-[1]

टी० "अत एवे"ति, पर्यवस्यन्तः पूर्वं क्वचिद्व्यापृतस्य तत्रानुपरम्य तदन्वयिन्यन्यत्र व्यापारः पर्यवसानमिह विवक्षितं न तु व्यापारोपरमः व्यापारोपरमवाचित्वे सत्पर्यवस्यन्त इति पदच्छेदः । यद्वा पर्यवस्यन्तः पर्यवसातुम्प्रवृत्ता इत्यर्थः परमात्मप्रकारत्वाच्चेत्यन्तेन पूर्वोक्तन्यायस्सञ्चारितः नामरूपव्याकरणश्रुतिः पूर्वम्प्रमाणत्वेन पूर्वोदाहृताऽत्राभिप्रेता विशेषणवाचिशब्दोऽपि विशेष्यपर्यन्तोऽस्तु न तु विशेषणवाचिशब्दस्य परमविशेष्यवाचिशब्देन सामानाधिकरण्यं दृष्टमिति चेत्, उच्यते यथा नैल्य-

१ पर्यवस्यासुरिति पा० ।

गुणगतावान्तरजातिवाचिनीलशब्दो नैल्यगुणद्वारा तद्विशिष्टे पर्यवसित उत्पल-शब्देन समानाधिकरणो दृश्यते यथा गवादिशब्दा गोत्वा-

मू० अत एव गौरश्वो मनुष्यः इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डे पर्य्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्य्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचकशब्देन सामानाधिकरण्यं मुख्यमेव। ननु खण्डो गौः खण्डः शुक्ल इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टं द्रव्याणान्तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः—यथा दण्डी कुण्डलीति नैवं जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम् अन्योन्यस्मिन् व्यभिचारात् ॥

दिजातिवाचिनस्तद्विशेष्यपिण्डद्वारा तद्विशिष्टचेतने पर्यवसिता खण्डादि-शब्दैस्समानाधिकरणा दृश्यन्ते। तद्वत् उक्तं प्रयोजकमतिव्याप्त्या दूषयंश्चोदयति "नन्वि"ति, परिहरति "नैवमि"ति, प्रयोगदर्शनमविशिष्टमित्यभिप्रायेण द्रव्यं वेत्युक्तं, सामानाधिकरण्यं मत्वर्थीयप्रत्ययानपेक्ष इति भावः हेतुमाह "अन्योन्यस्मिन्नि"ति, व्यभिचारात्साध्यस्य सामानाधिकरण्यस्य जातिवाचिमात्रं गुणवाचिमात्रं चातिलङ्घ्य वृत्तेरित्यर्थः जातिर्वा गुणो वा मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति नाभ्युपेतं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यस्य जातिगुणवाचिशब्दयोरविशेषेण प्रयोगदर्शनादिति चेत्तर्हि शरीरवाचिशब्दानामपि मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्येन प्रयोगदर्शनात्सर्वप्रयोगविषयानुयायिप्रयोजकं वाच्यमिति भावः। जातिगुणयोरन्यतरत्वस्य अव्याप्तमित्यर्थः। इदमव्याप्तं प्रकारत्वस्यातिव्याप्तं तत् किं प्रयोजकमित्यत्राह—

भू० यस्य पदार्थस्य कस्यचित् प्रकारतयैव सद्भावः तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिस्तद्वाचकानां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वात् धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव, यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित् क्वचिद् द्रव्यान्तरप्रकारत्वमिष्यते तत्र मत्वर्थीयप्रत्यय इति निरवद्यं, तदेवम्परमात्मनः शरीरतया तत्प्रकारत्वाच्चिद्विशिष्टस्य जीवस्यापि, जीवनिर्देशविशेषरूपा अहंत्वमित्यादिशब्दाः परमात्मानमेवाचक्षत इति तत्त्वमसीति सामानाधिकरण्येनोपसंहृतम्,

टी० "यस्ये"ति, तदपृथक्सिद्धिस्थितिप्रतीतिभिरिति सिद्धिस्सत्ता प्रमाणसम्बन्धयोग्यत्वरूपा, स्थितिस्तदनुवृत्तिः, अपृथक्शब्दः सिद्ध्यादिसाधारणः, प्रतीति-शब्देनापृथक्प्रतीतेः स्वतःप्राप्तत्वं विवक्षितं, प्रकारतैकस्वभाववस्तुवाचिशब्दत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमित्यर्थः । निष्कर्षकशब्दान्यत्वे सतीति विशेष्टव्यं मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्ये हेतुं पक्षे तदभावज्ञापनाय दर्शयति "यत्र पुनरि"ति, इति निरवद्यमिति मत्वर्थीयप्रत्ययसापेक्षदण्डकुण्डलादिव्यावृत्तं मत्वर्थीयप्रत्ययनिरपेक्षसर्वप्रयोगविषयानुयायिप्रयोजकं सिद्धमिति नाव्याप्त्यादिदोष इत्यर्थः । इति निरवद्यमित्यनेन सहोपलम्भनियमादेः प्रयोजकत्वशङ्कापरिहारादिः प्रथमसूत्रोक्तोऽभिप्रेतः । परिहृतचोद्येन शिक्षितेन न्यायेन परमसाध्यसिद्धिमाह "तदेवमि"ति, तत्र चोद्यस्य परिहृतत्वात् एवं पूर्वं शिक्षितप्रकारेण ऐतदात्म्यमिदं सर्वमिति पूर्वमेव वैयधिकरण्येन ब्रह्मात्मकत्वं सर्वस्य विहितं, तस्य सामानाधिकरण्येन जीवविशेषे उपसंहारः, यथा स त आत्मान्तर्याम्यमृत इति जीवविशेषे कृत्स्नस्य ब्रह्मशरीरत्वं वैयधिकरण्येनोपसंहृतन्तद्वदित्यर्थः, अनेन उद्देश्योपादेयविभागनिबन्धनचोद्यपरि-

हारोऽभिप्रेतः । त्वम्पदप्रतिपन्नदोषभाक्त्वप्रसङ्गस्य परिहृतत्वं दर्शयति । यद्वा अपुरुषार्थस्य ब्रह्मण्यस्पर्शाय हि शरीरशरीरिभाव उक्तः । तथाऽपि तत्संसर्गात्तत्प्रसङ्ग इत्यत्राह—

सू० एवञ्च सति परमात्मानं प्रति जीवस्य शरीरतया अन्वयात् जीवगता धर्माः परमात्मानं न स्पृशन्ति, यथा शरीरगता बालत्वयुवत्वादयो धर्माः जीवं न स्पृशन्ति, अतस्तत्त्वमसीति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे, त्वमिति च तमेव सशरीरजीवशरीरकमाचष्टे इति सामानाधिकरण्यं मुख्यवृत्तं, प्रकरणाविरोधः सर्वश्रुत्यविरोधो ब्रह्मणि निरवद्ये कल्याणैकताने ऽविद्यादिदोषगन्धाभावश्च, अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवादन्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयः परमात्मा, यदुक्तं तस्यैष एव शारीर आत्मेत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न सम्भवतीति

टी० "एवञ्च सती"ति जीवशरीरगतधर्मा जीवमिव जीवधर्माः परमात्मानं न स्पृशन्तीत्यर्थः, पूर्वं यानि दूषणानि परमते स्वोक्तानि तानि स्वपक्षे नायान्तीत्याह "अत" इत्यादिना, अतः—सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वोपपादनात्, अयं हेतुः प्रकरणाविरोधादीनामपि साधारणः पदद्वयावगतविशेषणापरित्यागेन विशेष्यैक्यात् सामानाधिकरण्यस्य मुख्यत्वसिद्धिः प्रकरणाविरोध इति "तदैक्षत" "ऐतदात्म्यमिदं सर्वम्" "अनुप्रविश्य नामरूपे व्याकरवाणी" त्यादिवाक्याविरोध इत्यर्थः । सर्वश्रुत्यविरोध इति भेदश्रुतिघटकश्रुत्यविरोध उक्तः अविद्यादिदोषगन्धा-

भावश्चेति उभयलिङ्गत्वश्रुतिसिद्धार्थविरोधाभाव उक्तः, पूर्वोक्तजीवगतधर्मास्पर्शस्य फलमविद्याद्यभाव इति न पौनरुक्त्यम् । पूर्वपक्षिणा जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य राद्धान्तानुगुणत्वमाह "अत" इति, अतस्तत्त्वम्पदयोः प्रवृत्तिनिमित्तस्यावश्याश्रयणीयत्वात् त्वं-शब्दावगतधर्माणां ब्रह्मणि साक्षादन्वयविरोधेन जीवद्वाराऽन्वयात् द्वारभूतजीवाद् द्वारिणो ब्रह्मणो वैलक्षण्यसाधकं सामानाधिकरण्यमित्यर्थः । उक्तमर्थं परमप्रकृतेन सङ्गमयति "इति विज्ञानमयादि"ति, इति-शब्दो हेतौ पूर्वपक्षे जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य भेदावहत्वादेतदधिकरणसाध्यमानन्दमयस्य जीवादन्यत्वं सुस्थमित्यर्थः । अथ शारीरत्वश्रवणं पूर्वपक्षहेतुमनुवदति "यदुक्तमि"ति । परिहरति-

सू० तदयुक्तम्, अस्मिन्प्रकरणे सर्वत्र तस्यैष एव शारीर आत्मा यः पूर्वस्येति परमात्मन एव शारीरात्मत्वाभिधानात् कथं "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रतिज्ञातज्जीवव्यतिरेक[1]कस्यपरस्य ब्रह्मणः आत्मत्वेन व्यपदेशात् तद्व्यतिरिक्ताकाशादिनामन्नमयपर्यन्तानान्तच्छरीरत्वमवगम्यते "यस्य पृथिवी शरीरं यस्यापः शरीरं यस्य तेजश्शरीरं यस्य वायुः शरीरं यस्याकाशः शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते, अतस्तस्माद्वा एतस्मादात्मन इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः, प्राणमयं प्रस्तुत्याह "तस्यैष एव शारीर आत्मा यः

---

१. जीवव्यतिरेकस्य परस्येति तु पा० ।

टी० "तदयुक्त"मिति, ननु प्राणमयपर्यायस्थशारीरात्म-शब्दो मनोमयपरः, मनोमयपर्यायस्थस्तु विज्ञानमयपरः, तत्तदन्तरसद्भावज्ञापनपरत्वाच्छारीरात्म-शब्दस्य, अतस्सर्वेषां शारीरात्मत्वं परमात्मन एवेति कथमवगतमिति पृच्छति "कथमि"ति, प्रतिवक्ति "तस्माद्वा" इत्यादिना, अन्नमये शारीरात्मत्वकण्ठोक्त्यभावात् प्राणमये "तस्यैष एव शारीर आत्मा यः पूर्वस्ये"त्युक्तत्वाच्च तस्य वाक्यस्यार्थं विवक्षुस्तत्संघटनायाह "तस्माद्वा" इति, आकाशादिसृष्टेः पश्चाद्धि जीवस्य करणकलेवरसृष्टिरतस्ततः पूर्वं जीवस्य सृष्टत्वमत्वादाकाशादिस्रष्टृत्वं जीवविलक्षणसाधकं तस्य जीवविलक्षणस्यात्म-शब्देनाभिधानादात्म-शब्दस्य पुत्रादिवत्सप्रतियोगिकत्वादन्नमयादीनां परमात्मशरीरत्वमर्थादवगतमित्यर्थः । शरीरत्वं कण्ठोक्तं चेत्याह "यस्य पृथिवी"ति, अत इति श्रुत्यन्तरेषु शरीरत्वस्य कण्ठोक्तत्वात् "तस्माद्वा"इति, वाक्ये आत्म-शब्दनिर्देशेन अन्नमयादीनां शरीरत्वस्यार्थसिद्धत्वाच्च परमात्मैवान्नमयस्यात्मेत्यवगत इत्यर्थः । एवमात्मशब्दनिर्दिष्टः परमात्मैवान्नमयस्यात्मेति यः पूर्वस्येत्युक्तत्रानुवादस्य पुरोवादनिर्वाहः कृतः । उपादित्सितस्य तस्यैष इति वाक्यस्य प्राणमयपरत्वज्ञापनायाह "प्राणमयं प्रस्तुत्ये"ति, तद्व्याचष्टे:- (शेषमग्रे)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

(*Continued from page* 469. VOL. XI.)

शार्ङ्गिस्त्रिंशजेयं तव भुजयुगले नाथ !, दोषाकरश्री-
वक्त्रे, पार्श्वे तथैषा प्रतिवसति महाकुट्टनी(क) खड्गयष्टिः, ।

(क) महाकुट्टिनीति त्वन्यत्र ।

आज्ञेयं सर्वगा ते प्रसरति च पुरः, (क)किम्मया वृद्धया ते,

प्रोच्येवेत्थं(ख)प्रकोपात्स्मितकरसितया यस्य कीर्त्या प्रयातम् ॥

अत्र "इत्थं प्रोच्येवे"ति वाच्यम्, 'इत्थं'शब्दस्याऽव्यवहितपरामर्शकत्वात्, पादत्रयस्यैव च परामर्शनीयत्वात्· एवं "लग्नं रागावृताङ्ग्ये"त्यादावपि 'इति श्रीनियोगा'दिति वाच्यम्, 'इते'रपि तत्तुल्यत्वात्· दूषकताबीजं चोद्देश्यप्रतीतिविरह इति नित्योयम् ॥ (२०)

अमतपरार्थम्, अमतः परार्थो द्वितीयो ऽर्थो यस्य, तत्· अमतत्वं च

"द्वयो शृङ्गारबीभत्सौ तथा वीरभयानकौ ।

रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥"—

इत्याद्युक्तदिशा प्रकृतरसविरुद्धरसव्यञ्जकत्वम्· यथा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।

गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

अत्र प्रकृतस्य बीभत्सस्य विरोधी शृङ्गार,स्तस्य व्यञ्जको द्वितीयो ऽर्थः· तादृशार्थोपस्थित्या रसापकर्षकता ऽस्य दोषत्वबीजम्· अतो नित्योयं दोषः, नीरस आत्मलाभस्यैवाभावात् ॥ (२१) ॥ ५३ ॥ ५४ ॥ ८ ॥

अथार्थदोषलक्षणान्याह—

**अर्थो ऽपुष्टः, कष्टो,व्याहत, पुनरुक्त, दुष्क्रम,(ग) ग्राम्याः, ॥ ५५ ॥**

**संदिग्धो, निर्हेतुः, प्रसिद्धि,विद्याविरुद्धश्च, ।**

**अनवीकृतः,सनियमा,नियम,विशेषा,विशेषपरिवृत्तः,(घ) ॥ ५६ ॥**

**साकाङ्क्षो,ऽपदयुक्तः,(ङ)सहचरभिन्नः प्रकाशितविरुद्धः, ।**

**विध्य,नुवादायुक्त,स्त्यक्तपुनः स्वीकृतो, ऽश्लीलः ॥ ५७ ॥**

(क) प्रसरति पुरतः—इति पुस्तकान्तरम्· 'विलसति च पुनः'—इति महेश्वरसंमतः पाठः ।

(ख) प्रोच्यैवेत्थमिति पाठस्तु न युक्तः ।

(ग) दुःक्रमेति त्वेकस्या दुस्थः पाठः ।

(घ) सनियमाऽनियमविशेषाविशेषपरिवृत्ताः—इति क्वचित् ।

(ङ) साकाङ्क्षाऽपदमुक्तः—इति क्वचित् ।

पददोषलक्षणसूत्रस्थं दुष्टमितिपदं लिङ्गविपरिणामेन सम्बध्यते· तत्राऽपुष्टः,· पुष्टाद्भिन्नः· पुष्टत्वं च विवक्षितार्थबाधप्रयोजकानुपादन-त्वम्· तद्विरहश्च द्विधा—अप्रयोजकत्वात्, प्रयोजकत्वेऽप्यन्यलभ्यत्वाच्च· यत्-मेनं "व्यर्थमाहुर्गतार्थं य,द्यच्च स्याद्विप्रयोजन"मित्यनेन भोजराजो "व्यर्थं"माह· अत एव प्रकाशकारो ऽपि· "अत्रातिविततत्वादयो[क] ऽनुपादनेपि प्रतीयमानमर्थं[ख] न बाधन्त" इत्येवाह 'नत्वप्रयोजका एवे'ति· उदा०—

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृ[ग] द्रविर्जयति ॥

अत्रातिवितते निरवलम्बे व्योम्न्यऽविश्रामं गमनादितराऽप्रकाश्यकमलप्रकाशनाच्च रवेरुत्कर्षो विवक्षित,स्तत्रातिविततत्वं गगनस्यार्था-देवावगम्यते, ऽन्नेरितरोण्यम्· सरणित्वं मरुदुल्लासितसौरभत्वं चाप्रयो-जकमेवेत्यपुष्टा एते ऽर्थाः· नन्वेते ऽर्था अपुष्टा इति सिद्धम्· परंत्वतिवि-ततेति पुनरुक्तः, गगनपदादेव तदुपस्थितेः· मरुदुल्लासितसौरभेति विरुद्धम्, विकासात् पूर्वं सौरभाभावेन तद्विशिष्टस्य सूर्य्यणाप्रकाश्यत्वादिति नायं पृथगिति चेन्न, गगनपदं हि न विततत्वे शक्तम्· अर्थलभ्यत्वे च न पुनरुक्तता· यदुक्तं भोजराजेन "काञ्चेतिहासादावार्थ्या वृत्त्यां[घ] लब्धस्य साक्षाद्ग्रहणमपौनरुक्त्याये"ति· [ङ]नापि विरुद्धम् सौरभस्योपलक्षणत्वात्· यद्वा चित्रहेतुपुरस्कारेण पूर्वभावाभिधानात्· अथाधिकपदादस्य को भेदः· अप्रयोजके प्रयोजनाभावज्ञतोपि भेदो न सम्भवति· अत्र कश्चित्, तत्र पदार्थान्वयसमकालं दुष्टत्वप्रतिभास, इह तु तदन्तरमिति विशेष इति· तन्नातिसमीचीनम्, तथानियमे प्रमाणाभावात्· एता-वता च विशेषेण शब्ददोषत्वमेकस्या, ऽपरस्यार्थदोषत्वमिति विभागानु-पपत्तेश्च· विरुद्धमतिकृदमतपरार्थादौ शब्ददोषे ऽन्वयप्रत्ययोत्तरमेव दु-

(क) "अत्र विततत्वादय"इति प्रायो लभ्यते ।
(ख) प्रतिपाद्यमानमर्थमिति महेश्वरसंमतम् ।
(ग) कमलाकरविकाशकृदिति पाठस्तु टिप्पणिकाग्रिवृत्तः प्रतिभाति ।
(घ) ०वर्थवृत्त्येति पा० ।
(ङ) अत्र "परन्त्वपुष्टत्वमेवे"त्येतावदेकत्र पुस्तकेऽधिकं भवति ।

ष्टत्वप्रतिभासात्· वयं तु पश्यामः—यत्र विवक्षित एवार्थो ऽन्यथाभिधानेपि दुष्यति, सो ऽर्थदोषो, ऽन्यस्तु रसदोषभिन्नः शब्ददोष इति विवेकः· तथा च यत्राविवक्षितो ऽप्यर्थः कथञ्चिदन्वितत्तयाभिधीयते, तत्राधिकपदत्वम्, तत्पदेन विना ऽपि तत्प्रतीतेर्लाभात्· यत्र तु सोर्थो विवक्षित एव· परन्त्वप्रयोजकत्वान्यलभ्यत्वाभ्यां शब्देनोपादातुमनर्हः, तत्रापुष्टत्वम्· "स्फटिकाकृती"त्यत्र नाकृतिपदार्थ उपमानत्वेन विवक्षितः, तस्य नैर्मल्याभावात्· "यदपि च न कृतं नितम्बिनीना"मित्यत्रापि च रतस्य स्तनपतनावधित्वव्यतिरेक एवानुचितत्वेन विवक्षितो, नतु तत्कृतिव्यतिरेकः, पूर्वार्द्धे तथैवोपक्रमात्,(क) किन्तु छन्दोनुरोधादिना द्वयमपि कथञ्चिदन्वितत्वेनोपात्तमित्यधिकपदत्वम्· "अतिविततै"त्यादौ त्वतिविततत्वादिकं वक्तुर्विवक्षितमेव· परन्त्वर्थलभ्यत्वादिना नोपादानार्हमित्यऽपुष्टम्· व्यक्तं च पूर्वस्य शब्ददोषत्व मुत्तरस्य चार्थदोषत्वमिति· दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैमुख्यम्· अत एव यमकादावदोषता, तत्रालङ्कारान्तरारम्भेणा(ख)शक्त्यनुन्नयनात्· कर्णावतंसादिपदे च विशेषद्योतकतया तदुपादानं नाशक्त्युन्नायकमित्यदुष्टत्वम्· अत एव विशेषणदानार्थं विशेष्यप्रयोगेपि दोषाभावः'॥ (१)

कष्टः, प्रतीतिक्लेशवान्, दुरूह इत्यर्थः· यथा—

सदा मध्ये यासामियममृतनिस्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम्, ।
प्रसादं ता एता घनपरिचिता(ग) केन महतां
महाकाव्यव्योम्नि स्फुरितरुचिरा यान्तु रुचयः ॥

अत्र 'यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यात्मकमार्गत्रयवती भारती चमत्कारं वहति· ता गम्भीरकाव्ये घनपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु· तथा, यासामादित्यप्रभाणां मध्ये त्रिपथगा

(क) तथैव क्रमाद्विति पु· ।
(ख) ०ऽम्भेनेति तु बालिशपाठः ।
(ग) घनपरिचया इति पा· ।

नदी सम्बन्धं वहति· ता मेघपरिचिताः कथं प्रसन्ना भवन्ती'त्यर्थो विवक्षितः· स च शब्दान्तरैरपि क्लेशेनैव प्रतीयत इत्यर्थ एवायं दुष्टः· क्लिष्टत्वादिकं शब्ददोषः, घटनान्तरेणास्य सुखेनैव प्रतीतेः· सम्यक्प्रतीति-विरहश्च दूषकताबीजम्· अतो नित्योयं दोषः ॥ (२)

व्याहतः,

"उत्कर्षो वाऽपकर्षो वा प्राग् यस्यैव निगद्यते ।
तस्यैवाथ तदन्यश्चेद्, व्याहतो ऽर्थस्तदा भवेत्" ॥—

इत्युपलक्षितविरुद्धत्ववान्· यथा—

जगति जयिनस्ते ते भावा नवेन्दुकलादयः[क]
प्रकृतिमधुराः सन्त्येवान्ये, मनो मदयन्ति ये, ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं, जन्मन्येकः स एव महोत्सवः ॥

अत्र पूर्वार्द्धे साधारणं चन्द्रिकाचन्द्रकलाः स्वं प्रत्य ऽसारतया प्रतिपादिता,[ख] स्तेनैवोत्तरार्द्धे चन्द्रिकात्वमुत्कर्षायारोप्यत इति व्याघातः· दूषकताबीजं च वाच्यार्थाप्रतीति,रयं नित्यो दोषः ॥ (३)

पुनरुक्तः, शब्देन प्रतिपन्नत्वे सति पुनस्तेनैव प्रतिपादितः· अर्थेन प्रतिपन्नस्य प्रतिपादने ऽपुष्टत्वमुक्तम्· यत्तु प्रयोजनं विनेति विशेषणमिति· तदयुक्तम्ः एवं सत्यऽस्याऽनित्यदोषत्वं न स्यात्, प्रयोजनस्थले पुनरुक्तत्वस्यैवाऽभावप्रसङ्गात्· स चायं द्विधा, पदार्थवाक्यार्थभेदात्· तयोराद्यो यथा—"अरे रे अर्जुनार्जुन! सात्यके सात्यके[ग]! न युक्त ईदृशो मम तातस्य[घ] सुतशोकभ्रान्त्या न्यस्तशस्त्रस्य दिवमुपगच्छतः केशाकर्षणरूपपरिभवः· अपि वा,[ङ]

(क) पुस्तकान्तरे नवेन्दुकलादयइत्यत्र मकारं प्रक्षिप्य कमलादय इत्यकल्पय,-त्कश्चित्तत्तदात्तत्वप्रदर्शनमात्रं तस्येति ।

(ख) साधारणं चन्द्रिकाचन्द्रकला स्वं प्रत्यसारतया प्रतिपादिता—इति एकत्र पुस्तके ऽस्ति· किन्तु "सावधारणं येन चन्द्रिके"त्यादि पाठः क्वचिदप्यनुपलब्धो ऽप्यत्र वस्तुतो ऽस्तीति मे भाति ।

(ग) एकत्र 'सात्यके'—इति सकृदेव पठ्यते ।

(घ) मत्तातस्येति पाठस्त्वर्थाऽविशेषेऽपि न युक्तः ।

(ङ) अपि चेति पु· ।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः, ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥"

अत्रा'र्जुनार्जुने'तिसम्बोध्य 'यैर्भवद्भि'रित्यनेन परामृश्य[क] तेषामित्यनेन परामर्शादर्जुनस्यापि प्राप्तेः 'सभीमकिरीटिना'मिति किरीटिपदार्थः पुनरुक्तः· नच प्रधान्यप्रतीतये पुनरुपादानमित्यदोषता, संबोधनेनैव तल्लाभात् । वाक्यार्थस्य पुनरुक्तत्वं यथा—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थिते ऽस्मिन्मम पितरि गुरौ सर्व्वधन्वीश्वराणाम् ।
कर्ण ! ऽलं सम्भ्रमेण, व्रज कृप ! समरं, मुञ्च हार्दिक्य ! शङ्कां,
ताते चापद्वितीये वहति रणधुरां[ख] को भयस्यावकाशः ॥

इत्यत्र 'अलं सम्भ्रमेण को भयस्यावकाश' इत्यऽभिन्नार्थौ· नच वक्तू रौद्ररसाविष्टत्वं समाधानमाशङ्कनीयम्, वीरस्यायुक्तकारित्वावर्णनात्· दूषकताबीजं च निष्प्रयोजनाभिधानेन श्रोतुर्वैमुख्यम्· अत एव प्रयोजनसत्त्वेनाऽदोषत्वादनित्योयं दोषः· केचित्तु—अर्थप्राप्तस्यापि वचने पुनरुक्तता· तदुदाहरणं "मस्त्रज्वाले"ति· अप्रयोजकाभिधानमात्रस्थलेत्वऽपुष्टार्थत्वमित्याहुः ॥ (४)

दुष्क्रमः, दुष्टक्रमः· दुष्टत्वं च क्रमस्य लोकशास्त्रविरुद्धत्वम्· तत्राद्यं यथा—

भूपालरत्न ! निर्दैन्यप्रदानप्रथितोत्सव ! ।
विश्राणय तुरङ्गम्मे मातङ्गं वा मदालसम् ॥

अत्र तुरङ्गभूयिष्ठं प्रति 'मातङ्गं देहि तुरङ्गं वे'ति लौकिकक्रमः, गुरुदानाशक्तौ लघुदानौचित्यात्· वक्तुश्च यथास्थित एव क्रमो विवक्षित इत्यर्थदोष एवायम् । द्वितीयं तु

(क) परामृश्येति परामर्षादिति च पाठो ऽपि नातिशायकः ।
(ख) रणधुरमिति प्रायः सर्वत्रोपलभ्यमानत्वे ऽपि रणधुरामिति न्याय्यमिति न्यस्यते ।

कावारिऊण[क]खउरं गामइलो मज्जिऊण जेमिश्र श्र ।
णक्खत्तं तिहिवारे जोइसिश्रं पुच्छिउं चलिदो ॥

नक्षत्रादिज्ञानपूर्व्वकं क्षौरस्य शास्त्रेण विधानात्तद्विरुद्धमिदम्· दूषकताबीजं च विरोधेनाऽप्रतीतिः, सहृदयोद्वेगो वेति नित्य एवायम् ॥ (५)

ग्राम्यः ग्रामसंभवः, अविदग्धोक्तिप्रतिपादितो रिरंसादिः·[ख] यदुक्तम्—

"स ग्राम्यो ऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते ।
वैदग्ध्यवक्रिमबलं [illegible]व वनितादिषु" ॥

इति· यथा—

स्वपिति यावदयं निकटे जनः, स्वपिमि तावदहं, किमपैति ते,
तदुपसंहर[ग]कूर्प्परमायतं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥

अत्र 'निकटे तावदहं स्वपिमी'त्यविदग्धस्य रिरंसोक्तिः· एवमन्यत्· दूषकता चाश्लीलवत्· किञ्चैतादृशोक्तिकवलितो विभावादिरूपो ऽर्थो न रसाय पर्य्याप्यते, भृष्टमिव बीजमङ्कुरायेति ॥ (६)

संदिग्धः, सन्देहविषयः, तत्प्रयोजकरूपवानिति यावत्· यथा—

मात्सर्य्यमुत्सार्य्य विचार्य्य कार्य-
मार्य्याः समर्य्यादमुदाहरन्तु,[घ] ।
सेव्या नितम्बाः किमु भूधराणा,-
मुत स्मरस्मेरविलासिनीनाम् ॥

अत्र भूधरनितम्बानां कामिनीनितम्बानां वा सेव्यत्वं व्यञ्जनया प्रतिपिपादयिषितं द्वितीयेन संदिह्यते, प्रकरणाद्यभावात्· यत्तु वक्तृविशेषसन्देह इति व्याख्यानं सर्वमान्यानाम्, तदुत्तानताविलसितम्· वक्तुः पदवाक्यार्थत्वाभावेन तत्सन्देहस्यार्थदोषत्वाभावात्· अतएव ध्वनिकृता[ङ] वक्तृविशेषनिश्चयः सन्देहाभावप्रयोजकत्वेनोक्तः· तन्निश्चये एकत·

(क) कारविऊणखउरश्रं—इति पु· ।
(ख) रिरंसादिश्चेति पु· ।
(ग) तदपि संहरेति पुस्तकान्तरं तु न प्रलब्धम् ।
(घ) ०मिदं वदन्त्विति प्रायः कोषे ।
(ङ) "ध्वनिकृते"त्येकत्रास्ति पुस्तके ।

रनितम्बस्य सेव्यत्वनिर्णयेनाऽसन्देहात् "वन्द्या"मित्यादौ द्वितीयासप्तम्यन्तत्वाभ्यां पद एव सन्देहो, ऽत्र तु पदानामसन्दिग्धत्वे सत्येव स इति पदसंदिग्धत्वाद्भेदः· दूषकताबीजं च उद्देश्यनिश्चयविरहः· यत्र तु तत्सन्देह एवोद्देश्यस्तत्रादोषत्वमेवेति ॥ (७)

निर्हेतुः, निष्क्रान्तो हेतुर्यस्मात्· यथा—

गृहीतं येनाऽऽसीः परिभवभयान्नोचितमपि,[क]
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः, ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्,-
विमोक्ष्ये शस्त्र ! त्वामहमपि, ततः [ख] स्वस्ति भवते ॥

अत्र स्वशस्त्रत्यागे हेतुर्नोपात्तः· ननु हेतुं विना[ग] प्रतीतेः पर्य्यवसानं, न वा· आद्ये दोषाभावः· अन्त्ये साकाङ्क्षसङ्कर इति· अत्र कश्चित्, उपात्तस्य परेणानन्वये साकाङ्क्षत्वम्· अनुपादाने निर्हेतुत्वमिति विशेष इति· तन्न, साकाङ्क्षोदाहरणे उपेक्षितुमित्याकाङ्क्षतीत्यनेनानुपात्तसाकाङ्क्षताया एव वृत्तौ प्रदर्शनात्· तस्मात् हेतुतद्विरूसापेक्षतया द्वयोर्भेद इत्येव न्यायः· यद्वा, अत्राऽप्रतीतिमात्रम्, तत्र तु विरुद्धा प्रतीतिः, स्त्रीरत्न एवामर्षप्रतीतेरिति[घ] विशेषः· दुष्टिबीजं च उद्देश्यप्रतीतिविरहः· अत एव प्रसिद्धावनुपादानेऽपि न दोषः ॥ (८)

प्रसिद्धिविरुद्धो लोकस्य कवेर्वा यत्रार्थे न प्रसिद्धिः· यथा—

इदं ते केनोक्तं कथय कमलातङ्कवदने!
यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियम्, ।
इदं तद् दुःसाधाऽऽक्रमण[ङ] परमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥

(क) नोज्झितमपीति क्वचित् ।
(ख) यत इति पा· ।
(ग) तं विनेति पु· ।
(घ) प्रतीतिरितीति पाठस्तु न युक्तः ।
(ङ) दुःसाध्याक्रमणेत्येकत्र, दुःसाध्यक्रमणेति चान्यत्रास्ते· न त्वतियुक्तम् ।

अत्र कामस्य चक्रं लोके कविमार्गे वा न प्रसिद्धमिति प्रसिद्धिविरुद्धः। यत्र तु लोकस्य कवेश्च प्रसिद्ध्योर्विरोधः, तत्र कविप्रसिद्धेर्बलवत्त्वम्। तथाच(क) लोकविरुद्धेऽपि कवीनां यथा यत्र समयः, तत्र न दोषः। यथा—

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः,।
तदनु भवतः कीर्तिः केनाप्यगीयत, येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नाऽसि शुभप्रदः॥

अत्र कीर्त्तेर्मूर्त्तत्वं, ज्योत्स्नावत्प्रकाशकता च लोकविरुद्धे अपि कविसमयसिद्धे इत्यदोषः। एवमकीर्त्त्यादेर्मालिन्यादौ द्रष्टव्यम्। यत्तु—

उपपरिसरं गोदावर्य्याः परित्यजताऽध्वगाः!
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम्,(ख)।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः॥

इति कविसमयसिद्धोदाहरणम्। तदयुक्तम्, चरणन्यासेनाऽशोकाङ्कुरोद्गमस्य कवीनामप्यऽसम्मतेः, पुष्पोद्गम एव तेषां समयात्। दूषकताबीजं च विरोधादर्थाप्रतीतिरित्युत्पातादिना(ग) तत्प्रतीतावऽदोषः॥(९)

विद्याविरुद्धः, शास्त्रेण विरोधवान्। स चाऽयं शास्त्रभेदाद्भिद्यते। तत्र धर्म्मशास्त्रविरुद्धो यथा—

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च॥

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्म्मशास्त्रेण प्रतिषिद्धमिति तद्विरुद्धोऽयमर्थः। अर्थशास्त्रविरुद्धो यथा—

अनन्यसदृशं बाह्वोर्बलं यस्य विलोक्यते।
षाड्गुण्यानुसृतिस्तस्य सत्यं स्यान्निष्प्रयोजना॥

(क) चेोनास्ति एकत्र।
(ख) ०रिहेत्यताम इति क्वचित्।
(ग) ०"प्रतीति। उत्पातादिने"ति पु०।

अत्र महाबलस्यापि सन्ध्यादिषड्गुणानुसरणमर्थशास्त्रेण विहित मिति तद्विरोधः । कामशास्त्रविरुद्धो[क] यथा–

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ।

अत्र केयूरपदे नखक्षतं कामशास्त्रविरुद्धम्,[ख] बाहुमूलावयवविशेषे तस्य विधाना,दर्थतः शेषेषु प्रतिषेधात् । योगशास्त्रविरुद्धो यथा–

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाध[ग] सिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥

अत्र मुक्तिसमीपस्थमसंप्रज्ञातयोगमनपेक्ष्यैव मोक्षो योगशास्त्रे विरुद्धः· प्रथमं[घ] विवेकख्यातिः प्रकृतिपुरुषयोर्भिन्नत्वज्ञानरूपा· ततो वितर्कविचाराद्यनुसारिरूपः संप्रज्ञातयोगः, पश्चात्पुरुषमात्राऽऽलम्बनस्वरूपोऽसंप्रज्ञातयोग,स्ततो मुक्ति,र्नतु विवेकख्यातिमात्रत एवेति हि योगशास्त्रम् । एवं तुरगादिशास्त्रविरोधोऽप्यूहनीयः· अभिमतप्रतीतिविरहो दूषकताबीजम् ॥ (१०)

अनवीकृतं, भङ्ग्यन्तरेण यन्नवत्वं, तन्न प्रापितः· एकभङ्गिनिर्दिष्टानेकार्थ इत्यर्थः· यथा–

प्राप्ताः श्रियः सकलकामदुघा,स्ततः किं,
दत्तं पदं शिरसि विद्विषतां, ततः किम्, ।
सम्मानिताः प्रणयिनो विभवै,स्ततः· किं,
कल्पं स्थितं तनुभृतां तनुभि,स्ततः किम् ॥ (शेषमग्रे)

(क) कामशास्त्रे विरुद्धमिति प्रायः प्राप्यते ।
(ख) शास्त्रे विरुद्धमिति पु· ।
(ग) दुःसाध्येति क्वचित् ।
(घ) प्रथममित्येकत्र नास्ति ।

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 460. VOL. XI.)

१६ य आत्मा सर्ववस्तूनां यदर्थं सकलं जगत् ।
आनन्दाब्धिः स्वतन्त्रोऽसावनादेयः कथं वद ॥ २६ ॥
यदन्यद्वस्तु तत्सर्वं यद्भेदे नरशृङ्गवत् ।
सत्ता सर्वपदार्थनामनादेयः कथं वद ॥ २७ ॥
यद्वशे प्राणिनः सर्वे ब्रह्माद्याः कृमयस्तथा ।
ईशानः सर्ववस्तूनामनादेयः कथं भवेत् ॥ २८ ॥
यच्चक्षुः सर्वभूतानां मनसो यन्मनो विदुः ।
यज्ज्योतिर्ज्योतिषां देवो नोपादेयः कथं विभुः ॥ २९ ॥
मोदप्रमोदपक्षाभ्यामानन्दात्मा तमो गतः ।
जीवयत्यखिलान् लोकाननादेयः स्वयं कुतः ॥ ३० ॥

16. That which is the Self of all things; for the sake of which the whole world is; that ocean of bliss, independent of aught else;—pray declare how this Self is to be rejected as the aim of man... ........XXVI.

How is that to be rejected which is the Existence of all things; that from which all that is regarded as distinct is sheer nonentity like the horns of a man?............XXVII.

How is that to be rejected under whose control are all living things from Brahmā down to insects; the ruler of all things?............XXVIII.

How is that to be rejected which the wise know to be the eye of all things, the mind of the mind, the light of lights, the bright, pervading one?............XXIX,

How is that to be rejected, the Self which is Bliss, which, when it has gone to darkness on its two wings of joy * and great joy, gives life to all the worlds?............XXX.

* cf. Taitt. Up. II. 5.

यस्यानन्दसमुद्रस्य लेशमात्रं जगद्गतम् ।
प्रसृतं ब्रह्मलोकादौ सुखाब्धिं कः परित्यजेत् ॥ ३१ ॥
हैरण्यगर्भमैश्वर्यं यस्मिन्दृष्टे तृणायते ।
सीमा सर्वपुमर्थानामपुमर्थः कथं भवेत् ॥ ३२ ॥
यत्कामा ब्रह्मचर्यन्त इन्द्राद्याः प्राप्तसम्पदः ।
स्वस्वभोगं त्यजन्त्येव न पुमर्थः कथं नृणाम् ॥ ३३ ॥
यद्विविदिषाफलाः सर्वा वैदिक्यो विविधाः क्रियाः ।
यागाद्या विहितास्तस्मिन्नुपेक्षा वद ते कथम् ॥ ३४ ॥

That ocean of Bliss of which only a small portion belongs to this world; that sea of pleasure which pervades the world of Brahmā and the rest, who would reject?............XXXI.

That which being known, the majesty of Hiraṇygarbha is estimated as nothing; * how can that which is the utmost limit of all human aims be not the aim of man? XXXII.

How can that not be the aim of men through desire for which Indra and the others †, happy as they were, entered on pupilage and abandoned each his own sphere of happiness?...... ......XXXIII.

All the various actions, sc. sacrifices &c., prescribed in the Veda, have as their result the desire to know that Self (yat) ‡: pray then declare how you can reject that Self..... ......XXXIV.

---

* cf. Taitt Up. II. 8. 4. and Max Müller's note, *in loco.*

† cf Chānd. Up. VIII. 7 et. seq.

‡ The true aim of Vedic sacrifice is not the securing of a transient paradise (svarga) for the sacrificer, but that purification of his mind whereby he may gain intuition of Self which is Bliss eternal. Paradise is but the 'half-way house, as it were, to reach which he engages in sacrifice who knows not this highest truth.

यद्दृष्टिमात्रतः सर्वाः कामाद्या दुःखभूमयः ।
विनश्यन्ति क्षणेनासावुपादेयः कथं न ते ॥ ३५ ॥

आह्लादरूपता यस्य सुषुप्ते सर्वसाक्षिकी ।
तदुपेक्षी भवेद्यस्य तदन्यः स्यात्पशुः कथम् ॥ ३६ ॥

सत्यमितरानुपसर्जनत्वमुपादेयत्वं तच्चात्मन्येव विश्रान्तं सुखदुःखाभावयोरपि तदर्थत्वादन्यथा परसुखदुःखाभावयोरप्युपादेयता स्यात् तस्मादात्मैव परमपुरुषार्थः सुखदुःखाभावात्मकत्वाच्च । न च भावरूपस्यात्मनो दुःखाभावात्मकत्वानुपपत्तिः ।

How can that not be your aim by the mere knowledge of which all desires &c, the causes of pain, perish instantly?............XXXV.

Is he not a beast who rejects that Self which as Bliss is vouched for by all living beings in the state of dreamless sleep?............XXXVI.

His objections met in detail: Self which is absolute Bliss, remains as the highest aim of man.

Grant then (as the opponent holds) that fitness to be accepted as the aim of man consists in the thing being indepeudent of aught else. But this *independence* abides only in the Self; for pleasure and the absence of pain are for the sake of Self (tat). If this were not so, one might accept as one's aims the pleasure and absence of pain pertaining to another. Hence Self is the highest aim of man; and further, because Self *is* pleasure and the absence of pain. Nor can it be urged against our view that Self as a *positive* entity cannot be the *negation* of pain.

भवेदयं दोषो यद्यात्मनि दुःखं पारमार्थिकं स्यात् न त्वेवमस्ति किं तु अज्ञानफणिफणासमुद्भूतदेहाद्यभिमानविषदंष्ट्रायवर्तिरागादिलक्षणहलाहलविषज्वालाप्रतिबद्धस्वात्मदृष्टिः सवितरि तमोवन्निर्दुःखेपि स्वात्मनि रौरवाद्यनेकभेदभिन्ननरकसमुदायसमुद्भूतदुःखौघमारोपयत्येव केवलम् । आरोपितस्य चाभावो नाधिष्ठानादतिरिच्यते अधिष्ठानादभेदेनैवारोपितत्वाद्भेदेन च तस्यासत्वात् असन्निषेधस्य च सत्वात् । तस्माद् दुःखाभाव एव परमपुरुषार्थ इति यो मन्यते तस्याप्यात्मैव परमपुरुषार्थः तस्याशेषसंसारदुःखनिवृत्तिरू-

This would be a weak point in our position, if to Self pain pertained as something absolutely real: but such is not the case. But the man whose vision of Self has been overcome by the heat of that deadly poison sc. his passions, lurking in that poison-fang, sc. the false consciousness of his body, sense-organs &c. (as identical with Self)—which issues from the hood of that serpent Nescience;—such a man merely surmises in the Self, to which in reality no pain belongs, all those pains which issue from the various hells, raurava and the rest; just as one might surmise darkness in the sun. And the negation of a falsely surmised thing is no other than the substrate itself (in which that thing was falsely surmised, for only as identical with the substrate was it surmised; and because, as distinct from the substrate, it is non-entity; and because the negation of non-entity is entity. Hence even the thinker who holds that the cessation of pain is the only aim of man has the Self indeed as his highest aim; because Self (tasya) *is* the cessation of all this world of pain.

पत्वात् । असाध्यत्वादात्मनो ऽपुरुषार्थत्वमिति चेत् न । साध्यत्वेन पुरुषार्थत्वस्य निरस्तत्वात् । स्वतःसिद्धदुःखाभावमुद्दिश्य मुमुक्षुप्रवृत्त्यनुपपत्तिरिति चेत् न । ब्रह्मात्मसाक्षात्कारानन्तरं प्रवृत्त्यनुपपत्तेरिष्टत्वात् । तत्फलस्य जातत्वात् । पूर्वं त्वशेषदुःखाभावरूपब्रह्मात्मसाक्षात्कारेणैव सफलत्वात् । ज्ञानमपि न साध्यं वृत्तेरारोपितत्वात् चैतन्यस्यात्मत्वादिति चेन्न अस्य परामर्शस्य ज्ञानोत्तरकालीनत्वात् ।

Nor can it be argued that Self, inasmuch as it is not something that can be brought about as a result, cannot be the aim of man; for it has been disproved* that a human aim consists in something to be brought about as a result. Nor can it be argued that the aspirant to emancipation would not engage (in *hearing* and the other prescribed means), if he were to have in view the absence of pain (sc. the Self) which is self-establised (*i. e.* already exists independent of his efforts). For it accords with our view that activity (on the part of the aspirant) should be impossible after he has gained intuition of Self as identical with Brahman: because the result of his activity (tat) has been brought about; whereas, previous to this, his activity is fruitful only through his intuition of Self as identical with Brahman, which is the cessation of all pain. Nor is it to be urged that knowledge also is not something to be brought about as a result, because the mental modification (vṛitti, which is supposed to give rise to the intuition) is something falsely imagined, and because knowledge (chaitanya, Brahman) is the Self. For this judgment (as to the falsity of mental activity) is subsequent to the rise of (perfect) knowledge (sc. the intuition of the identity of Brahman and the Self).

* निरस्तत्वाद्भाष्यकारेणेति शेषः । Gloss cf. Ved. Sū, I, 1, 4, Bhāshya *in loco*.

दुःखाभावोपि न केवलः पुरुषार्थः दृष्टदुःखेपि विषये भोग्य सुखलोभेन प्रवृत्तिदर्शनादिति चेन्न आत्मन एव परमानन्दरूपत्वेन सुखस्यापि सत्त्वात् । न चात्र विप्रतिपत्तिः परमप्रेमास्पदत्वेन सुखरूपत्वस्य सिद्धत्वात् असुखात्मनि प्रेमादर्शनात् । न च सुखस्य जन्यत्वात् जन्याजन्ययोरात्मसुखयोरभेदानुपपत्तिः जन्यत्वासिद्धेः । न च सुखं मे जातमिति प्रतीत्या तत्सिद्धिः शुभादृष्टवशादात्मस्वरूपसुखाभिव्यञ्जनयोग्यान्तःकरणवृत्त्युदयेनान्यथासिद्धेः । न चाऽहं सुखमिति प्रतीत्यापत्तिः विद्वांसं प्रतीष्टापादनात् । अविदुषस्त्वध्यस्ताहङ्कारदेहादावेवात्माभिमानात् तत्र चात्मन उपसर्जनतयैव स्फुरणात् ।

Nor is it to be argued that the absence of pain is not alone the aim of man, because, as a matter of fact, through the greed for pleasure to be enjoyed, activity follows in regard to an obviously painful object. For the Self in its character of the highest Bliss is pleasure also. Nor is there any contradiction here, for we have proved that Self, as the object of the highest love, is pleasure (cf. p. 10.), since love for a Self which is not pleasure is unknown. And it must not be urged that because pleasure is something produced, the identity of a product (sc. pleasure) and a non-product (sc. Self) is impossible; for it has not been proved that pleasure is a product. And it cannot be urged that the consciousness 'pleasure has been *produced* for me' is a proof of this; for the above consciousness was brought about in another way, sc. through the rise of a mental modification capable of manifesting (*i. e*, removing the veil of Nescience from) pleasure which is the Self,—(and this was possible) through the merit acquired by the individual in his former lives. Nor is it to be argued that (if Self and pleasure are identical) our consciousness should take the form 'I am pleasure.' For, as against him who knows the truth, this is merely to affirm what he himself maintains; but such consciousness does not accrue to him who knows not the truth, because he falsely identifies the Self with his body and with his consciousness of 'I'(ahaṃkāra), which again) have been falsely surmised (in the Self): and because in his case the Self appears in consciousness (sc. I am happy) as subordinate to his body and ahaṃkāra (tatra).

अत एव ज्ञानसुखादिगुण आत्मेति तार्किका भ्रान्ताः । न च दुःखेऽपीयं गतिः समा दुःखस्य सुषुप्त्यादौ व्यभिचारित्वेनात्मस्वरूपत्वानुपपत्तेः । प्रमाणाभावाच्च सुखात्मकत्वग्राहकश्रुतिविरोधाच्च । तथा चात्मत्वमेव परमपुरुषार्थताप्रयोजकं । न च लोकोत्तरत्वोपालम्भः महानुभावैरेव व्यासवशिष्ठादिभिर्महाराजैश्च ऋषभादिभिरैहिकामुष्मिकसकलसुखतत्साधनस्यात्मलिप्सयैवोपेक्षितत्वात् । न च बहुनुग्रहो न्याय्यः देहात्माभिमाने तदभावात् । न च सुखरूपत्वे ऽप्यात्मनः स्वसम्बन्धिसुखाभावादपुरुषार्थत्वं सम्बन्धस्यात्माऽभेदोद्देश्यकत्वात् ।

Hence also the Naiyāyikas are deluded who hold that the Self has knowledge, pleasure &c. as attributes. Nor can it be said that the line of argument (adopted above in regard to pleasure) will hold equally well in regard to pain. For since pain is absent from the states of dreamless sleep &c., it cannot be the Self (which is all pervasive): and because there is no evidence (to support the argument advanced in regard to pain); and becase Śruti, declaratory of pleasure as the Self, contradicts this position. Accordingly, our view is that Self-hood alone constitutes the highest aim of man. Nor can the reproach that our position transcends human experience find place; for mighty ṛishis like Vyāsa and Vasishṭha and mahārājas like Ṛishabha, through a desire to obtain Self, put aside all pleasure, here and hereafter, together with the means of obtaining such. Nor can the maxim that compliance with the majority is right apply here (to exclude the few like Vyāsa and the rest); for this maxim does not hold (even the opponent will admit) in regard to the false identification of the Self with the body (by the ignorant majority).

Nor can it be argued that even if the Self is pleasure, it cannot be the aim of man, on the ground that there is no such thing as pleasure in relation with itself (sc. pleasure viewed as Self). For the relation desired (uddeśyakatvāt), is that of identity of Self (with pleasure).

सुखं ह्यत्यन्तमुपादेयं कथं मे प्रियतमे आत्मन्यभेदेन प्रविशेदिति कामयमानो भेदभ्रमस्य प्राबल्यादभेदं कर्तुमशक्नुवानः सम्बन्धमात्रेण संतुष्यति । न च सम्बन्धः स्वतः पुरुषार्थः सुखदुःखाभावेतरत्वात् । यत्तु सुखस्य सुखं न पुरुषार्थ इति तस्य सुखे अनात्मत्वारोपनिबन्धनत्वात् * । न च कुष्ठाद्युपहतानां मरणानुपपत्तिः तत एवात्मनः सुखरूपत्वसिद्धेः । ते हि परमप्रियतमे आत्मनि दुःखकारणं देह इति तमुपेक्षन्ते न त्वात्मानम् । पारलौकिके सुखे कामनादर्शनात् । एतेन काम्यतीर्थादौ मरणं व्याख्यातम् । मरणस्यापि देहपरित्यागरूपत्वात् ।

For pleasure is accepted as an absolute aim. 'How may pleasure enter into the relation of identity with my beloved Self' —the man, who thus desires and is unable to identify Self with pleasure because his mistaken notion (of Self and pleasure being distinct) prevails, is content to desire merely the relation (between Self and pleasure). Nor can it be said that this relation is in itself the aim of man, for it is something other than pleasure and the absence of pain (which alone the opponent regards as the aims of man). But as regards the opponent's statement that pleasure cannot be the aim of pleasure, that was due to his falsely surmising that pleasure is not Self. Nor can it be urged that (on the view of Self and pleasure being identical) lepers and others would not choose death, since the very fact of this choice proved that Self is pleasure; for, thinking that the body is the cause of pain to the beloved Self these men set at nought the body and not the Self:— (they do not disregard the Self) as is proved by the fact that they do desire pleasure in the world to come. For this reason death at one or other of the favourite tīrthas is praised (in the Śāstras), since death too is an abandonment of the body.

* सुखानारोपनिबन्धनत्वात् var. lec.

आत्मन एव पुरुषार्थत्वे मुक्तसंसारिणोरविशेषापत्तिरिति चेत् न ज्ञानाज्ञानाभ्यां विशेषात् । अज्ञानी हि भ्रान्तः कर्ता भोक्ता संसारी जरामरणधर्मा इत्येवमात्मानं जानाति विद्वांस्तु तद्विरुद्धाकर्त्रभोक्त्रसंसारिजरामरणजन्मादिशून्यस्वप्रकाशसच्चिदानन्दपरिपूर्णस्वभावाशनायाद्यतीतास्थूलानण्वनेतिनेतिसत्यज्ञानादिलक्षणसर्वजगदधिष्ठानभूतमात्मानमागमाचार्यस्वानुभवैकवाक्यतया साक्षात्कृत्याशेषदुःखनिदानमज्ञानं तत्कार्यं च बाधित्वा देशकालवस्तुपरिच्छेदशून्यपरिपूर्णानन्दविग्रहः स्वमहिम्ना प्रतिष्ठितः परमपुरुषार्थो भवति । न च ततः परं कामयितव्यमस्ति सर्वेषां कामानामात्मप्राप्तिसीमत्वात् ।

Nor can it be urged that if Self is the sole aim of man, it follows that there is no difference between an emancipated soul and one that is still in the bonds of transmigration. For there is a difference between them due to their knowledge and ignorance respectively. For the ignorant one being deceived, regards his Self as agent and enjoyer, as in the bonds of transmigration and subject to decay and death. But he who has knowledge, when he has done away with Nescience as false, the cause of all pain, and its products, on gaining intuition of the Self through the unanimity of the Vedas, of his teacher and his own experience—the Self which is the substrate of the whole world, which, per contra, is neither agent, nor enjoyer, nor bound in transmigratory bonds; nor subject to birth, decay and death, (but which) is self-luminous Existence, Intelligence Bliss, absolute in its own nature, described (in Śruti) as beyond hunger &c; as neither great nor small—*not this, not this;* as Existence Intelligence &c.,—then this one who has knowledge becomes the highest aim of man (sc. the Self), established in his greatness, the absolute Bliss, unlimited as to space time and substance.

Nor beyond this is aught to be desired; for all desires find their goal in the attainment of Self.

१७ नन्वात्मसाक्षात्कारः श्रुतिजन्यः कथं स्यात् इन्द्रियजन्यस्यैव ज्ञानस्य साक्षात्कारत्वात् शब्दस्य च परोक्षज्ञानजनकत्वस्वाभाव्यात् । न चापरोक्षे आत्मनि शब्दस्याप्यपरोक्षज्ञानजनकत्वमेव युक्तमिति साम्प्रतम् । करणस्वभावस्यान्यथाकर्तुमशक्यत्वात् अपरोक्षयोग्येऽपि वह्न्यादौ शब्दादिना परोक्षज्ञानस्यैव जननाच्च । न च परोक्षमपि ज्ञानमभ्यस्यमानमपरोक्षं भवतीति युक्तम् अनुमित्यादौ तथाऽदर्शनात् उत्तरोत्तरज्ञानस्यापि शाब्दत्वाविशेषात् । न च मास्त्वपरोक्षज्ञानम् अपरोक्षभ्रमस्याज्ञानतत्कार्यस्यानुच्छेदप्रसङ्गात् । तस्मान्नास्त्येवात्मन्यपरोक्षज्ञानम् ।

Objections:—(a) Veda can effect only *mediate* knowledge of Self:

17. An objection: How can intuition of Self be effected through Śruti, for only to knowledge effected through a sense-organ does intuitional character belong; and because it is the nature of verbal communication (śabda) to bring about non-intuitional (mediate) knowledge. Nor is it correct to say that the power to bring about intuition of the Self, which is self-presented, justly belongs to verbal communication also. For the nature of an instrument of knowledge cannot be changed, and because through verbal communication (and inference &c.), only a mediate knowledge of fire and like objects is effected, though these are fit objects for immediate knowledge. Nor is it right to hold that mediate knowledge also, when repeated, becomes immediate; for such is not observed in regard to inferential knowledge, &c., since verbal character belongs equally to each succeeding cognition. Nor may an opponent reply,—Well then, away with intuition of Self! For (if there be no such thing as intuition) it will follow that there can be no destruction of Nescience and its products which are forms of *intuitional* error, (since *intuitional* error can be removed only by *intuitional* right knowledge). Hence (concludes the opponent of p. 66) there is no intuitional knowledge of the Self. *(To be continued).* A. V.

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी।

(*Continued from page* 515. VOL. XI.)

"उच्चैरुदात्तः" ॥ ननूदात्तादयः शब्दा लोकवेदयोः प्रसिद्धा एव तत्किं संज्ञाकरणेन, तत्राह। 'उदात्तादिशब्दा इत्यादि'। सत्यं प्रसिद्धा एव ते, कुत्र प्रसिद्धाः धर्ममात्रे स्वरे न तु तद्वत्यचि, ततश्चो'.दात्तादनुदात्तस्य स्वरित' इति स्वरिताख्यस्य धर्मस्यैव विधिः स्यात्, न च धर्मधर्मिणोः स्थान्यादेशभावः संभवतीति 'षष्ठीस्थाने योगे' त्यस्यानुपस्थानात् तदङ्गभूतं 'तस्मादित्युत्तरस्ये' त्येतदपि न प्रवर्त्ततेति पूर्वस्याप्यचः स्वरितप्रसङ्गः। स्यादेतत्। यथा 'कृपो रो ल' इत्यत्र ऋकारस्य रेफस्य लृकारस्थे लकारेपि विहिते कृत्स्नस्य वर्णस्य कृत्स्न एव वर्णो भवति तद्वदिहापि धर्मिणोरेव स्थान्यादेशभावो भविष्यतीति। युक्तं तत्र रेफलकाराभ्यामृकारलृकारयोरात्मभूतौ न तावन्तरेण तावुच्चारयितुं शक्यौ, इह तूदात्तादिकमन्तरेणाप्यच उच्चारणं शक्यं दृष्टं च भाषायामिति धर्ममात्रमेवादेशः स्यात्। नन्वेवं स्थिते स्थान्यपि धर्म्म एवेति युक्त एव परिभाषाव्यापारः, सत्यं, वर्णमात्रधर्मो ऽयमुदात्तादिरिति व्यामोहनिवर्त्तनेनाचामेवायं धर्मो न हलामिति दर्शयितुमिदमारब्धम्। अत एव वर्णधर्म इति सामान्येनोक्तम्। 'तद्गुणेचीति'। स उदात्तादिर्गुणो यस्य, एतेन वस्तुतो ऽज्धर्मत्वमुदात्तादेर्दर्शितं, तथाहि। अन्तरेणापि हलमच एव धर्म्मा दृश्यते आ ते पितर्मरुतां सुम्नमेतु, यथा आकारस्य, नान्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति कुत एव स्वरः, यदि च हलामप्येते गुणास्ततो हलामचां च पृथक् स्वरोऽप्युपलभ्येत, यतस्तु खल्वचामेव स्वरमनुविदधति हलस्ततो निश्चीयते ऽनुपरागादेषु स्वरप्रतिभासो न स्यात इति, अनुपरागश्च पूर्वपरसंनिधानेपि परेणैव भवति न पूर्वेण। 'परिभाष्यन्तइति'। केचिदाहुः। प्रदेशे लोकप्रसिद्धा हलामचां च ग्रहणे प्राप्ते ऽचामेव ग्रहणं नियम्यतइति परिभाषेयमिति। अन्ये तु धर्मिण्यप्रसिद्धत्वात्

संज्ञात्वेन परिभाष्यन्तइति व्याचक्षते । उच्चैरित्यस्याधिकरणप्रधान-त्वात् क्रियापेक्षत्वाच्चाधिकरणस्योपलभ्यमानइत्युक्तम्[1] ॥ 'श्रुतिप्रकर्षो न गृह्यतइति' । यदि गृह्येत उपांशुप्रयोगे न स्यादित्यव्याप्तिः, श्रुति-प्रकर्षस्य चानवस्थितत्वाद्यदेव कं चित्प्रत्युच्चैस्तदेव कं चित्प्रति नीचै-रिति सर्वमुदात्तं स्यात् सर्वं चानुदात्तमित्यतिव्याप्तिरव्यवस्था च स्याद् इति भावः । 'स्थानकृतमित्यादि' । उच्चता नाम प्रमाणविशेष ऊर्ध्व-तापर्यायस्तत्र ताल्वादिसंबन्धो, वर्णानामन्तरङ्ग इति स्थानसंबन्धि-न्युच्चता गृह्यते तत्कृतमुच्चैस्त्वं संज्ञिनो विशेषणम् । ननु पूर्वमुच्चैरुप-लभ्यमान इति ताल्वादिस्थानवृत्तिरुच्चैःशब्दो दर्शितः, इह तूच्चैः-स्थाननिष्पन्नत्वाद् अजेवोच्चैरित्युच्यतइति उक्तिविरोधः । न, पूर्वमक्ष-रार्थ उक्त इह तु वस्त्वर्थो व्याख्यातः । ननु चोच्चैः स्थानउपलभ्यमा-नइत्याश्रितेपि प्रांशुपुरुषोच्चारितोनुदात्तो ऽप्युदात्त एव स्याद् वामनपुरु-षोच्चारित उदात्तोप्यनुदात्तः स्यात् तत्रान्योन्यमुच्चतानीचतायोगाद् अत आह । 'ताल्वादिषु हीति' । ताल्वादीनि स्थानानि भागवन्ति,भागा-श्चोत्तराधर्येण व्यवस्थिताः । 'तत्र यः समान इति' । एकपर्यायोयं समान-शब्दः, तेनायमर्थः । एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाणोजुदात्तसंज्ञो भवति, एवं चोच्चैरित्यस्योर्ध्वभाग इत्यर्थः, सर्वश्चायमर्थो लोकप्रसिद्धेरेव लभ्यते सूत्रं तु व्यामोहनिवृत्त्यर्थम् । ऊर्ध्वभागनिष्पत्तेरप्रत्यक्षत्वात् तन्निश्चये लिङ्गमाह । 'यस्मिन्निति' । आयाम इत्यस्य विवरणं निग्रहस्तब्धता, रूक्षतेत्यस्य विवरणम् अस्निग्ध-तेति । 'संवृततेति' । अणुता । अत एव वायुः शनैर्निष्क्रामन् गलावय-वान् शोषयतीति स्वरस्य रूक्षता भवति । 'ये ते के इति' यत्तत्किंभ्यो जसि त्यदाद्यत्वं, 'जसः शी', 'आद्गुणः', 'एकादेश उदात्तेनोदात्तः' ॥

"नीचैरनुदात्तः" ॥ 'अजिति वर्तते इति' । तेन हल् स्रंसनधर्म्म-णानुदात्तसंज्ञो न भवति, अन्ववसर्ग इत्यस्य विवरणं मार्दवमिति, शैथि-ल्यमित्यर्थः । मृदुतेत्यस्य स्निग्धतेति, उरुतेत्यस्य महत्तेति । महत्त्वादेक च

१ अधिकरणाभावस्येति पाठान्तरम् ।

शीघ्रं वायोर्निष्क्रमणाद्गलावयवानामशोषणात्स्वरस्य स्निग्धता भवति । 'अनुच्चार्यंति' । सर्वादावेवमेव पाठात् फिषि तु 'सिमस्याथर्वणे' इत्यन्त उदात्त इत्युक्तम्, अनाथर्वणेपि तुच्छन्दस्यन्तोदात्तत्वं दृश्यते, आद्राज्ञी वासस्तनुते सिमस्मै, उच्छुक्रमजते सिमस्मादिति नमस्ते रुद्रेति, 'ते मयावेक्रत्रंचनस्ये' त्यत्रानुदात्तं सर्वमित्यधिकारात्तेशब्दोनुदात्तः, रुद्रादयोप्यामन्त्रितनिघातेन, पदकाले चानुदात्तस्य श्रवणं संहितायां तु स्वरितात्संहितायामित्येकश्रुत्यं भवति ॥

"समाहारः स्वरितः" ॥ 'सामर्थ्याच्चात्रेति' । पारिभाषिकयोरुदात्तानुदात्तयोरचोः समाहाररूपस्याचः क्व चिदप्यसम्भवः सामर्थ्यं, ननु च समाहरणं समाहारो विप्रकीर्णानामेकत्र राशीकरणमेकधर्म्मयोर्योगो वा, यथा पञ्चपूली, पणगरी दृष्टेति । तत्र पूर्वो मूर्त्तानामेव उत्तरस्तु धर्म्मयोरपि सम्भवति किं तु अत्रा सामानाधिकरण्यं न घटते, नहि वर्णधर्मयोरुदात्तानुदात्तयोः समुदायरूपः कश्चिदज् भवतीत्यत आह । 'तौ समाह्रियेते अस्मिन्नचीति' । नानेनाधिकरणसाधनत्वं समाहारशब्दस्य दर्शितं, तत्र हि करणाधिकरणयोश्चेति ल्युटा भवितव्यं वा सरूपविधिश्च नास्ति ,क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति वचनात् तस्मादर्थकथन[1]मात्रमेतत् सामानाधिकरण्यं त्वर्शआदित्वादच्प्रत्ययान्तत्वेन समर्थनीयं, 'शिक्यं कन्येति' । 'शिल्पशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्त' इति फिट्सूत्रेणान्तस्वरितत्वम् । 'सामान्य इति' । सामसु साधुः 'तत्र साधु' रिति यत् 'तित्स्वरितम्' । 'क्वेति' । 'किमोत्' 'क्वाति' ॥

"तस्यादित उदात्तमर्धह्रस्वम्" ॥ आदौ आदितः सप्तम्यन्तात्तसिः । 'अर्द्धह्रस्वमिति' । 'अर्द्धं नपुंसक' मिति समासः । ह्रस्वशब्द उभयलिङ्गो ह्रस्वो नपुंसके, 'ह्रस्वं लघ्विति', तदिह परवल्लिङ्गत्वेन नपुंसकत्वम् [2]उक्तपरिमाणस्याचो ह्रस्वसंज्ञा क्रतेति यत्रैव तस्यार्द्धमिति

---

१ मात्रेति २ पुस्तके नास्ति ।

२ व्यक्तेति २ पुस्तके अक्तेति ३ पुस्तके युक्तेति ४ पुस्तके पाठः ।

दीर्घप्लुतयोरेतद्विभागवचनं न स्यादित्याशङ्क्याह । 'अर्द्धह्रस्वमिति' । 'वेत्यादि' । ह्रस्वस्य हि मात्रा भवति अतोऽर्द्धह्रस्वग्रहणेनार्द्धमात्रोपलक्ष्यते । इह प्रकृतत्वादेव स्वरितस्य विभागाख्यानसिद्धे तस्येति वचनं स्वरितमात्रपरिग्रहार्थं, यदि चार्द्धह्रस्वग्रहणमर्द्धमात्रोपलक्षणं तत्र स्वरितमात्रपरिग्रहोऽर्थवान् भवति। 'ह्रस्वग्रहणमतन्त्रमिति' । अप्रधानमुपलक्षणत्वाद् यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकाः। नन्वेवमप्याष्टमिकस्वरितस्य विभागो न सिद्ध्यति तस्यासिद्धत्वात्, नैष दोषः । इत आरभ्य. नव सूत्राणि असिद्धकाण्ड उदात्तादनुदात्तस्येत्यस्मात्पराणि पठितव्यानि, किं प्रयोजनमिदं तावद्विभागाख्यानमाष्टमिकस्यापि भवति उत्तरत्रापि प्रयोजनं तत्रतत्र वक्ष्यामः । 'एकश्रुतिर्वेति' । उदात्तभागस्य पटुत्वात्पटुत्वकृतो विकल्पः पटुत्वे हि तदुपरागात्तद्रूपतामिवापन्नो नानुदात्तव्यपदेशमर्हति नाप्युदात्तव्यपदेशम्, उपरागमात्रत्वात् तेन भेदतिरोधानलक्षणमेकश्रुत्यं परो भागः प्रतिपद्यते, अन्वर्थं वा एकश्रुतित्वं पूर्वभागश्रुतेरेका ऽभिन्नाकारा श्रुतिरस्येति कृत्वा। 'अध्यर्धमात्रानुदात्तेति'। एकश्रुतिर्वेति नोक्तं पूर्वानुसारेण गम्यमानत्वात् लघुना वा महतोनुपरागात् । 'माणवका ३ माणवकेति' । स्वरितमाम्रेडिते सूयेति प्लुतः स्वरितः ॥

"एकश्रुति दूरात्संबुद्धौ" ॥ इह यद्यप्यामन्त्रितान्तस्य पदस्याप्यभिमुखीकरणं प्रति सामर्थ्यं तथापि ह्यर्थविशेषस्य कस्य चिदनुष्ठेयतया, संबोधना संबुद्धिः, अन्तर्भावितण्यर्थो बुद्धिः, तथा च संबोधयति येनेति णिच् प्रयुक्तः, तत्र च वाक्यस्यैव करणभावो न पदस्येति मत्वाह । 'एकश्रुति वाक्यं भवतीति' । कतरत्पुनस्तदित्यत आह। 'दूरादिति' । 'संबोधनं संबुद्धिरिति' । अनेनान्वर्थस्य संबुद्धिशब्दग्रहणं न पारिभाषिकस्येति दर्शयति । पारिभाषिकस्य हि ग्रहणे देवा ब्रह्माणा इत्यत्र न स्यात्, अन्वर्थग्रहणं च दूरादित्यनेन सम्बन्धाल्लभ्यते नह्यामन्त्रितैकवचनस्य दूरत्वमदूरत्वं वा सम्भवति संबोधनस्य तु क्रियारूपत्वाद् अपादानतया दूरादिति विशेषणसम्भवा,दूरत्वं च न देशस्वरूपागतमाश्रीयते ऽनवस्थि-

तत्वात् किं तु सम्बोधनक्रियापेक्षया दूरत्वं, यावति देशे प्राकृतप्रयत्नोच्चा-रितं सम्बोध्यमानेन न श्रूयते किं त्वधिकं प्रयत्नमपेक्ष्यते तत्संबुद्धौ दूरं भवति । 'स्वराणामित्यादि' । एकश्रुति स्वरूपाख्यानं, भेदतिरोधानमि-त्यनन्तरोक्तस्यैव विवरणम् । 'आगच्छेत्यादि' । दूराद्धूते वाक्यस्य टेः प्लुत उदात्तः परिशिष्टमेकश्रुति । ननु च प्लुतैकश्रुत्योर्द्वयोरपि दूरात्संबोधनं श्रोत्यमिति फलैक्याद्विकल्पो युक्तः कथं समावेशः, उच्यते । वाक्यमेव प्रतिपादकत्वात् संबुद्धौ करणं प्लुतैकश्रुतीत्यस्यैव संस्कारमात्रं यथा विष-यग्रहणे चक्षुष उन्मीलनादि तत्कृतः समानफलत्वमिति वाक्यापेक्षया च समावेशः, अन्त्याजपेक्षया तु बाध्यबाधकभाव एव प्रत्युदाहरणे त्रैस्वर्य-मेव भवति, तत्राङ् 'उपसर्गाश्चाभिवर्ज्ज' मित्याद्युदात्तः । गच्छेति तिङन्तस्य 'तिङ्ङतिङः' इति निघातः । भोःशब्दे 'निपाता आद्युदात्ता' इति आद्युदात्तः, शेषयोरामन्त्रितनिघातः ॥

"यज्ञकर्म्मण्यजपन्यूङ्खसामसु" ॥ 'ऐकश्रुत्यमिति' । बहुव्रीहे-र्भावप्रत्ययश्चातुर्वर्ण्यादित्वाद्वा कर्म्मधारयात्स्वार्थे ष्यञ् । 'संपाठ इति' । स्वाध्यायकाले अग्निर्मूर्धादिवः ककुत्, 'अङ्गेर्नलोपश्च' त्यग्निशब्दः प्रत्य-यस्वरेणान्तोदात्तः, मुर्व्वि बन्धने, कनिन्युवृषितक्षीति वर्त्तमाने श्वन्नुक्षन्पूषन्-प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति कनिन्प्रत्ययान्तो ऽन्तोदात्तो निपातितः, दिवु क्रीडादौ, दिवेरन्तो डिविः षष्ठ्येकवचनस्य ऊडिदमित्युदात्तत्वं, ककुच्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः, 'पातेर्डतिः' पतिशब्दः प्रत्ययस्व-रेणाद्युदात्तः, प्रथेः षिवन् संप्रसारणं च षित्वात् ङीष्, षष्ठ्येकवचनस्य 'उदात्तयणो हल्पूर्वा' दित्युदात्तत्वम्, इदंशब्दः प्रातिपदिकस्वरेणा-न्तोदात्तः, आप्नोतेः क्विब् ह्रस्वश्च, ऊडिदमिति विभक्तेरुदात्तत्वं. री गतौ, स्रुरीभ्यां तुट् चेति असुन् प्रत्ययः, नित्स्वरेणाद्युदात्तो रेतः शब्दः । 'जिन्वतीति' । जिन्वतेः प्रीणनार्थस्य तिपि निघातः 'प्रणवष्टे' रिति प्रयो-गकाले प्रणवः । 'ममेत्यादि' । 'युष्मदस्मदोर्ङसी' त्याद्युदात्तत्वम् । अग्नेः-शब्दस्यामन्त्रितनिघातः, वर्चःशब्दोऽसुन्प्रत्ययान्तः, विपूर्वात् ह्वयते 'ह्वः संप्रसारणं च' त्यप् प्रत्यये थाथादिसूत्रेणान्तोदात्तत्वम् । 'जपोऽनुकरणमन्त्र

इति'। यद्यपि स एव मन्त्र उच्चार्यते तथापि वर्णाभिव्यक्त्यनभिव्यक्तिभ्यां भेदपरिकल्पनया ऽनुकरणव्यवहारः। अत एवाह। 'उपांशुप्रयोग इति'। यथा जले निमग्नस्य पाठः, क्वचिदकरणमन्त्र इति पाठः, अनेनेदं कुर्यादिति चोदितः करणमन्त्रः ततोऽन्योऽकरणमन्त्रः, प्रसिद्धस्तु पाठोऽन्तःकरणमन्त्र इति, ननु वागिन्द्रियेण शब्द उच्चार्यते स कथमन्तःकरणेन सर्वेन्द्रियसाधारणेन व्यपदिश्यते। सत्यं, वागिन्द्रियस्य स्थूलो व्यापार उपांशुप्रयोगे नास्ति स एव च तद्व्यापारत्वेन प्रसिद्ध इति सूक्ष्मव्यापारे मन एव प्रधानं मन्यते। 'न्यूङ्खा इत्यादि'। षोडशेति पाठः, ओकारा इति च, न त्वेते मकारान्तास्तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्तास्त्रिमात्रा इतरे त्रयोदशा अनुदात्ता अर्द्धोकाराः। एतच्चाश्वलायनेन चतुर्थे हनीत्यस्मिन् खण्डे लक्षणेनोक्तमुदाहृतं च, षडोङ्कारा इति पाठे मूलान्तरं मृग्यम्। 'ए ३ विश्वमित्यादि'। एशब्दो गीतिपूरणः, निपात इत्यन्ये। विश्वशब्दः क्वन्प्रत्ययान्त आद्युदात्तः, विश्वमन्त्रिणं पाप्मानं संदहेति सम्बन्धः, गीतिवशादेशब्दोऽनेकमात्रः। 'वाक्यविशेषस्था गीतय इति'। तदुक्तमृषिणा गीतिषु सामाख्येति॥

"उच्चैस्तरां वा वषट्कारः"॥ 'वषट्छब्देन चात्र वौषट्शब्दो लक्ष्यतइति'। समानार्थत्वात् द्वावपि हि तौ देवतासंप्रदानस्य द्योतकौ कारग्रहणं तु ज्ञापकमवर्णादपि कारप्रत्ययो भवतीति, तेन एवकार इत्यादि सिद्धं भवति। 'यद्येवमिति'। लक्षणायां हि प्रतिपत्तिगौरवं भवतीति भावः। 'विचित्रा हीति'। क्वचिदक्षरलाघवमाश्रीयते क्वचित्प्रतिपत्तिलाघवमिति वैचित्र्यम्। 'उच्चैस्तरामिति'। उच्चैःशब्द उदात्तभवने वर्त्तते तत्र भवनक्रियापेक्षया प्रत्ययः, उदात्ततर इत्यर्थो विवक्षितः अर्षश्च वौषट्छब्दे ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेरिति यः प्लुतो विहितः तदपेक्षया वेदितव्यः, सन्त्युदात्ता अयं तूदात्ततरः। अन्यस्तदेशस्येत्येके, प्लुतोदात्तस्य च विधानसामर्थ्याच्छेषनिघाताभावोऽसिद्धत्वाद्वा, द्वयोरप्यचोरुदात्ततरो भवतीत्येके। तद्वा याज्यान्तापेक्षः प्रकर्षः स्वार्थिकस्तरबित्यन्ये। ततो ह्युदात्तमात्रम्प्रथमस्य सिद्धमिति द्वितीयस्याचो विधीयते वषट्का-

रशब्दोयं मन्त्रब्राह्मणयोः कल्पसूत्रेषु वौषट्शब्दे निरूढः वषट् क्रियते ऽनेनेति वषट्कारम् । मा माम्प्रमृजदति मन्त्रे त्रयो 'वैवषट्काराः वौषडिति वषट्करोती' ति ब्राह्मणे च वषट्कारोन्त्यः 'सर्वत्रोच्चैस्तरांवलीयान्याज्या० या' इति सूत्रे उच्चैस्तरामिति श्रुतिप्रकर्षो विधीयतइत्याहुः ॥

"विभाषा छन्दसि" ॥ 'यज्ञकर्म्मणीत्यस्य निवृत्त्यर्थमिति'। ननु यद्ययं योगो यज्ञकर्म्मणि स्यात् पूर्वो योगो निर्विषयः स्यात्, न च जप० न्यूङ्खसामान्यस्य विषयो जपादिव्यतिरिक्तस्तु पूर्वस्य विषय इति व्यवस्था। तथा हि सत्यत्रैव जपादिग्रहणं कर्त्तव्यं स्यात् किं छन्दोग्रहणेन, छन्दो० ग्रहणात्तु छन्दोमात्रोयं विकल्प इति गम्यते ततश्च यज्ञकर्म्मणीत्यस्यानु० वृत्तौ पूर्वो नित्यो विधिर्निर्विषयः स्यात्, एवं मन्यते। ऊहमन्त्राणामच्छ० न्दस्त्वात्ते पूर्वयोगस्य विषया इति छन्दोरूपेषु मन्त्रेष्वयमेव विकल्पः स्यादिति, यद्यूहमन्त्रेषु सावकाशः पूर्वो योगस्तदा यज्ञकर्म्मणीत्यस्य विभा० षाग्रहणेन निवृत्तावपि छन्दोरूपेष्वनूहितेषु मन्त्रेषु परत्वादयमेव विकल्पः प्राप्नोति, नैष दोषः। यज्ञकर्म्मणीत्यत्र कर्म्मग्रहणं यज्ञानुष्ठानमात्रे सर्वत्र नित्यो विधिर्यथा स्यादित्येवमर्थं, यद्यप्यूह्यमाना मन्त्रा न भवन्ति तथा० प्यमन्त्राणामेव तेषां यज्ञकर्म्मणि प्रयुज्यमानानां पूर्वयोगस्य विषयत्वं भवत्येव, ये तु जपादिपर्युदासेन मन्त्राणामेव तत्र ग्रहणमिच्छन्ति तेषां सामर्थ्यलभ्या यज्ञकर्म्मणीत्यस्य निवृत्तिरिति विभाषाग्रहणमनर्थकं स्यात्। 'इषइत्यादि'। इडन्नम्, ऊर्ग् बलं, चतुर्थ्येकवचनस्य सावेकाच इत्युदात्तत्वं, 'त्वामौ द्वितीयाया' इति त्वादेशोनुदात्तः, अग्ने इत्यामन्त्रितानुदात्तत्वम् आङुपसर्गः। 'याहीति'। 'तिङ्ङतिङः' वी गत्यादिषु, मन्त्रे वृषेषपचे० त्यादिना क्तिचुदात्तः, अग्निशब्दोन्तोदात्तः। त्वमि पूर्वत्वम् 'एकादेश उ० दात्तेनोदात्तः'। 'ईळे इति'। ईडस्तुतौ लडुत्तमैकवचनं, बह्वृचा द्वयो० रचोर्म्मध्येस्थितस्य डकारस्य ळकारं विदधति। 'पुरोहितं,' 'पुरोव्ययमि' ति गतिसंज्ञा गतिरनन्तरइति पूर्वपदप्रकृतिस्वरः पुरःशब्दोसिप्रत्ययान्तोन्तोदा० त्तः, सनुशब्दो निपातः नसादेशोऽनुदात्तः। देवडिति पचादिषु पठ्यते टि० त्वान् ङीप् 'अनुदात्तस्य च यत्रोदात्तलोपः' अभिपूर्वादिषेः क्तिनि शकन्ध्वा०

दित्वात् पररूपे ऽभिष्टेत्यादौ च निति कृत्यतौ इति पूर्वपदप्रकृतिस्वरेणाभिशब्दस्यान्तोदात्तत्वं चतुर्थ्यैकवचनम् ॥

"न सुब्रह्मण्यायां स्वरितस्य तूदात्तः" ॥ 'सुब्रह्मण्या नाम निगद इति'। अपादबन्धे गदिर्वर्तते यथा गद्यमिति, निशब्दः प्रकर्षे उच्चैरपादबन्धं यजुरात्मकं यन्मन्त्रवाक्यं पठ्यते स निगदः, नितरां गद्यत इति कर्मणि नौ गदनद इत्यप्, तस्य च सुब्रह्मण्याशब्देनोपलक्षितत्वात् सुब्रह्मण्याशब्दोऽपरित्यक्तस्त्रीलिङ्ग एव नाम, ओङ्कारस्तित्स्वरेण स्वरित इति सुब्रह्मणि साधुरिति यत्प्रत्ययः तित्स्वरेण स्वरितः, तस्य टाबेकादेशः स्वरितानुदात्तयोरान्तर्यात् स्वरितः, ततो निपातैर्नौशब्देन 'ओमाङोश्च' त्युदात्तस्वरितयोरेकादेशः स्वरित एव, आमन्त्रितमाद्युदात्तमिति आष्टमिकस्तु निघातो ऽसमानवाक्यत्वाच भवति। 'तस्यानेनेति'। न च तस्यासिद्धत्वम्, इदं हि प्रकरणमसिद्धकाण्डउत्कृष्टमित्युक्तम्, अत एवास्मिन्नुदात्ते कृते शेषनिघातोऽपि न भवति यथोद्देशपक्षे ऽनुदात्तपरिभाषायां कर्त्तव्यायाम्, असिद्धत्वेन वर्ज्यमानाभावात् तेनेह द्वावप्युदात्तौ सम्पन्नौ इति पश्चिम एकोनुदात्तइति, न च तस्योदात्तादनुदात्तस्येति स्वरितप्रसङ्गः, प्रकरणोत्कर्षणास्यासिद्धत्वात् नोदात्तस्वरितोदयमिति निषेधाच्च। 'द्वावनुदात्ताविति'। वकारच्छकारौ, शिष्टं स्पष्टम्, 'असावमुष्येत्यन्तः' एतस्मिन्नेव सुब्रह्मण्यानिगदे प्रथमान्तस्य षष्ठ्यन्तस्य चान्त उदात्तो भवति, गार्ग्यो यजते दाक्षेः पिता यजते तित्स्वरे प्राप्ते वचनं, 'स्यान्तस्योपोत्तमं च' स्यशब्दान्तस्योपोत्तममुत्तमं चोभयमुदात्तं भवति गार्ग्यस्य पिता यजते 'वा नामधेयस्य' देवदत्तस्य पिता यजते ॥

"देवब्रह्मणोरनुदात्तः" ॥ 'स्वरितस्योदात्ते प्राप्तइति'। कथं प्राप्तः यावता ऽसिद्धः स्वरितः, एवं तर्ह्येतज्ज्ञापयत्याचार्यस्तस्यादित इत्यारभ्य नवसूत्री 'उदात्तादनुदात्तस्य स्वरित' इत्यस्मात्परा द्रष्टव्येति, उक्तानि प्रयोजनानि उत्तरत्र च वक्ष्यामः, सामान्यापेक्षत्वाज्ज्ञापकस्य नवसूत्र्यप्युत्कृष्यते न सुब्रह्मण्यास्वर एव। 'द्वयोरपि पदयोरिति' द्वितीयस्य

पदात्परस्यापि निघातो न भवति 'आमन्त्रितं पूर्वमविद्यमानवदि'ति पूर्वस्याविद्यमानत्वात् प्रथमस्यापि न भवति भिन्नवाक्यत्वात् ॥

"स्वरितात्संहितायामनुदात्तानाम्" ॥ 'अनुदात्तानामिति' । बहुवचनं जातौ तेनैकस्य द्वयोर्बहूनां च भवति, एकस्य पचति, द्वयोरा- ग्निवेश्यः, बहूनां तु वृत्तावेव दर्शितम् । 'इममित्यन्तोदात्तमिति' । इदं- शब्दः प्रातिपदिकस्वरेणान्तोदात्तः, विभक्तिरनुदात्ता, त्यदाद्यत्वे ऽमि पूर्वः 'एकादेश उदात्तेनोदात्तः' । 'विधिकाल एवेति' । यद्यप्यत्र विहितस्या- नुदात्तविधानेऽपि न कश्चिद्दोषस्तथापि तत्त्वेन व्यवहर्तव्यमित्येवमुक्तम् । 'तस्मात् स्वरितादिति' । न च तस्यासिद्धत्वमुत्कृष्टत्वाद् नवसूत्र्यास्तेन कार्यं देवदत्तेत्यादावविवेकश्रुतिर्भवत्येव । 'गङ्गेप्रभृतीनामिति' । न च यमुनेप्रभृतीनां व्यवधानं जातेरेकत्वाद् व्यक्तीनां सतीनामप्यनाश्रितत्वाद् अकिञ्चित्करत्वम् । 'ततः परेषामिति' । नामन्त्रिते समानाधिकरणे- इति माणवकशब्दस्याविद्यमानत्वं न भवति । 'अवग्रहे माभूदिति' । इदमेव च संहिताग्रहणं ज्ञापकं पञ्चमीनिर्देशे कालो न व्यवधायक- इति, तेन 'तिङ्ङतिङ' इत्यवग्रहेऽपि भवति अग्निमीळे ॥

"उदात्तस्वरितपरस्य सन्नतरः" ॥ परशब्दः प्रत्येकमभिस- म्बध्यतइत्याह । 'उदात्तः परो यस्मादिति' । सन्नशब्देन नीचैरर्थ- उच्यते तेनानुदात्तत्वं लभ्यतइत्याह । 'अनुदात्ततर इति' । प्रकर्षः स्था न्यनुदात्तापेक्षः । 'मातर इत्यनुदात्त इति' । समासैकदेशो निष्कृष्यानुक्तः देवा इत्यादीनां त्रयाणामामन्त्रितानामेकीभूतानामाद्युदात्तत्वे शेषनिघा- तः । 'विभाषितं विशेषवचने बहुवचन'मिति विद्यमानपक्षे चामन्त्रि- तनिघातः, जसः सकारस्य रुत्वं तस्य संसनयुक्तस्यातो रोरप्लुतादिति उका- रोऽनुदात्तः 'आद्गुणः' सोऽप्यान्तर्यतोऽनुदात्तः, अच्छब्दाकारस्य शेषनिघातः तयोरनुदात्तयोः 'एङः पदान्तादती' त्येकादेश आन्तर्यतोऽनुदात्तः । 'सर- स्वतीकारस्येति' । ननु च नवसूत्र्युत्कृष्यतइति ज्ञापितं ततश्च गङ्गेप्रभृती- नामिव सरस्वतीकारस्यापि पूर्वेणैकश्रुतिरेव प्राप्नोति, कः पुनः सन्नतर- स्यावकाशः यः स्वरितात्परो न भवति अग्निरिति । न च विप्रतिषेधेन

सवर्णग्रहणं लभ्यते, पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य, एवं तर्हि 'नमु न' इत्यत्र नेति योगविभागात् सिद्धत्वं भविष्यति, इह दैवदत्तस्य न्यङ्गिति 'न्यधी च' ति पूर्वपदप्रकृतिस्वरे उदात्तस्वरितयोर्यण इत्यञ्चत्य-कारस्य स्वरितः पूर्वस्य सवर्णं प्रत्ययसिद्धो न भवति प्रकरणोत्कर्षाद्, उदात्तस्वरितयोरित्येव सिद्धे परग्रहणं बहुव्रीहावेकवचनविवक्षार्थमिति गङ्गाप्रभृतीनां सवर्णाभावः ॥

"अपृक्त एकाल् प्रत्ययः" ॥ 'घृतस्पृगिति'। 'क्विन्प्रत्ययस्य कु' रिति कुत्वम्। 'अर्धभागिति'। अत्र 'वेरपृक्तस्ये' ति लोपः प्रयोजनम्। 'एकाल्-ग्रहणं किमिति'। समुदायद्वारेणायमेकपदविषयः प्रश्नः, अन्यथा प्रत्य-यमात्रस्य संज्ञा स्यादिति प्रदेशेषु प्रत्ययग्रहणमेव कर्तव्यं स्यात् किं सञ्ज्ञ-या, तत्र यद्यलन्तस्य स्यात् केवलस्य चाप्यन्तवद्भावाद् अल्ग्रहणं व्यर्थं स्या-दिति तत्सामर्थ्यादल्समुदायस्य न भविष्यतीति भावः। 'दर्विरिति'। दृ विदारणे औणादिको विन् प्रत्ययः, वर्णग्रहणे जातिग्रहणादल्समुदाया गृह्यन्ते इति भावः। स्यादेतत्। वेरपृक्तस्येत्यत्र वोऽपृक्तस्येत्यस्तु क्विबादिषु च माभूदिकारः, न वान्यः प्रत्ययो वकारोऽस्तीति। तत्र। 'राजनि युधिकृञः' राजकृत्वा तमाचष्ट इति णिचि टिलोपे क्विपि णिलोपे च कृते क्वनिपः सम्बन्धी प्रत्ययो वकारोऽस्ति, अवश्यं च क्विबादीनामुच्चारणार्थः कश्चिदजा-संजनीयस्तत्राकारे सुदृभ्यां व इत्यादिष्वपि लोपः प्रसज्येत, उकारे तु ण्वुलादिषु, अन्यत्र तु गौरवमिति यथान्यासमेव साधीयः। ननु च यद्यल्-समुदायोऽपि गृह्येत अल्ग्रहणमनर्थकं स्याद् अतो यद्यपि 'निपात एका-जनाङि' त्य त्रैकग्रहणादुर्णग्रहणे जातिग्रहणं ज्ञापितं तथात्राल्ग्रहण-सामर्थ्यात्समुदायस्य न भविष्यतीति चिन्त्यप्रयोजनमेकग्रहणं, तथाऽपृक्त-प्रदेशेष्वल्ग्रहणेनैव सिद्धे नार्थः संज्ञया नतराम्महत्या नतमाम्पूर्वनिर्दि-ष्टया। 'सुरा इति'। सुरां सुनोतीति क्विपि तुक् सुरासुतमाचष्ट इति णिचि टिलोपः क्विबु णिलोपः, अत्र धातुसकारस्य हल्ङ्याब्भ्य इति लोपो न भवति प्रत्ययपरिभाषया। सिद्धं तिपा साहचर्याच्चैकवचनस्य ग्रहणं सिद्धमिति प्रत्ययग्रहणमपि चिन्त्यप्रयोजनमेव ॥ (शेषमग्रे)

# खण्डनखण्डखाद्यम् ।

(Continued from page 522. Vol. XI.)

मू० (१) [a] एवमेवाभ्युपगमे भवत एवापसिद्धान्तोपातात् *[b] यस्तु प्रथमत एव स्वविशेषणमुपादत्ते तं प्रत्यनुपात्तविशेषणपक्षाभिहितो दोषो वक्तव्यः [c] मदीयो हि सिद्धान्तः स्वसिद्धान्त एव मम [d] अत्र वाक्येऽभ्युपगमपदश्रवणादभ्युपगन्ता लभ्यते तस्य यः स्वकीयः स स्वशब्दार्थः पर्यवस्यति ? *—इति चेन्न, [e] ममाप्यभ्युपगन्तृत्वान्मयापि हि किञ्चिदभ्युपगम्यते एव * विपरीताभ्युपगन्तापेक्षित ? * इति चेन्न, अविशेषात् * सिद्धान्तविपरीताभ्युपगन्ता-विपरीताभ्युपगन्ता ? *—इति चेन्न, तथाप्यविशेषात् ममापि त्वत्सिद्धान्तविपरीताभ्युपगन्तत्वात् * स्वसिद्धान्तविपरीताभ्युपगन्ता तथाभिमत ? *—इति चेन्न,

टी० ॥ [a] "एवमेवे"ति । हेत्वभिधानानन्तरमेव प्रतिज्ञाभिधानमिति क्रमश्चेत्त्वयेदानीमभ्युपगन्तव्य इत्यर्थः ॥ नन्वेतावतापसिद्धान्तखण्डनं न वृत्तं स्वपदपूरणेन तल्लक्षणनिर्वाहादित्यत आह—। [b] "यस्त्वि"ति स्वेतिविशेषणस्य प्रक्षेपेऽपि वेदान्तिसिद्धान्तविपरीतमभ्युपगच्छतो नैयायिकादेरपसिद्धान्तप्रसङ्गस्तदवस्थ एवेत्यर्थः ॥ तदेवोपपादयति—। [c] "मदीयोही"ति । अभ्युपगन्ता स्वपदवाच्यो नच परदर्शनसिद्धान्तस्य परोऽभ्युपगन्ता येन तद्विपरीताभ्युपगमे परस्यापसिद्धान्तः स्यादित्याह—। [d] "अत्रे"ति । एतावतापि तत्सिद्धान्ताभ्युपगन्तृत्वं(२) न लभ्यते किन्तु

(१) हेत्वभिधानपूर्वं पश्चात्प्रतिज्ञावचनमित्येवमेवोपन्यास क्रमत्वाचोक्त दोष इत्यत आह—एवमिति—प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः क्रमेणोपन्यसनीया इति भवच्छास्त्रेऽङ्गीकारादित्यर्थः ।

(२) इतरसिद्धान्तविवक्षतया विशेषरूपेण तदेकसिद्धान्तव्यक्त्यभ्युपगन्तृत्वमित्यर्थः ।

अभ्युपगन्तृत्वमात्रं तथाच सद्दोषस्तदवस्थ एवेत्याह—। [e]"ममे"ति। अविशेषादिति ममापि यत्किञ्चिद्विपरीताभ्युपगन्तृत्वादित्यर्थः॥ [f]"तथापी"ति। सिद्धान्तस्याविशेषितस्यैवोपादानादित्यर्थः॥

मू० [a]"नूनमतिप्राज्ञो सि([१])यतः [b]स्वपदमभ्युपगन्त्रा विशेषयितुं प्रवृत्तो भ्युपगन्तारमेव स्वपदद्वाराविशेषयसि परस्पराश्रया([२])न्नबिभेषि स्वपदेपि साधारण्यप्रत्यवस्थानं परोक्तं पुनस्तदवस्थमेवेति च न प्रतिसन्धत्से([३]) * [c]यस्य यः सिद्धान्तस्तेन तत्परित्यागोपसिद्धान्तस्तदीय इति चेत्? *—मैवम्, यस्य यः सिद्धान्त इति [d]पुरुषव्यक्तिविशेषसिद्धान्तव्यक्तिविशेषपरत्वेऽसाधारण्यादव्यापकत्वं लक्षणदोषः यस्येति सिद्धान्तसंबन्धिनः इत्यर्थे तेनेति च सिद्धान्तसंबन्धिनेत्यर्थे च भवतोऽपसिद्धान्तात् [e]तथाहि सिद्धान्तसंबन्धिनो मम यः सिद्धान्तस्तस्य सिद्धान्तान्तरसम्बन्धिना भवता त्यागोऽस्त्येव * ([४]) [f]त्याग एव तस्य नास्ति मया परिगृहीतविषयत्वात्त्यागस्य? *—इति चेन्न,

टी० ॥ [a]"नूनमि"ति। स्वपदार्थः साधारणो माभूदित्यभ्युपगन्ता तद्विशेषणत्वेनोपात्तस्तस्यापि साधारण्यं स्वपदेनापाकरोषि चेत्तदान्योन्याश्रय इत्यर्थः। एतावतापि नोक्तदोषोद्धार इत्याह—। [b]"स्वपदेपी"ति। [c]"यस्ये"ति। तथाच नैयायिकस्य स्वकीयसिद्धान्तविपरीताभ्युपगमादेवापसिद्धान्तो ननु परसिद्धान्तविपरीताभ्युपगमादपीत्यर्थः। यत्पदस्य व्यक्तिमात्रपरत्वेऽननुगमः साधारणत्वे पुनः पूर्वोक्तदोष इत्याह—। [d]"पुरुषे"ति।

(१) प्रज्ञामतीत्यवर्त्तस इत्यर्थः।

(२) अयमाशयः। अभ्युपगन्तृ नियमसिद्धौ स्वपदार्थनियमसिद्धिस्स्वपदार्थ नियमसिद्धौ चाभ्युपगन्तृ नियमसिद्धिरित्यन्योन्याश्रयः।

(३) स्वपदं परित्यज्य सम्प्रतिचक्षुर्वात्रिशेषण प्रक्षेपेण शङ्कते—यस्य य इति।

(४) त्यागशब्दबलेनातिप्रसङ्गपरिहारं चोदयति—त्याग एवेति।

यत्पदस्य साधारणपरतायां दोषं व्युत्पादयति—। [e] "तथाही"ति ॥ [f] "त्याग एवे"ति । मया नैयायिकेन भवदीयसिद्धान्तस्य त्याग एव नास्तीत्यर्थः ।

मू० [a] "यदि त्यागोऽस्वीकारस्तदा न परिगृहीतविषयतानियमः(१) * [b] अथ स्वीकृतस्यास्वीकारः ? *—तदा मया स्वीकृतस्य भवताऽस्वीकारो भवत्येव तथेति विशेषो नास्ति(२) * [c] अथ तेनैव स्वीकृतस्य तेनैवास्वीकारः * सोपि न [d] तेनेति स्वीकर्त्त्रर्थं ममापि स्वीकर्त्तृत्वेन मया स्वीकृतस्य भवताऽस्वीकारे तवापसिद्धान्तापत्तेः * [e] एकेनैकस्य स्वीकृतस्यास्वीकारोपसिद्धान्त ? *—इति चेन्न, केनेति यद्येकसङ्ख्यायोगिनेति तदा मम यथैकसङ्ख्यायोगित्वं तथा तवापीति स एवापसिद्धान्तापातः * [f] अथैकेनेत्यभिन्नेनेति ? *—[g] तदापि स्वस्मादभिन्नत्वं तव च मम च समानम् अन्यस्मादभिन्नत्वं न मम न तवेत्यपसिद्धान्तविषयोच्छेदः ॥

टी० ॥ (३)अस्वीकारमात्रस्य त्यागपदार्थत्वे परिगृहीतविषयत्वं नास्तीत्याह—। [a] "यदी"ति । यद्यपि परिगृहीतविषयत्वं त्यागस्येत्यभिधानानन्तरमयं विकल्पोनुपपन्नस्तथाप्यभिप्रायदार्ढ्यार्थं विकल्पो द्रष्टव्यः ॥ [b] "अथे"ति । प्रकृते तु त्वया स्वीकृतस्य मयाऽस्वीकार इति नापसिद्धान्तापातः इत्यर्थः ॥ तत्पदस्य स्वीकारकर्तृमात्रपरत्वे स एव दोष इत्याह—। [c] "तेनेती"ति ॥ [d] "एकेने"ति स्वीकारास्वीकारकर्त्रोरैक्यं विवक्षितमित्यर्थः ॥ एकमप्ये(४)कसङ्ख्यायोगित्वं चेत्तदा स एव दोष इत्याह—। [e] "ने"ति

(१) पुनरपि प्रथमकल्पनिरासाय शङ्कते—अथेति ।

(२) सम्प्रति तत्पदप्रक्षेपेणाद्यकल्पमङ्गीकृत्य पुनश्शङ्कते—अथेति ।

(३) अथ स्वीकृतस्यास्वीकारस्त्यागोऽस्वीकारमात्रं वा । नाद्यः व्याघात् । नापि द्वितीयइत्याह—अस्वीकारमात्रस्येति ।

(४) एकमपि=एकपदस्यार्थोपि । एकसङ्ख्यायोगित्वम्=एकत्वसङ्ख्यावत्त्वम् ।

स्वीकारास्वीकारकर्त्रोरभेदो विवक्षित इति न पूर्वदोष इत्याह–।[f] "अथे"ति। स्वाभेदविवक्षायां पूर्वदोषतादवस्थ्यं(१) पराभेद विवक्षायामसम्भवलक्षण-दोषः नहि कश्चित्परस्मादभिन्नो भवतीत्याह–। [g] "तदापी"ति ॥

मू० * [a] अथ स्वीकर्त्तुरस्वीकर्त्ता न भिन्नत्वं? *–तदाऽय-मर्थः स्यात् स्वीकर्त्ता न भिन्नेन एकस्य स्वीकृतस्या-स्वीकारोऽपसिद्धान्तस्तथाच स एव भवतोऽपसिद्धान्तः [b] मया यदीयाङ्गीकारः किञ्चित्स्वीकर्त्तुर भिन्नस्य भवतस्त-दीयास्वीकर्त्तृत्वात् [c] एतेनैकस्यैकेन स्वीकारास्वीकारावप-सिद्धान्त इत्यपास्तं [d] मिलितयोरावयोरपसिद्धान्तापातात् * [e] अथ तत्स्वीकर्त्तुरेव तदस्वीकर्त्तुरभिन्नत्वमेकशब्देना-भिमतं? *– ॥

टी० ॥ ननु स्वीकर्त्तृप्रतियोगिकभेदात्यन्ताभाववता योऽस्वीकार-स्तुल्यविषयकः सोऽपसिद्धान्त इति शङ्कते–। [a] "अथे"ति । प्रपञ्च-सत्यत्वस्वीकर्तृप्रतियोगिकभेदात्यन्ताभाववता भवता प्रपञ्चमिथ्यात्वा-स्वीकारोऽपसिद्धान्तः स्यादत्रापि स्वीकर्तृतोऽभिन्न एवास्वीकर्त्ता विषयः प्रपञ्चोऽप्येक एवेत्याह । [b] "मये"ति । यदङ्गीकारो यस्य विषयस्य प्रपञ्च-मिथ्यात्वादेरङ्गीकार इत्यर्थः ॥ [c] "एतेने"ति । स्वीकारास्वीकारकर्त्रोः कर्मण(१)श्चैक्यं यत्रे(२)ति शङ्कार्थः ॥ एकत्वसङ्ख्यायोगित्वविवक्षादोषे सत्येव दोषान्तरमाह–। [d] "मिलितयोरि"ति । एकेन मया भवता च कस्यचिद्विषयस्य स्वीकारः कस्यचिच्चास्वीकार एक एवापसिद्धान्त उभयोः स्यादित्यर्थः । विषयैक्यविवक्षायामपि प्रकारभेदमाश्रित्य स्वीकारा-स्वीकारावेकेन सम्भवत एवेति भावः । यद्वा विषयाभेदमविवक्षित्वैव पूर्वशङ्का तेन तद्विवक्षया शङ्कान्तरमाह–। [e] "अथे"ति ॥

(१) कर्मणः=स्वीकारविषयस्य ।
(२) "तत्रापसिद्धान्तः"–इति शेषः ।

मू० [a]"तदापि यदि स्वीकारविषयाभिन्नत्वं तच्छब्देनोच्यते ऽस्वीकारविषयस्य तदा स्वीकर्त्रन्तरस्वीकारविषयस्य भवता किञ्चित्स्वीकर्त्रभिन्नेनास्वीकारविषयतया स्वीकारविषयाभिन्नत्वस्वीकारेण भवतोऽपसिद्धान्तप्रसङ्गस्य दुर्वारत्वात् * [b]एकेन स्वीकर्त्रा ननु भिन्नेन स्वीकारास्वीकारौ विवक्षितौ ? *—इति चेन्न, [c]एकेन स्वीकर्त्रयेतदेव विवेचयन् भूयस्तदाकर्षन्नभिचितदूषणगणात्याहत्त्यापत्त्या कथय कथं न घनाघनसमय(१)समाग [d]मोदीयमाननरलतरङ्गिणीवेणिजलविवर्त्तनिर्वर्त्तितावर्त्तचक्रचङ्क्रम्यमाणतृणकदम्बविडम्बनामनुभविष्यसि * स्वीकृत्यास्वीकारः स ? *—इति चेन्न,

टी० ॥ [a]"तदे"ति । स्वीकर्त्रन्तरस्य वेदान्तिनः स्वीकारविषयः प्रपञ्चमिथ्यात्वं तस्य स्वीकर्त्रन्तराभिन्नेन भवता योऽस्वीकारः सोऽपसिद्धान्तः स्यादित्यर्थः ॥ नन्वत्रापि स्वीकारास्वीकारौ भिन्नकर्तृकावेव पर्यवसन्नौ समानकर्तृकौ च विवक्षिताविति नोक्तदोष इत्याह । [b]"एकेने"ति ॥ ' एकेनेत्येकसङ्ख्यायोगिनेत्युक्तदोषतादवस्थ्यमेवेत्युपहसन्नाह—। [c]"एकेने"ति । तदाकर्षन् दूषितविशेषणैरेव विशेषयन् दूषणगणात्याहृत्तिर्दूषणगणप्रत्यासत्तिः कथं न विडम्बनामनुभविष्यसीति कथयेत्यन्वयः । [d]"उदीयमाने"ति दैवादिकस्येङ् गतावितिधातोरात्मनेपदिनो रूपं वेणिः प्रवाहः जलविवर्तो भूयस्तया जलपरिणामस्तेन निर्वर्त्तितो निष्पादित आवर्तोम्भसां भ्रमिस्तस्य चक्रं समूहः तत्र चङ्क्रम्यमाणस्य घूर्णमानस्य तृणसमूहस्य या विडम्बना विकृत्यना तामित्यर्थः ॥

(१) वर्षासमयेत्यर्थः ।

मू० [a] "क्वार्थविवेचनेनोक्तबाधागतेः [b] अस्वीकृत्य स्वीकारे च तदभावापत्तेः। [c] किञ्च सिद्धान्तपरित्यक्तरि यदपसिद्धान्तोद्भावनं तत् किं स्वीकृतदर्शनानुमतापसिद्धान्तदूषणमात्रेवादिनि उतानेवम्भूते [d] आद्ये पूर्वसिद्धान्तवदपसिद्धान्तेप्यनेन व्युत्थातुं शक्यते तच किं वक्तव्यं * [e] न तावन्न वक्तव्यमेव किञ्चित्पूर्वसिद्धान्तत्यागादेवापसिद्धान्तेन निगृहीतत्वादितियुक्तम् ? * — [f] अपसिद्धान्ते तत्परिहारस्य(१) तद्दूषणत्वान्यतरासिद्धेस्तेनाभिहितत्वात्।

टी० ॥ [a] "क्त्वार्थे"ति । क्त्वाप्रत्ययस्याप्येककर्तृकत्वमर्थः । तत्र चैकपददोषतादवस्थ्यमित्यर्थः ॥ [b] "अस्वीकृत्ये"ति । प्रपञ्चमिथ्यात्वस्यास्वीकृतस्य नैयायिकेन स्वीकारोऽपसिद्धान्तो न स्यात् क्त्वाप्रत्ययेन स्वीकारपूर्वकास्वीकारस्यैवाभिधानादित्यर्थः ॥ ननु सिद्धान्तपरित्याग एवापसिद्धान्तः सचोभयथा भवति स्वीकृत्यास्वीकारे अस्वीकृत्य स्वीकारे वेत्यत आह—। [c] "किञ्चे"ति । यद्दर्शनमाश्रित्य कथायां प्रवर्त्तते तद्दर्शनं स्वीकृतापसिद्धान्तदोषभावमुत नेति विकल्पार्थः ॥ [d] "आद्ये" इति । सिद्धान्तं त्यक्त्वा तेन यद्यपसिद्धान्तस्य दोषत्वमपि त्याज्यं तदा तस्मै किं वाच्यमित्यर्थः ॥ [e] "न तावदि"ति । मृतमारणस्यानर्हत्वादित्यर्थः । [f] "अपसिद्धान्ते" इति । येन निग्रहेण मृतस्तत्र विप्रतिपन्नश्चेत्तदा न मृत एवेत्यर्थः ॥

मू० [a] "अन्यथा स्वाभिप्रायेणासिद्धिमुद्भाव्यैव कथां विच्छिन्दानो विजयेत परासिद्धिपरिहारं नापेक्षेत इत्यनसिद्धावप्यसिद्धिमुद्भाव्य परं पराजित्याप्रत्यूहं गृह्णन् प्रतिष्ठेत

(१) तत्परिहारस्य तेनाऽभिहितत्वादित्यन्वयः । तदद्दूषणत्वेत्यत्र तदिति पदं क्वचित्पुस्तके नास्ति ।

*[b] निगृहीतस्य तस्यापरमभिधानमनादरणीयमेवेति चेन्न? *—[c] अन्यतरासिद्धा निग्रहपरिहारस्यैव तेनाभिधीयमानत्वात् तथाप्यनादरणेऽनसिद्धावसिद्धिमुद्भाव्यपराभिधीयमानमसिद्धिपरिहारमनादृत्य विजयेनैवेत्युक्तम् *[e] अथ मन्यसे मध्यस्थेनैतद्विचारणीयं किमनसिद्धावसिद्धिरनेनोक्ता अनपसिद्धान्ते चापसिद्धान्तः एतद्विचार्य्य तेनैव जयपराजयाववधारणीयौ एतदर्थमेव मध्यस्थोपस्थापनमिति? *[f] तर्हि वादिना साधने प्रयुक्ते दुष्टमेतदित्यभिधायैव प्रतिवादिना निवर्त्तनीयं मध्यस्थस्तु परमार्थतो दुष्टत्वमदुष्टत्वं वा तस्य साधनस्य विचार्य जयपराजयाववधारयिष्यति सोयं प्रसूय निवृत्तीभूतपिकदम्पत्यपत्य(१)पोषणकृतमहायासवायसव्यसनमासादयिष्यति मध्यस्थोत्तराकः तावकदुःपरामर्शप्रकर्षेण

टी० ॥ [a] "अन्यथे"ति । यदि परोद्भावितदोषे परविप्रतिपत्तिर्न निरसनीयेत्यर्थः । परासिद्धिपरिहारं परेण क्रियमाणमसिद्धिपरिहारम् । अनसिद्धौ परोद्भावितासिद्धिशून्ये ॥ [b] "निगृहीतस्ये"ति । अपसिद्धान्तेन निग्रहेण निगृहीतस्यापसिद्धान्ते विप्रतिपत्तिवचनं नादरणीयमित्यर्थः । अपसिद्धान्तपरिहाराय तस्य तत्र विप्रतिपत्तिरतोऽवश्यमादरणीयेत्याह–। [c] "अन्यतरे"ति पूर्वोक्तमेव विपक्षे दण्डं स्मारयति–। [d] "तथापी"ति । उद्भावितदोषपरिहारं क्वापि नोद्भावयितापेक्षेतेत्यर्थः ॥ [e] "अथे"ति । उद्भावितदोषस्य समीचीनत्वे स्थापनावादिनस्तदसमीचीनत्वे निरनुयोज्यानुयोगेन दूषणवादिनोभङ्गमेव मध्यस्थो व्यवस्थापयेच्च तूद्भावितदोषे वादिविप्रतिवादिना गवेषणीयेत्यर्थः ॥ तर्हि वादी विशिष्य दोषमपि

(१) अपेक्षेत=आदरेत् ।

नोद्भावयेत्तत्रापि मध्यस्थस्यैव दोषविशेषविचारणाश्रमः स्यादित्युपसंहरति—। [f] "तर्ही"ति ।

मू० * अथोच्यते [a] संप्रतिविप्रतिपद्यतां नामापसिद्धान्तेप्यसौ किमेतावता पूर्वस्वीकृतापसिद्धान्तदूषणाभावस्य दर्शनस्य तावत्तेन स्वीकरणमकारि तदेवादायापसिद्धान्तस्योपन्यासो युक्तः इति ? *—मैवम्, [b] यदीदानींतन्यननुमतिरस्य नाद्रियते अस्यामुपजातायामपि प्राक्तनानुमतिमादायैव दूषणप्रवृत्तिः तदापसिद्धान्तस्यापि कुतोवकाशः स(२)हि पूर्वमनुमतस्येदानीमननुमतिमाश्रित्यैव प्रवर्त्तते नान्यथा [c] तस्मात्स्वीकृतापसिद्धान्तदूषणाभावमपि वादिनं प्रति विप्रतिपत्तिकाले साधनीयमपसिद्धान्तस्य दोषत्वमिति । [d] द्वितीयानवकाशः ।

टी० ॥ सामान्यतोप्यनङ्गीकृततद्दोषभावस्यैव तत्र विमतिरूपा देया येन तु तद्दोषभावः सामान्यतोभ्युपगतस्तस्यापि कथाकालीना तद्दोषविप्रतिपत्तिश्चेदादरणीया तदा क्वचिदपि दोषव्यवस्थितिर्न स्यात् को हि परापादिते दोषे न विप्रतिपत्स्यते इत्याशङ्कते—। [a] "सम्प्रती"ति । पूर्वस्वीकृतास्वीकारसाम्येप्यपसिद्धान्ते आद्रियते अपसिद्धान्तविप्रतिपत्तिः कथाकालीना कथं नाद्रियेतेत्याह—। [b] "यदी"ति । साप्याद्रियतां किं तेनेत्यत आह—। [c] "तस्मादि"ति । तथाच कथाकालेऽपसिद्धान्तस्य दोषत्वं व्यवस्थापनीयं तच्चोक्तक्रमेणाशक्यमित्यर्थः ॥ [d] "द्वितीयानवकाश" इति वादिनैव तत्रापसिद्धान्तस्य दोषत्वं व्यवस्थापनीयं न तु मध्यस्थेनेति मध्यस्थस्य द्वितीयस्यानवकाश इत्यर्थः । (शेषमग्रे)

(१) पिकवदम्यतो स्वापत्यं प्रसूय काकापत्यमपसार्य तत्स्थाने तं निधाय काकेन स्वापत्यं पोषयतः ।

(२) सः=अपसिद्धान्तः ।

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page* 541. VOL. XI.)

भू० पूर्वस्ये"ति पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा स एव तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः, एवं मनोमयविज्ञानमययोर्द्रष्टव्यम, आनन्दमये त्वेष एवेति निर्देशः तस्यानन्यात्म[१]कत्वं दर्शयितुं, तत्कथं विज्ञानमयस्यापि पूर्वोक्तया रीत्या परमात्मैव शारीर आत्मेत्यवगतः, एवं सति विज्ञानमयस्य यः शारीर आत्मा स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते आनन्दमयस्याभ्यासावगतपरमात्मभावस्य परमात्मनः स्वयमेवात्मेत्यवगम्यते

टी० "पूर्वस्ये"ति, य इति प्रसिद्धवन्निर्देशः श्रुत्यन्तरसिद्धिमेतत्प्रकरणसिद्धिञ्च ज्ञापयतीत्यभिप्रायेण श्रुत्यन्तरसिद्धः परमकारणभूत इति विशेषणद्वयमुक्तम् । उक्तमर्थं मनोमयादावतिदिशति "एवमि"ति, आनन्दमयस्य परमात्मत्वमयुक्तं तस्यात्मान्तरश्रवणादित्यत्राह "आनन्दमये त्वि"ति, अनन्यात्मत्वं दर्शयितुं "पतिं विश्वस्यात्मेश्वरं" न "तस्येशे कश्चन "नान्योतोऽस्ति द्रष्टे" त्यादिवदयन्निर्देश इत्यर्थः, अत्रोपपत्तिजिज्ञासया पृच्छति "तत्कथमि"ति अनन्यात्मत्वप्रदर्शनार्थत्वं कथमित्यर्थः । परिहरति "विज्ञानमयस्यापी"ति, आनन्दमयं प्रति श्रूयमाणे यः पूर्वस्येत्यादि-

१ अनन्यात्मत्वमिति पा० ।

वाक्ये पूर्वशब्दविवरणार्थं विज्ञानमयस्येत्युक्तं, विज्ञानमयशारीरात्मनः परमात्मत्वे सिद्धे ह्यानन्दमयशारीरात्मनः परमात्मत्वसिद्धिरिति शङ्काव्युदासाय विज्ञानमयस्यापीत्युक्तं, पूर्वोक्तया-प्राणमयादावुक्तया । ततः किमित्यत्राह "एवं सती"ति, अभ्यासावगतपरमात्मभावस्येति आनन्दं ब्रह्मणो विद्वानिति पूर्वमभ्यस्तस्यानन्दस्य ब्रह्मसम्बन्धित्वनिर्देशात् ब्रह्मणश्चानन्दो ब्रह्मेत्यानन्दशब्दवाच्यत्वादानन्दो ब्रह्मेति व्यजानादित्यानन्द-शब्दवाच्यत्वादानन्दो ब्रह्मेति व्यजानादित्यानन्दशब्दवाच्यस्थाने एतमानन्दमयमात्मानमुपसङ्क्रम्येत्यानन्दमयशब्दनिर्देशेनानन्दानन्दमयशब्दयोः पर्यायत्वाच्च आनन्दमयस्य परमात्मभावोऽवगत इत्यभिप्रायः । अभ्यासावगतपरमात्मभावत्वं पुच्छब्रह्मवादनिरासयुक्तीनामुपलक्षणतयोक्तं, ब्रह्मपुच्छं प्रतिष्ठेति पुच्छब्रह्मप्राधान्येन निर्दिष्टत्वेत्सोऽकामयतेत्यऽनन्तरवाक्येपि तच्छब्देन पुच्छब्रह्म परामर्शनीयं तदयुक्तं स इति पुँल्लिङ्गनिर्देशात्, आत्मन आकाशस्सम्भूत इत्यात्मशब्दाभिप्रायः पुँल्लिङ्गत्वनिर्देश इति चेन्न व्यवहितादव्यवहितस्यैवानन्दमयस्य परामर्शनीयत्वात् "तस्यैष एव शारीर आत्मेत्यनन्तरपूर्वोक्तस्यात्मनः पुँल्लिङ्गनिर्देशेन परामर्श इति चेन्न तस्यान्नमयादिसर्वपर्यायसाधारणत्वेन एतत्पर्यायप्रधानप्रतिपाद्यत्वाभावात्, अत प्रधानप्रतिपाद्याव्यवहितानन्दमय एव स इति परामृश्यते, अतःकारणभूतस्स एव परमात्मेति ।

भा० एवञ्च स्वव्यतिरिक्तचेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः शारीरआत्मा, अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते, अतो विज्ञानमयाज्जीवादन्य एव परमात्माऽऽनन्दमयः । आह नायमानन्दमयोजीवादन्यः-विकार-शब्दस्य मयट्प्रत्ययस्य श्रवणात् "मयड्वैतयो"रिति प्रकृत्य

टी० एवं विज्ञानमयस्य जीवस्यान्तर्यामितया व्यपदेशादभ्यासावगतपरमात्मभावात्तदन्तरत्वेन आत्मशब्दव्याख्यानपर्यवसानभूमित्वादा-

त्म-शब्दवाच्यस्यादावेव जगत्कारणत्वेनोक्तत्वादनन्तरकारणवाक्ये सोऽकामयतेति पुँल्लिङ्गनिर्देशात् पुच्छतया निर्दिष्टब्रह्मणोऽप्यानन्दमयानतिरिक्तत्वादुत्यमाणसूत्रस्थहेतुभिश्चानन्दमयः परमात्मेत्यवगतं, तस्य च परमात्मन आत्मान्तरवत्त्वम् "आत्मेश्वरं" न "तस्येशे कश्चन" नान्योऽतोऽस्ति द्रष्टेत्येवमादिश्रुतिविरुद्धमुपपत्तिविरुद्धञ्च आकाशादिसृज्यवर्गपरमकारणत्वादिना शारीरात्मनः परमात्मत्वमवगतमेवम् आनन्दमयस्य शारीरात्मनश्च परमात्मत्वे सति परमात्मद्वित्वासंभवात्परमात्मन आत्मान्तरवत्त्वव्याघाताच्च तस्यैव एव शारीर आत्मेत्युक्तिरात्मेश्वरमित्यादिवत्तस्यानन्यात्मत्वज्ञापनार्थेत्यर्थसामर्थ्यादवगम्यत इत्यर्थः। शारीरात्मत्वम्परमात्मन एव मुख्यमित्याह "एवञ्चे"ति निरुपाधिक इति क्वचित्कदाचित्किञ्चित्प्रतिकर्मानुगुणं हि कश्चिदात्मा भवति, अयन्तु सर्वेषां सर्वदा सर्वत्राकर्मवश्यः स्वतः आत्मेति निरुपाधिक इति भावः। तदेवोपपादयति "अत एवे"ति अभियुक्तैर्भगवद्बोधायनादिभिः "संहितमेतच्छारीरक"मिति हि वृत्तिकारवचः सूत्रार्थमुपसंहरति "अत"इति, मुखान्तरेणानन्दमय-शब्दस्य परमात्मपरतामाक्षिप्य प्रतिवक्ति विकारेत्यादिना सूत्रेण, तत्र पूर्वपक्षमुपन्यस्यति "आहेत्या"दिना, मयटो विकारवाचित्वमुपपादयति "मयड्वैतयोरि,"त्यादिना, विकारार्थत्वस्य ज्ञापनार्थंमयड्वैतयोरित्युक्तम्। एतयो"र्भाषायां विकारः अवयवे च प्राण्योषधिवृक्षेभ्य इति" प्रकृतयोर्विकारावयवयोरिति हि तस्यार्थः। अयमर्थः प्राग्दीव्यतोऽण् इत्यधिकारसूत्रं तस्मिन्नर्थद्वये वृद्धसंज्ञानां शरादिगणान्तर्गतानां च मयडेव नाण् प्रत्यय इत्यपवदति-

भू० "नित्यं वृद्धशरादिभ्य" इति विकारार्थे मयट् स्मर्यते वृद्धश्चायमानन्द-शब्दः। ननु प्राचुर्येऽपि मयडस्ति "तत्प्रकृतवचने मयडि"ति स्मृतेः, यथाऽन्नमयो यज्ञ इति, स एवायम्भविष्यति, नैवम् अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम्, अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम्।

किञ्च प्राचुर्य्यार्थत्वेऽपि जीवादन्यत्वं न सिध्यति, तथा हि आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्ज्जनीयम्, आनन्दस्य हि प्राचुर्य्यं दुःखस्याल्पत्वमवगमयति दुःखमिश्रत्वमेव हि जीवत्वम्, अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम। किञ्च लोके मृण्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च पर्णमयी जुहूः शमीमय्यः स्रुचो दर्भमयी रशनेत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरं धियमारोहति जीवस्य चानन्दविकारत्वमस्त्येव तस्य स्वत आनन्दरूपस्य सतः संसारित्वावस्था तद्विकार एवेति, अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति तदेतदनुभाष्य परिहरति—

टी० "नित्यं वृद्धशरादिभ्य" इति, सूत्रं "वृद्धिर्यस्याचामादिस्तद्वृद्ध"मित्यादिसूत्रेणानन्दशब्दस्य वृद्धि संज्ञकत्वाद्विकारार्थे मयट् प्रत्ययो विहित इति सिद्धान्तच्छायया चोदयति "नन्वि"ति, "स एवायं भविष्यती"ति, विकारार्थत्वेऽपि जीवात्मनि विकारासम्भवात् विकारपरत्वं त्वन्मतेऽप्यनुपपन्नमिति भावः । अभ्युपायन्यायेन परिहरति "नैवमि"ति, अतः—उपक्रमदर्शनात् औचित्यादुपक्रमप्रतिपन्नस्वीकारौचित्यात् प्राचुर्यार्थत्वे ऽप्यभिमतासिद्धिमाह "प्राचुर्य्ये"ति, जीवादनन्यत्वे हेतुमाह "तथा ही"ति, दुःखमिश्रत्वेहेतुमाह "आनन्दस्ये"ति, प्राचुर्यार्थस्वभावात् प्रतियोगिन्यपेक्षिते सुखप्रतिसम्बन्धितया साहचर्यप्रसिद्धदुःखगताल्पत्वस्य प्रतियोगित्वमिति भावः ततः किमित्यत्राह "दुःखे"ति, उभयथाऽपि जीवत्वसिद्धौ किमिति विकारार्थत्वमाद्रियत ? इत्यत्राह "अत" इति, अतः प्राचुर्य्येऽपि जीवान्यत्वासिद्धेरौचित्यस्याधिकत्वाच्च विकारार्थत्वमेव ग्राह्यमित्यर्थः । प्रयोगप्राचुर्यमाह

"किन्त्वे"ति, अवयवार्थादपि प्राचुर्यार्थे प्रयोगबाहुल्यात्तद्व्यावृत्त्यर्थं प्रथमतरमिति तरपः प्रयोगः । प्रसिद्धमप्ययोग्यं न ग्राह्यमिति शङ्कायां जीवस्य विकारित्व[1]मुपपादयति "जीवस्य चे"ति, तर्ह्यजत्वनित्यत्वादिविरोध इत्यत्राह "तस्ये"ति, स्वत आनन्दरूपस्य दुःखित्वाद्यवस्थायोगो जीवत्वम् अतः आनन्दविकारो जीवः आनन्दात्मकस्वरूपापेक्षया नित्यत्वादिवाद इत्यर्थः शङ्कायास्सूत्रस्थत्वात्तदनुभाष्येत्युक्तं, सूत्रमुपादत्ते—

सू० विकारशब्दान्नेति चेन्न प्राचुर्य्यात् ॥ १४ ॥

भा० नैतद्युक्तं कुतः प्राचुर्य्यात् परस्मिन् ब्रह्मण्यानन्दप्राचुर्य्यात्, प्राचुर्य्यार्थे च मयटः सम्भवात्, एतदुक्तम्भवति मनुष्यादिगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवात् ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति तस्मिन् ब्रह्मणि विकारासम्भवात् प्राचुर्य्येऽपि मयड्विधिसद्भावाच्चानन्दमयः परं ब्रह्मेत्यौचित्यात्प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न सम्भवति । किञ्चौचित्यं प्राणमये एव परित्यक्तं तत्र विकारार्थत्वासम्भवात्, अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वं प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्रचुरत्वाद्वा । न च प्राचुर्य्ये मयट् प्रत्ययस्य प्रौढिर्नास्ति अन्नमयो यज्ञः शकटमयी यात्रेत्यादिदर्शनात्,

टी० "विकारशब्दान्नेति चेन्न प्राचुर्यात्" द्वितीयस्य नञो निषेध्यं पूर्वपक्षिमतस्योपपन्नत्वमित्यभिप्रायेण नैतद्युक्तमित्युक्तम् । प्रतिज्ञां हेतुपदेन घटयितुम् आकाङ्क्षां दर्शयति 'कुत"इति, कस्मिन् कस्य प्राचुर्य्यमित्यपेक्षायामाह "परस्मिन्नि"ति, न केवलं प्राचुर्यरूपार्थसद्भावेनालं शब्दश-

१ विकारत्वमिति पा० ।

क्तिश्चापेक्षितेति शङ्कायां सूत्राभिप्रेतार्थमाह "प्राचुर्यार्थे चे"ति, मयट् प्रत्ययस्य प्राचुर्यार्थत्वमपि सम्भवतु तथाऽपि विकारार्थत्वपरित्यागे को हेतुरित्यत्राह "एतदुक्तमि"ति, अभ्यस्यमानानन्दयोग उत्तरसूत्रगतानामन्येषामपि हेतूनां प्रदर्शनार्थः अयोग्यत्वं त्यागहेतुरित्यर्थः। बाधकसद्भावाद्विकारार्थत्वं प्रस[1]ज्यते चेत् पूर्वोक्तसाधकसद्भावात्तत्स्वीक्रियतामिति शङ्कायां परेण विकारार्थत्वस्वीकारसाधकतयोक्तमध्यप्रायन्यायं प्रयोगप्राचुर्यं च परिहरति "औचित्यादि"ति, औचित्यं—प्रकरणौचित्यं तल्लिङ्गबाध्यं प्रयोगप्रसिद्धिरपि गङ्गापदादिष्वर्थविरोधेन बाधिता, अतः उभयमपि प्रमाणान्तराबाधितत्वे सत्येवार्थसाधकम्, अत्र त्वर्थविरोधान्न साधकमित्यर्थः अर्थविरोधात्, आनन्दमये जीवत्वविकारत्वयोः पूर्वोक्तादसम्भवादित्यर्थः। प्रकरणरूपमौचित्यमेव नास्तीत्याह "किञ्चे"ति, अर्थान्मयट्प्रत्ययस्य विकारवाचित्वं प्रकरणविवक्षितमिति शङ्कां शमयन् प्राणमयशब्दस्यार्थमाह "अत" इति, प्राण—शब्दोऽननरूपवृत्तिमात्रपरः मयट् प्रत्ययः प्राचुर्येण आश्रयान्तरगतस्यानन्दप्राचुर्यस्य आश्रयान्तरगतमानन्दाल्पत्वं न सह सम्बन्धमभिदधातीति तत्र सम्बन्धमात्रपरत्वेन प्रथमयोजनायां प्राणनिवृत्तिमानित्यर्थः। कृत्स्नमुख्यार्थत्यागादपि मुख्यार्थैकदेशाङ्गीकारोन्याय्य इति भावः। यद्वा प्राणाख्यवृत्तिविशेषसम्बन्धित्वमात्रेण प्रत्ययस्यानर्थक्यादमुख्यार्थत्वं वरमिति भावः। उचिततमयोजनान्तरमाह "प्राणापानादिष्वि"ति, पूर्वपक्षयुक्त्यन्तरमनुवदति—

सू० यदुक्तमानन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति तदसत्, तत्प्रचुरत्वं हि तत्प्रभूतत्वमेव, तच्चेतरस्य सत्तां नावगमयति, अपि तु तस्याल्पत्वं निवर्त्तयति, इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ, इह च प्रमाणान्तरेण तदभावोऽवगम्यते अपहतपाप्मेत्यादिना, तच्चैतावदेव

[1] त्यज्यते चेदिति पा०।

वक्तव्यं ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्य स्वल्पत्वमपेक्ष्य इति उच्यते च तत् स एको मानुष आनन्द इत्यादिना जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशाऽऽन्नः प्रभूत इति,

टी० "यदुक्तमि"ति, आनन्दप्राचुर्यप्रतियोगितत्समानाश्रयं दुःखाल्पत्वमेव आश्रयान्तरगतस्यानन्दप्राचुर्यस्यानन्दात्मत्वमाश्रयान्तर्गतं न प्रतियोगितामर्हति स्वाश्रयगतदुःखाल्पत्वस्यैवान्तरङ्गत्वेन ग्राह्यत्वादिति पराभिप्रायः । दूषयति "तदसदि"ति, प्रमाणान्तरविरुद्धप्रतियोग्यपेक्षत्वं न युक्तम्, अपि तु प्रमाणान्तरसिद्धप्रमाणान्तराविरुद्धप्रतियोग्यपेक्षत्वमेव युक्तमिति परिहर्तुं प्रचुर-शब्दस्यार्थान्तरसद्भावव्यावृत्त्यर्थमाह "तत्प्रचुरत्वं ही"ति, ततः किमित्यत्राह "तच्चे"ति, तर्हि व्यवच्छेद्याभावे प्रत्ययवैयर्थ्यमित्यत्राह "अपि त्वि"ति, यदि प्राचुर्यवाची मयट्प्रत्ययः स्वयं नार्थान्तरसद्भावे प्रमाणन्तर्हि तत्सद्भावः केनावगम्यत ? इत्यत्राह "इतरे"ति, ततः किमत्यपेक्षायां पराभिमतप्रतियोग्यभावो ब्रह्मणि प्रमाणसिद्ध इत्याह "इह चे"ति, तर्हि ब्रह्मणि प्रमाणविरुद्धप्रतियोगिदुःखान्वयद्योतको मयडर्थस्त्यत्यतामितरथा तस्यानन्दप्राचुर्यस्य प्रतियोगि कि? मित्यत्राह "तत्रैतावदि"ति, प्रमाणान्तरसिद्धार्थान्तरप्रतियोगिकं प्राचुर्यमभिदधतो मयट्प्रत्ययस्य स्वयमर्थान्तरसाधकत्वाभावात् ब्रह्मणि च दुःखसम्बन्धस्य प्रमाणबाधितत्वात् जीवानन्दाल्पत्वस्य लोकसिद्धत्वाच्च ब्रह्मानन्दप्राचुर्यप्रतियोगिजीवानन्दाल्पत्वमित्यर्थात्सिद्धमित्यर्थः । जीवानन्दाल्पत्वस्य प्रतियोगित्वं न केवलमर्थसिद्धमपि तु कण्ठोक्तं चेत्याह "उच्यते चे"ति, अयमर्थः-यदि सजातीयाल्पत्वं समानाश्रयं प्रतियोगि तद् व्याहतं यदि विजातीयं सामानाश्रयं तत्प्रमाणान्तराधीनसद्भावासद्भावम् अन्याश्रयमपि सजातीयं विजातीयं वा प्रतियोगि मानान्तरावसेयं तत्र च यथा तेजःप्रचुरो गभस्तिमानित्युक्ते तेजःप्राचुर्यस्य चन्द्रादिगतं सजातीयतेजोमान्द्यं प्रतियोगि न तु गभस्तिमद्गततिमिराल्पत्वादि तद्धि प्रमाणबाधितम् इतरत्प्रमाणसिद्धं

तारतम्यवाचिनश्शब्दस्य सजातीयप्रतियोगिज्ञापनपरत्वं स्वारसिकं बलवत्तर इत्युक्ते पुरुषान्तरबलं हि प्रतियोगितया प्रतीयते, न तु स्वगतं विजातीयज्ञानम् अतो ऽन्तरङ्गत्वं विफलम् एवं ब्रह्मणि समानाश्रयमानन्दविजातीयदुःखाल्पत्वस्वरूपं प्रतियोगि श्रुतिनिषिद्धम् अन्याश्रयं सजातीयाल्पत्वलक्षणं प्रतियोगि श्रुत्यैव सिद्धमिति जीवास्यानन्दविकारत्वमनुवदति–

भू० यच्चोक्तं जीवस्यानन्दविकारत्वं सम्भवतीति तदपि नोपपद्यते; जीवस्य ज्ञानानन्दैकस्वरूपस्य केनचिदाकारेण मृद इव घटाद्याकारेण परिणामः सकलश्रुतिस्मृतिन्यायविरुद्धः, संसारदशायान्तु कर्मणा ज्ञानानन्दौ सङ्कुचिताविन्युपपादयिष्यते, अतश्चानन्दमयो जीवादन्यः परं ब्रह्म।

इतश्च जीवदन्य आनन्दमयः

सू० तद्धेतुव्यपदेशाच्च ॥ १५ ॥

"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाती"ति,

एष एव जीवानानन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते, अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्यः आनन्दमयः परमात्मेति विज्ञायते, आनन्दमय एवात्रानन्द–शब्देनोच्यते इति चानन्तरमेव वक्ष्यते

इतश्च जीवादन्य आनन्दमयः ।

टी० "यच्चोक्तमि"ति, आनन्दविकारत्वमयड्वाच्यमित्यर्थः दूषयति "तदपी"ति, स्वरूपान्यथाभावलक्षणविकारार्थत्वमेव मयटो व्युत्पत्तिसिद्धं तच्चात्र नास्तीत्यर्थः । ज्ञानानन्दौ जीवस्य स्वरूपञ्चेत्कथं दुःखाज्ञानसम्भव इत्यत्राह "संसारदशायान्त्वि"ति, सूत्रार्थं प्रकृतार्थेन सङ्गमयति "अत" इति, प्रसिद्धतरमुख्यार्थासम्भवे तदनुग्राहकहेत्वननुरोधेन

सम्भवदनतिप्रसिद्धंमुख्यार्थानुयाहकहेतूनामनुरोद्धव्यत्वमस्मिन् प्रकरणे ब्यु-त्पाद्यमिति स्फुटम् । हेत्वन्तरञ्चाह सूत्रकारः "तद्धेतुव्यपदेशाच्च" पूर्वोक्त-मानन्दप्राचुर्य्यमप्येतेनोपपादितम्भवति अनितरसुकरमोक्षप्रदानवमल्वं हि नितरामानन्दहेतुर्भवति । किञ्च धनप्रचुरो हि पुरुषोऽन्यस्मै तदभिप्रेतं धनं ददातीति सूत्रानन्तर्यम् । अस्य सूत्रस्य विषयवाक्यमाह "को ह्येवे"ति, श्रुतेरर्थमाह "एष एवे"ति, अन्यात्–प्राण्यादिति भोगापवर्गसुखहेतुत्वमुक्तं यद्वा सत्ताहेतुत्वं सुखहेतुत्वं चोक्तं पूर्वोक्त एव सम्यगर्थः । फलितहेतुमाह "अतश्चे"ति, कर्मकर्त्रैक्यं न सम्भवतीति हेतुः, आनन्दशब्दवाच्यस्य ह्यान-न्दयितृत्वं युक्तं[१] न त्वानन्दमयस्येत्यत्राह "आनन्दमय एवे"ति, एवमानन्द-मयपदप्रकृतिप्रत्ययार्थविषयं सूत्रत्रयं प्रवृत्तम् । अथानन्दवल्लीमादिमध्या-न्ततोऽनुसन्धायार्थं निष्क्रष्टुकामः प्रथममुपक्रमस्थहेतुम् अवतारयति–

( शेषमग्रे )

(१) आनन्दयितृत्वमुक्तमिति पा० ।

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

(*Continued from page* 450. Vol. XI.)

अत्र सर्वेष्वर्थेषु 'ततः किं'मित्येकैव भङ्गिः· अथैव कथितपद एवा-न्तर्भविष्यतीति चेन्न, पर्य्यायान्तरप्रयोगे भङ्गेरेकरूपतायामसाङ्कर्य्यात्·(क) अथ नवीकृतं कीदृक्·

(क) ०मसंकरादिति क्वचित् ।

"यदि दहत्यनलो, ऽत्र किमद्भुतं, यदि च गौरवमद्रिषु, किं ततः, ।
लवणमम्बु सदैव महोदधेः, प्रकृतिरेव सतामविषादिता" ॥–

इतीदृक्· अत्र हि सतामविषादिता या, सा स्वाभाविकीति नाश्चर्याय,[क] यथा ऽनलादेर्दाहकत्वादीति विवक्षितम्· तत्र च "ततः किं"·मित्यादिना 'किमद्भुत'मित्यादि नवीकृतम्· पिष्टपेषणादिन्यायेन[ख] पादृग्येण, ऽशक्तिप्रकाशनेन वा हृदयोद्वेजकत्वं दूषकताबीजमिति नित्यो ऽयम् ॥ (११)

सनियमादिभिश्चतुर्भिः परिवृत्तपदान्वयात् सनियमपरिवृत्तादिचतुष्टयं लभ्यते· परिवृत्तिश्च सनियमानियमयोर्विशेषाविशेषयोश्च· अविशेषः सामान्यम्· तत्र सनियमपरिवृत्तः सनियमत्वेन वक्तुमुचितोऽनियमत्वे नोक्तः· नच न्यूनपदत्वे ऽनभिहितवाच्यत्वे वानुप्रवेशः, तादृशार्थे विवक्षिते तयोरवकाशात्, अविवक्षिते त्वेतत्प्रसरात्· अत एवायमर्थदोषः· विवक्षितमात्रस्य पदान्तरेणाप्युपस्थितौ तस्य तादवस्थ्यात्· एवमितरेष्वप्यूह्यम्· यत्तु, अर्थत्वेन विशेषणं समाधानमिति, तन्न, न्यूनपदादिषु त्रिषु त्रयाणां सङ्करप्रसङ्गात्· चण्डीदासस्तु "शब्दोच्चारणानन्तरमेव यत्प्रतिभासः, स शब्ददोषो, तस्य त्वर्थप्रत्ययानन्तरं, सो ऽर्थदोषः· अस्य त्वर्थप्रत्ययानन्तरमेवत्येऽसावर्थदोषः· अत एवानभिहितवाच्याद्विशेषत". इत्याह· तच्चायुक्तम्· बहुषु स्थानेषु व्यभिचाराच्छब्दार्थविभागस्यासङ्गतत्वात्· उदाहरणम्–

यत्रानुल्लिखितार्थमेव[ग] निखिलं निर्म्माणमेतद्विधे,-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा, ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद,-
स्तस्याऽऽभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥

(क) सतामविषादिता स्वाभाविकीति नाश्चर्यायेति पु०।
(ख) "पिष्टपेषणादिन्यायेने"ति पुस्तकान्तरे नास्ति ।
(ग) यत्रानुल्लिखिताख्यमेवेति पा० ।

अत्रान्यापदेशे आभासमात्रेण मणीकृतेष्विति वाच्यम्, गुणान्तरव्यावर्त्तनेन निन्दातिशयप्रतीतेः· अनियमे तु न निन्दनीयानां गुणान्तरव्यवच्छेदप्रत्ययः· तस्मा'च्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिते'ति पठनीयम्· अव्युत्पत्त्युपनेन वैमुख्याधायकत्वं दुष्टिबीजम्· नित्यदोषोऽयम्[क] ॥ (१२)

अनियमपरिवृत्तौ यथा–

वक्त्राम्भोजं सरस्वत्यधिवसति सदा, शोण एवाऽधरस्ते,
बाहुः काकुत्स्थवीर्य्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः, ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्ति देव![ख]
स्वच्छे ऽन्तर्मानसेऽस्मिन्नऽवतरति कथं तोयपानाभिलाषः ॥

अत्र शोण एवेति नियमो न वाच्यः, वैयर्थ्यात्· प्रत्युतान्यजलाशयानात्मकत्वप्रतीतौ पिपासानौचित्यातिशयाऽप्रतीतेः· अधिकपदभेदो दूषकताबीजं च पूर्ववत् ॥ (१३)

विशेषपरिवृत्तौ यथा–

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्म्मसीकूर्चकै[ग],-
र्म्मन्त्रं तन्त्रमपि[घ] प्रयुज्य हरत श्वेतोत्पलानां त्विषम्[ङ], ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके,
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥

अत्र "ज्योत्स्नी"मिति रात्रिविशेषो वाच्यः· अपरविशेषस्य स्वत एव श्यामत्वा,त्तत्राकाङ्क्षाविरहात्· इदमेव चात्र दूषकताबीजम्· अन्यत्र तु[च] विरोधादिकमपि तद्बीजं द्रष्टव्यम्· विशेषनियामकप्रकरणादिसत्त्वे त्वऽदोषत्वम् ॥ (१४)

(क) वैमुख्याधायकत्वमेव दुष्टिबीजमिति नित्यदोषोऽयमिति पु· ।
(ख) मुञ्चन्त्यऽभीक्ष्णमिति केचित्पठन्ति ।
(ग) मषीकूर्चकैरिति क्वचित् ।
(घ) तन्त्रमथेति क्वचित् ।
(ङ) श्रियमिति पा· ।
(च) एकत्र 'तु'कारो नास्ति ।

सामान्यपरिवृत्तो यथा–

कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकराकर[क] ! मावमंस्थाः, ।
किं कौस्तुभेन भवतो विहितो न नाम याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥

अत्र 'कौस्तुभेने'ति विशेषतो रत्नवचनं नोचितम्, कौस्तुभमात्रस्योपकारकत्वेनान्यावमाननिषेधायोगात्· 'एकेन किञ्च भवतो विहितः स[ख]नामे'तिपाठे तु भेदानवगमादविवक्षितनिर्वाहः· अत्र विवक्षितानिर्वाहा[ग]दिकं च दूषकताबीजमिति नित्य एवायम्· ॥ (१५)

साकाङ्क्षः सहाऽऽकाङ्क्षया वर्त्तते· इतरपदार्थान्वयाय विशेषणसाकाङ्क्ष इत्यर्थः· निर्हेतुभेदस्तु तदवसर एवोक्तः· उदा०–

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः, प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया, ।
उत्कर्षञ्च परस्य, मानयशसोर्विस्रंसनं चात्मनः,
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥

अत्र स्त्रीरत्नमित्यस्यार्थं उपेक्षितुमित्यस्यार्थमाकाङ्क्षति· अन्यथा "कथं मृष्यत" इत्यनेनामर्षार्थकेनान्वयाऽप्रसङ्गः[घ]नहि स्त्रीरत्न एवाऽमर्षः, किन्तु तदुपेक्षायाम्· नच परस्येत्यतदन्तर्भाव्य तदन्वयोऽस्त्विति वाच्यं, तस्य जनितान्वयबोधत्वेन निराकाङ्क्षत्वात्· [नचानुषङ्गः, "असम्बद्धव्यवाये तु वैषम्याचानुषज्यत" इत्युपगमात्·] नचाऽभवन्मतयोगसङ्करः, वक्तृविवक्षितयोगस्यात्र सत्त्वात्· परन्तु विवक्षित एवार्थः साकाङ्क्षतया दुष्टः· अत एव न न्यूनपदान्तर्भावः· दूषकताबीजं चाऽभिधानापर्य्यवसानम्· अतो नित्य एवायम्· कश्चित्तु–स्त्रीरत्नस्य "मृष्यत" इत्यनेन कथमाकाङ्क्षा तदर्थान्वयश्च· परस्येत्यन्तर्भाव्य सम्भवति· तच्च जनितान्वय-

(क) मकरालय–इति पा· ।
(ख) 'विहितो ने'ति पुस्तकान्तरे, 'एकेन किञ्च विहितो भवतः' इति च ।
(ग) 'अत्र तदनिर्वाहे'ति पु· ।
(घ) ०र्थनान्वयप्रसङ्ग इति पु· ।
(ङ) इत्येतावान्पाठः पुस्तकद्वये नास्ति· टीकामतोऽयं संदर्भः क्वचिदुपलिखितष्टिप्पणीरूपेण· तदनुचाऽज्ञलेखकेनान्तर्लिखित इतीत्थं संवृत्त इति प्रतीमहे, ऽथाऽपि न्याय्यइति मूलएव स्थापितः शृङ्खलितश्च ।

बोधत्वेन निराकाङ्क्षमिति दूषणार्थः· अन्वयप्रयोजकरूपवत्त्वेनोपस्थि· तत्त्वे सत्यऽपर्य्यवसितान्वयत्वं च लक्षणं,मतो ऽभवन्मतयोगाद्भेदः, तत्रा- न्वयप्रयोजकरूपेणानुपस्थितेः· समाप्तपुनरात्ते विशेषणस्यापर्य्यवसान, मिह तु विशेष्यस्येति ततो भेद'इत्याह· तद्वृत्तिविरोधादित्यस्तम्· ॥ (१६)

अपदयुक्तः, अपदे अस्थाने युक्तः, यत्र तद्योगे प्रकृतविरुद्धप्रतीतिः· उदा०—

आज्ञाशक्रशिखामणिप्रणयिनी, शास्त्राणि चक्षुर्नवं,
भक्तिर्भूतपतौ पिनाकिनि, पदं लङ्केति दिव्या पुरी, ।
उत्पत्तिर्द्रुहिणान्वये च, तदहो नेदृग्वरो लभ्यते(क),
स्याच्चेदेष न रावणः, क्व नु पुनः सर्वत्र सर्वे गुणाः ॥

अत्र जगदाक्रन्ददायित्वादिना रावणस्य त्याज्यत्वं विवक्षितम्· तथाच 'स्याच्चेदेष न रावण' इत्यत्र 'क्व नु पुन'रित्यादि योजितं समाधाने पर्य्यवस्यतीति दुष्टम्· उत्पत्तिर्द्रुहिणान्वये चेत्यत्र यदि योज्यते तदा विव· क्षितासिद्धिरेवेत्यपदस्यपदवद्ऽस्य दोषत्वम्· नच प्रकाशितविरुद्धान्तर्भावः, स्थानविशेषयोगमनपेक्ष्य तस्य प्रवृत्तेः· दुष्टिबीजं च विरुद्धप्रतीतिः· अतो नित्य एवायम्· केचित्तु—"अपदमुक्त"इति पठित्वा व्याचक्षते· अपदमुक्तः पदे स्थाने यो ऽत्यक्तः·(ख)"आज्ञाशक्र"त्यादौ च"स्याच्चेदेष न रावण"इत्ये· तावता विच्छेदे कापि कान्तिरनुभवसिद्धा, "जीवत्यहो रावण"इतिवत्· सोयमर्थोत्र चेत्त्यज्यते, "क्व नु पुन"रित्यादिना विस्तार्य्यते, तदा मध्यप्रवे- शेनायमर्थो ऽलक्षितप्राय(ग)श्चमत्कारंचावहतीत्यनुभवसिद्धमिति ॥ (१७)

सहचरभिन्नः, समभिव्याहृतविजातीयः· वैजात्यं चोत्कृष्टत्वाप- कृष्टत्वाभ्याम्· उदा०—

श्रुतेन बुद्धि,र्व्यसनेन मूर्खता, मदेन नारी, सलिलेन निम्नगा, ।
निशा शशाङ्केन, धृतिः समाधिना, नयेन चालंक्रियते नरेन्द्रता ॥

(क) नेदृग्वरो लभ्यत इत्येकस्य: पाठस्तु नाऽत्यर्थः ।
(ख) "पदे स्थाने योगो ऽमुक्तः"—इति इति पुस्तकान्तरन्तु न युक्तम् ।
(ग) ०मर्थो लक्षितप्रायइत्येकत्रास्ते ।

अत्र अनवबुद्ध्यादिभ्य उत्कृष्टेभ्यः समभिव्याहृतेभ्यो व्यसनमूर्खत-योर्विकृष्टयोर्विजातीयत्वम्· उभयोरुपादेयत्वमनुपादेयत्वं वा प्रतीयत इति दूषकताबीजम्· नित्यश्चायम् ॥ (१८)

प्रकाशितविरुद्धः, प्रकाशितो विवक्षितार्थस्य विरुद्धोऽर्थो[(क)]येन वाक्यार्थेन सः· सहचरभिन्ने पदार्थस्यैव तथात्वमिति ततो भेदः· उदा०—

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवाऽसियष्ट्याऽरिकण्ठे,
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती, ।
तत्सक्तोऽयं न किञ्चिद्गणयति, विदितं ते ऽस्तु, तेनास्मि दत्ता
भृत्येभ्यः, श्रीनियोगाद्गदितुमिव[(ख)] गतेत्यम्बुधिं यस्य कीर्त्तिः ॥

अत्र 'विदितं तेऽस्त्व'ति वाक्यस्यार्थो 'लक्ष्मीस्ततोऽपसरती'ति विरुद्धं प्रकाशयति· इदमेव च दूषकताबीजमिति नित्यदोषोऽयम् ॥ (१९)

विध्ययुक्तः, अयुक्तिविधिरित्यर्थः· अयुक्तत्वं च विधेरविधेयस्यैव विधेयत्वेन वा, ऽयुक्तक्रमतया वा· तत्राद्यो यथा—

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा,-
मकेशवमपाण्डवं भुवनमद्य निस्सोमकम्, ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना·
मपैति[(ग)] रिपुकाननातिगुरुरद्य भारो भुवः ॥

अत्र 'पाण्डवभयेनाद्यावधि तव निद्रा नाभूदेव, अद्य तु मया शमितेषु तेषु निःशङ्कतया निद्राणस्त्वं प्रयत्नेन बोध्यस'इति तात्पर्य्यम्· तथाच 'शयितस्त्वं प्रयत्नेन बोध्यस'इति विधिर्युक्तो, नतु 'शेष'इति शयनस्य· अविमृष्टविधेयांशे तु युक्तस्यैव विधिः, परन्त्वविमर्शमात्रम्· अत्र त्वयुक्तस्यैव विधिरिति भेदः· विवक्षितानिर्वाहोऽत्र दुष्टबीजम् । द्वितीयो यथा—

(क) विरुद्धार्थ इति पु· ।
(ख) ०द्गदितुमिहेति पु· ।
(ग) ०मपैत्विति पाठस्तु प्रक्रमविरुद्धः ।

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं,
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः, ।
तेपि क्रूरचमूरुचर्म्मवसनैर्नीताः क्षयं लुब्धकै,-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥

मृगचर्म्मवसनं, मेघतोयकणिकापानं, वायुभक्षणं चेत्युत्तरोत्तरं तीव्रमिति तत्क्रमेण विधियुक्तः· लोकप्रसिद्धक्रमलङ्घनेन श्रोतुरुद्वेगो ऽत्र दुष्टिबीजमिति नित्योयम् ॥ (२०)

अनुवादायुक्तः, अयुक्तानुवादः· अयुक्तत्वं चात्र विध्यननुगुणत्वम्· यथा—

अरे रामाहस्ताभरण! भसलश्रेणिशरण!
स्मरक्रीडाव्रीडाशमन! विरहिप्राणदमन! ।
सरोहंसोत्तंस! प्रचलदलनीलोत्पल! सखे!
सखेदो ऽहं, मोहं श्लथय, कथय क्वेन्दुवदना ॥

अत्र "विरहिप्राणदमने"त्यनुवादः "कथय क्वेन्दुवदने"तिविधिविरुद्धः· तदेव च दूषकताबीजमिति नित्यदोषोयम् ॥ (२१)

त्यक्तपुनःस्वीकृतः, पूर्वं त्यक्तो[(क)]ऽनन्तरं पुनः स्वीकृत उपात्तः· तस्मिन्नेव वाक्यार्थे विशेषणान्तरोपादाने समाप्तपुनरात्तम्, अत्र त्वन्य एव वाक्यार्थ इति ततो भेदः· उदा०—"लग्नं रागावृताङ्ग्ये"ति· अत्र "विदितं तेऽस्त्वि"त्युपसंहृतोपि राजदोष"स्तेनास्मि दत्ता भृत्येभ्य"· इत्येतावता पुनरुपात्तः· स चा ऽप्रयोजकः· उत्प्रेक्षयोपसंहृतेनैव निर्वाहात्· "श्रीनियोगा"दित्यादिकं[(ख)] त्वदुष्टमेव· अन्यथा वाक्यैकवाक्यताच्छेदाऽऽपत्तेः· दूषकताबीजं त्वप्रयोजकत्वं, सहृदयवैरस्याधानं वा· लोके ऽपि हि त्यक्तस्य भृत्यादेः पुनरुपादानं वैरस्यमावहति· नित्यश्चायम् ॥ (२२)

अश्लीलो, व्रीडादिसमर्पकोर्थः· यथा—

(क) पूर्वत्यक्त इति पु· ।
(ख) श्रीनियोगादिकमिति पु· ।

उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः ।
यथाऽऽशु जायते पातो, न तथा पुनरुन्नतिः ॥

शब्दान्तरेणाप्युपादीयमानो ऽयमर्थः पुंव्यञ्जनादिसाधारण्येन प्रतीतेर्व्रीडादायी· ननूदाहरणेषूक्तेषु किमुदाहृता एव दोषाः· तथा सत्यऽन्यलक्षणानां तेषु दर्शनादतिव्याप्तिः· अथ तत्र दोषान्तराण्यपि, तर्हि किमिति न प्रकाशितानीति चेत्, अप्रकृतत्वादिति (२३) ॥ ५५ ॥ ५६ ॥ ५७ ॥

अथैषां यथायथमदोषत्वे प्रतिपादयितव्ये ऽर्थदोषाणां सन्निधानात् प्रथममर्थदोषस्यैव तत् प्रतिपादयति–

कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
सन्निधानादिबोधार्थम्–

अवतंसादिपदैर्जात्यादिपुरस्कारेण कर्णाभरणादीन्येवोच्यन्त इत्यर्थतः प्राप्तौ कर्णपदादीनां यद्यप्यपुष्टार्थत्वं पुनरुक्तत्वं वा युज्यते, तथापि क्वचि'त्कर्णऽवतंस' इत्यादिव्युत्पत्त्या क्वचिल्लक्षणादिना च कर्णस्थित्यादिरूपस्याधिकस्य विवक्षितार्थस्य प्रतिपत्तेरदोषत्वम्· यथा–

तस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥

अत्रावतंसस्य कर्णस्थित्यवस्था कर्णपदोपादानेनावगम्यते· तदवगत्या किं प्रयोजनमिति चेद्, वर्णनीयोत्कर्षः· कथमिति चेत्, स्वरूपतोऽस्य भूषणजेतृत्वं न, किंतु तत्कर्णावस्थित्येति तत्पर्यवसानात्· एवं श्रवणकुण्डलपदेऽप्यूह्यम्· न केवलं कर्णश्रवणपदयोरेवायं महिमा, किन्त्वन्येषामपि· यथा–

अपूर्वमधुरालापप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥

अत्र 'शिरः'पदानुपादाने(क) शेखरस्वाम्यमात्रं लभ्यते, ननु तदलङ्कृतत्वम्· तथात्र तत्प्रतीतेरदोषत्वम् ।

(क) "शिरःपदादाने"–इति पु· ।

विदीर्णाभिमुखारातिकराले संयुगान्तरे।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फूर्जितं तव॥

अत्र 'धनुः'शब्दो ज्याया आरूढत्वप्रतिपादनाय, तच्च किणस्य प्रहारकृतत्वप्रतिपत्तये, यत्र त्वारूढत्वप्रतीतिप्रयोजनं नास्ति,(क) तत्र न धनुःशब्दोपादानमपि, यथा–

ज्याबन्धनिष्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाऽऽ प्रसादात्॥ इत्यत्र,
प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः।
मुक्ताहारेण लसता हसतीव स्तनद्वयम्॥

अत्र हारशब्दस्य मुक्तासन्दर्भशक्तत्वेऽपि न मुक्ताशब्दवैयर्थ्यम्, अन्यरत्नाऽमिश्रत्वप्रतिपादनेनोत्कर्षायामुपयोगात्,

सौन्दर्यसम्पत्तारुण्यं यस्यास्ते ते च विभ्रमाः।
षट्पदान् पुष्पमालेव कान् ना ऽऽकर्षति(ख) सा सखे!॥

मालाशब्दो यद्यपि पुष्पस्येव स्रजि शक्तः, तथापि न पुष्पपदमपुष्टार्थं, लवणयोत्कृष्टत्वप्रतिपादकत्वात्, अयमेव करिबृंहितन्यायः, ननु मालाशब्दस्य पुष्पसङ्गमात्रशक्तत्वमित्यऽसम्यक्, रत्नमालेत्यादिप्रयोगदर्शनादिति चेत्, अनुपपदस्य तथात्वात्॥

–स्थितेष्वेतत्समर्थनम्॥ ५८॥

महाकविप्रयुक्तेष्वेवैवं समाधानं, नतु स्वेच्छया कर्णावतंसादिपदवज्जघनकाञ्च्यादि, करिकलभवद्गुष्ठकरभादि वा प्रयोक्तव्यम्, वामनस्तु–'अपुष्टस्यापि तत्रोपादानमुचितं, यत्र तद्विशेष्यते, अन्यथा कुतस्तद्विशेषणान्वयः स्यात्, यथा, "जगाद विशदां वाचं मधुराक्षरशालिनी"मित्यादौ, अत्र हि वाचमित्यनुपादाने मधुरत्वादितद्विशेषणयोगः

(क) "यत्र त्वारूढत्वं तत्प्रतीतिप्रयोजनं वा नास्ती"त्येकम्, "यत्र त्वारूढत्वप्रतीतिः प्रयोजनं नास्ती"त्यपरञ्च पुस्तकमास्ते।

(ख) "कन्याऽऽकर्षती"ति, 'कान्ताकर्षती'ति च पाठौ न युक्तौ।

क प्रत्येतव्य' इत्याह· तन्न युक्तमुदाहृतम्, विशदं जगादे'त्यादिक्रिया-विशेषणत्वेनैव समीहितसिद्धेः· तस्मादत्र न क्रियाविशेषणत्वं योग्यं, तदुदाहरणीयम्· यथा–

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम्(क)।
पादाभ्यां (ख)दूरमध्वानं व्रजन्नेष न खिद्यते ॥·

अत्र न क्रियाविशेषणार्हमिति प्रकाशकृत्· तदपि न युक्तमुदाहृतमिति वयम्, कर्तृविशेषणत्वेनैवोपपत्तेः· तस्मान्मदीयं पद्यमुदाहरणीयम्, यथा–

निर्वातपद्मोदरसोदराभ्यां विलोचनाभ्यामवलोकयन्ती।
न केवलं यूनि मनोभवेपि व्यनक्ति कंचित्तपसः प्रभावम् ॥

अत्र 'निर्वातपद्मोदरसोदराणी'त्येवं कर्तृविशेषणत्वेप्युपपत्तिरिति चे,त्सत्यम्,परंत्वधिपदोपादानमपेक्ष्यैव· किंच, सोदरत्वमात्रं नान्यविशेषणीभवितुमर्हति, यथा मधुरत्वचरणत्रपरित्राणरहितत्वे ॥ ५८ ॥

ख्याते ऽर्थे निर्हेतोरदुष्टता–

यथा– चन्द्रं गता पद्मगुणान् न भुङ्क्ते,
पद्मं श्रिता(ग) चान्द्रमसीमभिख्याम्,।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

रात्रौ चन्द्रगतायाः पद्मगुणानुपभोगे पद्मसङ्कोचो हेतुः· दिवा च पद्मश्रितायाः चन्द्रगुणानुपभोगे चन्द्रस्य निष्प्रभत्वं कारणम्· ते चातिप्रसिद्धेरेवावगम्येते इति न तदुपादानापेक्षेत्यदोषः ॥

अथ पदादिदोषाणामप्यदोषत्वं क्वचिदित्याह–

–अनुकरणे तु सर्वेषाम्।

(क) स्फुटमिति सर्वत्रोपलब्धत्वे ऽपि द्रुतमिति प्रकाशोपलब्धं स्थापितम्।

(ख) पदभ्यामिति पा०।

(ग) पद्मश्रितेपि, पद्माऽऽश्रितेति च पा०।

प्रतिपादितदूषकताबीजाभावात् । तत्र वैरस्याभावस्यानुभाविकत्वेन तदतिरिक्तस्थल एव दोषत्वव्यवस्थितेर्वा । यथा–

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम्, ।
पश्यैष च गवित्याह, सुत्रामाणं यजेति च ॥

अत्राद्राक्षं,गो,सुत्रामपदानि श्रुतिकटु,च्युतसंस्कृत्य,ऽप्रयुक्तानि । अनुकरणे चैषामदोषत्वबीजं प्रतिपादितं, तदुदत्राप्यूह्यम् ॥

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादिमहिम्ना दोषस्यापि क्वचिद्दोषत्वाभावमात्रं, क्वचित्तु भाक्तो गुणव्यवहारोपीत्याह–

वक्त्राद्यौचित्यवशाद्दोषोपि गुणः क्वचित्,क्वचिन्नोभौ॥ ५९॥

नोभौ, न गुणो न दोषश्च । तत्र स्वस्य वैयाकरणत्वं प्रतिपिपादयिषौ[क] वक्तरि कष्टत्वं गुणः, प्रतिपाद्यस्य ततो ऽतिशयेन प्रतीतेः । दोषत्वाभावश्चोपपादित एव । यथा–

दीधीङ्वेवीट्समः कश्चिद् गुणवृद्ध्योरभाजनम्, ।
क्किप्प्रत्ययनिभः कश्चि,द्यत्र सन्निहिते न ते ॥

वैयाकरणादौ प्रतिपाद्ये च तस्य गुणत्वम्, तद्भावनाभावितस्य तच्छ्रवणेन[ख] प्रीत्युपचयात् । यथा–

यदा त्वामहमद्राक्षं पदविद्या[ग]विशारदम्, ।
उपाध्यायं तदा ऽस्मार्षं समस्प्राक्षं च संमदम्[घ] ॥

ओजस्विनि रौद्रादिरसे व्यङ्ग्ये तस्य गुणत्वं, कठिनशब्दस्य तद्व्यञ्जकत्वात् । तत्र बीभत्से यथा–

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम्[ङ] ।

(क) वैयाकरत्वर्मुपपादयिषौ–इति पु० ।
(ख) तच्छ्रवणे–इति पु० ।
(ग) शब्दविद्येति पा० ।
(घ) संपदमित्येकस्यस्तुनोनुरूपार्थः ।
(ङ) ०राघोषयत्यम्बरमिति त्वनर्हः ।

पीतच्छर्दितरक्तकर्दमघनप्राग्भार[क]घोरोल्लस-
द्व्यालोलस्तनभारभङ्गुरवपुर्दर्पोद्धुतं[ख] धावति ॥

ओजस्विनि हिंसादौ वाच्येपि तस्य गुणत्वम्, यतो मसृणशब्द-प्रयोगे ऊर्जितोप्यर्थो मृदुवद्भासते, ऊर्जितशब्दप्रयोगे त्वौर्जित्येन· उदा०—

मातङ्गाः किमु वल्गितैः, किमफलैराडम्बरैर्जम्बुकाः,
सारङ्गा महिषा मदं व्रजत किं, शून्येषु शूरा न के, ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः[ग]
सिन्धुध्वानिनि हुङ्कृते स्फुरति य, त्तद्गर्जितं गर्जितम् ॥

अत्र सिंहो वाच्यः । प्रकरणविशेषे च गुणत्वं, वक्तृवैयाकरणत्वा-द्यभावेपि कोपादिप्रस्तावे च तदनुगुणत्वात्· यथा—

रक्ताशोक! कृशोदरी क्व नु गता त्यक्त्वा ऽनुरक्तं जनं,
नो दृष्टेति मुधैव चालयति किं वातावधूतं शिरः, ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥

अत्र मिथ्याशिरोवधूननेन कोपप्रकरणे· नचास्य व्यङ्ग्य एव प्रवेशः, कोपस्य व्यङ्ग्यत्वादिति वाच्यम्, वक्त्राद्यतिरिक्तस्थानीयस्य व्यङ्ग्यस्य व्यङ्ग्यपदे-नोपादानात्, गोबलीवर्दन्यायात्· दोषत्वाभावश्चैतेषु गुणत्वप्राप्तेः स्फुट एव· क्वचित् पुनर्न दोषत्वं, न वा गुणत्वं, यत्र न रसो न वा प्रतिपाद्या-द्यौचित्यम्· अथ नीरसे यदि विघात्याभावादस्यादोषत्वं, तदान्येषामपि स्यात्· तथा च नीरसदोषोदाहरणं विरुद्ध्येतेति चेन्न, तस्योपलक्षणत्वात्, दोषपरिचयमात्रार्थत्वाद्वा· यथा—

(शेषमग्रे)

(क) ०घनप्राग्भारेति पा· ।
(ख) ०र्वन्धिद्धमिति पु· ।
(ग) पुनरिति क्वचित् ।

# सिद्धान्तमुक्तावली
## प्रकाशानन्दविरचिता ।

(*Continued from page* 560. Vol. XI.)

अथ वदन्ति । श्रवणाद्यभ्यासजनितशाब्दज्ञानसमुद्भूतभावनाप्रचयसंचितमन्तःकरणमेवात्मसाक्षात्कारे करणं न च भावनाधीनसाक्षात्कारस्य मृतपुत्रसाक्षात्कारवदप्रामाण्यम् । शब्दप्रमाणमूलत्वेन विश्वासात् । न च यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति विरोधः आगमगम्यत्वेऽपि तुल्यत्वात् तस्य वाक्यस्य लौकिकशब्दवैदिकसंस्कारासंस्कृतमनोग्राह्यत्वनिषेधपरत्वात् ।

(*b*) Veda *plus* mind necessary for immediate knowledge of Self.

With regard to this point some (Vedāntins) * maintain that the instrumental cause of intuition of the Self is indeed the internal organ, assisted by the store of mental impressions springing from *verbal* knowledge (sc. knowledge through Śruti) which knowledge was effected through constant practice of *hearing* and the other prescribed means. Nor is it to be argued that intuition which is dependent on (a store of) mental impressions is untrustworthy, as is the intuition of one's dead son (—such is the force of these mental impressions that the father *seems* to see his dead son before his eyes—). For trust is to be placed in this intuition of the Self, since it based on the Veda as its authority (śabdapramāṇa). Nor can it be urged that this view is contradicted by the passage—'from which (Brahman) speech, with the mind, turns away unable to reach it.' For even if it be held that Self is made known by the Veda, the same contradiction will result (in regard to the above passage, where *speech* is said to turn away from Brahman). (And there is no contradiction) because the above passage is intended to deny that the Self can be made known by *human* utterance, and by a mind unpurified by Vedic purifications (sc. hearing, pondering &c. the Veda-word).

Taitt. Up. II. 4.

* The view of Vāchaspati Miśra: cf. Bhāmatī pp. 86, 114.

तन्न । आगमस्यैवात्मन्यपरोक्षज्ञानजनकत्वात् तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतावात्मन्यैवौपनिषदत्वविशेषणश्रवणात् । तच्चेतराविषयत्वे सति तन्मात्रविषयत्वे समञ्जसम् अन्यथा प्रमाणान्तराव्यावर्तकत्वे विशेषणवैयर्थ्यात् । लौकिकस्यापि वाक्यस्य दशमस्त्वमसीत्यादेरात्मन्यपरोक्षज्ञानजनकत्वस्यैव दृष्टत्वात् । प्रमाणस्वभावहानिः स्यादिति चेन्न । प्रमेयानुसारित्वात् प्रमाणस्वभावस्य प्रमेयस्य च नित्यापरोक्षत्वात् ।

The above view must be rejected; for the Veda *alone* brings about intuitional knowledge of the Self, since in the passage 'I ask for that person (purusha) which is made known in the Upanishads,' (Bṛihad Up. III. 9. 26) a qualification is declared as to the Self, sc. that of being made known by the Upanishads. And this qualification justly applies to Self, provided that the Self, while it is not made known through any source but the Upanishads (itarāvishayatve) is made known through them alone; otherwise the qualification is unnecessary, if it does not exclude other sources of evidence for the Self. (And) because it is a fact of experience that human utterance too, sc. Thou art the tenth man, &c, * does indeed bring about intuition of one's Self (when this is regarded as dwelling within one's body.)

Met: It is the character of the object to be known (prameya) that determines the character of the instrument of knowledge (pramāṇa). and not *vice versâ:* Self (Brahman) being an eternally self-presented entity, all knowledge of it must be *immediate;* and such knowledge of it the Veda can afford, if the sentences be taken in their *implied* and not in their *literal* sense.

Nor is it to be argued that (as a consequence of our view) the special character of the pramāṇa would be lost (sc. in bringing about intuition, the śabdapramāṇa would cease to be what it is and would become pratyakshapramāṇa): for the character of a pramāṇa depends on the object to be known †: and the Self, the object in this case, is eternally (self-presented).

* cf. Pañchadaśī. Pandit Vol. VIII. p. 589.

† cf. Ved. paribh. Pandit Vol. VII. pp. 467 et seq.

न च ज्ञानगतो धर्मो ऽपरोक्षत्वं यत्साक्षादपरोक्षाद्ब्रह्माय- मात्मा सर्वान्तर इत्यात्मनोप्यपरोक्षत्वश्रवणात् । किं तदपरोक्षत्व- मिति चेत् वस्तुतः प्रमात्रव्यवहितत्वमेव । तच्च प्रमातरि विश्रान्तं यावद्यावत्प्रमातुर्विप्रकृष्यते तावत्तावत्परोक्षत्वोत्कर्षदर्शनात् तथा चापरोक्षस्वभावे आत्मनि परोक्षज्ञानं जनयन्वेदो भ्रान्तिमेव जनयेत् अन्यथास्थितस्यान्यथाबोधनात् । मोक्षसाधनीभूतस्य चात्मसाक्षा- त्कारस्य मनोजन्यत्वे व्यभिचारिकरणजन्यतया ऽप्रामाण्यप्रसङ्गः ।

Nor is it to be urged that intuitional character is an attribute of the cognition only (and not of the thing cognised); for intuitional character is declared of the Self also in the passage—'the immediately presented, the positively presented Brahman, the Self which is within all.'

Brihad. Up. III. 4. 1.

What then, it may be asked, is this immediacy (or intuitional character of the object)? It consists in the object cognised not being really divided off from the cogniser, (*i. e.* the object is *directly* cognised, without the intervention of any second cognition). And this *not being divided off from the cogniser*, has its end in the cogniser *; for it is a common fact that the farther the object cognised is removed from the cogniser, the more is its mediate (non-intuitional) character increased. And thus, if the Veda gives rise to mediate knowledge of the Self, which is by nature immediately presented, it gives rise to error; for it makes known a thing as other than it is (sc. the Veda, on this supposition, declares as mediately known the Self, which is really immediately known). And if intuition of Self, which is the means to final emancipation, is effected through the mind, its untrustworthiness follows, since it is effected through an instrument which does not always attend (vyabhichāri) right knowledge (sc. the mind is sometimes the instrument of error).

* Jīva the cogniser, and Brahman the cognised, become one; cf. Ved. paribh. Pandit Vol. IV. pp 396 et seq.

न च वेदमूलतया प्रामाण्यम् अपरोक्षतया वेदेनानवबोधनात् वाङ्मनसातीतत्वश्रुतिव्याकोपाच्च । न च लौकिकविषयत्वं मुख्ये बाधकाभावात् । न च श्रुतिविषयत्वे ऽपि समानो दोषो लक्षणयैव तद्बोधनात् ॥

१८ ननु तत्त्वमस्यादिवाक्ये लक्षणैव न युक्ता भागलक्षणया एकदेशपरिग्रहे श्रुतार्थपरित्यागप्रसङ्गात् ।

Nor can its trustworthiness be urged on the ground that it is based on Veda; for (your contention is that) the Veda does not furnish intuitive (but only mediate) knowledge of the Self. And because your view (that mind is the organ of intuition of the Self) contradicts the Śruti passage, which declares that Self is beyond speech and mind. Nor can you urge that this passage refers to a worldly mind (unpurified by *hearing* &c.); for there is no reason why the primary meaning of the passage should be rejected. Nor can you urge that even if the view that Self is made known by Veda be adopted, the same fault will apply, sc. that of contradiction in regard to the above Śruti passage. For (we hold that) Self (tat) is made known through the relation technically termed *implication* (lakshaṇā).

Objections :—*(a)* to take the mahāvākya 'that thou art' in an *implied* sense is to surrender the paramount authority of Veda to that of perception, inference and the other pramāṇas.

18. Here it may be objected that *implication* does not apply to such sentences as 'that thou art'; for if a part of the meaning of the words be accepted through what is technically termed *bhāgalakshaṇā* (whereby a part of the meaning is abandoned and a part retained*), the abandonment of what is directly enounced in Śruti follows as a consequence.

* cf. Ved. paribh. Vol. VII. p. 217.

न च पदयोरेकविभक्त्यन्तनिर्दिष्टयोः सामानाधिकरण्यपरामर्शानन्तरं पदार्थयोरभेदो वाक्यार्थस्तावत्प्रतीयते स च विरुद्धस्वभावयोः संसार्यसंसारिणोर्जीवपरमात्मनोर्न संभवतीति मुख्यार्थानुपपत्त्या लक्षणा युक्तेति साम्प्रतं श्रुतिसिद्धे अनुपपत्त्यभावात् । न च विरुद्धस्वभावयोर्भेदग्राहिमानान्तरविरोधेनाविरुद्धयोरंशयोरभेदो बोध्यतइति वाच्यम् । श्रुतिविरोधेन भेदग्राहिप्रमाणस्यैवाप्रामाण्यात् अन्यथा लक्षणया ऽप्यखण्डाद्वितीयप्रत्यगात्मबोधनं न स्यात्सकलभेदग्राहिप्रत्यक्षादिविरोधात्

Nor can it be urged against this view that as soon as it is observed that two words standing with the same case-affix refer to a common subject, the identity of the things denoted by the two words—which identity is the meaning of the whole sentence—is perceived; and since this identity is impossible in the case of jīva and Paramātman, two things with opposed attributes, sc. jīva is the transmigrating Self, and Paramātman is the non-transmigrating Self, the primary (or direct) meaning (of such sentences) becomes impossible, and therefore *implication* may rightly apply to them. For impossibility (contradiction) cannot hold in regard to the meaning (or thing) established in a Śruti passage (sc. that *must* be which Śruti declares).

Nor can it be argued that the identity of the two non-opposed parts (of *that* and *thou*, sc. pure Intelligence) is made known (by Śruti,) by reason of the contradiction resulting from the exercise of the other sources of evidence (perception) inference &c.) which declare a difference between the two naturally distinct things (sc. jīva and Brahman). For the source of evidence which declares for a difference is itself untrustworthy as being in opposition to Śruti. Otherwise (sc. if preception, inference, &c. are not to be set aside by Śruti) a knowledge of the impartite, One without a second, the Self within all things, could not result from Śruti even by implication, as being contradicted by perception inference &c. which make known difference (duality) in all its forms *.

* Bheda commonly divided into sajātīya, vijātīya and svagata, for which terms cf. Panchadaśī: Pandit Vol. V. p. 667.

तथा च मुख्यार्थे नानुपपत्तिः । न च शक्यलक्ष्ययोः सम्बन्धो लक्ष्यस्यात्मनो ऽसङ्गत्वात् । न चासङ्गेन किञ्चित्सम्बद्धुते न चासम्बद्धः लक्ष्यते तथा ऽदर्शनात् । न च सर्वथानभिधेयोर्थो लक्ष्यतद्दतिद्रुष्टं लक्ष्यपदार्थे मूकताप्रसङ्गात् तत्रापि लक्षणायां लक्षणानवस्थाप्रसङ्गात् । किञ्च पदाभ्यामेकोर्थो लक्ष्यते अर्थद्वयं वा । नाद्यः । एकपदवैयर्थ्यप्रसङ्गात् पदार्थवाक्यार्थयोरविशेषापत्तेश्च । विशेषे वा अखण्डो वाक्यार्थो न स्यात् । अत एव न द्वितीयः । लक्षणाऽभावप्रसङ्गाच्च । न हि विरुद्धयोरभेदानुपपत्त्या कृता लक्षणा भिन्नयोरभेदे पर्यवस्यति ।

And so there is no impossibility in regard to the primary meaning (of the sentence 'that thou art'.) Nor can there be a connection between the literal and implied meanings of the words; for the thing implied, sc. Self is unrelated. Nor can anything be related to the unrelated; nor can the unrelated be *implied;* for this is not supported by experience. Nor is it a fact that an object, which is absolutely unnameable, can be made known by implication; for, in regard to such implied object, silence must follow (—the object being nameless). If in regard to the implied object (tatra) a further relation of implication * be maintained, then the series of such relations becomes endless.

Further, is one thing implied by the two words (*that* and *thou*), or are two things implied? Not *one* thing; for then one of the two words is unnecessary, and it follows that there would be no difference between the meaning of the words and the meaning of the sentence. Or if there be a difference, then the Impartite (undifferenced Brahman) could not be what the sentence means, (—the difference, whatever it might be, would become an attribute to Brahman of which it might be predicated; but the sentence is supposed to teach the attribute-less, predicateless Brahman). Hence also the second alternative (sc. that *two* things are implied by the two words) will not hold; and also because there would then be no such relation as *implication* between them. For implication, which is postulated to remove the contradiction which results when the identity of two opposed things is maintained, does not fulfil its function in teaching the identity of the two distinct things.

* The technical *lakshitalakshaṇā* is here meant: cf. Ved. paribh. Pandit Vol. VI. p. 97.

किं च वेदान्ते तत्त्वमस्यादिवाक्यमेव प्रधानमितरत्सर्वं तदुपकरणमेव तथा च प्रधानवाक्ये एव कथं लक्षणा तत्रासमवेतार्थत्वेनेतरत्रैव सा युक्ता । गुणे त्वन्याय्यकल्पनेति न्यायात् । अत्र केचित् । तत्त्वमस्यादिवाक्ये लक्षणैव तावन्नाङ्गीक्रियते । न च विरुद्धयोर्जीवपरमात्मनोः सामानाधिकरण्यानुपपत्तिः रज्जुसर्पयोरिव एकस्य बाधेनापि तदुपपत्तेः । न चानयोर्मध्ये कस्य बाध इति विनिगमकाभावे यदि परमात्मन एव बाधमाशङ्क्येत तदा शास्त्रमपुरुषार्थे जीवे पर्यवसितमिति न प्रमाणं स्यादिति वाच्यम् ।

Moreover, in the Vedānta, such sentences as 'that thou art' &c. are *primary* to which all others are merely *ancillary*. And so, implication cannot apply to a primary sentence; it applies only to secondary sentences (itaratraiva), since these do not have their objects in constant connexion with the primary sentences (tatra); according to the maxim that 'the assumption of an irregularity (such as that of putting aside the *literal* for an *implied* meaning) is to be made only in regard to a secondary sentence.'

(*b*) *implication* unnecessary: for by the method termed *bādhasāmānādhikaraṇya*, *i.e.* by the recognition of jīva or personal sentiency as false, the identity enounced in the mahāvākya may be recognised. (The opponent states this view only to reject it; with him jīva is real cf. pp. 9, 15. *supra*).

In regard to this some teachers hold that in a sentence such as 'that thou art' implication is not admitted. Nor can it be argued that (according to their view) the relation of identity (sc. that of referring to one and the same substrate) cannot attach to jīva and Paramātman, opposed as they are. For this relation is possible when one of the two things has been proved false, as in the case of the rope and the snake mistaken for it). Nor is it to be objected that since in answer to the question,—Which of the two, jīva or Paramātman, is to be rejected as false?—no compelling reason for the adoption of one or other alternative is forthcoming, one might urge that the Paramātman should be rejected as false, in which case Śruti (Śāstra) would terminate with (teaching the reality of) jīva which is not the aim of man, and would therefore cease to be a source of right knowledge.

सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णात् ब्रह्मणः सत्यत्वे अवधारिते परिशेषाज्जीवस्यैव संसारिणो बाध्यात् । ननु कोऽयं जीवः चैतन्यं जडो वा आद्ये ब्रह्मैवेति बाधानुपपत्तिः । द्वितीये घटादिवद्भोक्तृत्वानुपपत्तिरिति चेत् नैष दोषश्चैतन्याभासत्वेन तस्य प्रसिद्धजडाजडविलक्षणत्वात् । न च नीरूपस्य चैतन्यस्याभासानुपपत्तिः नीरूपस्यापि गगनस्य स्वच्छे जले आभासदर्शनात् रूपं रूपं प्रतिरूपो बभूवेति श्रुतेश्च । तथा चेदं सर्वं यदयमात्मेति शास्त्रात्सर्वस्याज्ञानतत्कार्यस्य बाधे केवल आनन्दरूपः परमात्मैवापवर्गे ऽवशिष्यतइति न किञ्चिदनुपपन्नम् ।

For from the passage, 'Brahman is Existence, Intelligence, the Infinite,' (Taitt. Up. II. 1.) the reality of Brahman is ascertained, and therefore the rejection of the transmigrating jīva as false follows by a process of exclusion.

What (it may be asked) is this jīva? Is it intelligent or unintelligent. If intelligent, jīva is indeed Brahaman, and therefore its rejection as false is impossible. If not intelligent, then jīva, like earthen pots &c., cannot be an enjoyer. It may be answered, there is no fault here; for since jīva is a reflexion of Intelligence, it is not what is commonly known either as intelligent or as unintelligent (sc. it is an inexplicable product, anirvachanīya, and therefore unreal). Nor can it be argued that a reflexion of the formless (colourless) Intelligence (Brahaman)—is impossible, for a reflexion in clear water of formless (colourless) ether is a common fact; and because of the Śruti passage—'He (Īśvara) became like unto every form' (Bṛihad. Up. II. 5. 19.). And when, in accordance with the passage, 'this every thing, all is that Self,' (Bṛihad. Up. II. 4. 6.) all things sc. Nescience and all its products, have been rejected as false, then the Highest Self alone, pure Bliss, remains behind in the state of final emancipation. Thus, (in the above view) nothing is left unexplained.

तन्न । बन्धमोक्षयोर्वैयधिकरण्यापत्तेः मोक्षार्थिप्रवृत्त्यनुपपत्तेश्च न ह्यन्यस्य मोक्षार्थमन्यो यतते न वा स्वनाशः पुरुषार्थः । न च दुःखनिवृत्त्या दुःखाभाव एव पुरुषार्थः । कस्यायं पुरुषार्थः स्यात् स्वस्यैव बाधितत्वात् । न च जीवात्मा ऽसत्यः अनेन जीवेनात्मनेति सत्येन परमात्मना अभेदश्रवणात् नान्योऽतोऽस्ति द्रष्टेत्यादिना भेदप्रतिषेधाच्च । न च स्वतो ऽसंसारिस्वभावस्य परमात्मनः संसारिस्वभावजीवात्मतानुपपत्तिः अविद्याद्युपाधिसम्बन्धान्नभोनीलिमवदुपपत्तेः ।

But the above view (say others) is to be rejected; for from it follows that bondage and emancipation do not refer to the same individual (sc. the *bound* one is the unreal jīva: the *emancipated* one is Brahman): also that striving after emancipation on the part of an aspirant is impossible; for none strives after the emancipation of another, nor can his own destruction be the aim of man. Nor can it be urged that because there is an end to pain (when one is destroyed), the absence of pain is indeed the aim of man. For to whom can this be an aim, since the man himself (or jīva) is (by supposition) set aside as false?

And jīva is not unreal, for its identity with the real Self (the Highest Self) is declared in the passage, 'let me enter with this living Self (jīva)';

Chānd. Up. vi, 3. 2.

And because a difference between them is denied in the passage, 'there is no other seer but that one'.

Brihad. Up. III. 7. 23.

Nor may it be objected that to the Highest Self, which is by nature beyond the bonds of transmigration, cannot pertain the character of jīva, which is by nature subject to those bonds. For this is possible through the connexion (of the Paramātman) with certain adjuncts such as Nescience &c., just as dark colour is falsely ascribed to ether.

न च रूपं रूपं प्रतिरूपो बभूवेति वाक्यादाभासरूपत्वं जीवस्येति वाच्यं तत्र हि तत्तन्मनुष्यत्वाद्याक्रान्ततत्तच्छरीरसादृश्यस्यैव प्रतिरूपपदेन विवक्षितत्वात् । भवतु वा प्रतिबिम्बस्तथापि नासत्यः प्रत्यभिज्ञानेन बिम्बप्रतिबिम्बयोरभेदग्रहात् । कथं तर्हि भेदव्यवहारः । एकस्मिन्नेव स्वरूपे सर्वकल्पनारहिते मुखचन्द्रादौ बिम्बप्रतिबिम्बस्वरूपमिति त्रिविधव्यवहारस्योपाध्यनुप्रविष्टत्वारोपानन्तरं दर्शनात् । तस्मात्तत्त्वमस्यादिवाक्ये बाधायां सामानाधिकरण्यमिति कल्पना वेदबाह्या न न्याय्य । अतो लक्षणया परिपूर्णसच्चिदानन्दप्रत्यगात्मावबोधनमनुपपन्नमिति ।

Nor from the passage, 'He (Īśvara) became like unto every form,' can it be maintained that jīva is a reflexion; for by the word pratirūpa is meant only the likeness (of the Self) to all bodies whatever, as possessing all attributes, human and the rest. Or granting that jīva is a reflexion, it is still not unreal; for the identity of the reflected object is real). How then, it may be asked, does the consciousness of these as different arise? The reply is that in regard to the own nature of a thing (svarūpa) which is really one and without any attributes, (cf. p. 64.) e. g. a human face or the moon, a three-fold consciousness of reflected object, reflexion and own nature of the thing is observed to arise, after a connexion between the own nature of the thing and certain limiting adjuncts has been imagined. Hence the hypothesis, that in regard to such sentences as 'that thou art' community of reference (*i. e.* identity of *that* and *thou*) obtains after one or other of the two has been rejected as false, is beyond the tenor of the Veda and irregular (for, as shown above, both Paramātman and jīva are real).

Hence it has not been proved that knowledge of the Self, the absolute Existence, Intelligence, Bliss, results from such sentences though implication.

*(To be continued).* A. V.

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(*Continued from page* 499. Vol. XI.)

विश्वजिति दक्षिणाकालविद्यमानानामेव सर्वस्वानां देयताधिकरणम् ।

सू० दक्षिणाकाले यत्स्वं तत्प्रतीयेत तदा न संयोगात् ॥ ६ ॥

किं दक्षिणाकालात्प्रागेव प्राप्तोपयोगमपि धनमनुपयुज्य प्रयत्नेन धारयित्वा देयं? यदपि भावित्वेन निश्चितं तदसदपि देय? मुत यद्दक्षिणाकालेऽवस्थितं तदेव देय? मिति संशये, सर्वे–शब्दानुग्रहाय भूतभाविनोरपि दानं दक्षिणाकालीने एव सर्वत्वोपपत्तेर्न धारणप्रयुक्तिर्भाविनश्च तदानीं स्वत्वाभावादशक्यमेव दानम् ॥

विश्वजिति दक्षिणोत्तराङ्गानामनुष्ठानाधिकरणम् ।

सू० अशेषत्वात्तदन्त्[1] स्यात्कर्मणो द्रव्यसिद्धित्वात् ॥ ७ ॥

प्रकृतौ कर्मारम्भ एव त्रिधा यजमानेनात्मीयं धनं वचनबलाद् व्यवस्थापितम्, इदं मे भक्तार्थमिदं क्रत्वर्थमिदं दक्षिणार्थं नय दक्षिणार्थं तन्मध्ये द्वादशशतं दत्तम्, इह तु किं त्रिविधमपि दातव्यं कर्मशेषं चोत्स्रष्टव्यम्? उत यावता क्रतुशेषं निर्वर्तते तावच्छिष्टाऽन्यत्सर्वं देय? मुत यद्दक्षिणार्थं निहितं तदेव सर्वं देय? मिति संशयः, "प्रत्यक्षवचनादिष्टसर्वदानविरोधतः चोदकावगतं कर्म शेषं लभ्येत दुर्बलम् ॥ प्रधानत्वात्क्रतोर्नैव दानं तद्बाधनक्षमम् । किन्तु क्रतवे शिष्टा सर्वमन्यत्प्रदीयते ॥ दक्षिणार्थेन निर्दिष्टं प्राप्तं द्रव्यमनूद्य तु । विधेयं सर्वतामात्रं लाघवं हि तथाविधे ॥

१ तदन्तः स्यादिति पा० ।

अहर्गणस्थेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ।

सू० अहर्गणे च तद्धर्मः स्यात्सर्वेषामविशेषात् ॥ ८ ॥

अस्त्यष्टरात्रोऽहीनः तस्य विश्वजित्प्रथममहस्ततोऽभिप्लवः षडहस्ततोऽभिजित्तत्र विश्वजिति संशय, किं द्वादशशतं दक्षिणा स्यादुत सर्वस्वं दक्षिणेति, तत्र "गणेषु द्वादशाहस्य विध्यन्तः स्थापयिष्यते । द्वादशशतं ज्योतिष्टोमात्तत्रातिदिश्यते । विश्वजित्यपि सैव स्याद्दक्षिणा गणवर्तिनी । नामातिदेशप्राबल्यात्सर्वस्वं त्वेव दक्षिणा । इदं च प्राप्तिमात्रपरमधिकरणं, प्राप्तं विश्वजिति सर्वस्वं बाधित्वा इतरेषां सप्तानामन्हां द्वादशशतदक्षिणानां भूयसां साधर्म्याद् द्वादशशतमेव देयमेकैव च तन्त्रेण सर्वेषामेकप्रयोगवर्तिनां दक्षिणा न पृथक् पृथक् प्रदातव्या, तस्माद् भूयोऽनुग्रहाय द्वादशशतमेव देयम् ॥

विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् ।

सू० विकारः सन्नुभयतोऽविशेषात् ॥ ९ ॥

सर्वस्वदान एव संशय. किं यस्य द्वादशशताच्यूनं धनं सोऽपि तावन्मात्रं सर्वस्वं दत्त्वाऽधिक्रियते ? उत यस्याधिकं स एवेति "ततो न्यूनेऽधिके वापि सर्व—शब्दोपपत्तितः । उभयोरधिकारः स्यान्न न्यूनाधिकदायिनोः । इदं तु प्रकृतेः प्राप्तं सर्वदानं नियम्यते । तत्र चानतिसिद्ध्यर्थमधिकं सर्वमीरितम्" ॥ ज्योतिष्टोमे हि द्वादशशतं विधाय पश्चादुक्तं यद्येतावता ऋत्विजो न नमेयुरपि सर्वस्वेनेति द्वादशशतादसिद्धौ वा नतिं ततोऽधिकामेव सर्वस्वं साधयितुं शक्नुयान्न न्यूनमतः प्रकृतौ तावद् द्वादशशताधिकमेव सर्वस्वं, यच्च प्राकृतं तस्यैव नियममात्रमिह क्रियते, तस्मादधिकदानेनैवात्राधिकारः ॥

आधानेऽपरिमितं देयमित्यत्रेन सङ्ख्यान्तरविधानाकरणम् ।

सू० अपरिमाणे शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ १० ॥

१ अपरिमिते शिष्टस्येति पा० ।

आधाने श्रुतम् "एका देया षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देय"मिति, तत्रापरिमितं देयमिति किं पूर्वोक्तैकादिपरिमाणप्रतिषेध? उतायमपि सङ्ख्यान्तरविधि? रिति संशयः, तत्रावयवव्युत्पत्त्या परिमाणशून्यमुच्यते, न च परिमाणशून्यस्य दानं सम्भवति, अतः प्रकृतपरिमाणशून्यमुच्यते ततस्तस्य प्रतिषेधः उच्यते बह्वर्थवचनोऽयं समुदायप्रसिद्धा, सा चावयवप्रसिद्धेर्बलीयसी, न चालब्धात्मिका रूढिः सुज्ञातपरिमाणेष्वपि बहुत्वमात्रेणापरिमित-शब्दप्रयोगात् तस्मादयमपि सङ्ख्यान्तरविशिष्टदानविधिः ॥

अपरिमित-शब्देन महसाधिकस्य ग्रहणाधिकरणम् ।

सू० अनियमो, विशेषात् ॥ ११ ॥

बहुत्वविधिरपरिमित-शब्दे प्रयोगात् तस्मादयमपि इति स्थितं, किं तत्सहस्राद्न्यूनमधिकं वा? उताधिकमेवे?ति संशये अर्वागपि बहुत्वसम्भवादनियमः, नैवम् "आपेक्षिको हि बह्वर्थः सहस्रापेक्षया भवेत् । तस्यानन्तरनिर्देशात्सहस्रादधिकस्ततः ॥

इति हस्मेत्यादिपरकृतिपुराकल्यानामर्थवादताधिकरणम् ।

सू० परकृति-पुराकल्पमनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ १२ ॥

दर्शपौर्णमासयोः श्रुतम् इति ह स्माह बर्कुर्वार्ष्णिर्माषानेव मह्यं पचतेति स विधि? रुतार्थवाद इति संशये विधिरर्थवत्त्वाद्वादमात्रं ह्यनर्थकमित्यौदुम्बराधिकरणपूर्वपक्षे स्थितं तमेव पूर्वपक्षं मनुष्यधर्मः स्यादिति स्मारयित्वा कृत्वाचिन्तया ऽधिकारश्चिन्त्यते यदा विधिस्तदा किं वृष्णिगोत्राणाम्? उत सर्वेषा? मिति वार्ष्णिकर्तृकत्वसंस्तवात् तद्गोत्राणामेव स्यात्, मैवं स्तुत्यस्य विधिर्नस्तुत्युपायस्य, न चात्र वार्ष्णिकर्तृकोमाषपाकः स्तूयते अन्यस्य स्तावकस्याभावात्, किन्तु वार्ष्णिकृतत्वेन करणेन माषपाकः स्तूयते अन्यस्य स्तावकस्याभावात् किन्तु वार्ष्णिकृतत्वेन करणेन माषपाकस्य स्तुतिरतो माषपाकमात्रविधानात् सर्वपुंसामधिकारः अर्थवादो वेति कृत्वाचिन्तोद्घाटनम् ॥

सहस्रसम्वत्सर-शब्दस्य सहस्रदिनपरताधिकरणम् ।

सू० सहस्रसंवत्सरं तदायुषामसम्भवान्मनुष्येषु ॥ १३ ॥

पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाः विश्वसृजामयनं सहस्रसंवत्सरमिति, किमस्मिन् सत्रे ये गन्धर्वादयः सहस्रायुषस्तेषामधिकारः? उत मनुष्याणा? मेव यदा मनुष्याणां तदा किं रसायनादिसम्पादितसहस्रायुषा? मुत कुलकल्प? उत विश्वसृजामयनं कुर्वतां सहस्रायुषट्त्वाद्वृतृतीयानां शतानामधिकारः? उत मासेषु संवत्सरशब्दमाश्रित्य सुखेनायं मनुष्याधिकारः? उत द्वादशरात्रिषु संवत्सरशब्दः? उत दिवसेष्वि? ति पक्षाः तत्र मनुष्याणां सहस्रायुष्ट्वासम्भवात् श्रुतिबलाद्गन्धर्वाणामधिकारः तेषां त्वग्न्युपसंहारासामर्थ्यान्मनुष्याणामेव रसायनलब्धसहस्रायुषां रसायनस्यैतावदायुःसम्पादनासामर्थ्याच्छतायुः पुरुष इति श्रुतेः कुलकल्पः "शास्त्रफलं प्रयोक्तरी"ति न्यायात्समग्रकर्मानुष्ठायिनां फलं न विकलानुष्ठायिनाम् अतो न कुलकल्पः सत्रारम्भादेव तु सहस्रायुष्ट्वं कल्प्यतामितीदमर्थासम्भवादेवानुपपन्नं तस्मात्पञ्चपञ्चाशत इति यजमानाभिप्राया सङ्ख्या, एकोऽपि त्रिवृत्स्तोमकयागयुक्तः सम्वत्सरः पञ्चपञ्चाशत्सङ्ख्याकैः प्रत्येकं कर्तृभूतैः सम्बध्यमानस्तत्सङ्ख्या भवति तथा पञ्चदशादयोऽपीति, तेन चतुस्सम्वत्सरमिदं सत्रम् अर्द्धतृतीयैर्यजमानशतैः क्रियमाणं सहस्रसम्वत्सरमिति कथ्यते अयममपि पक्षो बुद्धावत्यन्तमनारूढः "चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीर"न्निति वचनविरुद्धत्वादुरभ्युपगमः, तस्मात्सङ्ख्या-शब्दं सम्वत्सर-शब्दं वा गौणमाश्रित्यात्र मनुष्याधिकारः समाश्रयितव्यः, तत्रापि सङ्ख्याशब्दस्य मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न स्वार्थत्यागः, सम्वत्सरपदं तु जघन्यत्वात् सौरचान्द्रमसाद्यनेकार्थसाधारण्येनार्थनिश्चयासामर्थ्याद्गौणं भवति, तत्र योमासः स संम्वत्सर इति दर्शनान्मासेषु तत्राप्यशक्तिस्तदवस्थैव न ह्याधानादूर्ध्वं सहस्रमासं जीवनं सम्भवति, तस्मात्सम्वत्सरप्रतिमा वै द्वादशरात्रय इति प्रयोगात् द्वादशरात्रिषु सम्वत्सरशब्दः

प्रतिमाविशेषणं वात्र सम्वत्सर-शब्दः, न तस्य द्वादशरात्रिषु प्रयोग तस्मात् त्रिवृदादिशब्दसामञ्जस्याद्दिवसेषु सम्वत्सर-शब्दः त्रिवृदादि-पदैः स्तोमविशिष्टमहरुच्यते नाह्नः सहस्रतोहस्सु गौणी संवत्सराभिधा ॥

॥ इति शास्त्रदीपिकायां षष्ठस्य सप्तमः पादः ॥

## अथ षष्ठाऽध्यायस्याऽष्टमः पादः आरभ्यते ।

अथानाहिताग्नेरेव चतुर्होतृहोमाधिकाराधिकरणम् ।

सू० इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्याद्दूर्वाऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥

सन्ति चतुर्होतृसंज्ञका मन्त्रा स्तोर्जपहोमाः पुरुषार्थतया विहिताः "चतुर्होतारं प्रयुञ्जीत चतुर्होत्राप्रजाकामो जुहुया"दिति ये होमास्ते किमाहिताग्न्यधिकाराः आहवनीये कार्या? उतानाहिताग्न्यधिकारा लौकिकेऽग्नौ स्युरथवोभयाधिकारा? इति, संशयः तदर्थमिदं विचार्यते एषा वा अनाहिताग्निरिष्टिरिति वचनं जपाभिप्रायमनुवादमात्रमनाहिताग्निर्वा होमेष्वधिकारप्रदर्शनपरमिति, तत्र विध्यश्रवणादनुवादो जपविषयः, इष्टिशब्दश्च जपविषय एव स्तुत्यर्थतया प्रयुक्त[1]स्तथैव वचनव्यक्ति यैषाऽनाहिताग्नेः क्रिया जपात्मिका सेष्टिरिति, सत्यमेषा वचनव्यक्तिरियमपि तु सम्भवति यैषा चतुर्होत्रहोमात्मिकेष्टिः साऽनाहिताग्नेरिति, पूर्वस्यामहिताग्न्यधिकारा होमा उत्तरस्यामनाहिताग्न्यधिकाराः, न चान्यतरा निर्द्धार्यन्ते तस्मादुभयाधिकारा इति प्राप्ते उच्यते, "वचनस्यार्थवत्त्वायानाहिताग्नेरधिक्रिया ॥ आहत्य च तदर्थास्ते चोदिता नान्यगामिनः षष्ठीश्रुत्या ऽनाहिताग्नेः शेषत्वेन गम्यमानानार्थसामाजिकमाहिताग्निमालम्बते, तस्मादनाहिताग्न्यधिकारः ॥

अनाहिताग्निषूपनयनहोमाधिकरणम् ।

सू० उपनयन्नादधीत होमसंयोगात् ॥ २ ॥

१ तत्रैषा वचनव्यक्तिः ।

उपनयनाङ्गभूता माणवककर्तृका आचार्यकर्तृकाश्च होमाः किमाहवनीये स्युः? उत लौकिकाग्नाविति संशये पूर्ववद्वचनादाहवनीये स्युः माणवकार्थाश्चैते होमास्तदधिकाराः अध्ययनाङ्गभूतोपनयनार्थत्वादत एव च ते माणवकाग्नौ कर्तव्या इति माणवकः प्रागुपनयनादादधीत तदूढ्वं च भार्यामुद्वहेत्, या तु "स्नात्वा भार्यामधिगच्छे"दिति स्नानोत्तरकाला दारक्रिया साऽपत्यार्थो भविष्यतीति प्राप्ते ब्रूमः ॥ आधानस्य विद्वदधिकारित्वाद्विद्यायाश्चोपनयनाधीनत्वाच्चोपनयनात्प्रागाधानाधिकारसम्भवः । किञ्च कर्मार्थैरेव दारैरपत्यमपत्यार्थः कर्म सिध्यतीति नार्थः पृथग् दारक्रियया, य एव त्वपत्यकर्मार्थेन दारसंग्रहः प्राप्तस्तस्यैवायं कालविधिः स्नात्वा भार्यामधिगच्छेदिति, तस्मान्न प्राग् दारसंग्रहः, तदभावे चाधानासम्भवाल्लौकिक एवाग्नौ उपनयनहोमः ॥

अनाहिताऽग्नौ स्थपतीष्ट्यधिकरणम् ।

**सू० स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्यते ॥ ३ ॥**

"एतया निषादस्थपतिं याजये"दिति स्थपतीष्टिः किमाहितेष्वग्निषु स्यात्? उत लौकिके? इति संशये प्रकृतेराहवनीयादिप्राप्तेराहवनीयादीनां चाधानाधीनत्वादसत्यपि स्थपतेराधानविधाने नियमेनेष्टिराधानं प्रयोजयेत् इति प्राप्त उच्यते यदा ह्याधानस्य न सातादिविधिर्भविष्यत्तदा पाचिकलोकप्रयोगाच्चक्रं गार्हपत्यमादधाति दिवाऽऽहवनीयमित्यादिवेदवाक्यपर्यालोचनया धानक्रियानिमित्तत्वं पाचकादिवदाहवनीयादिशब्दानामाश्रित्य स्थपतिराहवनीयार्थमाधानमकरिष्यत्, यदा तु वसन्तादिविधानानि आधानविधायकानीति द्वितीये स्थितं, तदा तद्विहिताधानजन्याग्निगतसंस्कारवाचित्वादाहवनीयादिशब्दानां स्थपतिकृतेन चाधानेनाविहितेन तत्संस्कारविधानावगमाच्चाधानानुपसम्भवः, तस्माल्लौकिके स्यात् ॥

अनाहिताग्नावकीर्णिपश्वनुष्ठानाधिकरणम् ।

**सू० अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ ४ ॥**

"यो ब्रह्मचार्यवकिरेत्स नैर्ऋतं गर्दभं पशुमालभेते"ति किमयं याग

आहवनीयादिषु? उत लौकिक इति संशयः ब्रह्मचारिणस्त्रैवर्णिकत्वादि-श्रावस्थाद्वार्याधिगमसम्भवादाधानमुपपन्नम्, अत आधायाग्निं प्रायश्चित्तं प्रवर्तेत, नैवं न ह्यस्यावकरकृतं ब्रह्मचर्यस्य विप्लवमवसमाधाय गार्हस्थ्य प्रवेशः सम्भवति "अविप्लुतब्रह्मचर्यो गृहस्थाश्र[1]ममाविशे"दिति विधानाच्च चापत्नीकस्याधानमस्तीति लौकिकेऽग्नावयं पशुर्लौकिकश्चाचारात्प्राप्तः ॥

देवकर्मणामुदगयनादि-कालताधिकरणम् ।

सू० उदगयनपूर्वपक्षाहः पूर्वाह्णेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ ५ ॥

उपनयनचौलादीनि किं सर्वकाले स्युः? उतोदगयनादि? ष्विति संशये ऽविशेषात्, सर्वदैवाधिकारः, स्मृतेस्तु उदगयनादिष्वेव स्युर्दैवानि ॥

पित्र्यकर्मणोऽपरपक्षादि-कालताधिकरणम् ।

सू० इतरेषु पित्र्याणि ॥ ६ ॥

पित्र्याणि तु श्राद्धादीनि अपरपक्षादिषु स्मृतेरेव ।

ज्योतिष्टोमाङ्गयाच्ञाक्रय-योर्नित्यताधिकरणम् ।

सू० याच्ञाक्रयणमविद्यमाने लोकवत् ॥ ७ ॥

ज्योतिष्टोमे याच्ञाक्रयणमाम्नातं "द्वादशरात्रीर्दीक्षितो भृतिं वन्वीते"ति याच्ञा "अरुणया पिङ्गाक्ष्या क्रीणाती"ति क्रयः, तत्र संशयः किं यस्य दक्षिणाद्रव्यं नास्ति सोमश्च तस्येदं याच्ञाक्रयणम्? उत विद्यमानेऽपी? ति तत्र द्रव्यार्थं याच्ञाक्रयणमविद्यमानद्रव्यस्य स्यात् द्रव्यवतस्त्वनर्थकं, तस्माच्च तस्य याच्ञादावधिकारः, स्यादेवं यदि द्रव्यमात्रप्रयुक्तं स्यादपूर्वप्रयुक्तं त्विदम् अतो ऽनेन विना पूर्वमेव वैगुण्यं चोत्पद्यते, तस्मान्नित्यं याच्ञाक्रयणम् ॥

ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् ।

सू० तथा भक्षप्रैषाच्छादनं संज्ञप्तहोमद्वेषम् ॥ ८ ॥

"पयोव्रतं ब्राह्मणस्ये"ति भक्षः किमविद्यमाने भक्षान्तरे? उत भक्षसद्भावेऽपि? तथाऽग्नीदग्नीन्विहरेति प्रैषः किमन्यतो ऽनवबुद्धे प्रैषार्थे "अहतं वासः परिधत्त" इति वासोऽन्तराभावे तथा यत्पशुर्मायुमकृतेति संज्ञप्तहोमो मायुकरणे तथा योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति मन्त्रो द्वेष्यसद्भावे? उत

1 गृहस्थाश्रममावसेदिति॰ पा॰ ।

सर्वमिदं नित्यमिति संशये सामर्थ्यादेषां निमित्तसद्भावेऽनुष्ठानमिति निमित्तश्रवणात् सत्यपि चान्यस्मिन् नियमादृष्टसिद्धेरनन्योपायत्वान्नित्यम् ॥

अपररात्रे व्रतस्यानियमाधिकरणम् ।

**अनर्थकं त्वनित्यं स्यात् ॥ ९ ॥**

यदा पुनर्दुह्यमानं पयो न जीर्यतीत्याशङ्क्यते तदाऽपि किमवश्यं वर्तयितव्यं नेत्याह तदा हि यजमानस्य रोगोत्पत्त्या क्रतुविरोध एव सम्भाव्येत तेन प्रधानविरोधाच्च व्रतयितव्यं नेत्याह ॥

छागस्यैवाग्नीषोमीयपशुताधिकरणम् ।

**सू० पशुचोदनायामनियमो विशेषात् ॥ १० ॥**

"अग्नीषोमीयं पशुमालभेते"ति किं यः कश्चित् पशुरालब्धव्यः ? उत छाग एव? चोदनायां सामान्यश्रवणात् मन्त्रवर्णे च छागस्य वपाया मेदसोऽनुब्रूहीति छाग–शब्दश्रवणात् संशयः, तत्र "सामान्यावसिता तावच्चोदना वाक्यभेदतः। मन्त्रस्तदविरोधेन पाचिके यौगिकेऽपि वा विधिस्तुत्योरेकवाक्यत्वात् प्राकृस्तुतेरपर्यवसितोऽञ्जनविधिरर्थवादगतघृतविषय एव पर्यवस्यति, मन्त्रचोदनयोस्तु वाक्यभेदादप्रतिद्वन्द्विविधिवाक्यं पशुसामान्ये पर्यवसितं न मन्त्रानुरोधेन शक्यं विशेषं नेतुं, मन्त्रस्तु चोदितार्थप्रकाशनात्परतन्त्रवृत्ति चोदनावगतं गवाश्वादिजातं निगमादिवशलब्धावयवयोगेन प्रकाशयिष्यति, यदा वा छागस्तदा प्रयोक्ष्यते, तस्मादनियमः उच्यते ।

चोदना पशुसामान्यमङ्गत्वेनावबोधयेत् ।
छागेऽप्यविकलं तत्तु प्रतिव्यक्ति समाप्तितः ॥
मन्त्रः प्रकरणाम्नानान्नित्यमङ्गं प्रतीयते ।
क्लृप्तया रूढिशक्त्या च यच्छागस्यैव वाचकः ॥
तेन तं तादृशं यष्टुन्विधिरात्मा विरोधिनम् ।
विधत्ते छागमेवाङ्गं तस्माच्छागोपसंग्रहः ॥

अधिकृतिरिति सिद्धा भेदशेषप्रयुक्तिक्रमनियमविचारैरेतया चाधिकृत्या ।
सुविदित उपदेशो विकृतिषु तत ऊहोबाधतन्त्रप्रसङ्गाः ।

इत्युपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां षष्ठाध्यायस्याष्टमः पादः ॥ समाप्तश्चायमध्यायः ॥ (शेषमग्रे)

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी।

(*Continued from page* 570. VOL. XI.)

"तत्पुरुषः समानाधिकरणः कर्मधारयः" ॥ अत्र तत्पुरुषः समानाधिकरण इति द्वयोरपि पदयोर्मुख्यार्थत्वे ब्राह्मणराज्यं शोभनमित्यादौ यत्र बाह्येन पदेन तत्पुरुषस्य सामानाधिकरण्यं तत्रैव संज्ञा स्याद् न तु परमराज्यमित्यादौ शब्दान्तरस्याप्रयोगादित्यन्यतरद्गौणार्थमिति स्थिते कामचाराद्यदि तत्पुरुषशब्दो गौणः स्यात् तत्पुरुषार्थानि पदानि समानाधिकरणानीति ततः सद्ग्रहणाभावात् प्रत्येकं संज्ञा इति शङ्क्येत, अतस्तत्पुरुष इति पदं मुख्यार्थमित्याह। 'तत्पुरुष इति'। 'समासविशेषस्येत्यादि'। इतरद्गौणार्थमित्याह ।'समानाधिकरणपद इति'। समानाधिकरणानि पदान्याश्रयत्वेन यस्य सन्ति स तथोक्तः, अवयवद्वारकं सामानाधिकरण्यमौपचारिकमपि पदान्तरनिरपेक्षमन्तरङ्गमिति तदेवाश्रीयतइति भावः, भवति ह्यवयवधर्म्मेण समुदायस्य व्यपदेशो यथा समं चूर्णमिति, अत्र ह्यवयवद्वारकं चूर्णस्य साम्यं न तु कृत्स्नस्य चूर्णस्यान्येन। 'परमराज्यमिति'। 'अकर्म्मधारये राज्य' मित्यत्राकर्म्मधारयइति निषेधादुत्तरपदाद्युदात्तत्वाभावे समासान्तोदात्तत्वमेव भवति। 'पाचकवृन्दारिकेति'। 'न कोपधाया' इति प्रतिषेधं बाधित्वा पुंवत्कर्मधारयेति पुंवद्भावो भवति। 'तत्पुरुष इति किमिति'। प्रतिपदोक्तत्वाद्धिकारावगतेर्वा समानाधिकरणाधिकारविहितस्तत्पुरुष एव प्रतिपत्स्यतइति प्रश्नः। 'पाचिकाभार्य इति'। अयमेवार्थो दुरवधार इति भावः। 'ब्राह्मणराज्यमिति'। अत्रोत्तरपदाद्युदात्तत्वमेव भवति। अथ पूर्वकालैकेत्यस्य प्रकरणस्यान्ते कर्मधारय इति कस्मान्नोक्तं, योयं समानाधिकरणाधिकारविहितस्तत्पुरुषः स कर्मधारय इति, एवं हि तत्पुरुषः सामानाधिकरण इति न वक्तव्यं भवति। सत्यम्। एकसंज्ञाधिकारात्तु कर्मधारयसंज्ञया तत्पुरुषसंज्ञाया बाधः स्यादिति द्विगोरिव पुमस्तत्पुरुषसंज्ञाविधानाय कर्म-

धारयपदमुपादेयं पुनश्च पर्यायप्रसङ्गे समावेशाय चकारोपि वक्तव्यः। नन्वेवं करिष्यते द्विगुकर्मधारयौ चेति, एवं तु न कृतमित्येव ॥

"प्रथमानिर्दिष्टं समास उपसर्जनम्" ॥ समास इत्यधिकरणनिर्देशोयं, कष्टश्रितादयश्च समासास्तेषु किं प्रथमानिर्दिष्टं भवितुमर्हति समासे सति यस्मात्प्रथमा विधीयते न च तथाभूतं सम्भवति समासे हि कृते तत एव प्रथमोत्पद्यते न तदवयवाद् अन्तर्वर्तिन्या च विभक्त्या श्रितशब्द एव प्रथमानिर्दिष्टो न कष्टशब्दः सापि न समासे सत्युत्पन्ना किं तर्हि वाक्यकाल एव निर्दिष्टग्रहणं चानर्थकं स्यात् समासे प्रथमान्तमित्येव वाच्यं स्याद् अतो मुख्यस्यासम्भवाद्गौणः समासो गृह्यत इत्याह। 'प्रथमयेत्यादि'। कथं पुनः समास इति शास्त्रस्य ग्रहणमित्याह। 'समासविधायीति'। समासविधायित्वात्तादर्थ्यात्ताच्छब्द्यमित्यर्थः। निर्दिष्टग्रहणादेव च तुल्येऽपि समासार्थत्वे वाक्यं न गृह्यते, नहि तत्र निर्देशार्था प्रथमा अर्थप्रयुक्तत्वात्। 'द्वितीयेत्येतत्प्रथमानिर्दिष्टमिति'। प्रथमया विभक्त्या उच्चारितं, यद्येवं तस्यैव संज्ञा स्यान्न कष्टादीनां नहि ते शास्त्रे प्रथमानिर्दिष्टाः। य एव द्वितीयेत्यस्य प्रथमानिर्देशः स एव कष्टादीनामपि तत्परत्वात्तस्य, यथा वक्ष्यति तस्येति सामान्यं विशेषोपलक्षणार्थं तदीयप्राथम्यं विशेषाणां विज्ञायत इति। कष्टश्रितादिषूपसर्जनत्वात् पूर्वनिपातो, महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं लोके ऽप्रधानमुपसर्जनमुच्यते इहाप्यप्रधानमुपसर्जनं, प्रधानमप्रधानमिति च सम्बन्धिशब्दावेतौ तेन यत्प्रति यदप्रधानं तदेव प्रति तदुपसर्जनं भवति तेन राज्ञः कुमारीश्रित इति द्वितीयाश्रितेत्यत्र प्रथमानिर्दिष्टस्यापि कुमारीशब्दस्य संज्ञा न भवति, यदि स्यात् पूर्वनिपातानियम उपसर्जनह्रस्वत्वं च स्यात्, अन्वर्थत्वे तु श्रितादीनेवापेक्ष्य द्वितीयान्तमुपसर्जनमिति न प्रसङ्गः, एवं राज्ञः कुमार्या इत्यत्र द्वयोरपि 'षष्ठी'त्यत्र प्रथमानिर्देशेपि कुमारीमपेक्ष्य राज्ञ उपसर्जनत्वं न तं प्रति तस्याः। यद्यन्वर्थसंज्ञा तार्थोनेन प्रदेशेष्वेवान्वर्थग्रहणमस्तु, वाक्येपि तर्हि स्यात् कुमारीं श्रिता गवां कुलम्, अथ संज्ञाविधिर्वाक्ये कस्मान्न भवति यावता

समासइति प्रथमानिर्दिष्टस्याधारो न संज्ञायाः, तथा गोकुलं कुमारीपुत्र इत्यत्र समासेपि पूर्वनिपातवद् ह्रस्वत्वं कस्मान्न भवति, तस्मात्स्वर्थेवो-पसर्जनत्वे उपसर्जनगोशब्दान्तस्योपसर्जनत्वात् स्त्रीप्रत्ययान्तान्तस्य प्रा-तिपदिकस्य ह्रस्वविधानात्समासाधिकारे पूर्वनिपातवचनाच्च वाक्ये तौ न भवत इति वाच्यं, संज्ञाविधानं तूत्पत्तगङ्गमित्यादौ द्वयोरप्यप्राधान्ये पूर्वनिपातनियमार्थं यत्र चानन्यार्थः प्रथमानिर्दिष्टस्तत्र प्रधानस्यापि यथा स्यादित्येवमर्थं च यथा पावकवृन्दारकः पुरुषव्याघ्रो ऽर्द्धपिप्पली पूर्व-काय इति, अत्र 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' उपमितं व्याघ्रादिभिः 'अर्द्धं नपुंसकं' पूर्वापराधरोत्तरमिति, प्रथमानिर्देशस्येदमेव प्रयोजनं समा-सस्य विशेषणं विशेष्येण षष्ठीत्येव सिद्धत्वाद्, न च पूज्यमानतादिविषय एव यथा स्यादिति नियमार्थस्तदारम्भः, उपसर्जनसंज्ञार्थत्वे ऽर्द्धादिपूर्व-पदस्य विशिष्टरूपस्यार्द्धपिप्पलीत्यादेः समासस्य विधिसम्भवात् तस्मादे-तदर्थापि संज्ञा ऽन्वर्थत्वं तु सति संभवे व्यवस्थापकम् ॥

"एकविभक्ति चापूर्वनिपाते" ॥ विभक्तिशब्दः सुपां वाचकः कारकशक्तिवचनो वा विभज्यते ऽनया प्रातिपदिकार्थ इति कृत्वा । 'समासे विधीयमानइति' । यदुपमर्देनेन समासो भवति सक्रिन्वाक्य-इत्यर्थः, समासरूपप्राप्त्यभिमुखे पदत्रयइति यावत् । एतेन सामासार्थ.वा-क्यमत्र समासो न पूर्वसूत्रइव शास्त्रमिति दर्शयति । शास्त्रे सर्वमेकविभक्तिक-मित्येकविभक्तीत्यनर्थकं स्यात्, मुख्येपि समासे प्रत्ययलक्षणेनैकविभक्तित्वं समर्थनीयमिति वाक्यमेवात्र समासः, एकस्मिंश्च प्रयोगे सर्वमेकविभक्ति-कमिति विशेषणोपादानसामर्थ्यात्प्रयोगभेदेनापि यस्य न सर्वविभक्तित्वं तदाश्रीयतइत्याह । 'यन्नियतविभक्तिकमिति' । एतदेव स्पष्टयति । 'द्वितीये सम्बन्धिनीत्यादि' । केचिदाहुः । येन सह समस्यते स द्वितीयसम्ब-न्धीति, एवं तु पञ्चानां खट्वानां समाहारः पञ्चखट्वीति वा टाबन्त इति स्त्रीलिङ्गपक्षे उपसर्जनह्रस्वत्वं न स्यात् समाहारो ह्यत्र नानाविभक्तियुक्तो न पञ्चन्शब्दः तस्मात्प्रधानार्थवाची शब्दो द्वितीयः सम्बन्धो, निष्कौ-शाम्बिरिति कौशाम्बीशब्दो निष्क्रमणक्रियापेक्षया ऽपादानशक्तियोगात्

'पञ्चम्यन्ते एव न तस्य क्रियान्तरमपेक्ष्य शक्त्यन्तरावेशः सम्भवति निःश-
ब्दस्तु निष्क्रान्तप्रधानो नानाशक्तिभिर्युज्यते । 'निष्कौशाम्बिरिति' ।
निष्कुशाम्बिम निर्वृत्ता नगरी कौशाम्बी, 'गोस्त्रियोरुपसर्जनस्ये' ति ह्रस्वः ।
'निर्वाराणसिरिति' । अनो जलं तद्दूरं यस्याः सा वराणा गङ्गा, तस्या
अदूरभवा नगरी वाराणसी । पुराणे तु वरणा चासिश्च, नद्यौ शक-
न्ध्वादिः तयोरदूरभवा पृषोदरादित्वाद्रेफाकारस्य दीर्घः निसः पूर्वेणोप-
सर्जनत्वं प्रधानस्यापि हि प्रथमानिर्देशसामर्थ्यात् भवतीत्युक्तम् । इहा
स्यावकाशोऽप्रथमानिर्दिष्टः पूर्वस्यावकाशोऽनेकविभक्तिः नीलोत्पलादि-
रर्द्धपिप्पल्यादिश्च, कष्टश्रितादिषु कष्टादय एकविभक्तिकाः प्रथमानि-
र्दिष्टाश्चेत्युभयप्रसङ्गे परत्वादनेनैव प्राप्नोति, ततश्चापूर्वनिपात इति
प्रतिषेधप्रसङ्गः, न, अप्रतिषेधा,चायं प्रसज्यप्रतिषेधः पूर्वनिपाते नेति किं
तर्हि पर्युदासोयं पूर्वनिपाते न विधिर्न प्रतिषेधः प्रसज्यप्रतिषेधेप्यन-
न्तरप्राप्तिः प्रतिषिध्यते कुत एतद् अनन्तरस्य विधिर्वा भवति प्रतिषेधो
वा भवति पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति, न चेयं प्राप्तिः पूर्वां
प्राप्तिं बाधते प्रतिषिद्धत्वात् ॥

"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" ॥ 'अभिधेयवचनोर्थशब्द
इति' । न प्रयोजनवचनो ऽव्यभिचारात्, न निवृत्तिवचनः, स्वयं निवृत्तस्य
किं संज्ञया, न धनवचनः, स्वस्वामिभावस्यासम्भवात् । तच्चाभिधेयं चतुर्द्धा
जातिगुणक्रियाद्रव्यभेदेन गौः शुक्लः पाचको डित्थ इति, यद्यर्थवतः संज्ञा
ऽभावशशविषाणादीनां न प्राप्नोति अर्थाभावान्माभूदनेन समासइति
भविष्यति, न । अर्थवदित्यनुवृत्तेः, अन्यथा ऽनर्थकेत्र विधिसम्भवात् समास-
ग्रहणं नियमार्थं न स्यात् । उच्यते । येषां तावद्भूतलाद्याश्रयं घटादिप्रतियो-
गिकं नास्तीति बुद्धिबोध्यं तत्त्वान्तरमभावस्तन्मते तेनार्थेनार्थवत्त्वं, येषा-
मप्याश्रयाभिमतं भूतलादि स्वरूपमेव तद्बुद्धिविशेषो वा प्रतियोगिनो
घटादेरभावस्तन्मते तेनैव भूतलादिना ऽर्थवत्त्वमित्यभावस्य ताव-
त्सिद्धा संज्ञा 'शशविषाणमित्यत्रापि गवादिष्वनुभूतविषाणं शशमस्तक-
वर्तितया बुद्ध्योत्प्रेक्ष्य तस्यैवाभिधानाय शब्दप्रयोगः, बुद्ध्युपारोह एव चा-

र्थस्य शब्दप्रयोगे कारणं न बहिःसत्ता । यदि बहिःसन्तमेवार्थं शब्दा अभिदधति घटोऽस्ति घटो नास्तीति प्रयोगो न स्यात् एकत्र पौनरुक्त्यात् अपरत्र विरोधात् बुद्ध्युपारूढस्य बहिःसत्त्वासत्त्वप्रतिपादनायेोपपद्यते प्रयोगः । एवमपाठीत् पचति अस्य सूत्रस्य शाटकं वयेत्यादावपि बुद्ध्युपारूढ एव पृथ्व्यादीनामर्थो न तु शब्दप्रयोगकाले बहिः सिद्धः । डित्यादीन्यव्युत्पन्नान्युदाहरणानि । व्युत्पत्तौ कृदन्तत्वादेव सिद्धं सर्वनामधातुजमित्यत्रापि पक्षेऽव्ययार्थमनुकरणशब्दार्थं च सूत्रमारभ्यमेव । ननु लौकिके प्रयोगे शब्दानामर्थवत्ताध्यवसायः स च वाक्यस्यैव पदस्य वा विभक्त्यन्तस्य न तु प्रकृतिभागमात्रस्येति कथं तस्य निष्कृष्यार्थवत्त्वनिश्चयः, येषां हि सहैव प्रयोगस्तेषां सङ्घातस्यैवार्थवत्ता यथा वर्णानाम् । उच्यते । अन्वयव्यतिरेकाभ्यां शब्दार्थनिश्चयो यस्य शब्दस्यान्वये योऽर्थः प्रतीयते व्यतिरेके च व्यतिरिच्यते स तस्यार्थः वृक्षौ वृक्षा इत्यादौ च प्रत्ययमात्रव्यभिचारेऽपि तद्विशेषव्यभिचारो वृक्षौ सामान्यव्यभिचारश्च वृक्षखण्डं वार्ता शाखेति, अर्थस्तु मूलस्कन्धफलपलाशादिमान् यावद्वृक्षशब्दं प्रतीयते । 'ह्रान्तस्यावधेरिति' । ननु वन षण सम्भक्तौ, धन धान्यइत्येतयोर्धात्वोरेतौ शब्दौ पचाद्यचि व्युत्पादितौ तत्राधातुरिति निषेधो भविष्यति एवं तर्ह्यव्युत्पत्तिपक्षएतदुक्तम्, अत एवोदाहरणत्वेनाप्यनयोरुपन्यासः । किं चासत्यर्थवद्ग्रहणे प्रतिवर्णं संज्ञाप्रसङ्गः, न च प्रतिवर्णं धातुसंज्ञा, न चाधातुरप्रत्यय इति पर्युदासाश्रयणात् अर्थवतो ग्रहणम् । अनर्थकयोरपि धातुप्रत्यययोः सम्भवात् यथा ऽधीते यावक इति, अत्र ह्यधिपूर्वस्येङोऽर्थवत्त्वं न तु इङि तस्य क्व चिदप्यप्रयोगात् यावक इत्यत्रापि यावशब्दस्यैवार्थवत्त्वं न तु कनः, अन्तरेणापि तदर्थावगमात् । न च ज्ञायते केन धर्मेण सादृश्यमिति, न चार्थवद्ग्रहणपरिभाषयार्थवतो ग्रहणम् एषा हि नियतरूपोपादने व्यवस्थापयति न चात्र रूपविशेषोपादानम् । ननु सत्यामप्यनर्थकस्य संज्ञायां संख्याकर्मादिषु विधीयमानाः स्वादयो न भविष्यन्ति । नैतदस्ति । अविशेषेणोत्पद्यन्ते उत्पन्नानामर्थनियमः, ततश्चाव्ययवत् स्वादयः स्युरेव । 'नलोपो हि स्यादिति' । विभक्तिस्तु श्रवणं न भवति

समुदायस्यापि पृथक् प्रातिपदिकसंज्ञायां तदन्तर्भावाल्लुको भावात्। यद्येवं द्विर्वचनन्यायेनावयवस्य न भविष्यति, युक्तं तत्र पत इत्यत्र येनैवाचा समुदाय एकाच् तेनैव तदवयवोऽपिशब्दः पशब्दश्च, न चैकस्यैकदा ऽनेकं प्रत्यवयवत्वं निरूपयितुं शक्यं, किञ्च समुदायद्विर्वचनेनावयवा अपि द्विरुच्यन्ते तदात्मकत्वात्तस्य इह त्ववयवानां समुदायस्य च संज्ञानिबन्धनं शब्दत्वं पृथगेव तत्र समुदायस्य यत् तेन तस्यैव कार्यं नावयवानाम्। ननु च एति आभ्याम् ओपगवः अ अपेहीति, धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् वृक्षादिष्वपि वर्णा अर्थवन्तः, तथा कूप इति ककारे सति कश्चिदर्थो गम्यते यूप इति यकारोपजनेऽर्थान्तरं तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य यो यूपे यूपार्थः स यकारस्येति, तथा ब्राह्मणा इत्युक्ते योऽर्थोगम्यते नासौ बकारादीनामन्यतरापायेऽपि गम्यते येषां च सङ्घातो यत्कार्यं करोति प्रत्येकमपि तत् कुर्वन्ति यथा तिलानां खारी तैलमुत्पादयति प्रत्येकं च तिलाः, ये च यस्मिन् प्रत्येकमसमर्थास्तेषां सङ्घातोऽपि तत्रासमर्थः, यथा प्रत्येकं सिकतास्तैलं नोत्पादयन्ति तथा खार्य्यपि तासाम्, अतः सङ्घातार्थवत्त्वाच्चार्थवन्तो वर्णास्तत्कथमर्थग्रहणे सत्यपि तेषां निवृत्तिः। अनर्थकास्तु प्रतिवर्णानामर्थानुपलब्धेः, नहि ब्रा इत्युक्ते कश्चिदर्थो गम्यते ऽतो धात्वादीनामेकवर्णानामर्थवत्त्वाद् अन्येऽपि वर्णा अर्थवन्त इत्यनुपलब्धिबाधितमेतद्, एवमन्येऽपि हेतवो बाधितविषयाः। किं च कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वे यूप इति चतुर्णां वर्णानामानर्थक्यमभ्युपगतं स्यात्, अथ तेषामर्थवत्त्वं भूयिष्ठः कूपे यूपार्थः स्यात् कूपार्थश्च यूपे, यत्र भूयसामर्थवतामन्वयो व्यतिरेकस्तु कस्य चित्तत्रतत्रार्थानामपि भूयसामनुवृत्तिर्भवति व्यतिरेकस्तु कस्य चित् यथा देवदत्त गामभ्याज शुक्लां देवदत्त गामभ्याज कृष्णामिति, अतः सङ्घाता एव तेनार्थवन्तः सङ्घातार्थवत्त्वाच्चेति हेतुरनैकान्तिकः, तैलाभिनिर्वर्तितसङ्घातेन दीपो न प्रत्येकं, रथावयवैश्चक्रादिभिः संहतैर्व्रजिक्रिया। किञ्चार्थवतां विपर्यासे ऽर्थप्रत्ययस्यापि विपर्यासः, आहर पात्रं पात्रमाहरेति, अपाये चापायः गामभ्याज शुक्लां गामभ्याजेति, उपजने चोपजनः

गामभ्याज गामभ्याज शुक्लामिति, वर्णेषु तु नैवं हिनस्तीति सिंहो हन्ति हतः घ्नन्ति अतः संघाता एवार्थवन्तः । 'अहन्निति' । हन्तेर्लङि तिप् 'इतश्च' लोपे हल्ङ्यादिलोपो ऽट् स हन्ग्रहणेनैव गृह्यते, अत्र प्रागेव लङुत्पत्तेः संज्ञायां सत्यामुत्तरकालं पदत्वे सति नलोपः स्यात् । यद्वा प्रातिपदिकसंज्ञा पदसंज्ञासमकालमेव स्यात्, न वाप्रत्यय इति प्रतिषेधः 'न ङिसम्बुद्ध्यो' रिति लिङ्गात्, अन्यथा हे राजन्नित्यादावप्रत्यय इति निषेधादप्रातिपदिकत्वादेव नलोपप्रसङ्गात् । अधातुरिति शक्यमकर्तुं, सुपो धात्विति धातुग्रहणं ज्ञापकं न धातोरियं संज्ञेति, नैतदस्ति ज्ञापकं, प्रतिषिद्धार्थमेतत् स्यात् श्येनायतइत्यादावप्रत्यय इति निषिद्धा संज्ञेति भिद् छिद् भूः यूष्त्येवमादौ क्विबन्तत्वे कृदन्तत्वादुत्तरसूत्रेण संज्ञा, न च तस्या अपि प्रतिषेधोयं मध्ये ऽपवादा इति न्यायात् पर्युदासत्वाद्वा । 'काण्डे इति' । प्रथमाद्विवचनस्य 'नपुंसकाच्चे' ति शीभावः, अप्रत्यय इति च प्रत्ययग्रहणपरिभाषया तदन्तस्य निषेधः, यत्र हि प्रत्ययः संज्ञिरूपे ऽनुप्रविशति यथा 'तरप्तमपौ घ' इति तत्र पदसंज्ञायामन्तवचनेन तदन्तविधिप्रतिषेधः, इह तु पर्युदासे प्रत्ययव्यतिरिक्तः संज्ञी प्रसज्यप्रतिषेधेपि न संज्ञाविधौ प्रत्ययग्रहणं किं तर्हि प्रतिषेधइति नास्ति निषेधः । ननूत्तरसूत्रे कृत्तद्धितग्रहणं नियमार्थं भविष्यति प्रत्ययान्तस्य यदि भवति कृत्तद्धितान्तस्यैवेति, उच्यते । अस्मिन् सत्यप्रतिषेधे संज्ञाविधौ तदन्तविधिप्रतिषेधात्प्रत्ययस्य यदि भवति कृत्तद्धितस्यैवेति स्थानिनियमः स्यात् सति त्वस्मिन् अत्र तावत्प्रत्ययान्तस्य निषेध इति उत्तरसूत्रेपि तद्धितान्तस्य ग्रहणं भवति, अथ क्रियमाणेप्यप्रत्ययइत्यस्मिन्नपुंसकह्रस्वत्वं कस्मान्न भवति पर्युदासे तावत्प्रत्ययाप्रत्यययोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावः, प्रसज्यप्रतिषेधेप्यन्तरङ्गत्वात् प्रागेव प्रत्ययोत्पत्तेः काण्डशब्दस्य प्रवृत्ता संज्ञेति एकादेशस्यान्तवद्भाव इत्यस्त्येव प्रातिपदिकत्वं तथा च ब्रह्मबन्धूरित्यूङेकादेशस्यान्तवत्त्वात् स्वाद्युत्पत्तिः, न चाप्रत्यय इत्यस्य वैयर्थ्यं, त्रपुणी इत्यादौ यत्रैकादेशत्वं नास्ति तत्रार्थवत्त्वात् एवं तर्हि नपुंसके यद्वर्तते तस्य ह्रस्वो विभक्त्यन्तं तु संख्याप्रधानं कारकशक्तिप्रधानं च न च तयोर्लिङ्ग-

योगः, न चान्तवद्भावेनार्थः शक्योतिदेष्टुमिति न भवति ह्रस्वः, यद्येवं त्रपुणी इत्यादावप्येवमेव न भविष्यति नार्थोनेन, न चान्यः प्रत्ययान्तो व्यावर्त्यः सम्भवति । तथाहि । बहुधाः प्रत्ययाः सनादयः कृतः तिङः सुपः स्त्रीप्रत्ययाः तद्धिताश्चेति । प्रातिपदिककार्यमपि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'गोस्त्रियोरुपसर्जनस्ये' ति ह्रस्वत्वं 'ङ्याप्प्रातिपदिका'-दिति प्रत्ययविधिश्च तच्च कृत्तद्धितान्तस्येष्यतएव सन्प्रभृतिषु येषां तावद्धातुत्वं तेषामधातुरित्येव प्रतिषेधः स्पशन्नादीनामपि विकरणानां लिङ्गाभावः संख्याकर्माद्यभावो ऽपत्याद्यर्थायोगश्च, एवं तिङन्तानां यथा यः पचतिरूपं तस्यापत्यम् इति रूपन्नन्तत्वात्सत्यपि प्रातिपदिकत्वे, ये तु सम्भवन्ति स्वार्थिकास्ते 'तिङश्चे' ति ज्ञापकान्न भवन्ति स्त्रीप्रत्ययानां तु विरुद्धेन नपुंसकेनायोग एव, कुमारीपुत्र इत्यत्र गोस्त्रियोरिति ह्रस्वः स्यादिति चेद् अथ क्रियमाणेपि प्रतिषेधे राजकुमारीपुत्र इत्यत्र कस्मान्न भवति अत्र हि समासत्वादस्त्येव प्रातिपदिकत्वम् । अतो यस्तत्र परिहारः स एवात्रापि भविष्यति, प्रत्ययविधिरित्वष्यतएव 'ङ्याप्प्रातिपदिकादि' ति सुबन्तस्य ह्रस्वत्वं न प्राप्नोतीत्युक्तमेव, सुपां चाप्रसङ्गस्तद्विधानदशायां तदन्तस्यासम्भवात्, लिङ्गाभावात् स्त्रीप्रत्ययाभावः, तद्धितास्त्विष्यन्त एव 'समर्थानां प्रथमाद्वे' ति । अतो नार्थोऽनेन उत्तरसूत्रे तद्धितग्रहणेन च । उच्यते । 'बहुषु बहुवचनं' 'कर्मणि द्वितीये' त्यादिनां स्वादिविधिवाक्येन भिन्नवाक्यतापत्ते सर्वेभ्यः प्रत्ययान्तेभ्यः स्वादयः स्युः, यथाऽव्ययेभ्यः, विकरणान्ताच्च स्वार्थिकास्तद्धिताः स्युरेवेत्यतोऽप्रत्ययग्रहणं कर्त्तव्यं तद्धितग्रहणं च, काण्डे कुड्यइत्येतयोस्तु प्रत्युदाहरणत्वं ह्रस्वो नपुंसक इत्यत्रोपपादयिष्यामः । अथ प्रत्ययमात्रस्य संज्ञा कस्मान्न भविष्यति सत्यां हि संज्ञायामुक्तेन न्यायेन बहुपटव इत्यादौ स्वादयः स्युः, उच्यते । व्यपदेशिवद्भावेन प्रत्ययान्तवदप्रत्यय इति प्रतिषेधो भविष्यति यद्येवं कृत्तद्धितमात्रेपि विधिसम्भवात् उत्तरसूत्रे तदन्तविधिर्न भवति । अत्र परिहारं वक्ष्यामः ॥

"कृत्तद्धितसमासाश्च" ॥ कृतो विहितास्तद्धितास्तद्वय इति वेदितव्यम् । अत्र हि कृद्ग्रहणपरिभाषा नोपतिष्ठते, तेन मूलकेनोपदंशमिति वाक्यस्य संज्ञा न भवति मध्येऽपवादन्यायेन ह्यप्रत्यय इति निषेधः कृद्ग्रहणेन बाध्यते न तु समासग्रहणेन कृतो नियमः । संज्ञाविधौ प्रत्ययग्रहणेऽप्यत्र तदन्तविधिर्भवतीत्यत्रोपपत्तिमाह । 'अप्रत्यय इति' । पूर्वसूत्रे प्रत्ययान्तस्य निषेधो न केवलस्य प्रत्ययस्येत्याश्रित्यैतदुच्यते, अप्राप्तप्रापणं विधिः न च तदा कृत्तद्धितमात्रस्याप्राप्ता संज्ञा तदन्तस्य त्वप्राप्नोति विध्यर्थत्वात्तदन्तस्यैव ग्रहणं, येषां तु पूर्वत्र प्रत्ययमात्रस्यापि निषेधस्तेषामर्थवद्ग्रहणानुवृत्तेरर्थवद्विशेषस्य तदन्तस्य ग्रहणं समासग्रहणमनर्थकमर्थवत्त्वात्पूर्वेणैव संज्ञासिद्धेरित्यत आह । 'अर्थवत्समुदायानामिति' । कर्मणि षष्ठी । 'नियमो' व्यावृत्तिः । ननु सुराजा अतिराजेत्यादौ अन्तर्वर्तिन्यां विभक्तौ लुप्तायां समुदायस्य संज्ञा तामपेत्य सोरुत्पन्नस्य हल्ङ्यादिलोपे तस्यामवस्थायां नलोपार्थं या संज्ञा प्राप्नोति तस्याः प्रत्ययलक्षणेनाप्रत्यय इति निषेधे प्राप्ते विध्यर्थमेतत्स्यात्, ज्ञापकात्सिद्धम्, 'न ङिसंबुद्ध्योः' रिति निषेधो ज्ञापयति न प्रत्ययलक्षणेन निषेध इति, अन्यथा उक्तेन न्यायेन हे राजन्नित्यादौ नलोपाप्रसङ्गात् । नैतदस्ति ज्ञापकम् । हे सुराजन्नित्यादौ यत्र समासग्रहणेन संज्ञा विहिता तत्र नलोपप्रसङ्गे निषेधः स्यात् एवं तर्ह्यत्राप्यप्रत्यय इत्यनुवर्तते तेन प्रत्ययान्ते समासे विध्यर्थत्वासंभवान्नियमार्थमेव समासग्रहणम् । यद्वा ऽनुद्दिश्य प्रयोजनविशेषं न कृत्संज्ञा प्रवर्तते तस्यां तु सत्यां यस्यामवस्थायां यत्कार्यं प्राप्नोति तस्यां तद्भवति न प्रतिकार्यमावर्तनीया संज्ञेत्ययं पक्ष आश्रीयते अत्र च पक्षे सुबुत्पत्त्यर्थं नलोपार्थं च समाससंज्ञानन्तरमेव सकृत्संज्ञा प्रवर्तते न तु नलोपदशायामिति विध्यर्थत्वासम्भवान्नियमार्थमेव समासग्रहणं, तुल्यजातीयस्य च नियमेन व्यावृत्तिः, कश्च तुल्यजातीयो यस्यार्थवत्समुदायस्य पूर्वो भागस्तावत्पदं यश्चैव हि न सुबन्तानां समासः राजपुरुष इति, यश्चैव हि तिङन्तानाम् । 'आख्यातमाख्यातेन क्रियासातत्ये' अश्नीतपिबता खादतमोदतेति, यश्च सुबन्तानां तिङन्तानां च

जहि कर्म्मणा बहुलमाभीक्ष्ण्ये जहिजोडः जहिशकट इति, यश्च सुब-न्तानां प्रातिपदिकानां च गतिकारकोपपदानामिति वस्त्रक्रीती निष्क्रक्रीतीति, सर्वत्रात्र पूर्वो भागस्तावत्पदम् । अतः सं तुल्यजातीयो नियमेन व्यावर्त्यते, तेन बहुपटव इत्यत्र जसन्तस्य पुरस्ताद्बहुचि कृते नोत्तरत्र संघाते पूर्वो भागः पदमित्यसति नियमे ईषदसमाप्तिलक्षणेनार्थेनार्थव-त्त्वात्सत्यां संज्ञायां पूर्वोत्पन्नस्य जसः सुपो धात्विति लुकि कृते चित्स्व-रोपि भवं 'चितः सप्रकृतेर्बहुजकजर्थमिति' पटुशब्दाकारस्य भवति पूर्वोत्पन्नस्य तु जसो ऽवस्थाने तस्यैव स्यात् । 'वाक्यस्यार्थवत इति' । प्रत्येकं पदैरप्रतीतस्य संसर्गस्य वाक्येन प्रतीयमानत्वात् तस्यार्थवत्त्वं समु-दायाच्च प्रत्ययस्याविधानान्नास्त्यप्रत्यय इति निषेधः । न च नास्ति यस्मिन् प्रत्ययः सो ऽप्रत्यय इति बहुव्रीहिः शक्य आश्रयितुं, बहुपटव इत्यत्रापि निषेधप्रसङ्गात् ॥ (शेषमग्रे)

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page 587.* VOL. XI.)

सू॰ मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

भू॰ "सत्यं ज्ञानमनन्तं ब्रह्मे"ति मन्त्रवर्णोदितं ब्रह्मैवा-नन्दमय इति गीयते तत्तु जीवस्वरूपादन्यत् परं ब्रह्म तथा हि "ब्रह्मविदाप्नोति परमि"ति, जीवस्य प्राप्यतया ब्रह्म निर्दिष्टं "यदेषाऽभ्युक्तेति" तद् ब्रह्माभिमुखीकृत प्रतिपाद्यतया परिगृह्य ऋगेषाऽध्येतृभिरुक्ता ब्राह्मणोक्त-

स्यार्थस्य वैशद्यमनेन मन्त्रवर्णेन क्रियत इत्यर्थः, जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव, अनन्तरञ्च "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इत्यारभ्योत्तरैश्च ब्राह्मणैः मन्त्रैश्च¹ तदेव विशदीक्रियते अतो जीवादन्य आनन्दमयः, अयमाशयः यद्यप्युपासकात्प्राप्यस्य भेदेन भवितव्यं तथाऽपि न वस्त्वन्तरं जीवात् मान्त्रवर्णिकं ब्रह्म

टी० "इतश्चे"ति, "मान्त्रवर्णिकमेव च गीयते" अवतारार्थमाह "सत्यमि"ति, शाब्द एवार्थः न तूक्तशब्दः फलित इति ज्ञापयितुं वर्ण–शब्दः । ततः किमित्यत्राह "तस्ये"ति, ब्रह्मणस्त्वपरशब्दप्रत्यभिज्ञापनाय परं ब्रह्मेत्युक्तं मान्त्रवर्णिकस्य जीवादन्यत्वं कथमित्यत्राह "तथा ही"ति, । प्राप्यत्वमस्तु ततः किं मान्त्रवर्णिकब्रह्मणो जीवादन्यत्वे इत्यपेक्षायां ब्राह्मणमन्त्रयोर्घटकं वाक्यमाह "तदेषाऽभ्युक्ते"ति, तद्व्याचष्टे "तदि"ति, तत्पदं ब्रह्मवाचि अभिमुखीकरणं चेतनधर्म इति तद्व्यावृत्त्यर्थमाह "प्रतिपाद्यतये"ति, एषेति पदस्य विशेष्यमाह "ऋगि"ति, उक्तेति कथिते पौरुषेयत्वशङ्का स्यादिति तद्व्युदासार्थमाह "ऋषिभिरि"ति, किमुक्तं भवतीत्यत्राह "ब्राह्मणे"ति, श्रुतिषु मन्त्राणां प्राबल्यं केचिद्वदन्ति तद्व्युदासार्थमाह "ब्राह्मणोक्ते"ति, ब्राह्मणोक्तार्थविशदीकरणरूपो मन्त्र इति प्रयोजकं संग्रहेणोक्तस्य विस्तरेण कथनं विस्तृतस्य प्रतिपत्तिसौकर्याय सङ्ग्रहेण कथनमपि वैशद्यावहमित्यनिर्दोषत्वाविशेषान्मन्त्रब्राह्मणयोः प्राबल्यदौर्बल्यविभागोऽनुपपन्न इति भावः । एवं मन्त्रवर्णेन जीवब्रह्मभेदसिद्धिं फलितां दर्शयति "जीवस्ये"ति, प्राप्तुरस्योपासकात्मस्वरूपस्य प्राप्यस्य परब्रह्मणश्च कथमैक्यमित्यर्थः मान्त्रवर्णिकं ब्रह्म जीवादन्यदस्तु अस्यैवानन्दमयत्वं कथ? मित्यत्राह "अनन्तरञ्चे"ति, पूर्वस्मिन्नस्मिन्नपि सूत्रे च–शब्दो हेतुसमुच्चये विकारशब्दादिति सूत्रे स्वतन्त्रहेत्वन्तराभावात्र च–शब्दः तद्ध्यानन्दमयोऽभ्यासा-

---

१ मन्त्रैश्च तदेव इति पा० ।

द्विति सूत्रशेषम् उत्तरसूत्रस्य शङ्कामाह "अत्राहे"ति, उपासकप्राप्यभेदेऽभिहिते सतीत्यर्थः ॥

सू० किन्तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धं निर्विशेषचिन्मात्रैकरसं शुद्धस्वरूपं तदेव सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रेण विशोध्यते तदेव च "यतो वाचो निवर्तन्ते ऽप्राप्य मनसा सहे"ति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते, अतस्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आनन्दमय इति, अत उत्तरं पठति—

सू॰ नेतरोऽनुपपत्तेः ॥ १७ ॥

परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः कुतः, अनुपपत्तेः, तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते, इदमेव हि निरुपाधिकं विपश्चित्त्वं सोऽकामयत बहु स्याम्प्रजायेयेति सत्यसङ्कल्पत्वप्रदर्शनेन विवरिष्यते विविधं पश्यच्चित्त्वं हि विपश्चित्त्वं

टी० तस्यैवेति कारणाविद्याच्छादिका कार्याविद्या विक्षेपिकाऽविद्या च विवक्षिता समस्तशब्देन गन्धशब्देनापारमार्थ्यं फलितम् । अपुनस्संबन्धोवाभिप्रेतः शुद्धं—कर्म तत्फलान्वयरहितं । निर्विशेषत्वमेवोपपादयति "तदेवे"ति, ज्ञानपदेन निर्विशेषत्वमर्थसिद्धं ज्ञानस्य ज्ञानान्तराश्रयत्वाद्ययोगात् वाङ्मनसनिवृत्तिवचनाच्च । निर्विशेषत्वसिद्धिमाह "तदेव चे"ति, तदेव—शुद्धस्वरूपमेव उपासकप्राप्यभेदोऽवस्थाभेदेनाप्युपपन्न इति न जीवविलक्षणत्वसिद्धिरित्यर्थः । नेतरोऽनुपपत्तेः" इतर—शब्दस्य सप्रतियोगिकत्वात् परमात्मन इत्युक्तम् । अनुपपत्तेरित्यस्मिन् पदे पञ्चमर्थं पश्चादुक्त्यन् अनुपपत्तिस्वरूपमाह "तथे"ति, निरुपाधिकं विपश्चित्त्वमिति कर्मविशेषेन्द्रियानपेक्षत्वं निरुपाधिकत्वम्, इह चोपाधिरस्ति चेत्स वक्तव्यः, तदभावादेव

तदनुक्तिरिति केवलविपश्चिच्छब्दो निरुपाधिकविपश्चित्त्वमाहेत्यर्थः न केवलनिरुपपदत्वाद्विपश्चित्त्वस्य निरुपाधिकत्वमर्थसिद्धं श्रुतिसिद्धमपीत्याह "इदमेवे"ति, मुक्तस्य निरुपाधिकविपश्चित्त्वं सम्भवतीति शङ्कायां किं भवदभिमतमुक्तस्य विपश्चित्त्वोपपत्ति? उतास्मदभिमतस्येति विकल्पमभिप्रेत्य स्वाऽभिमतस्य मुक्तस्य तदनुपपत्तिरिदमेवेत्यादिभाष्येणोच्यते विपश्चिच्छब्दार्थे ज्ञाते हि जीवे तदनुपपत्तिर्वाच्येत्यत्राह "विविधमि"ति तर्हि विपश्चिदिति वक्तव्यम् इत्यत्राह–

सू० पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः, यद्यपि मुक्तस्य विपश्चित्त्वं सम्भवति तथाऽपि तस्यैवात्मनः संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते, निर्विशेषचिन्मात्रताऽऽपन्नस्य मुक्तस्य विविधदर्शनाभावात्सुतरां विपश्चित्त्वं न सम्भवतीति न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तं, "यतोवाचोनिवर्त्तन्ते इति च वाक्यं यदि च वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात् अपितु वाङ्मनसयोस्तत्राप्रमाणतां वदेत्, तथा च सति तस्य तुच्छत्वमेवापद्यते॥

टी० "पृषोदरादित्वादि"ति, "पृषोदरादीनि यथोपदिष्टमि"ति पाणिनिः पृषच्छब्दावयवतकारलोपवत् यच्छब्दलोपः, पाणिनिप्रदाप्रतममुनिभिः कृतनिर्वाहत्वादीदृशशब्दानां साधुत्वस्य पाणिन्यभिमतत्वम् अनेन ज्ञातं भवति अतो विविधं विपश्यच्चेतनत्वं विपश्चित्त्वमित्यर्थः चिच्छब्दस्य ज्ञानवाचित्वे विविधं पश्यच्चित्त्वमिति बहुव्रीहिः, स्वपक्षे मुक्तस्य निरुपाधिकविपश्चित्त्वायोग उक्तः । अथ पराभिमतमुक्तस्य विपश्चित्त्वा-

योगमाह "निर्विशेषे"ति विपश्चित्त्वमात्रमेव न सम्भवतीत्यभिप्रायेण सूत्रमित्युक्तं, न सम्भवतीत्यत्रेति-शब्दस्सूत्रस्थपञ्चमीव्याख्यानं, न केवलं विपश्चिच्छब्दमात्रासङ्गतिस्सर्वप्रमाणविरोधश्चेत्याह "न किनापी"ति, आर्थगुणनिषेधपरस्य सत्यज्ञानादिवाक्यस्य परिहारः प्रथमसूत्रोक्तो ऽनुसन्धेयः यतो वाचोनिवर्तन्त इत्यस्य वाक्यस्य निर्विशेषपरत्वं व्युदस्यति "यतो वा च" इत्यादिना, यदीत्यनुज्ञानप्रदर्शनं तर्हि किमवगमये? दित्यपेक्षायां न केवलमिष्टाबोधकत्वं किन्त्वनिष्टबोधकत्वं चेत्यभिप्रयन्नाह "अपि त्वि", ति, कथमस्यानिष्टत्वमित्यत्राह "तथा च सती"ति मनसोऽप्यगोचरत्वेन सर्वप्रमाणागोचरत्वं सिद्धं कृत्वा प्रमाणान्तरागोचरत्वमप्युपजीव्य तुच्छत्वमापादितं किं सर्वथा वाङ्मनसनिवृत्तिरुच्यते उतैयत्तागोचरवाङ्मनसनिवृत्तिः? द्वितीयशिरसोऽभ्युपगमो विवक्षित इति प्रथमे शिरसि तुच्छत्वमुक्तं, ब्रह्मविदाप्नोति परमिति पूर्वापरवाक्यविरोधात् । ब्रह्मणस्तुच्छत्वं व्याहतमित्यत्राह—

सू० ब्रह्मविदाप्नोतीत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वमानन्दैकतानत्वमितरान् प्रत्यानन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृतनदात्मत्वं भयाभयहेतुत्वं वाय्वादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वमन्यच्चानेकं प्रतिपाद्य वाङ्मनसयोर्ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितं यतो वाचो निवर्तन्त इति यच्छब्दनिर्दिष्टमानन्दं ब्रह्मणो विद्वानित्यानन्द—शब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यतिरेकनिदर्शनेन प्रतिपाद्य तदेव वाङ्मनसागोचरं विद्वानिति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवदनर्थकं वा[1]च्या-

१ वाक्यमनन्तर्गतं चेति पा० ।

न्तर्गतश्च स्यात्, अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुम् उपक्रम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिर्यतो वाचो निवर्तन्त इत्युच्यते एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेतीत्युच्यते । किंचास्य मान्त्रवर्णिकस्य विपश्चितः सोऽकामयतेत्यारभ्य वक्ष्यमाणस्वसङ्कल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेः मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव । इतश्चोभयस्मात्प्रत्यगात्मनोऽन्य आनन्दमयः

टी० "ब्रह्मविदि"ति, व्याहतार्थं श्रुतिर्न प्रतिपादयतीति चेत् तन्निर्विशेषपरत्वेऽपि तुल्यमित्यभिप्रायेण तत्तद्वाक्यप्रतिपन्नान् गुणानाह "विपश्चित्त्वमि"त्यादिना, "ब्रह्मणाविपश्चिता" "आकाशस्सम्भूतः" "रसो वै सः" "एष ह्येवानन्दयाति" सोऽकामयत बहु स्यां प्रजायेय" "तदनु प्रविश्य अथ सोऽभयङ्गतो भवति भीषाऽस्माद्वातः पवते" "स एको मानुष आनन्द" इत्येतेषां वाक्यानामर्थो विपश्चित्त्वमित्यादिना उक्तः । शतगुणितोत्तरक्रमेणेति निर्विशेषत्वं विवक्षितं चेत् गुणापकर्षो वाच्यः, गुणप्रकर्षमुक्त्वा वाङ्मनसनिवृत्त्यभिधानमानन्त्यविवक्षाकृतमित्यभिप्रायः, अन्यश्चेति आदित्यमण्डलान्तर्वर्तित्वादिकं विवक्षितम् । एवं पूर्वापरवाक्यव्याहतिपरिहारार्थं स्वरूपमङ्गीक्रियते चेत् तद्वद् गुणाश्च स्वीकार्या इत्युक्तं भवति, एवं प्रकरणविरोध उक्तः । अथ स्ववाक्यविरोधमाह "यतोवाच" इति, यच्छब्दनिर्दिष्टमानन्दमित्यत्र "कश्चैव मौनः यतो न वेदा" इति सनत्सुजातोक्तश्लोकतुल्यैकार्थ्यमनुसन्धेयं, व्यतिरेकनिर्देशेन भेदनिर्देशेन वैयधिकरण्येनेत्यर्थः, यच्छब्देनानन्दनिर्देशः, आनन्द-शब्देन प्रतिनिर्देशो ब्रह्मसम्बन्धित्वनिर्देशश्च वागविषयत्वे व्याहताः स्युः, विद्वानिति तद्वेदनाभिधानं मनोगोचरत्वाभावे व्याहतं स्यादित्यर्थः । अनर्थकं वाच्यानन्तर्गतं च स्यादिति अनर्थकं-व्याहतार्थं स्यात् व्याहतिपरिहारोऽभिमतश्चेत् ब्रह्म न शब्दवाच्यमितीदं समुद्र-

घोषादिवद्वाक्यमेव न स्यादित्यर्थः, वाक्यत्वे व्याहतीरनिवार्येति भावः । ब्रह्मणो ऽशब्दगोचरत्वं ब्रह्म न शब्दगोचर इत्यनेनापि शब्देन व्याहतं स्यादिति चाभिप्रायः, सत्यं ज्ञानमिति स्वरूपस्य सत्यत्वं कण्ठोक्तं न गुणानाम-तस्तन्निषेध इति चेन्न तत्र सत्यपदेन ह्यविकारित्वमुक्तं न तु मिथ्यात्वव्यावृत्तिः, मिथ्यात्वव्यावृत्तिरुक्ताऽस्तु तथाऽपि गुणानां च सत्यत्वं दुरपह्नवं प्रमाणसिद्धत्वात् प्रामाणिकत्वं हि सत्यत्वं । किंच गुणानां सत्यत्वं कण्ठोक्तं "सत्यकामस्सत्यसङ्कल्पः" "त इमे सत्याः कामाः एतांश्च सत्यान् कामान्" इत्यादिभिरतः स्वरूपवद् गुणा अपि स्वीकार्याः प्रमाणोपपत्तिसाम्यात्, अतो वाङ्मनसानिवृत्तिर्न निर्विशेषत्वनिबन्धना । ननु न शब्देन मुख्यवृत्त्या प्रतिपाद्यते ब्रह्म अपितु लक्षणया अतो यतो वाच इति मुख्यवृत्तिविषयो निषेध इति विषयविभागाच्च व्याहतिरिति चेन्न निवर्त्तन्त इत्यस्यैकस्य वाक्यस्य मुख्यत्वायानेकवाक्यलक्षणाश्रयणायोगात् "भूयसां स्याद्बलीयस्त्व"मिति न्यायादेकवाक्यस्वारस्यभङ्गेन अनेकवाक्यस्वारस्यं ह्यनुवर्त्तनीयम् । किं वात्र न हिंस्यात्सर्वाभूतानि अग्नीषोमीयं पशुमालभेतेतिवद्विषयविभागेनोभयमुख्यत्वं सिध्यति चेत् तदेव हि युक्तं, लोके च गामानय बलीवर्दं विनेति विषयविभागो मुख्यत्वानुरोधी दृश्यते अविरुद्धार्थः क? इत्यपेक्षायां विषयविभागं दर्शयति "अत" इति, वाङ्मनसनिवृत्तिरस्ति चेत् कथं वेदनवचन? मित्यत्राह "एवमि"ति, इयत्तारहितत्वेन वेदनमुच्यत इत्यर्थः, अनुपपत्तेरिति सौत्रपदस्य विपश्चिच्छब्दोक्तसर्वज्ञत्वानुपपत्तिरर्थ उक्त । अथ सर्वशक्तित्वानुपपत्तेरर्थान्तरमाह[1] "किञ्चे"ति, इदं सूत्रं मान्त्रवर्णिकसूत्रोक्तहेत्वन्यथासिद्धिपरिहारपरं तच्छेषमिति स्वतन्त्रहेतुपरत्वाभावाच्च—शब्दाप्रयोगः । एवमनेन सूत्रद्वयेन उपक्रमस्य हेतुरनुसंहितः । अथ मध्यगतं स्फुटतरं हेतुमनुसंधत्तेऽनन्तरसूत्रेण, आनन्दमयस्य जीवादन्यत्वं स्ववाक्यैकदेशमयडन्तपदवाच्यनिरतिशयानन्दयोगेन प्रथमसूत्रेणोपपादितम्, अतोऽत्र स्ववाक्यस्थहेतुश्चोक्तो भवति ।

१ सर्वशक्तित्वानुपपत्तिमर्थान्तरम् इति पा० ।

सू० भेदव्यपदेशाच्च ॥ १८ ॥

भा० तस्माद्वा एतस्मादात्मन आकाश इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यम् अन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय इति, अतो जीवाद्भेदव्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति विज्ञायते ।

इतश्च जीवादन्यः

सू० कामाच्च नानुमानापेक्षा ॥ १९ ॥

भा० जीवस्याविद्यापरवशस्य जगत्कारणत्वे अवर्जनीयाऽऽनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा न तथैव हि चतुर्मुखादीनां कारणत्वम्, इह च सोऽकामयत बहु स्यां प्रजायेयेति अचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टिः, इदं सर्वमसृजत यदिदं किंचेत्याम्नायते अतो ऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते । अतश्च जीवादन्य आनन्दमयः । इतश्च जीवादन्यः—

सू० अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

टी०. "भेदव्यपदेशाच्च" यदि जीवात्मस्वरूपं परिशुद्धावस्थं ब्रह्म तर्हि अन्नमयादेरिवैकावस्थायां भेदव्यपदेशो न सम्भवति तस्मादन्नमयादिभिरिव जीवैक्यं ब्रह्मणो न सम्भवतीत्यर्थः, विज्ञान-शब्दस्य अन्तःकरणपरत्वानुपपत्त्यादिकं पूर्वोक्तमनुसन्धेयम् । अथोपसंहारस्य हेतुमाह "कामाच्च नानुमानापेक्षा" कैश्चित्प्रधानव्यावृत्तिपरमिदं व्याख्यातं तत्पक्षोऽतिदुःस्थत्वादननूद्य दूषितः पूर्वाधिकरणे अचिद्व्यावृत्ति कृता । प्रधानशङ्काहेतु-

श्चास्मिन्ननुवाके नास्ति अपेक्षाशब्दवैयर्थ्यञ्च स्यादिति जीवस्येति अस्य-न्तमचिनदपेक्षत्वे स्वरूपपरिणामप्रसङ्गः, देहातिरिक्ताचिदनपेक्षत्वं देवादि-सृष्टौ चतुर्मुखादीनामप्यस्ति अतस्तत्परिहारार्थमाह "इह चे"ति सङ्कल्पहे-तुभूतकरणकलेवरावस्थाचित्संसर्गापेक्षा नास्तीत्यर्थः। देहानपेक्षं सत्यसङ्क-ल्पत्वकार्यं स्रष्टृत्वम् आविर्भूतगुणाष्टकस्य मुक्तस्यापि श्रुयते इति शङ्कां च परिहरन् सोऽकामयतेति वाक्यादुपरितनहेत्वन्तरमाह "अस्मिन्नस्य च तद्योगं शास्ति" कस्मिन्? कस्य? केन योगं? किं शास्ती? त्यपेक्षा-यामुत्तरार्थमाह—

सू॰ अस्मिन्—आनन्दमये, अस्य च—जीवस्य, तद्योगं शास्ति—आनन्दयोगं शास्ति शास्त्रं, "रसो वै सः रसं ह्येवायं ल-ब्ध्वाऽऽनन्दीभवती"ति रस-शब्दाभिधेयानन्दमयलाभा-दयं जीवशब्दाभिलपनीयः आनन्दीभवतीत्युच्यमाने य-ल्लाभाद्य आनन्दीभवति स स एवेत्यनुक्तमपि कोऽब्रवीती-त्यर्थः, एवमानन्दमयः परं ब्रह्मेति निश्चिते सति यदेष आकाश आनन्दो न स्यात् विज्ञानमानन्दं ब्रह्मेत्यादि-ष्वानन्द-शब्देनानन्दमय एव परामृश्यते यथा विज्ञान-शब्देन विज्ञानमयः, अत एवानन्दं ब्रह्मणो विद्वानिति व्यतिरेकनिर्देशः अत एवैतमानन्दमयमात्मानमुपसंक्राम-तीति फलनिर्देशश्च, उत्तरे चानुवाके पूर्वानुवाकोक्ताना-मन्नमयादीनामन्नं ब्रह्मेति व्यजानात् प्राणो ब्रह्मेति व्यजानात् मनो ब्रह्मेति व्यजानात् विज्ञानं ब्रह्मेति व्यजानादिति प्रतिपादनात्

टी॰ अस्मिन्नानन्दमय इति, अस्मिन्निति विषयसप्तमी ब्रह्मानुभ-वरूपानन्दस्य व्यवच्छेदकं ब्रह्म शास्तिशब्दार्थः कः? शास्त्रं किम्? एतत्सूत्रा-

र्थस्य हेतुत्वं कथमित्यत्राह "रसो वै स" इति, रसो वै स इति शास्त्रम् उक्तम् उच्यमान इति शास्ति शब्दार्थ उक्तः । हेतुत्वमुपपादयति "यल्लाभादि"ति हेतुत्वस्य स्फुटतरत्वात्सूत्रे हेतुत्वानिर्देश इत्यभिप्रायेणानुक्तमप्यवी- तीत्युक्तं, मान्त्रवर्णिकसूत्रेऽपि हेतुत्वानिर्देशस्यायमेवाभिप्रायः, कथमानन्द- मये जीवस्यानन्दयोगं वदति शास्त्रम् आनन्दे ह्यानन्दयोगं वदतीति शङ्कायाम् आनन्दानन्दमयशब्दयोरेकविषयत्वमाह "एवमि"ति, कथमा- नन्दशब्दस्यानन्दमयवाचित्व ? मित्यपेक्षायां विज्ञान-शब्दनिर्वाहे पूर्वोक्त- न्यायमिहातिदिशति "यथा विज्ञाने"ति, अत्र पूर्वोक्ता हेतवोऽनुसन्धेयाः, स्वरूपस्यानुकूलवेदनयित्वादानन्द-शब्दो धर्मिपरः धर्मपरत्वेऽप्यपर्यवसा- नाद्धर्मिपर इति भावः । व्यतिरेकनिर्देशं हेतुमाह "अत एवे"ति, अतएव आनन्दानन्दमयशब्दयोरेकविषयत्वेनेत्यर्थः । हेत्वन्तरमाह "अत एवे"ति, स्थानप्रमाणमाह "उत्तरे चे"ति, पूर्वानुवाके एतदनुवाकोर्ध्वभागे च मयडन्तपदनिर्दिष्टानाम् अत्र मयड्रहितपदनिर्देशप्रकरणे आनन्द-शब्देन प्रतिपादनात् आनन्दमय एवानन्द-शब्दवाच्य इत्यर्थः आनन्द-शब्दवा- च्यस्य परमात्मत्वं पराङ्गीकृतं "तद्धेतुव्यपदेशाच्च" "अस्मिन्नस्य च तद्योगं शास्ती"ति सूत्रयोरियं भिदा पूर्वत्र सामान्येन समस्तसुखहेतुत्वम्, उत्त- रत्र मोक्षहेतुत्वञ्चोक्तमिति तदाको ह्येवान्यात्कः प्राण्यादित्यत्र अन्या- त्प्राण्यादिति पदाभ्यां सत्ताहेतुत्वं सुखहेतुत्वं चोक्तं भवति । यद्वा पूर्वसूत्र- मुपायपरमेतत्तूपेयपरमिति भिदा आनन्दयाति रसो वै स इति तादृशत्व- प्रतीतेः तदा अन्यात् प्राण्यादिति पदाभ्यां सांसारिकसुखहेतुत्वं मोक्ष हेतुत्वं चोक्तं भवति । अथवा अन्यादिति सत्ताहेतुत्वं प्राण्यादित्यविशेषेण त्रैव- र्गिकापवर्गिकसर्वसुखहेतुत्वम् । अधिकरणार्थमुपसंहरति "अत"इति, जीव- सामानाधिकरण्यं शरीरसम्बन्धः शोध्यत्वं विकारश्रवणं प्राप्यत्वानन्त्या दीनाम् अवस्थाभेदेनोपपत्तिः ज्ञानस्वरूपत्वावाङ्मनसानिवृत्त्यभिधानरूपा- र्थगुणनिषेधश्चास्यानन्दमयस्य प्रत्यगात्मव्यतिरिक्तत्वे हेतुः, स्वतस्सिद्धनि- रतिशयदशशिरस्कानन्दाभ्यास आनन्दयितृत्वं भयाभयहेतुत्वं समस्त प्रशासितृत्वं प्राप्यत्वं निरुपाधिकविपश्चित्त्वं बद्धमुक्तयोरसम्भावित-

आकाशादिसमस्तजगत्कारणत्वं बद्धदशायामेव विज्ञानमयाज्जीवाद्भेद-
व्यपदेशः करणकलेवराद्यनपेक्षसत्यसङ्कल्पत्वं मुक्तानां निरतिशयभोग्यत्वं

सू० आनन्दो ब्रह्मेत्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञा-
यते, तत एव तत्राप्यानन्दमयमात्मानमुपसंक्रम्येत्युपसंहृ-
तम्, अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य
ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सि-
द्धम् ॥ आनन्दमयाधिकरणं समाप्तम् ॥

च सिद्धान्तहेतुः शरीरशरीरिभावः तस्य निरुपाधिकत्वं प्रसाध्यत्वं प्रादु
र्यसम्भवः बद्धदशायामेव भेदव्यपदेशस्यावस्थाभेदेन निर्वाहानुपपत्तिः प्रभा
प्रभावन्न्यायेन स्वरूपतो धर्मतश्च ज्ञानत्वोपपत्तिर्वाङ्मनसनिवृत्तेरियत्तारा-
हित्यनिबन्धनत्वं पूर्वपक्षयुक्तिपरिहारहेतवः षष्ठ्याऽन्यत्वमवेदि तैनमवद्र-
चश्लोकौ तथा ज्ञातता ज्ञातस्यास्य तथा च नावयविता तस्यान्य आत्माश्रुतः
शोध्यत्वं च विकारवाचकत्वस्तद् ब्रह्म पुच्छं भवेत् न त्वानन्दमयः कोशो
बहिः कथ्यते पुंल्लिङ्गान्तप्रधानप्रकृतपरवचोरूपणं चाप्यनन्यैः श्लोकाः पुच्छं
न चाहुः स्वरसमपि हि सूत्रमप्यान्तरो न षष्ठ्यादिश्चांशभावान्निरतिशयत-
याद्रूपणाद्रानुरूप्यात् पर्यायत्वादनन्यात्मकवचनतया पुच्छहेतुः परोऽस्त"
इति पुच्छब्रह्मवादतन्निरासङ्ग्रहः। भास्करीये तु अभ्यासादिति पदस्या
नन्दशब्दाभ्यासादित्यर्थ उक्तः कथमानन्द-शब्दाभ्यासस्य परमात्मत्वसा-
धकत्व?मित्यपेक्षायामानन्दशब्दस्य कारणविषयत्वान्निरतिशयानन्दविषय-
'त्वाच्चेति वक्तव्यं तत्र हेत्वन्तरसाकाङ्क्षस्य हेतुत्वोक्तेरपि निराकाङ्क्षस्य हेतु-
त्वपरत्वं युक्तं, नेतरोऽनुपपत्तेरित्यत्र संसारिजीवादन्यत्वोपपादनमयुक्तं नि-
रतिशयानन्दयोगिनो मान्त्रवर्णिकस्य ब्रह्मणः संसारित्वशङ्काया अभा-
वात्, भेदव्यपदेशाच्चेति सूत्रस्यापि रसं ह्येवायं लब्ध्वाऽऽनन्दीभवतीति
लब्धृलब्धव्यभावेन भेदोपपादकत्वमुक्तं ततोऽपि विज्ञानमयादन्यत्वव्यपदे-
शस्यैव हेतुत्वोक्तिपरत्वमभ्यन्तोचितं भेदव्यपदेशशब्दस्वारस्यात् कामा

त्वेति सूत्रं च न प्रधानव्युदासपरम् अपेता-शब्दवैयर्थ्यात् निरतिशयानन्दयोगिनः प्रधानत्वशङ्काया हेत्वभावात्, तृतीयसूत्रचरमसूत्रगतयोस्तच्छब्दयोरानन्दपरतया एकरूपार्थवाचित्वं युक्तं, यदा ह्येवैष इत्यादिवाक्यविषयतया निर्वाहे तच्च सिध्यति वक्ष्यमाणमपि दूषणमिहानुसन्धेयम् । यादवप्रकाशीये च अभ्यासादिति पदस्य ब्रह्म-शब्दपदाभ्यासपरत्वमयुक्तं विज्ञानमयपर्यायेऽपि ब्रह्मज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेदेति ब्रह्म-शब्दस्य अभ्यस्ततया हेत्वनैकान्त्यात् तद्धेतुव्यपदेशाच्चेत्यस्य प्राचुर्यस्य हेतुव्यपदेशादित्यर्थो न युक्तः तद्विषयस्यैव ह्येवानन्दयातीति वाक्यस्यानन्दहेतुत्वप्रतिपादकस्य प्राचुर्यहेतुवाचित्वाभावात् प्रथमपक्षतस्य साध्यस्य हेत्वन्तरवाचित्वाभावेन च शब्दानन्वयाच्च नेतरो भेदव्यपदेशादित्यनयोरनुपपत्तिः पूर्ववत्, कामाच्चेत्यादिसूत्रे चाधीहि भगवो ब्रह्मेति ब्रह्मविषयाया विद्यायाः सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते"ति परमव्योमविषयत्वावगमात् परमाकाशस्य चाचेतनस्य प्रधानादिलक्षणत्वादचेतनस्य स्वकार्यापेतया कारणत्वसम्भवाच्च ब्रह्म-शब्दवाच्यं प्रधानमित्याशङ्का निराक्रियत इति यदुक्तं तदयुक्तं परमव्योमन्प्रतिष्ठितत्वमात्रेण तद्विषयत्वासिद्धेः, न हि ब्राह्मणभूयिष्ठदेशे वेदविद्या प्रतिष्ठितेत्युक्ते तस्यास्तद्देशप्रतिपादकत्वं परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति परमाकाशस्य ब्रह्माधारत्वावगमात्तस्य ब्रह्मत्वशङ्कानिराकरणम् अस्मिन् सूत्रे क्रियत इत्यप्ययुक्तं, मान्त्रवर्णिकमेव च गीयत इति मान्त्रवर्णं विषयीकुर्वता सूत्रेणैवास्याशशङ्कायाः प्रतिहतोदयत्वात्, नापि सत्यत्वज्ञानत्वत्रिविधपरिच्छेदविरहादयः परमाकाशस्य सामस्त्येन सम्भवन्ति, अपेताशब्दवैयर्थ्यं च पूर्ववत् चरमसूत्रमप्येवं व्याख्यातम् अस्मिन् ब्रह्मणि प्रतिबुद्धस्यास्य जीवस्य तद्योगं परमात्मप्राप्तिं दर्शयति सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते"ति, तथा यदा ह्येवैष इत्यादिवाक्यैश्चास्मिन्निष्ठाङ्गतस्याऽस्य अथ सोऽभयङ्गतो भवतीति ब्रह्मप्राप्तिरुच्यत इति तदनुपपन्नं मन्त्रवर्णादितायाः परमात्मविदस्तत्प्राप्तेर्मान्त्रवर्णिकमेव च

गीयत इति सूत्रेणैव दर्शितत्वादिह च तद[1]नपेक्षणात्, यद्वा ह्येवैष इत्यादि वाक्योक्ताऽभयप्राप्तिहेतुत्वं च तद्धेतुव्यपदेशाच्चेति सूत्रेणैव दर्शितमिति इह तदुक्त्यनपेक्षिता तद्विषयभूतवाक्योक्तमानन्दयितृत्वं हि मोक्षानन्दहेतुत्वं, मोक्षानन्दश्च संसारभयनिवृत्तिपूर्वकस्तस्मादानन्दयितृत्ववाक्यासन्नतरवाक्योक्तमभयप्राप्तिहेतुत्वं मोक्षप्रदत्वान्तर्भूतमिति न पृथग् हेतुः, आनन्दयातीति वाक्ये आनन्दहेतुत्वमुक्त ब्रह्मप्राप्तस्य चैवानन्दः, अतोऽस्मिन् वाक्ये अभय-शब्दवाच्यब्रह्मप्राप्तिरुच्यत इति चेत् न तस्य ब्रह्मशब्दसामानाधिकरण्याभावात् अथ तस्य भयं भवतीत्युक्तभयाभावप्राप्तेरेवार्थसोऽभयङ्गतो भवतीत्युच्यमानत्वाच्चातोऽभयनिवृत्तिपूर्वकनिरतिशयानन्दहेतुत्वं तद्धेतुव्यपदेशादित्यन्तर्भूतमिति न पृथग्वक्तव्यम्, अतो मोक्षप्रदत्वेऽभिहिते मुक्तप्राप्यत्वकथनं प्राप्तेर्निरतिशयानन्दत्वरूपविशेषकथनं चात्यन्तापेक्षितमिति तदेव वक्तव्यम् अतः सूत्राणां यथोक्त एवार्थः । समाप्तमानन्दमयाधिकरणम् ॥ अवान्तरसङ्गतिमाह- (शेषमग्रे)

१ तदुक्त्यनपेक्षणादिति पा० ।

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

## विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

—•••—

श्रीगणेशाय नमः ।

*(Continued from page 598. Vol. XI.)*

शीर्णघ्राणाङ्घ्रिपाणीन् घृणिभिरपघनैर्घर्घराव्यक्तघोषान्(क)
दीर्घाघ्राता(ख)नघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।

(क) व्रणिभिरपघनैर्घर्घराव्यक्तदोषानिति पु० ।
(ख) दीर्घघातानिति क्वचित् ।

घर्मांशोऽस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम्[क] ॥

नीरसत्वं चात्रानुप्राससमात्रमयतया रसे तात्पर्याभावात्, नचानुप्रासस्पर्द्धयैव गुणत्वं "सोऽध्यैष्ट वेदा"नित्यादावपि तदापत्तेरिति, नच परुषवर्णत्वमनुप्रासे प्रयोजकं, येन तद्घटकतया दोषत्वं स्यात्, अप्रयुक्तनिहतार्थौ श्लेषयमकादावदुष्टाविति प्रतिपादितं प्राक्, यदि च प्रयोजनानुसंधानव्यग्रता दुष्टिबीजम्, तथाप्यत्र न दोषता, तदलंकारस्य प्रयोजनस्य प्रतीतेर्व्यग्रताऽभावात्, यथा–

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
योगङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामाऽमराः
सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥

अत्र माधवपक्षे राहौ 'शशिमत्'पदमप्रयुक्तम्, 'दय'पदं गृहे निहतार्थम्, नच श्लेषरूपालङ्कारप्रयोजकतया गुणत्वमपि शङ्कनीयम्, तत्त्वस्य तत्राप्रयोजकत्वात्, एवमन्येषु प्रतीतिविलम्बवत्सु द्रष्टव्यम् ॥

अश्लीलत्वं क्वचित् गुणः, यथा सुरतारम्भगोष्ठ्याम्, "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्वि"तिकामशास्त्रस्थितौ दोषत्वाभावे व्युत्पत्तिप्रकटनात्, यथा–

करिहस्तेन सम्बाधे प्रविश्याऽन्तर्विलोड़िते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥

अत्र सम्बाधादिपदानि । शमकथास्वप्यश्लीलं गुण,स्तत्पोषकत्वात्, यथा–

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि,स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥

सूचनीयविशेषे यथा–

(क) शीघ्रमङ्घोविघातमिति तूच्चारणदोषःस्वयंप्रयुक्तः ।

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन, ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

अत्र 'प्रशमा'दिति 'स्वस्था' इति च मरणार्थकत्वादश्लीलत्वेपि भाव्यऽमङ्गलसूचनाद्गुणः ॥

सन्दिग्धमपि वाच्यमहिम्ना नियतार्थप्रतीतिकारित्वाद्व्याजस्तुतिपर्य्यवसायितया गुणः· यथा-

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥

अत्र पृथुकार्त्तस्वरादिशब्दाः पृथुकानामार्त्तस्वरः पृथु बहुलं कार्तस्वरं चेति सन्दिग्धाः ॥

अप्रतीतमपि यत्र प्रतिपाद्यप्रतिपादकयोर्द्वयोरपि तज्ज्ञता, तत्र गुणः, अर्थाऽप्रतीतिरूपबीजाभावेनादोषतायां व्युत्पत्तिप्रकटकत्वात्·(क) यथा–

आत्माऽऽरामा विहितरतयो(ख) निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते(ग) कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्ति(घ) देवं पुराणम् ॥

इयं भीमसेनस्य सहदेवं प्रत्युक्तिः· अत्र निर्विकल्पकादिशब्दा आत्ममात्रावलम्बनत्वादावयो र्योगशास्त्रमात्रप्रसिद्धाः । स्वयंपरामर्शेप्येवमेव गुणत्वम्· यथा–

(क) प्रकटनादिति पा· ।

(ख) विहतरतय इति क्वचित् ।

(ग) ध्यायन्ते-इति सर्वत्रैवोपलब्धस्त्वे ऽप्यर्हत्वाद्वीक्षन्ते इति कोशानुसारिण्यस्तम् ।

(घ) वेत्त्विति, वेदेति च क्वचिद्भवति ।

षड्धिकदशनाड़ीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥

अधमप्रकृतीनां चेटविटदूषकादीनां हास्यरसप्रधानानां तथैवौचित्याद्दोषत्वाभावे हास्यपर्य्यवसायित्वाद्ग्राम्यो गुणः· यथा–

फुल्लुक्करं कलमकूरणिहं वहंति जे सिंधुवारविड़वा मह वल्लहा दे।
जे गालिदस्स महिसीदहिणो सरिच्छा दे किंच मुद्धविअइल्ल[(क)]पसूणपुंजा॥

अत्र कलममहिसीदधिशब्दाः॥

न्यूनपदमपि क्वचिद्गुणो, यत्र न्यूनतयैवाभिमतविशेषसिद्धिः· यथा–

गाढ़ालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रानन्दरसातिरेकविगलच्छ्रीमन्नितम्बाऽम्बरा।
मा मा मानद! मा ऽति माम‌ऽलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु, मृता नु, किं मनसि मे लीना, विलीना नु किम्॥

अत्र 'मा मे' त्यत्राऽऽयासय,'माऽती'त्यत्र पीड़येति न्यूनम्· नच, दोषः, प्रतीतेः स्फुटत्वात्, प्रत्युत गुणो,रसातिरेकव्यञ्जकत्वात्। क्वचित्तु न दोषो, नापि गुणः· यथा–

तिष्ठेत् कोपवशात् प्रभावपिहिता, दीर्घं न सा कुप्यति,
स्वर्गायोत्पतिता भवेन्मयि पुनः स्नेहार्द्रमस्या मनः,।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं,
सा चात्यन्तमगोचरं नयनयोर्यातेति[(ख)] कोऽयं विधिः॥

अत्र पिहितेत्यनन्तरं 'नैतद्युज्यत'इत्येतन्न्यूनम्· एवं द्वितीयपादेऽपि· नचात्र गुणत्वं, विशेषबुद्धेरनुत्पादनात्· नापि दोषत्वम्, तद्बुद्धि-

(क) विकचिल्लेति पु·।

(ख) सा चात्यन्तमगोचरं नयनयोर्जातेति पाठस्तूच्चारणामष्ठतजः प्रचरतीति प्रतीमः।

रेकेणापि 'दीर्घं न सा कुप्यती'त्यादिप्रतीत्या 'तिष्ठेत् कोपवशादि'त्यादिप्रतीतीनां बाध्यत्वावगमात् ॥

अधिकपदं क्वचिद् गुणो, यत्र विशेषप्रतिपत्तिः· यथा–

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति, विदन्ति,
किन्तु कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥

अत्र द्वितीयं 'विदन्ती'तिपदमन्ययोगव्यवच्छेदं प्रतिपादयदाऽधिकपदत्वेऽपि दुष्टम्· यदुक्तं–

"विस्मये च विषादे च तथा दैन्ये ऽवधारणे ।
प्रसादने तथा हर्षे वाक्यमेकं द्विरुच्यते" ॥

इति· एवं हर्षशोकादियुक्ते वक्तरि गुणत्वम्, त्वरादिव्यक्त्या हर्षाद्यभिव्यञ्जकत्वात्· यथा–

वद वद जितः स शत्रु, र्न हतो जल्पंश्च तव तवास्मीति, ।
चित्रं चित्रमरोदीद्धा हेति परं मृते पुत्रे ॥

अत्र पादचतुष्टये क्रमेण हर्षभीतिविस्मयविषादयुक्ता वक्तारः· एवं पुनरुक्तेऽपि द्रष्टव्यम् ॥

कथितस्यापि लाटानुप्रासे तन्निर्वाहकतया, ऽर्थान्तरसङ्क्रमितवाच्ये च विशेषव्यञ्जनाद्, विहितस्य यत्रानुवाद्यत्वं तत्र स्वाभिमतनिर्वाहकतया गुणत्वम्· क्रमेणोदाहरणानि–

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्त्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥

अत्र लाटानुप्रासः ।

ताला जाअंति गुणा जाला ते सहिअएहिं घेप्पंति ।
रइकिरणाणुग्गहिआइं होंति कमलाइं कमलाइं ॥

अत्र द्वितीयं कमलपदं सौरभादिमदर्थकतया ऽर्थान्तरसङ्क्रमितवाच्यम्· तथात्वे च कथितपदत्वमेव प्रयोजकम् ।

जितेन्द्रियत्वं विनयस्य कारणं, गुणप्रकर्षो विनयादवाप्यते, ।
गुणाधिके पुंसि जनो ऽनुरज्यते, जनानुरागप्रभवा हि संपदः ॥

अत्र कारणमालायां पूर्वोपात्तपदेनैव विनयादिकमुपादेयम्, पदान्तरेणानूद्यमानं तद्भिन्नतयेव प्रतिभाति· तथात्र तादृशालङ्कारसम्पादकतया गुणत्वम्, दोषत्वाभावश्च, तद्बीजाभावात् ॥

पतत्प्रकर्षमपि क्वचिद्गुणः· यथा 'प्रागप्राप्ते''त्यादौ· अत्र हि, चतुर्थे पादे क्रोधाभावान्मसृणमेव पदं युक्तमिति दोषत्वाभावः, गुणत्वं तु विनयप्रकाशकतया ॥

समाप्तपुनरात्तं क्वचिन्न गुणो, न दोषः· यथा" प्रागप्राप्ते''त्यादौ· अत्र 'येनानेने'त्यादि न विशेषणदानमात्रार्थम्, किंतु वाक्यान्तरमेव विधेयम्· अतो बीजाभावान्न दोषः· न च गुणो, विशेषहेतुकारणात्· ॥

अपदस्यसमासमपि क्वचिद्गुणः· यथा"रक्ताशोके''त्यादौ·(क)अत्रापदस्यसमासत्वमेव कथमिति चिन्त्यं, द्वितीयार्द्धस्यापि रुष्टवक्तृकत्वेन तत्स्थानत्वात्,(ख)अन्यथा गुणत्वासम्भवात्· भास्करस्तु "शृङ्गारे समासस्यानौचित्यादस्थानस्थत्व''मित्याह ॥

गर्भितमपि क्वचिद्गुणो, दृढप्रत्ययादिहेतुत्वात्· नच दोषः, प्रतीतेरव्यवधानात्·

भमम्मि अवहत्थिअरेहो णिरंकुसो अह विवेअरहिओ वि ।
सिविणेवि तुमम्मि पुणो पत्तिहि भत्तिं ण पसुमरिस्सामि(ग) ॥

अत्र प्रतीहीति दृढप्रत्ययोत्पादकम्· एवमन्यदपि लक्ष्यं दृष्टेहनीयम् ॥ ५९ ॥

अथ साक्षाद्रसविरोधिनो दोषानाह—

**व्यभिचारि,रस,स्थायिभावानां शब्दवाच्यता, ।**
**कष्टकल्पनया व्यक्तिरनुभाव,विभावयोः, ॥ ६० ॥**

(क) ·त्यादिति पु· ।
(ख) द्वितीयार्द्धस्यापि तत्स्थानत्वा,तस्यापि कष्टवक्तृकत्वादिति पु० ।
(ग) श्लोकादौ 'होमी'ति, अन्ते च 'पसुमरामी'ति पु० ।

प्रतिकूलविभावादिग्रहो, दीप्तिः पुनःपुनः, ।
अकाण्डे प्रथन,च्छेदा,वङ्गस्याप्यतिविस्तृतिः, ॥ ६१ ॥
अङ्गिनो ऽननुसन्धानं, प्रकृतीनां विपर्ययः, ।
अनङ्गस्याभिधानं च, रसे दोषाः स्युरीदृशाः ॥ ६२ ॥

शब्दवाच्यता, सामान्यतो विशेषतो वा स्वशब्देनोपादानम्· सा व्यभिचारिणां यथा—

सव्रीडा दयितानने, सकरुणा मातङ्गचर्माम्बरे,
सत्रासा भुजगे, सविस्मयरसा चन्द्रे ऽमृतस्यन्दिनि, ।
सेर्ष्या जह्नुसुतावलोकनविधौ, दीना कपालोदरे,
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायाऽस्तु वः ॥

अत्र व्रीडादयो व्यभिचारिभावाःस्वशब्देनोपात्ताः· न च स्वशब्देनोपात्तेषु व्यभिचार्यादिष्वास्वादोऽनुभूयते,[क] किन्त्वनुभावादिमुखेनैव व्यक्तेषु· तस्मादास्वादानुत्पत्तिर्दोषत्वबीजमिति सम्प्रदायः· तत्रेदमालोचनीयम्—एतावता शब्दवाच्यताया दोषत्वमेव तावद्दुर्लभं, दूरे पार्थक्येन, दूरतरे साक्षात्· तथाहि, अनुभवादीनामुपस्थितावियं रसप्रतिबन्धिका ऽभिमता, तदनुपस्थितौ वा· अन्त्ये, कारणाभावादेवास्वादाभावो, न तु वाच्यत्वकृतः सत्येव कारणचक्रे कार्य्यानुत्पादस्य प्रतिबन्धकताव्यवस्थापकत्वात्· तथाच न्यूनपदत्वमनभिहितवाच्यता वा दोषो, नत्वियम्· आद्ये, अनुभावादित एव रसव्यक्तिरिति किं तच्छब्देनेति वैयर्थ्यमात्रं दोषः· वयं त्वालोचयामः—अनुभावादीनामुपस्थितावेव भावादीनां शब्दवाच्यतयाऽऽस्वादोपघातः प्रतीयत इति तस्याः पृथग्दोषत्वम्· अत एवौत्सुक्यादीनां शब्दवाच्यता न दोष,स्तत्रास्वादविघाताप्रतीतेः· न च वाच्यमेवानु[ख]भावोपादाने ऽपि क्रिमिति नोदाहृतमिति, तदुपादानस्थले भावादिशब्दानां वैयर्थ्यमपीत्यसङ्कराभिप्रायेण तथोदाहरणात्· उदाहृते त्वनुभावाक्षेपकतया वैयर्थ्याभावात्· नचैवमुक्तोदाहरणविरोध,स्तत्रानु-

(क) ०स्वादसंभवोऽनुभूयते–इत्येकपुस्तकस्थपाठस्त्वविस्पष्टार्थः ।
(ख) वाच्यमेवमनु–इति पु० ।

भावाद्यनुपादानादिति वाच्यम्, "दैवादहमद्य तये"त्यादाविवाक्षेपेण तेषां प्रतीतेः नहि व्रीडादिशब्दैः प्रतिपादिता व्रीडादय आस्वाद्यतामिव स्वानुभावाद्याक्षेपकतामप्यासादयितुमक्षमाः, बीजाभावात्, एवमपि-मोदाहरणेष्वप्यूह्यमिति एवं च स्थिते 'ध्यानम्रा दयितानने, मुकुलिता मातङ्गचर्माम्बरे, सोत्कम्पा भुजगे, निमेषरहिता चन्द्रेऽमृतस्यन्दिनि, । मीलद्भ्रूः सुरसिन्धुदर्शनविधौ, म्लाना कपालोदरे'—इतिपादत्रयपाठो युक्तः, एवं भावादिशब्देनाप्युपादाने द्रष्टव्यम् । रसस्य सामान्यतो रसशब्देन यथा—

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥

विशेषतः शृङ्गारपदेन यथा—

आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिराममूर्त्तिम् ।
पश्यैष बाल्यमतिवृत्त्य [(क)]विवर्त्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥

स्थायिनो विशेषत उत्साहपदेन यथा—

सम्प्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः [(ख)]श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥

अत्रैव 'स्थायिभावोऽस्य कोऽप्यभू'दिति चतुर्थपादपाठे सामान्यतः शब्दवाच्यतोदाहरणं द्रष्टव्यम् ॥ (१)

कष्टकल्पनया पृथक्श्लोकाद्यनुसन्धेयप्रकरणादिपर्यालोचनया विलम्बेन व्यक्ति,र्न तु "दैवादहमद्य तये"त्यादाविव झटित्याक्षेपमहिम्ना सा । अनुभावस्य यथा—

(शेषमग्रे)

---

(क) ०मतिवृत्येति पाठस्त्वनर्हः ।

(ख) ठनत्कारैरिति पु० ।

# खण्डनखण्डखाद्यम् ।

(Continued from page 578. VOL. XI.)

मू० [a] यस्य तु सौगतादेर्मते ऽपसिद्धान्तो न दूषणं तं प्रति साधनीयमवश्यमेवास्य दूषणत्वं * [b] नच वाच्यं योपि सिद्धान्ते विप्रतिपत्तिं करोति तं प्रति व्याघात एवापादनीयः ? *— [c] दर्शनविशेषं स्वीकुर्वता प्रथमं (१) तद्दर्शनान्तर्निवेशिनः प्रतिवन्दीदूषणात्वादेस्तेन स्वीकारात् पश्चात्तस्यैवास्वीकारस्तावितौ स्वीकारास्वीकारावेकेनैकस्य व्याहताविति ।

टी० ॥ तदेवाह—। [a] "यस्येति । यथा सौगतं प्रति वादिनैव तद्दोषत्वं व्यवस्थाप्यं न तु मध्यस्थेनेत्यर्थः यद्वाऽपसिद्धान्ते विप्रतिपन्नं प्रत्यपसिद्धान्तस्य द्वितीयस्यानवकाश इत्यर्थः । तद्दोषत्वस्य तं प्रत्यव्यवस्थितत्वात् ॥ ननु कथायां कथकेन दोषत्वं यदि व्यावस्थाप्यं तदा कथैव न पर्यवस्येदित्यत आह—। [b] "यस्य त्वि"ति । अनभ्युपगतापसिद्धान्तदोषत्वं सौगतं प्रति कथावसरेपि तद्व्यवस्थापनस्य व्यावहारिकत्वादित्यर्थः । यद्वा तदानेकभूतं प्रतीति यो द्वितीयो विकल्पः तस्यानवकाश इत्यर्थः ॥ कुतः इत्यत आह—। "यस्य त्वि"ति तुशब्दो हेत्वर्थः । साधनीयदोषभावस्यासिद्धान्तस्य तं प्रत्युद्भावनमनुचितमेव यत इत्यर्थः ॥ नन्वपसिद्धान्ते विप्रतिपन्नं प्रत्यपसिद्धान्तान्तरं नोद्भाव्यं येन तद्दोषभावस्यान्यतरासिद्धत्वं स्यादपि तु व्याघात उद्भाव्य इत्यत आह—। [c] "नचे"ति । व्याघातं स्फुटयति दर्शनेति प्रतिवन्दीदूषणादेरित्यत्तद्गुणसंविज्ञानबहुव्रीहिणापसिद्धान्त एवाभिहितस्तेनापसिद्धान्तस्य स्वीकृतस्यास्वीकारो लभ्यते यद्वा प्रथमापसिद्धान्तसाम्यदर्शनाय प्रतिवन्द्यादेरित्युक्तम् ।

(१) केषुचित्पुस्तकेषु मूले "प्रतिवन्दीदूषणत्वादेः"—इति पाठः । प्रथममित्यस्य स्वीकारादित्यनेनान्वयः ।

सू० [a] "यद्ययमपसिद्धान्तात्मैव व्याघातस्तदाऽपसिद्धान्तदूषणत्वे विप्रतिपन्नस्य विप्रतिपत्तिमव्युदस्य नाभिधातुं शक्यः * अथ दूषणान्तरमयं व्याघातोऽपसिद्धान्तमनुपजीव्य सम्भाव्यमानोद्भावनः? *—तदा सार्वत्रिकापसिद्धान्तोदाहरणेऽप्ययमेवास्तु किमपसिद्धान्तस्य दूषणताङ्गीकारेण [b] किञ्च एवमपसिद्धान्ते उद्भाविते पश्चात्तद्विप्रतिपत्तावुपजातायामपसिद्धान्तमुपेक्ष्य व्याघातलक्षणस्यास्य दोषान्तरस्याभिधाने प्रतिज्ञाहान्यापत्तेः प्रतिज्ञाहानिः [c] स्वीकृतोक्तत्याग इति [d] एवं प्रथमं किञ्चित् दूषणमुक्त्वा तत्परिहारिणः दूषणान्तराभिधाने न प्रतिज्ञाहानिरिति गतं प्रतिज्ञाहान्यादिभिर्निग्रहैः।

टी० ॥ व्याघातो यद्यपसिद्धान्त एव तदा तत्र विप्रतिपन्नं प्रति तदुद्भावनानर्हतैव दूषणान्तरं चेत्तदाऽपसिद्धान्त एव पृथक् निग्रहस्थानं न स्यात्तुल्यलक्षणत्वादित्याह—। [a] "यद्ययमि"ति। व्याघातस्य दोषान्तरत्वपक्षे दोषान्तरमाह किञ्चेति दूषणहानेरपि प्रतिज्ञाहानिपदेन सङ्गृहीतत्वादित्यर्थः दूषणहानिसाधारणं प्रतिज्ञाहानिलक्षणमाह—। [d] "स्वीकृतोक्ते"ति ॥ नन्वेवं प्रतिज्ञातं यदपसिद्धान्त एवात्र दोषस्तथाच तत्र व्युत्थितं प्रति व्याघातोद्भावने कथं प्रतिज्ञाहानिः स्यादित्यत आह—। [c] "एवमि"ति। तत्परिहारिणस्तं दोषं त्यजतस्तन्निर्वाहमकुर्वत इति यावत् "तत्परिहारिणी"ति क्वचित्पाठस्तत्राप्ययमेवार्थः। स्वीकृतोक्तत्यागे सत्यपि यदि न प्रतिज्ञाहानिस्तदा क्वचिदप्ययं दोषो न भवेदित्यर्थः। आदि पदात् प्रतिज्ञान्तरादिपरिग्रहः।

सू * [a] "प्राक् प्रतिज्ञातदोषनिर्वाहार्थमेवं निग्रहान्तरकथ-

नात् नैष दोष? *–इति चेन्न,(१) [b] पूर्वनिग्रहपरिहारमकृतवति तेनैव पराजिते निग्रहान्तरोपन्यासस्यायुक्तत्वादिति (२) * [c] नचानेन भयेन भवता व्याघात एवाभिधातव्यः प्रथमं नापसिद्धान्त इति वाच्यम्? *–अपसिद्धान्तवैयर्थ्यप्रसङ्गात् [d] सर्वत्रापसिद्धान्तोदाहरणे व्याघाताभिधानस्यैवमङ्गीकर्त्तव्यत्वात् [e] नहि कश्चिच्छक्यतेवधरयितुं मयापसिद्धान्ते उद्भाविते नायं तत्र विप्रतिपत्स्यते इति ।

टी० ॥ ननूद्भावितापसिद्धान्तनिर्वाह एव व्याघातोद्भावनेन क्रियते तथा च कथं प्रतिज्ञाहानिरित्याह–। [a] "प्रागि"ति ॥ [b] "पूर्व"ति । पूर्वनिग्रहोऽपसिद्धान्तस्तत्परिहारमकृतवति दोषान्तरानवकाशात्नहि मृतोपि मार्यते इत्यर्थः । क्वचित्परिहारमकृतवतीति(३) पाठः । तत्र प्रथमोद्भावितापसिद्धान्तरूपनिग्रहस्थानपरिहारः तत्र व्युत्थानेनान्यतरासिद्ध्यादिना कृतः तत्परिहारमपसिद्धान्तदोषत्वव्यवस्थापनमकृतवति वादिनि निरनुयोज्यानुयोगेन पराजिते निग्रहस्थानान्तरस्य व्याघातस्य य उपन्यासः स न युक्तः पराजितवादिकर्त्तृक उपन्यासो न युक्त इत्यर्थः ॥ [c] "नचे"ति । अपसिद्धान्तदोषत्वे व्युत्थितं प्रति दोषत्वव्यवस्थापनभयेनेत्यर्थः एवं सत्यपसिद्धान्तः क्वापि लब्धावकाशो न भवेत्सर्वत्र व्याघातस्यैवोद्भावनीयत्वादिति तद्दोषत्वव्युत्पादनवैयर्थ्यं स्यादित्यर्थः ॥ एतदेवाह–। [d] "सर्वत्रे"ति ॥ ननु यत्रैव नापसिद्धान्तदोषत्वे विप्रतिपत्स्यते तत्रैवायं लब्धावकाशः स्यादित्यत आह–। [e] "नही"ति ॥

(१) पूर्वोद्भाविते निग्रहे परिहृते व्याघातनिग्रहोद्भावनमुतापरिहृत एव नाद्यः प्रतिज्ञाहान्यापत्तेः द्वितीयश्चेतत्राह–नेति-

(२) अयुक्तत्वं चात्राकृतपरिहारे पूर्वनिग्रहे निग्रहान्तरोद्भावनेनोद्भावयितुरेवनिग्रहान्तरापत्त्या बोध्यमिति भावः ।

(३) पूर्वनिग्रहपरिहारपरिहारमकृतवतीति पाठ इत्यर्थः ।

सू० * "नन्वस्त्वेवं विप्रतिपन्नं प्रत्यपसिद्धान्तस्य दूषणत्वं प्रसाधनीयमिति ? *–(१)मैवं, "येनाप्यस्वीकारदण्डेन तत्स्वीकारयिष्यसि तदनङ्गीकारस्यापि सम्भवात् उक्तं च सौगतैः "नहि शास्त्राश्रया वादा भवन्ती"ति नापसिद्धान्तो निग्रहाधिकरणमिति "रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः विलब्धा वत केनामी सिद्धान्तविषयग्रहा इति ।

टी० ॥ ननु यथा सौगतं प्रत्यपसिद्धान्तस्य दोषत्वं तदेव व्यवस्थापनीयं तथान्यमप्यपसिद्धान्तव्युत्थितं प्रतीत्याह–। "नन्वि"ति । ननु यत्किञ्चिदनिष्टान्तरमुपन्यस्यासिद्धान्तो व्यवस्थाप्यस्तत्रापि तद्व्युत्थितिसम्भवादित्याह–। "येनापी"ति । अपसिद्धान्तस्यादोषत्वे सौगतानुमतिमाह–। "नही"ति । कथायां यथास्फुरणं वक्तव्यं कथाक्रमेण ननु शास्त्रानुरोधस्तथा चापसिद्धान्तो निग्रहस्य कथाकारणसम्यग्ज्ञानाभावस्याधिकरणमुद्भावकं न भवतीत्यर्थः ॥ "रिक्तस्ये"ति । न खल्वयं सिद्धान्तमादायैव कश्चिज्जायते येनास्यायं सिद्धान्त इति नियमः स्यात् न वा गुणदोषविचारविधुरेण जन्मानुपदं स्वेच्छया सिद्धान्तः परिगृहीतो नवा जातमात्राय केनचिन्नियामकेन सिद्धान्ता विलभ्यन्ते तथायं सिद्धान्तस्तवायं सिद्धान्त इति तथाच सिद्धान्तो न कस्यापि येन तं त्यजतोऽपसिद्धान्तः स्यादित्यर्थः । सिद्धान्तविषयग्रहा इति रूपकं(२) यथा विषमो ग्रामादिः राजादिना विलभ्यते तथा न सिद्धान्तोपीत्यर्थः ॥

(१) दूषणत्वेन तदङ्गीकृतव्याघातादिदण्डेनापसिद्धान्तस्य त्वया दूषणत्वं प्रसाधनीयं तदपि न सम्भवति पूर्वं सिद्धान्तवदेतद्व्याघातदण्डदूषणत्वादपि व्युत्थानसम्भवादिति परिहरति–मैवमिति–इति तु विद्यासागराः ।

(२) रूपकम्=रूपकालङ्कारः ।

मू० [a] अत्र कश्चिदाह शास्त्रमनाश्रित्य कथारम्भानुपपत्तिः यदा हि क्षणभङ्गसाधनप्रयोक्ता [b] अस्फुर्तिमता स्थिरत्वादिना सिद्धसाधनमुद्भाव्य निगृह्यते तदा [c] किं कुर्यात् [d] * प्रथमविप्रतिपत्तिविरोधमुद्भावयेत्? * —इति चेत्, [e] एवं तर्हि विप्रतिपत्त्यनुगुणप्रमेयान्तरव्यतिक्रममप्युद्भावयेदेव अन्यथा विप्रतिपत्तिव्यतिक्रममप्युपेक्षेत न खलु तत्तदनुगुणव्यतिक्रमयोर्विरोधापत्तिं प्रति कश्चिद्विशेषः [f] * नचैकपुरुषार्थानुगुणाङ्गाङ्गिभावव्यवस्थितपदार्थजातव्युत्पादनादन्यच्छास्त्रं नाम *

टी० ॥ नहि शास्त्राश्रया वादा भवन्तीति वादिनं सौगतं प्रति परिशिष्टे(१) तदुक्तमुदयनाचार्यचरणैस्तदाह—। [a] "अत्र कश्चिदि"ति ॥ [b] "अस्फूर्त्तिमते"ति । दोषान्तरस्फुरणरहितेन ॥ [c] "किं कुर्यादि"ति । अपसिद्धान्तं तिरस्कृत्य किमन्यद्ब्रूयादित्यर्थः ॥ ननु स्थैर्यपक्षं गृहीत्वा कथायां प्रवृत्तः क्षणभङ्गमङ्गीकुर्वन् प्राथमिकविप्रतिपत्तिविरोधेनैव निग्रहीतुं शक्यते नापसिद्धान्तेनेति शङ्कते—। [d] "प्रथमे"ति । स्थैर्याभ्युपगमविरोधमित्यर्थः । यदि तत्कालीनस्थैर्याभ्युपगमविरोधो दोषस्तदा स्थैर्यसाधनोपयुक्तप्रमेयान्तरव्यतिक्रमोपि दोष एवाविशेषादित्याह—। [e] "एवमि"ति । स्थैर्यवत् स्थैर्यसाधकप्रत्यभिज्ञानप्रामाण्यमपि तदभ्युपगमविषय एवेति भावः । ननु भवत्वेवं तथापि नहि शास्त्राश्रया वादा इत्यत्र किमुक्तं भवेदित्यत आह [f] "नचे"ति । एकः पुरुषार्थः स्वर्गापवर्गौ वा तदनुगुणं तदुपयुक्तमङ्गाङ्गिभावापन्नं यत्पदार्थजातं तद्व्युत्पादनात्तद्व्युत्पादकाद्ग्रन्थादित्यर्थः । कर्त्तरि ल्युट् प्रत्ययान्तो व्युत्पादनशब्दः करणव्युत्पन्नो

(१) परिशिष्टे=परिशिष्टनामके ग्रन्थे ।

त्रा यथा मीमांसायां स्वर्गः पुरुषार्थस्तदङ्गमपूर्वं तदङ्गं च यागादि तद्धेत्वादनमेवमान्वीक्षिक्या(1)मपवर्गः पुरुषार्थस्तदङ्गाङ्गिभावापन्नं प्रमाणप्रमेयसंशयादीति ॥

[a]तस्मात् क्षणिकत्वस्वीकारे तदनुगुणायोग्यादिसमस्तस्वीकारः तदेकपरिहारे वा समस्ततदनुगुणपरिहार इति परमेश्वरोपि नान्यथा करणे क्षमः [b]* नच समस्ततदनुगुणपदार्थजातं कथारम्भे स्वशब्देनाभिधातुमुचितं * तदैव शास्त्रप्रणयनप्रसङ्गात् [c]परिषदनपेक्षितत्वाच्च [d]* नच तद्व्यतिक्रमोद्भावनाय समस्ततदनुगुणोक्तः परस्परशास्त्रमनाश्रित्य शक्यः * [e]नच तदनुगुणव्यतिक्रमे तदुपेक्षणे वा तत्त्वप्रतिपत्तिजयावित्यकामेनापि तत्तदधिकारप्रवृत्तं शास्त्रमेवाश्रयणीयम् ? * — इति ।

टी० ॥ किमतो यद्येवमित्यत आह—। [a]"तस्मादि"ति । तथाच तात्कालिकविप्रतिपत्तिविषय परित्यागवत्तदनुगुणसमस्तपरिहारोऽपि दोष इत्यर्थः । एवं च शास्त्रमाश्रित्यैव कथेति तदुक्त(2)समस्तपदार्थातिक्रमस्य दोषत्वमाह—। [b]"नचे"ति ॥ [c]"परिषदि"ति । विप्रतिपत्तिविषयसाधनदूषणाभिधानमात्रं परिषदाकाङ्क्षत्यर्थः ॥ ननु तदनुगुणा अपि पदार्थाः कथाकाले स्वयमुक्तीयतां वादिना किं परस्परं वादिनोः स्वस्वशास्त्राश्रयणमत आह—। [d]"नचे"ति । ननु तदनुगुणव्यतिक्रमोपि नोद्भाव्यतामत आह—। [e]"नचे"ति ॥

(शेषमग्रे)

(१) आन्वीक्षिक्याम्=न्याये ।
(२) शास्त्रोक्तेत्यर्थः ।

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 608. Vol. XI.)

१९ अत्रोच्यते ।

विरुद्धयोरभेदो हि न वेदेन प्रमीयते ।

अनन्यगतिकत्वेन मानान्तरस्य बाधनम् ॥ ३७ ॥

यदत्रोक्तं मुख्यार्थानुपपत्त्यभावान्न लक्षणेति तन्न विरुद्धयोर्जीवपरमात्मनोरभेदस्य प्रमाणेन बाधितत्वात् न हि विरुद्धयोरभेदः क्वचित्प्रमाणेन दृष्टः न च मानान्तरस्य वेदेन बाधितत्वान्नानुपपत्तिः न हि बाध्यमित्येव बाध्यते किं तु स्वविषयसिद्ध्यन्यथानुपपत्त्या

19. To this it is replied:—

The identity of two opposed things is not indeed made known by the Veda. The rejection of the other sources of evidence (sc. perception, inference) takes place, when no other course is possible (than that of their rejection in favour of Veda)....XXXVII.

Reply: the authority of perception, inference &c., must be maintained so long as these can be reconciled with Veda: this is possible by taking the *implied* meaning of Veda.

What was said in regard to this point, viz. that since there is no impossibility (contradiction) attaching to the primary meaning, implication will not apply (to such sentences as 'that thou art'), cannot be accepted. For the identity of the two opposed things, viz. jīva and Paramātman is overthrown by a trustworthy source of evidence, since no genuine source of evidence makes known the identity of two opposed things. Nor can it be argued that there is no impossibility (in regard to the primary meaning), since the Veda overthrows all the other sources of evidence. For a thing (sc. cognition) is not rejected as false merely by saying, it must be rejected; but it is rejected because in no other way can the establishing of its object (sc. that which it makes known) be saved from contradiction.

इह तु वृत्त्यन्तरेणापि तदुपपत्तेर्मुख्यार्थे ऽनुपपत्तिरेव अन्यथा सर्वत्र लक्षणोच्छेदप्रसङ्गः । लोकेपि निश्चितप्रामाण्ये एव लक्षणा । तथा च तादृशवाक्यविरोधेन विरोधिमानान्तरस्य बाधितत्वादनुपपत्त्यभावान्न लक्षणा स्यात् ।

न च लक्ष्यार्थस्यासङ्गस्य वाच्यार्थेन सम्बन्धानुपपत्तिः स्वतो ऽसङ्गस्याप्यविद्यान्तःकरणाद्युपाधिसंसर्गस्याविद्याध्यारोपितस्य दिवान्धपरिकल्पितसवितृतमःसंसर्गवदुपपत्तेः ।

But whereas in the present case, the thing to be proved (tat, sc. that the sentence 'that thou art' teaches the identity of jīva and Brahman) can be proved in another way, sc. through implication, contradiction does certainly attach to the primary meaning of such a sentence (*i. e.* the Vedic sentence 'that thou art' does not overthrow the other sources of evidence). Otherwise (*i. e.* if perception and the other sources of evidence, which contradict the literal meaning of a sentence, are to be rejected in favour of the literal meaning) it will follow that implication will be altogether done away with: for, as concerning worldly usage also, implication obtains only in the case of a sentence whose authority is certain—(if the sentence itself be of doubtful authority, no attempt is made to explain its implications). And so, when the other sources of evidence, which contradict the literal meaning of a sentence, are rejected as false because they are contradicted by such a sentence, it follows that there will be no contradiction in regard to the sentence (*i. e.* it will have to be understood literally) and therefore no implication will obtain in regard to it.

And the connexion of the unrelated (sc. Self), which is the implied meaning of the words, with the literal meaning is not impossible; for there can be a connexion surmised by Nescience between even that which is itself unrelated and certain limiting adjuncts, sc. Nescience, internal organ &c., just as owls that cannot see by day imagine that a connexion exists between the sun and darkness.

